# MĪMĀMSĀ SLOKAVĀRTIKA

with the
Commentary KASIKA
of
SUCARITAMIŚRA

# मीमांसाश्लोकवार्त्तिकं

सुचरितमिश्रप्रणीतया
काशिकाख्यया टीकया समेतम् ।

Edited by
K. SĀMBAŚIVA SĀSTRĪ

Trivandrum Sanskrit Series

# MĪMĀMSĀ SLOKAVĀRTIKA

with the

Commentary KASIKA

of

# SUCARITAMIŚRA

Edited by

**K. SĀMBAŚIVA SĀSTRĪ**

Curator of the Department for the Publication of
Sanskrit Manuscript, Trivandrum.

**Parts I, & II**

**1990**

**CBH PUBLICATIONS**

# मीमांसाश्लोकवार्त्तिकं

## सुचरितमिश्रप्रणीतया

काशिकाख्यया टीकया

समेतं

संस्कृतग्रन्थप्रकाशनकार्याध्यक्षेण

के. साम्बशिवशास्त्रिणा

संशोधितम् ।

---

प्रथमः सम्पुटः ।

# PREFACE.

The present work named Kāśikā is a commentary by Upādhyāya Sucaritamiśra on the Mīmāmsā Ślokavārtika. Of the two systems of Mīmāmsā philosophy, viz., Karma-Mīmāmsā and Brahma-Mīmāmsā, the first is dealt with by Jaimini in twelve adhyāyas containing about 2700 sūtras beginning with "*Athātodharma Jijñāsā*". The extant Bhāṣya on these sūtras is by Śabara-svāmin; and Bhaṭṭa Kumārila's elaborate metrical commentary on the first Pāda known as Tarkapāda of the first adhyāya of the Bhāṣya is called Ślokavārtika, on which the Kāśika now offered is a learned and dignified commentary.

The commentary being voluminous, it is intended to publish it in parts; the first part dealing with the first four sūtras is now issued and the rest will follow in due course.

It has not been possible to know exactly the date of Sucaritamiśra; but this much is certain that he flourished earlier than Venkaṭanātha (1248-1350 A. D.), as the latter cites the Kāśikā as authority in his Seśvara Mīmāmsā as follows:—

"तथा च काशिका—सन्नियमादिति पदव्यवहितः प्रयोगशब्दो लोक इत्यस्यानन्तरं सम्बन्धनीयः। तदयमर्थः—लोके प्रयोगः, सन्नियमः, सम्यङ्निबन्धनात्मको युक्तः, चक्षुरादिसन्निकर्षात्; ननु वेदे, अतीन्द्रियार्थत्वात्। इदं च विपरिणामव्यवहितकल्पनयोः साधारणमप्युदाहरणं विपरिणामस्योक्तत्वाद् व्यवधानमात्रोदाहरणत्वेनोक्तमिति वेदितव्यम्"। (वेदस्यार्थप्रत्यायकताधिकरण. Sūtra 3).

The edition is based on four manuscripts. The first named क obtained from Thiruvarpu Swamiyar Matom contains the whole of the Tarkapāda but lacks the portion from Anumāna Pariccheda to Apohavāda, and its leaves are broken and decayed.

The second manuscript ख belonging to the Rāja of Kilimanur, portions of which had been made use of in preparing the edition for the press, was returned to the owner.

The third and the fourth manuscripts named ग and घ respectively, have been received from the library of Ittisseri Antarjana, Thalaman house. One of them runs up to the end of Pratyakṣasūtra; some of its leaves are missing and the remaining ones worn out; while the other having deranged and decayed leaves, has been found to be of little use for this edition. None of these manuscripts is correct or complete; however, considering the great value of the commentary it is issued in the Trivandrum Sanskrit Series.

K. SĀMBAŚIVA ŚĀSTRĪ.

# निवेदना ।

---

इयमुपाध्यायश्रीसुचरितमिश्रकृता **मीमांसाश्लोकवार्त्तिकव्याख्या** नाम्ना **काशिका**। 'अथातो धर्मजिज्ञासा' 'अथातो ब्रह्मजिज्ञासे'ति धर्मं ब्रह्म च प्रतिपादयन्ती द्वयी मीमांसा सुप्रसिद्धा । अत्र पूर्वा श्रीमज्जैमिनिमुनिनिर्मिता, उत्तरा श्रीभगवद्वेदव्यासप्रणीता । यासावत्र पूर्वा कर्मकाण्डात्मिका सा मार्कीं त्रिशत्यूनया सूत्राणां त्रिसहस्र्या द्वादशभिरध्यायैराचिता । अस्याश्चाचार्यभट्टशबरस्वामिविरचितं भाष्यं प्रथितम् । तस्य प्रपञ्चनपरं श्रीभट्टाचार्यकुमारिलस्वामिनिबद्धं श्लोकात्मकं वार्त्तिकं च सर्वतःप्रकाशं, यदाहुरभियुक्ताः श्लोकवार्त्तिकमिति । प्रथमाध्यायस्य तर्कपादाभिधानं प्रथमपादं यावत् परिसमाप्य समाप्तस्यास्य **श्लोकवार्त्तिकस्य** विशदा विपुला च कूलङ्कषा कापि व्याख्यासौ प्रस्तुता **काशिका** । नैकसञ्चिकापूरणीयाया अमुष्याः प्रथमेयं सञ्चिका सद्यः प्रकाश्यते, यत्र प्रतिज्ञासूत्रमारभ्य प्रत्यक्षसूत्रान्तो विषयः प्रवेशितः । प्रौढोदारसरसाभिश्चर्चासहाभिरुपन्याससरणिभिर्वाढमसावनुकरणीयं कमपि व्याख्यागुणमविकलं बिभर्ति ।

एतादृशो व्याख्यायाः कर्तारं श्रीमदुपाध्याय**सुचरितमिश्राचार्यं** प्रति जीवितकालादिनिर्धारणाय न कोऽपि मार्गो विवृतः । किन्तु शक्यमयं क्रिस्त्वब्दीयत्रयोदशशतकात् सर्वथा नार्वाचीन इति स्थापयितुम् । यत् किल (१२४८-१३५०) जीविना कवितार्किकसिंह-सर्वतन्त्रस्वतन्त्रेण वेदान्ताचार्यापरनाम्ना श्रीमद्वेङ्कटनाथेन निबद्धायां **सेश्वरमीमांसायां** (वेदस्यार्थप्रत्यायकताधिकरणे तृतीये 'लोके सन्नियमात् प्रयोगः सन्निकर्षः स्यात्' इति सूत्रे) कीर्त्त्यत इयं व्याख्या ।

तथाहि — "तथाच काशिका — 'सन्नियमादिति पदव्यवहितः प्रयोगशब्दो लोक इत्यस्यानन्तरं सम्बन्धनीयः । तदयमर्थः— लोके प्रयोगः, सन्नियमः सम्यङ्निबन्धनात्मको युक्तः, चक्षुरादिसन्निकर्षात् ; नतु वेदे, अतीन्द्रियार्थत्वात् । इदं च विपरिणामव्यवहितकल्पनयोः साधारणमप्युदाहरणं विपरिणामस्योक्तत्वाद् व्यवधानमात्रोदाहरणत्वेनोक्तमिति वेदितव्यम्" इति ।

एतत्संशोधनावलम्बा आदर्शाश्चत्वारः । तत्रैकः क.संज्ञितः **कोट्टयं तिरुवार्पुस्वामिनां** मठादानीतो मध्ये मध्ये नैकधा त्रुटितपत्रबहुलः, यत्र मध्ये अनुमानपरिच्छेदात् प्रभृत्यपोहवादान्तो भागो नोपलभ्यते ।

द्वितीयः ख.संज्ञितः **किलिमानूर्राज**सम्बन्धी अंशशः परिशोधनायोपयुक्तचरस्तत्स्वामिने पूर्वमेव प्रतिप्रेषितः ।

तृतीयतुरीयौ ग.घ.संज्ञितौ **कोट्टयम् इट्टिश्शरि अन्तर्जन**सम्बन्धिनौ । तयोर्ग.संज्ञितः प्रायः प्रत्यक्षसूत्रावधिव्याख्यावांस्तत्र तत्र द्वित्रपत्रविकलोऽतिजीर्णकल्पः । घ.संज्ञितस्तु पत्राणामनुस्यूत्या रहितो भूयसा वम्रिभक्षितश्चानुपयोगी उपेक्षितः परिशोधनावसरेषु ।

जाग्रत्स्वपि बहुष्वादर्शेष्वविकलं परिशुद्धं चैकतममप्यनुपलभमानैर्ग्रन्थगौरवादपरित्यागश्रद्धयास्मद**नन्तशयनसंस्कृतग्रन्थावलौ** प्रवेश्य प्रकाशितेयं सहृदयजनसमक्षमवतार्यते ।

अनन्तशयनम्,
१०-४-१०२.

**के. साम्बशिवशास्त्री.**

श्री

श्रीपद्मनाभसेवि-
न्यखिलश्रीवर्धनी महाराज्ञी ।
श्रीसेतुलक्ष्म्यभिख्या
प्रत्यक्षा जयति वञ्चिभूलक्ष्मीः ॥

ग्रन्थावलिरियमिन्धे
प्रसाधिता तत्प्रसादगुणगुम्फा ।
श्रीसहितसेतुलक्ष्मी-
प्रसादमाला सुवर्णमणिचित्रा ॥

# विषयानुक्रमणी।

| विषयः. | पृष्ठम्. |
|---|---|

| विषयः. | पृष्ठम्. |
|---|---|

**विषयः.** **पृष्ठम्.**

| विषयः. | पृष्ठम्. |
| --- | --- |

———

॥ श्रीः ॥

# मीमांसाश्लोकवार्त्तिकं

## सुचरितमिश्रप्रणीतया

काशिकाख्यया टीकया समेतम् ।

---

विशुद्धज्ञानदेहाय त्रिवेदीदिव्यचक्षुषे ।
श्रेयःप्राप्तिनिमित्ताय नमः सोमार्धधारिणे ॥ १ ॥

---

वार्त्तिकारम्भे शिष्टाचारमनुविदधानो मङ्गलं तावत् करोति — **विशुद्धेति** । दृष्टा हि शिष्टानां प्रवृत्तिः सर्वकार्येषु मङ्गलाचरणपूर्विका । मङ्गलं च देवतास्तुतिनमस्कारादि । अस्य च नियोगतः फलवत्कार्यान्तरारम्भसंयोगात् साक्षादफलत्वाच्च "फलवत्संन्निधावफलं तदङ्गम्" इति न्यायेन कार्यान्तरशेषत्वेऽवधृते सत्यारम्भस्य समाप्तिपर्यन्तत्वादपेक्षिताविघ्नपरिसमाप्तिः फलम् । "अपेक्षितविधेरनपेक्षितविधानं दुर्बलमि"ति न्यायेन फलान्तरकल्पनाया दुर्बलत्वात् । अतो यथा साम्प्रदायिकमध्यायानध्यायादि स्वाध्यायाविघ्नार्थमेवमिदमपि । तदयमर्थः — विशुद्धौ ज्ञानदेहौ यस्य स तथोक्तः । विशुद्धं च भगवतो ज्ञानं रागादिभिर्ज्ञानकारणानामदूषितत्वाद् , देहश्चायोनिजत्वाद् विविधगर्भवेदनाविरहाच्च । त्रिवेदी च तस्य चक्षुरिति गौणो वादः, असन्दिग्धाविपरीतस्पष्टवेदार्थप्रकाशकत्वात् । दिव्यं चातीन्द्रियार्थगोचरत्वात् । भौतिकं हि चक्षुः प्रत्युत्पन्नार्थविषयम् । इदं त्वनागतादिविषयं दिव्यमिति । श्रेयसश्च हिताहितप्राप्तिपरिहारात्मनो भगवान् निमित्तम् । सोमार्धधारिणे, सोमकलाधारिणे । नम इति । यद्यपि विग्रहादिपञ्चकं देवताधिकरणे निराकरिष्यते, तथाप्याज्यादिस्तोत्रवत् प्रधानकर्मण एव देवतास्तुतेरेवङ्कृतायाः फलमित्यदोष इति ॥ १ ॥

G. P. T. 3127. 500. 17-11-99 B

**धार्मिकाधार्मिकत्वाभ्यां पीडानुग्रहकारिणौ ।**
**प्रसिद्धौ हि तथाचाह पाराशर्योऽत्र वस्तुनि ॥ २ ॥**
**इदं पुण्यमिदं पापमित्येतस्मिन् पदद्वये ।**
**आचण्डालं मनुष्याणामल्पं शास्त्रप्रयोजनम् ॥ ३ ॥**
**निर्मूलासम्भवादत्र प्रमाणैः सैव मृग्यते ।**
**कुतः पुनः प्रवृत्तेति प्रत्यक्षादि तु वारितम् ॥ ४ ॥**
**नचैतानि परित्यज्य पृथग् लोके प्रमाणता ।**

---

प्रसिद्धिमेव दर्शयति— **धार्मिकेति** द्यन्तेन । अनुग्रहकारिणि हि लौकिका धार्मिकशब्दं प्रयुञ्जाना दृश्यन्ते । पीडाकारिणि चाधा(र्मिक-शब्दम्) । यश्च धर्ममाचरति स धार्मिकः । तद् यद्यनुग्रहो धर्मः तदेवमुपपद्यते नान्यथेति । एतदेव भगवतो व्यासस्याप्यभिमतामिति दर्शयति— तथेति प्रयोजनमन्तेन । नि(र्विषय)प्रयोगासम्भवात् तद्विषयमिदमा प्रतिनिर्दिशति । तदयमर्थः—विशिष्टविषये पुण्यपापपदद्वये आचण्डालं मनुष्याणां विद्यमाने तेनैव धर्माधर्मप्रमितिसिद्धेरनर्थकं शास्त्रमिति । नन्वेवं पुण्यपापप्रमाणकौ धर्माधर्मावुक्तौ, न लोकप्रमाण(कौ) । नैवम् । तत्प्रयोगस्यैव लोकायत्तत्वात् । तस्मादयमनुपालम्भ इति ॥ ३ ॥

एवमाक्षिप्य समादधाति— **निर्मूलेतीत्यन्तेन** । अयमर्थः— प्रसिद्धिर्हि प्रज्ञानम् । तच्च (ज्ञा)नद्रढिमा । नच निर्मूलं ज्ञानमात्मानं लभते प्रागेव ज्ञानद्रढिमा । तदेवं निर्मूलायाः प्रसिद्धेरभावात् कुतः सा प्रवृत्तेति प्रमाणैरन्विष्यत इति । ननु च कार्यद्रढिम्ना मूलं कल्पयिष्यते, स्मृतिद्रढिम्नेव श्रुतिरत आह—प्रत्यक्षादीति । सत्यम् । समूला प्रसिद्धिः प्रत्यक्षादिमूलतया प्रत्यक्षसूत्रे निवारिता चोदना (मूलं) भविष्यत्येवेति ॥ ४ ॥

ननु सन्निकृष्टार्थगोचरमेव सर्वं प्रमाणम् । अतः प्रसिद्धेः प्रमाणान्तरागोचरार्थत्वं गुणः न दोषाय, अत आह— **नचेति** । नच प्रत्यक्षादीनि परित्यज्य लोको नाम प्रमाणगणे प्रमाणमुपसंख्यायते । वर्णविवेकसम्बन्धावधारणयोस्तु प्रत्यक्षादिप्रमाणत्वं वनसम्बन्धपरिहारयोरभिधास्याम इति ।

**संसारमोचकादेश्च हिंसा पुण्यत्वसम्मता ॥ ५ ॥**

**न पश्चात् पुण्यमिच्छन्ति केचिदेवं विगानतः ।**
**म्लेच्छार्याणां प्रसिद्धत्वं न धर्मस्योपपद्यते ॥ ६ ॥**
**नचार्याणां विशेषोऽस्ति यावच्छास्त्रमनाश्रितम् ।**
**तन्मूलार्थप्रसिद्धिस्तु तत्प्रामाण्ये स्थिते भवेत् ॥**
**तस्मादभाववक्तृस्थौ धर्माधर्मौ न शक्नुयात् ।**
**चोदना चेत् समुद्धर्तुं ग्रस्तौ तेनैव पश्यताम् ॥ ८॥**

---

अपिच भवेदपि प्रसिद्धिः प्रमाणं, यदि व्यवस्थितैव प्रसिद्धिः स्यात् । सा त्वव्यवस्थिता । तथाहि— संसारमोचका नाम नास्तिका बाह्यहिंसामेव धर्ममाहुः । अन्ये तु तपः (प्र ? प्रा)जापत्यादि पीडात्मकत्वात् परपीडावत् अधर्म............स्तु विधिनिषेधप्रमाणकौ तद्विपरीतौ धर्माधर्मौ साङ्गिरन्ते (?।) तदेवं म्लेच्छार्याणां परस्परविगानान्न लोकप्रसिद्धत्वं धर्माधर्मयोरुपपद्यत इत्याह— संसारेति सार्धेन ॥ ६ ॥

नन्वनुमानाभाससङ्करेण प्रमाणमप्रमाणीभवति । नहि प्रत्यक्षाभाससङ्करात् प्रत्यक्षमप्रमाणं भवति । अथ तत्र कारणदोषसदसद्भावनिबन्धनः प्रमाणतदाभासविवेकः, सोऽत्राप्यविशिष्टः । अत्रापि स्मृतिकारैर्विवेकोपायो दर्शित एव । 'आचारश्चैव साधूनाम्' इत्यादिना । साधवश्चार्याः । स्वाभाविककृष्णमृगचरणोपलक्षितार्यावर्तनिवासिनश्चार्यशब्दवाच्याः । अतस्तदाचारो धर्मोऽन्योऽधर्म इति विवेको भविष्यति, अत आह— **नचेति** । शास्त्रसदसद्भावनिवन्धनो ह्यार्यम्लेच्छविभागः तद(नाश्रयेण) त्वार्यम्लेच्छविभागो दुर्भणः । अत एव "शास्त्रस्था वा तन्निमित्तत्वात्" (१. ३. ९) इति वक्ष्यतीति । अस्तु तर्हि शास्त्रमूलार्थप्रसिद्धिः प्रमाणमत आह— तन्मूलेति । न स्वतन्त्रायाः प्रसिद्धेरेव प्रामाण्यं सिध्यतीत्यभिप्रायः ॥ ७ ॥

अतः सकलभावप्रमाणनिराकरणात् शङ्किताभावनिराकरणेन चोदनैव धर्माधर्मयोः प्रमाणमित्युपपन्नमित्याह —**तस्मादिति** । पश्यतामिति । षष्ठी चानादरे (२.३.३८) इत्यनादरे षष्ठीति ॥ ८ ॥

**उपदेशो हि भवति ज्ञानं तस्येति योज्यते ।**
**ज्ञायते येन तज्ज्ञानमेकाधिकरणत्वतः ॥ ९ ॥**
**औत्पत्तिकगिरा दोषः कारणस्य निवार्यते ।**
**अबाधोऽव्यतिरेकेण स्वतस्तेन प्रमाणता ॥ १० ॥**
**सर्वस्यानुपलब्धेऽर्थे प्रामाण्यं स्मृतिरन्यथा ।**

---

अत्र भाष्यकारेण 'औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धस्तस्याग्निहोत्रादिलक्षणस्य धर्मस्य निमित्तमि'त्युक्त्वा (कथमि)ति प्रश्नानन्तरम् 'उपदेशो हि भवती'ति सौत्रमुपदेशपदं व्याख्यातं, तत्र न ज्ञायते केनास्य सम्बन्ध इति योग्यपदान्वयं दर्शयति — उपदेश इति । तस्य धर्मस्योपदेशो ज्ञानं प्रमाणमिति । ननूपदेशो ग्रन्थसन्दर्भात्मा, ज्ञानं चार्थावग्रहः । कथमनयोः सामानाधिकरण्यमत आह — ज्ञायत इति । भावसाधनो हि ज्ञानशब्दो नोपदेशशब्देन सामानाधिकरण्यं लभते । अयं तु ज्ञायतेऽनेनेति करणसाधन इति युक्तं सामानाधिकरण्यमिति ॥ ९ ॥

कथं पुनरुपदेशो धर्मे प्रमाणमत आह — औत्पत्तिकेति । बाधकारणदोषाधीनं ह्यप्रामाण्यम् । तत्र सम्बन्धौत्पत्तिकत्वप्रतिपादनेन तद्द्वारा पुरुषानुप्रवेशाभावात्, पुरुषाश्रयत्वाच्च शब्दे दोषाणां कारणदोषनिवारणं तावत् कृतम् । तन्निराकरणेन सहाप्रामाण्यमनपोदितमित्यव्यतिरेकपदप्रयोजनमाह — अबाध इति । अव्यतिरेकपदेनाबाधः प्रतिपाद्यते नहि देशकालयोरुभयोरपि चोदनाजनितं ज्ञानं विपर्येतीति । तदेवं बाधकारणदोषनिराकरणे कृतेऽनपोदितमौत्सर्गिकं प्रामाण्यमिति तत् प्रमाणमित्यनेनोक्तमिति दर्शयति — स्वत इति ॥ १० ॥

अत्र चार्थेऽनुपलब्ध इत्युच्यते । तदसुक्तम् । उपलब्धार्थविषयमपि प्रमाणं भवत्येव । अनुभूतिर्हि प्रमाणं प्रत्युत्पन्नेन्द्रियलिङ्गादिजनिता च संविदनुभूतिः । अत एवोन्मीलि(ताक्ष)स्यैकभावगोचराणां धारावाहिकसंविदां प्रामाण्यमुपपन्नं भवति । अन्यथा तन्न स्यात् । नहि तत्रानवगतं किञ्चिदनुभूयते । देशकालान्तरसम्बन्धोऽनुभूयत इति चेद्, न । एकदेशस्थेऽपि भावात् ।

**चोदना चोपदेशश्च विधिश्चैकार्थवाचिनः ॥ ११ ॥**

**वाक्यान्तरे समर्थेऽपि किमर्थं विधिराश्रितः ।**

---

कालस्तु परोक्षः । नच परोक्षापरोक्षसम्बन्धोऽपरोक्षो भवति, तरुमरुत्संयोगवत् । अतो(ऽवगतार्थ)मनाधिकार्थमपि ग्रहणं प्रमाणमिति वाच्यम् । नचैवं स्मृतित्वापातः । स्मृतिर्हि पूर्वानुभवप्रभावितभावनावशलब्धसिद्धिर्नाधिकमपेक्षते (ग्रहण+त्व?) नेन्द्रियसापेक्षमित्युक्तम् । अतएव गृहीतमपि पुनर्गृह्यमाणं दृश्यत इति लौकिका व्यपदिशन्ति, नतु स्मर्यत इति । अतो न विघ्नः किमर्थेऽनुपलब्ध इत्यनेन निरस्यत इति (अत आह—) **सर्वस्येति**। अयमर्थः —अनुपलब्धार्थविषयमेव सर्वं प्रमाणम् । अन्यथा स्मृतित्वापातात् । नहि ग्रहणस्मरणयोर्गृहीतागृहीतगोचरयोर्गृहीतागृहीतगोचरगतो विशेष उपलभ्यते । यत्तु कारणभेदाद् भेद इत्युक्तम् सत्यम् । स्वरूपभेदौपयिकः कारणभेदः । स्वरूपं तु गृहीतागृहीतविषयत्वादेव भिन्नम् । अनुभूतिर्ग्रहणमिति चेद्, यद्यपि सोऽनुभूतिः अनुमानादिषु स्मृतित्वप्रसङ्गः । अतोऽवश्यं गृहीतागृहीतागोचरत्वमेव ग्रहणस्मरणयोर्भेदः । किमिदानीं धारावाहिकसंविदो न प्रमाणम् । नहि का++++क्तम् । अत्रोच्यते । तत्राप्युत्तरोत्तरकालाकलितभावप्रत्याकलनादुपपन्नमेवाधिकगन्तृतया प्रामाण्यम् । नच वैशेषिकादिवत् परोक्षं कालमाचक्ष्महे । प्रत्यक्षमेव हि +++ वर्तमानकालसम्बन्धान् भावानुपलभामहे । कथमरूपं प्रत्यक्षमिति चेत् । आकाशवद् भविष्यति । नहि रूपि प्रत्यक्षमिति नः प्रत्यक्षलक्षणम् अपितर्हि संविदेव परोक्षापरोक्षनिर्भासोदीयमानेदं प्रत्यक्षमिदमप्रत्यक्षमिति विभजते । तदेवं विस्फारिताक्षस्य व्यक्तानुपलक्षितोत्तरोत्तरसूक्ष्मक्षणभेदभिन्नैकभावावि+++कापरोक्षनिर्भासावभासोदयात् उपपन्ना प्रत्यक्षता प्रमाणता च । अतः प्रमाणान्तरानुपलब्धस्वगोचरप्रत्याकलनादुपपन्नमुपदेशप्रामाण्यमिति सूक्तमर्थेऽनुपलब्ध इति । अत्र भाष्यम् 'उपदेश इति विशिष्टस्य शब्दस्योच्चारणमि'ति । तत्र चोदना विधिपदपर्यायः शब्दविशेषो भाष्यकारस्याभिमतः इत्याह— **चोदनेति** । एतदुक्तं भवति — विधायकशब्द उपदेश इति ॥ ११ ॥

अत्र चोदयति —**वाक्यान्तर** इति द्वयेन । अयमर्थः— यदिदं शब्दविशेषस्य विधेर्धर्मे प्रमाणत्वमाश्रितम् . अनेन वाक्यान्तरमपि हि वर्त-

**साध्यसाधनसम्बन्धः सर्वाख्यातेषु गम्यते ॥ १२ ॥**

**सर्ववाक्येषु चाख्यातं तेनाकाङ्क्षानिवर्तनात् ।**

**प्रवृत्तिसिद्धिरिच्छातः प्रतिषेधात् तु वर्जनम् ॥ १३ ॥**

**विधावनाश्रिते साध्यः पुरुषार्थो न लभ्यते ।**

**श्रुतस्वर्गादिबाधेन धात्वर्थः साध्यतां व्रजेत् ॥ १४ ॥**

मानोपदेशकं धर्मप्रमितौ प्रमाणमेव । श्रेयस्साधनं हि धर्मः । सच श्रेयसः स्वर्गादेः साधनेन यागादिना साध्यसाधनसम्बन्धः सर्वाख्यातेषु सम्भवति । 'स्वर्गकामो यजेते'त्यतोऽपि हि यागेन स्वर्गः सिध्यतीति गम्यत एव । यथा लोके ओदनं पचतीति पाकौदनयोः साध्यसाधनसम्बन्धबुद्धिः । स्यादेतत् — आख्यातमन्तरेण साध्यसाधनसम्बन्धो न सिद्ध्येत्, तदर्थो विधिरिति । तन्न । अनाख्यातवाक्यप्रयोगासम्भवात् । प्रयोजनाय हि वाक्यमुच्चार्यते । निराकाङ्क्षं च वचः प्रयोजनक्षममाकाङ्क्षानिवर्तनं चाख्यातादृते न सम्भवति । इतरथा विधेरप्यसम्भवात् । स्तुत्यापि ह्याख्यातमेव खादिरादिवाक्येषु विधायकं परिकल्प्यते । अथोच्येत — अनुष्ठितो यागादिर्धर्मः, नचानुष्ठानं (प्रव)र्तकादृते सम्भवति । नच विधिमन्तरेणान्यः प्रवर्तयतीति । तन्न । इच्छानिबन्धनत्वात् प्रवृत्तेः । अनिष्टेषु विधिशतेनाप्यप्रवृत्तेः । अतोऽनेनेदं सिध्यतीति संविदि वोपायार्थी स तत्र प्रवर्तत इति । नचाधर्मवर्जनार्थो विधिः । प्रतिषेधादेव नञस्तत्सिद्धेः । रागादिप्राप्तकर्तव्यतानुवादेन नञेव निषेधाधिकारे निवर्तकः । एषा हि तत्र वचनव्यक्तिः यद्धन्यात् तन्नेति । अतोऽनर्थको विधिप्रामाण्यप्रतिपादनप्रयासः । अपौरुषेयः शब्दः धर्मे प्रमाणमित्येतावदेव वचनीयमिति ॥ १२ ॥

परिहरति — विधाविति । अयमभिप्रायः — सत्यमिच्छातः प्रवृत्तिः । इच्छैव तु प्रेक्षावतां पुरुषार्थसाधनविषया । नच विधिना विना पुरुषार्थसाधनत्वं यागादीनां शक्यतेऽवगन्तुम् । अतएवौदुम्बरादीनां सत्यपि फलपदसम्बन्धे विधिविरहात् फलार्थत्वं नेत्यौदुम्बराधिकरणे वक्ष्यते । ननु लौकिकपाकौदनादिवत् साध्यसाधनसम्बन्धसिद्धिरुक्ता ।

**सिद्धार्थं ज्ञातसम्बन्धं श्रोतुं श्रोता प्रवर्तते ।**
**शास्त्रादौ तेन वक्तव्यः सम्बन्धः सप्रयोजनः ॥१७॥**
**शास्त्रं प्रयोजनं चैव सम्बन्धस्याश्रयावुभौ ।**
**तदुक्त्यन्तर्गतस्तस्माद् भिन्नो नोक्तः प्रयोजनात् ॥**
**सिद्धिः श्रोतृप्रवृत्तीनां सम्बन्धकथनाद् यतः ।**
**तस्मात् सर्वेषु शास्त्रेषु सम्बन्धः पूर्वमुच्यते ॥ १९ ॥**
**यावत् प्रयोजनेनास्य सम्बन्धो नाभिधीयते ।**
**असम्बद्धप्रलापित्वाद् भवेत् तावदसङ्गतिः ॥ २० ॥**

कारादिभिः करिष्यमाणो यत्नः कस्मान्न जैमिनिनोपेक्षितः, अत आह—**यदिति** । यत् तेन जैमिनिनोक्तं तदेव भाष्यकारादयः कथं नाम वदेयुरिति । इतरथा स्वच्छन्दाः को वेत्ति कीदृक् प्रयोजनमभिदध्युरिति । तथाहि व्याकरणे सूत्रकृतोपेक्षितं प्रयोजनमनेकधा व्याख्यातृभिर्विकल्पितम् । तथाहि—प्रथमं साधुशब्दज्ञाने धर्म इत्यभिधाय पुनः शास्त्रपूर्वे प्रयोगेऽभ्युदय इत्युक्तम् इति । सत्यमेवं, युक्तं तावत् प्रयोजनाभिधानमिति ॥

अथैतेन प्रयोजनेनास्य शास्त्रस्यायं सम्बन्ध इत्यपि सूत्रकारस्य युक्तं वक्तुम् । अज्ञातप्रयोजनमिवाविदितसम्बन्धमपि श्रोतुं नाद्रियन्ते शिष्याः । तस्मात् सह प्रयोजनेन अस्य सम्बन्धो वाच्य इति चोदयति—**सिद्धार्थमिति** ॥ १७ ॥

परिहरति—**शास्त्रमिति** । यदेवास्य शास्त्रस्येदं प्रयोजनमित्युक्तं, तदेव तयोरुपायोपेयलक्षणः सम्बन्धोऽर्थादुक्त एव । न चैवमर्थप्राप्तमर्थं सूत्रकारा अक्षरैर्निबध्नन्ति, असूत्रत्वप्रसङ्गादिति ॥ १८ ॥

ननु यदि नाम सूत्रकारेण प्रयोजनाद् भेदेन सम्बन्धो नोपात्तः, व्याख्यातृभिस्तु व्यज्यताम् । कथिते हि व्यक्तं सम्बन्धे श्रोतारः प्रवर्तन्ते । अत एव शास्त्रान्तरेष्वपि सम्बन्धः स्फुटमुपदर्शितः । तथाहि शिष्यप्रश्नानन्तरं कणभुजा तन्त्रं प्रणीतमित्यर्थमालायामुक्तमित्याह—**सिद्धिरिति** ॥ १९ ॥

---

१ 'त्नः जैमिनिना क्षेनोपात्तः कस्माद् अतः', २. 'स्पष्टमिव द' क. ख. पाठः.

इह त्वाक्षिप्य सम्बन्धं भाष्य एवाभिधीयते ।
धर्मप्रसिद्ध्यसिद्धिभ्यां तस्मान्नान्योऽभिधीयते ॥
न चाप्यत्राथशब्देन शास्त्रसम्बन्ध उच्यते ।
सम्बन्धं क्रिययोर्ह्येष ब्रूते शास्त्राच्च ते पृथक् ॥ २२ ॥
योऽप्ययं शास्त्रसम्बन्धो वर्ण्यते कैश्चिदादितः ।
क्रियानन्तर्यरूपो वा गुरुपर्वक्रमोऽपि वा ॥ २३ ॥
सदसद्भावयोस्तस्य विशेषो नोपलभ्यते ।
श्रोतुर्विधौ निषेधे वा ज्ञाने वा शास्त्रगोचरे ॥ २४ ॥

---

अविस्पष्टीकृते तु सम्बन्धे व्याख्यातृभिरसम्बद्धप्रलापी सूत्रकार इति शङ्कमानाः श्रोतारोऽसङ्गतिमेव शास्त्रप्रयोजनयोर्मन्वीरन्नित्याह — **यावदिति** ॥ २० ॥

परिहरति — इहेति । एवं हि मन्यते — तत्र नाम वार्त्तिककाराः क्लिश्नन्ति यन्न भाष्यकारेणोक्तम् । इह तु भाष्यकारेणैव 'धर्मः प्रसिद्धो वा स्यादप्रसिद्धो वा' इत्याक्षिप्य सम्बन्धो वक्ष्यते 'अथवार्थवत्' इत्यादिनेति न पृथक् सम्बन्धोऽभिधानीयः सम्बन्धभाष्यविवरण एव तु यतितव्यमिति ॥ २१ ॥

कश्चित् पुनरत्रैवमाह — यथार्वाचीना व्याख्यातारो न पृथक् सम्बन्धमभिदधति तथा भाष्यकारस्यापि सम्बन्धवचनमयुक्तं, सूत्रकारेणैवाथशब्दं प्रयुञ्जानेनाध्ययनक्रियानन्तर्यलक्षणस्य शास्त्रसम्बन्धस्योक्तत्वात् । यथा 'अथातो धर्मं व्याख्यास्यामः' इति शिष्यप्रश्नानन्तरं शास्त्रं प्रणयाम इति काश्यपेनोक्तमिति । तं प्रत्याह — **न चापीति** । अध्ययनज्ञानेच्छाक्रिययोर्ह्यानन्तर्यलक्षणं सम्बन्धमथशब्दो वदति । ते च क्रिये शास्त्राद् बहिर्भूते । सन्नन्तसामान्यमात्रेण जिज्ञासामीमांसयोरैक्यं मन्वानानामयं भ्रम इति ॥ २२ ॥

न परमनुपात्तः सम्बन्धः, निष्प्रयोजनश्चेत्याह — **योऽपीति**द्वयेन । काणादे हि तन्त्रे क्रियानन्तर्यरूपः सम्बन्धो दर्शितः । एवं हि तत्र भाष्यकारेणोक्तं — "को धर्मः इत्यादिकान् शिष्येणोदीरितान् पञ्च प्रश्ना-

---

१. 'ष्य ए' क. पाठः. २. 'पृथगभू' ख. पाठः.

**तस्माद् व्याख्याङ्गमिच्छद्भिः सहेतुः सप्रयोजनः ।**
**शास्त्रावतारसम्बन्धो वाच्यो नान्यस्तु निष्फलः ॥**
**लोक इत्यादिभाष्यस्य षडर्थान् सम्प्रचक्षते ।**
**भाष्यकारानुसारेण प्रयुक्तस्यादितः पृथक् ॥ २६ ॥**

---

नपेक्ष्याह — अथातो धर्मं व्याख्यास्यामः" इति । गुरुपर्वक्रमात्मकश्च सम्बन्धो यथैहैव कैश्चिदुक्तः 'ब्रह्मा महेश्वरो वा मीमांसां प्रजापतये प्रोवाच, प्रजापतिरिन्द्राय, इन्द्र आदित्यायेत्येवमादि । पर्वाण्यवच्छेदाः गुरूणां पर्वाणि गुरुपर्वाणि गुरुपर्वणां क्रमो गुरुपर्वक्रम इति विग्रहः । न चात्र द्विविधो ह्ययं सम्बन्ध उपयुज्यते । नहि तस्य सम्बन्धस्य तद्रूपसदसद्भावयोः सतोः श्रोतुः शास्त्रे प्रवृत्तिनिवृत्त्योर्विशेष उपलभ्यते शास्त्रविषये वा ज्ञान इति विधिनिषेधयोः कार्ये प्रवृत्तिनिवृत्ती । ताभ्यां ते लक्षयतीति ॥ २३, २४ ॥

यतोऽयं सम्बन्धो निष्प्रयोजनः, तस्माद् ये सूत्रव्याख्यानाङ्गं सम्बन्धमभिधित्सन्ति, तैः सोपपत्तिकः सप्रयोजनश्च सम्बन्धो वाच्यः । यथात्र शाबरे भाष्ये कृतमित्याह — **तस्मा**दिति । शास्त्रमवतार्यतेऽनेनेति "अकर्तरि च कारके संज्ञायाम्" (पा० ३. ३. १९) इति करणे घञ् । शास्त्रावतारश्चासौ सम्बन्धश्चेति शास्त्रावतारसम्बन्धः । स चोपायोपेयलक्षण इत्युक्तमिति ॥ २५ ॥

भाष्यमिदानीमनुसन्धत्ते—**लोक** इति । ननु यत्रैव भाष्यं सङ्गच्छते स एवार्थो व्याख्यातुमुचितः । कथं षडर्थान् सम्प्रचक्षते । अत आह — भाष्यकारानुसारेणेति । एतदुक्तं भवति सर्वत्र भाष्यं सङ्गच्छत इति । कथं पुनरनेकार्थमेकं वाक्यम्, अर्थैकत्वेन ह्येकवाक्यतां वक्ष्यति "अर्थैकत्वादेकं वाक्यम्" इति । अत आह—प्रयुक्तस्येति । अयमभिप्रायः—पुरुषप्रयुक्तमिदं वाक्यम् । पुरुषास्तु प्रमाणान्तरेणार्थं विदित्वा बह्वभिप्रायमप्येकं वाक्यं प्रयुञ्जाना दृश्यन्ते । यथा श्वेतो धावति अलम्बुसानां यातेति । वैदिके त्वयं नियम एकमेकार्थमिति । यथाशब्दं हि तत्रार्थे सम्प्रत्ययः, प्रमाणान्तराभावात् । तदुक्तं —

"बह्वभिप्रायमप्येकं पुरुषास्तु प्रयुञ्जते ।"

**सर्वव्याख्यामुपालम्भं प्रत्याख्यानं तथा परे ।**
**परिसङ्ख्यास्तुती केचिदथशब्दस्य दूषणम् ॥ २७ ॥**
**साधारणी विशिष्टा च सूत्रव्याख्या द्विधा कृता ।**
**विशिष्टा प्रतिसूत्रं या सर्वार्था त्वियमुच्यते ॥ २८ ॥**
**प्रवृत्तिस्तु पदेष्वेव निवृत्तिः सूत्रसंश्रया ।**
**वेदवाक्याविरुद्धेषु न तु सर्वेषु केषुचित् ॥ २९ ॥**

---

इति । ननुच सन्निधानात् प्रथमसूत्रगताथशब्ददूषणमेवास्य भाष्यस्यार्थो युक्तः कथं सर्वशास्त्रगतसूत्रव्याख्यानाङ्गत्वमत आह — **आदित** इति । एवं हि मन्यते — सर्वादौ प्रयुक्तमिदं वाक्यम् । अतः सूत्रसमुदायस्यैवेदमादिमं स्थानमिति न स्थानतो विशेषलाभः । प्रत्युत सूत्रेष्विति बहुवचनसामर्थ्यस्वरूपलिङ्गानुरोधेन सर्वसूत्रविषयत्वमेव स्पष्टं प्रकाशत इति । ननु 'तत्र लोकेऽयमथशब्द' इत्यादिभाष्यैकवाक्यतापन्नस्य भाष्यस्याथशब्ददूषणार्थत्वमेव स्पष्टं प्रकाशते । न ह्यन्यथा तदेकवाक्यतोपपद्यते । अत आह — पृथगिति । यत्नगौरवं प्रसज्येतेत्येवमन्तस्य तत्रेत्यादिकात् पृथक्कृ[2]तस्य पञ्च व्याख्याविकल्पा भवन्ति । तदेकवाक्यतापन्नस्याथशब्ददूषणमेवार्थ इति ॥ २६ ॥

षडर्थानिदानीं सुखग्रहणार्थमुद्दिशति — **सर्वव्याख्येति** । ते च यथास्वमवसरे वक्ष्यन्त इति ॥ २७ ॥

सर्वव्याख्यां तावद् विवृणोति — **साधारणीति** । भाष्यकारेण हि द्विधा सूत्रव्याख्या कृता । एका सर्वार्था येयं 'लोक' इत्यादिका । प्रतिसूत्रग[3]ता तु विशिष्टा । समासव्यासाभ्यां हि विदुषामर्थावधारणमिष्टमिति ॥ २८ ॥

अत्र भाष्यकारेण 'लोके येष्वर्थेषु प्रसिद्धानि पदानि तानि सति सम्भवे तदर्थान्येव सूत्रेष्वित्यवगन्तव्यमि'ति प्रवृत्तिरुपदर्शिता । तथा 'नाध्याहारादिभिरि'त्यादिना निवृत्तिः । तदिह प्रवृत्तिनिवृत्ती तावत् स्वरूपतो दर्शिते । प्रवृत्तिपुरस्सरी च निवृत्तिः । तथा 'प्रसिद्धानि पदानीति

---

१. 'ह्यमवगम्यते', २. 'ग्भू', ३. 'गोचरा तु' ख. पाठः.

**अध्याहारस्य वाक्येषु व्यत्यासस्य च सम्भवः ।**
**तेनैषामिति सूत्राणां पारार्थ्ये सत्यपि ग्रहः ॥ ३० ॥**

प्रदान्यग्रेऽभिधाय 'तदर्थान्येव सूत्रेष्वि'ति पश्चात् सूत्राणि दर्शितानि । तदिह सर्वत्र वार्त्तिककारः पदविन्यासविशेषेण तात्पर्यमाह — **प्रवृत्ति-रिति** । प्रवृत्तिनिवृत्ती शब्दौ प्रयुञ्जानो द्विधैव प्रवृत्तिनिवृत्तिभ्यां सूत्राणि प्रवर्तन्त इति भाष्यकृतोक्तमिति दर्शयति । तयोश्च क्रमविशेषेण भाष्यका-रस्यापि प्रवृत्तिपूर्विका निवृत्तिर्व्युत्पाद्येति दर्शयति । तथा पदसूत्रयोः पौ-र्वापर्यविवक्षया भाष्यकारस्यापि पदार्थपूर्वको वाक्यार्थोऽभिमत इति सूच-यति । तदयमर्थः—येयं प्रसिद्धार्थग्रहणं कर्तव्यमिति प्रवृत्तिः, सा तेषु पदेषु प्रसिद्धार्थो ग्रहीतव्य इति यावत् । या च[1] वाक्यदोषाणामध्याहारादीना निवृत्तिः, सा सूत्रेषु नैषामध्याहारादिभिरर्थवर्णनं[2] कार्यमिति । अत्र भाष्यं 'सति सम्भव' इति । तस्यार्थमाह —वेदवाक्याविरुद्धेष्विति । वेदवाक्या-विरुद्धेषु पदेषु सूत्रेषु च प्रसिद्धार्थग्रहणप्रवृत्तिरध्याहारादिनिवृत्तिश्च, न तु सर्वेषु विरुद्धेष्वपि केषुचित् पदेषु सूत्रेषु च । तत्र विपरीते प्रवृत्तिनिवृत्ती । तदिदं 'सति सम्भव' इत्यनेनोक्तम् । एवं[3] वेदाविरोधसम्भवे कार्यमिदं नान्यथेति ॥ २९ ॥

ननु युक्तं तावत् पदेषु प्रवृत्तिरिति । कथं सूत्रसंश्रया निवृत्तिः यावता पदान्येव तु प्रधानतया प्रकृतानि एषामिति सर्वनाम्ना परामर्श-मर्हन्ति । प्रधानगोचरतया व्युत्पत्तेः । न ह्येष दण्ड इष्टकाकूटे तिष्ठति प्रहरानेनेत्युक्ते इष्टकाकूटेनेति गम्यते, अपि तर्हि दण्डेनेति । दण्ड-विशेषणतयोपात्तत्वादिष्टकाकूटस्य । तद्वदिहापि पदविशेषणानि सूत्राणि न परामर्शार्हाणीति । अत आह — **अध्याहारस्येति** । अयमर्थः — यत्राध्याहारादयः प्रसजन्ति तत्रैव निषेधमर्हन्ति, प्राप्तिपूर्वकत्वात् प्रति-षेधस्य । न चेह तौ पदेषु सम्भवतः । अध्याहारो नाम न्यूनवाक्यपूर-णसमर्थाधिकपदाहरणात्मकः । स च न पदेषु सम्भवति, अपभ्रंशत्वेन न्यूनपदप्रयोगासम्भवात् । व्यत्यासो हि व्यवहितकल्पना । सा चान्यत्र स्थितस्यान्यत्र सञ्चारः । न चासौ नियतपौर्वापर्यप्रकृतिप्रत्ययात्मके पदे सम्भवति, पदनाशप्रसङ्गात् । अतः सूत्राण्येव सम्भवदध्याहारादिकानि

१. 'दर्शय', २. 'र्थोपव', ३. 'सति वे' ख. पाठः.

**एवशब्दोऽल्पवाच्यत्वादस्यावृत्तौ तु गौरवम् ।**
**प्रसिद्धत्वादवाच्यं चेन्न दोषः पुञ्जिरामयम् ॥ ३१ ॥**

---

एषामिति सर्वनाम्ना परामर्शमर्हन्ति । ननु विपरिणामगुणकल्पने पदधर्मावेव । पदे हि प्रकृतिः प्रत्ययो वा विपरिणमति । यथा—प्रतिगृह्णीयादिति प्रतिग्राहयेदिति भवति । विप्रकर्ष इति च विप्रकर्षादिति भवति । गुणकल्पनापि पदगोचरा । सा यथौत्पत्तिकादिपदेषु वक्ष्यते । वाक्येषु तु नानयोः सम्भवः । न हि पदसमुदायो विपरिणमति । न च गौणो भवति । अतो न पदसूत्रयोः कश्चिद् विशेषः । उच्यते—वाक्यं हि नाम न पदेभ्यो व्यतिरिक्तमन्यदेव किमपि तत्त्वम् । अपि तर्हि पदान्येवैककार्यपरिष्वङ्गसमासादितसमन्वयानि । तदिह युक्तं यत् पदधर्मोऽप्यन्वेतीति । अतः प्रसजतः पदद्वारेण वाक्येषु विपरिणामगुणकल्पने इति प्रतिषेधाधारत्वोपपत्तिः । वाक्यधर्मयोस्तु पदमात्रे न कथञ्चित् प्रसक्तिरिति न तन्निषेधो युक्तः । तस्माद् युक्तमध्याहारादिनिषेधार्थमेषामिति सर्वनाम्ना सूत्राणामभिधानमिति ॥ ३० ॥

अत्र भाष्यकारेण सर्वव्याख्याप्रयोजनमभिदधतोक्तम् 'एवं वेदवाक्यान्येवैभिर्विचार्यन्ते' इति । तस्यार्थः—साधारणव्याख्ययैव सूत्राणां व्याख्यातत्वान्न पुनस्तानि व्याख्येयानि । वेदवाक्यान्येव तैः परिज्ञातार्थैर्व्याख्यातव्यानीति । तदयुक्तम् । उक्तं हि—

"साधारणी विशिष्टा च सूत्रव्याख्या द्विधा कृता ।"

इति । अतो विशिष्टव्याख्ययापि सूत्राणां स्पृश्यमानत्वात् कथं वेदवाक्यान्येवेत्यवधारणोपपत्तिरित्यत आह—**एवशब्द** इति । यत्नगौरवपरिहारार्थो हि विशेषव्याख्याप्रत्यादेशः । गौरवं च पदच्छेदादिप्रपञ्चेन तार्किकवत् क्रियमाणायां व्याख्यायामापद्यते । न चेह तथा करिष्यते । अतोऽल्पस्य विशेषस्य सूत्रगतस्य वाच्यत्वादवधारणं कृतमित्यदोष इति । अपरमपि 'इतरथा यत्नगौरवं प्रसज्येते'ति भाष्यम् । तस्यायमर्थः—वेदवाक्यान्येव तावद् व्याख्येयानि । यदि त्विदं व्याख्यानं वेदसूत्रोभयगोचरतया वर्ण्यते, ततो यत्नगौरवमापद्यत इति । तदाह—**अस्येति** । भाष्यं व्याचक्षाणो व्याख्येया इत्यतः प्रकृतं व्याख्यानमस्येति

**व्याख्याङ्गत्वाभिमानेन योऽध्याहाराद्यपेक्षते ।**
**स्वसंज्ञां वापि तस्येदं शास्त्ररूपं निरूप्यते ॥ ३२ ॥**
**वृत्त्यन्तरेषु केषांचिल्लौकिकार्थव्यतिक्रमः ।**
**शब्दानां दृश्यते तेषामुपालम्भोऽयमुच्यते ॥ ३३ ॥**
**अथात इत्ययं लोके नानन्तर्ये प्रयुज्यते ।**
**तस्मात् तादर्थ्यमेतस्य परिभाषादिभिर्भवेत् ॥ ३४ ॥**

---

परामृशति । यदीह वेदाश्च सूत्राणि च व्याख्यायन्ते, ततो व्याख्यानावृत्तौ यत्नगौरवं प्रसज्येत । द्रव्यभेदेऽपि हि क्रियावृत्तिर्दृष्टा यथाष्टकृत्वो ब्राह्मणा भुक्तवन्त इति । अत्र चोदयति — प्रसिद्धेति । स्वतःसिद्धमेव ह्यविरोधे प्रसिद्धार्थग्रहणमध्याहारादिवर्जनं च किमनेनोक्तेनेति । परिहरति — न दोष इति । नहि वेदवदप्राप्तविषयं भाष्यमिति ॥ ३१ ॥

तथाप्यनुक्तसुज्ञानस्यार्थस्य पुनर्वचनं प्रयोजनापेक्षमिव दृश्यत इति मन्वानं प्रति प्रयोजनमाह — **व्याख्याङ्गत्वेति** । यो नाम तन्त्रान्तरेऽध्याहारादि स्वपरिभाषा वा गुणवृद्ध्यादिका दृष्टेत्यत्रापि तत् प्रयोजयति तस्य कृते शास्त्रस्वरूपमनेन निरूप्यते, अध्याहारादिवर्जितमेव व्याख्यानं मीमांसायामुपपन्नमिति ॥ ३२ ॥

यस्य तु मन्दफलत्वादेवमप्यपरितोषः, तं प्रत्यन्यथा वर्णयति — **वृत्त्यन्तरेष्विति** । केषाञ्चिद्धि भवदासादीनां वृत्त्यन्तरेषु शब्दानामलौकिकोऽर्थ उपवर्णितः । तेऽनेन भाष्येणोपालभ्यन्ते । यावद्धि पूर्वग्रन्थदोषोद्भावनेन स्वग्रन्थगुणवत्ताख्यापनेन वा विशेषो न प्रदर्श्यते, तावन्न श्रोतारः श्रोतुमाद्रियेरन् । ..त्युत पूर्वग्रन्थानेवायमल्पान्तरं चोरयतीति वदद्भिरसूयकैः शुश्रूषूणामुत्साहभङ्गो युज्येत । अतः प्रयोजनवानेव परोपालम्भ इति ॥ ३३ ॥

क्व पुनर्भवदासेनालौकिकार्थग्रहणं कृतं यदेवमुपालभ्यते । अत आह — **अथात** इति । शब्दार्थाविह लोक्यते इति वृद्धव्यवहारो लोकः । तत्र पृथक्पदत्वमेवाथातश्शब्दयोर्दृष्टम् । यथा — भुक्तवानयमथ व्रजतीति ।

---

१. 'स्वरससि', २. 'सार्थवि', ३. 'न': प्रबो,' ४. 'पि ताः प्र', ५. दर्शितः ता' ख. पाठः.

**प्रसिद्धहानिः शब्दानामप्रसिद्धे च कल्पना ।**
**न कार्या वृत्तिकारेण सति सिद्धार्थसम्भवे ॥ ३५ ॥**
**सूत्रार्थे क्लिश्यते चैवं दूरे वेदार्थनिर्णयः ।**
**तत्र यत्नस्य भारत्वं वक्तृश्रोत्रोः प्रसज्यते ॥ ३६ ॥**
**न व्याख्यास्यति सूत्राणि चोदनार्थपरत्वतः ।**
**यत्तस्य परिहारोऽयं प्रत्याख्यानेन वोच्यते ॥ ३७ ॥**

---

न भुक्तवानतो न व्रजतीति । न त्वनयोरानन्तर्यमात्रे दृष्टचरः संसर्गः । योऽपि च 'अथातः शेषलक्षणम्' (जै० सू० ३. १. १) 'अथातोऽग्निमग्निष्टोमेनानुयजती'ति संसर्गः, तत्रापि केवलातश्शब्दवेदनीयमेवानन्तर्यम् । भवदासेन चोक्तम्—

''अथात इत्ययं शब्द आनन्तर्ये प्रयुज्यते ।''

इति । तेनास्य पदसमुदायस्य तादर्थ्यं नर्ते परिभाषादिभिः सिध्यतीति । आदिशब्देन परैः सञ्ज्ञानं लक्षणां चाहेति ॥ ३४ ॥

अत्रेदानीं भाष्यं योजयति—**प्रसिद्धेति** । भवदासेन ह्यतश्शब्दस्य हेत्वर्थत्वं प्रसिद्धमपलपितम् । अप्रसिद्धानन्तर्यगोचरत्वं च कल्पितम् । इदं च सति प्रसिद्धार्थसम्भवे न वृत्तिकारेण कार्यमिति 'लोक' इत्यादिग्रन्थेनोक्तम् । सम्भवति चात्र प्रसिद्धार्थग्रहणम् । न ह्यत्र पाणिनिनेव जैमिनिना 'वृद्धिरादैच्' (पा० १. १. १) इतिवत् स्वसंज्ञा प्रणीता । तदिदं 'सति सम्भव' इत्यनेनोक्तमिति वेदितव्यम् । किं हि प्रसिद्धेनापराद्धं येन स्वरससिद्धमुलङ्घ्याप्रसिद्धोऽर्थः कल्प्यत इति ॥ ३५ ॥

अपि चैवं सत्यप्रसिद्धकल्पितेषु सूत्रपदार्थेषु व्याख्यायमानेषु पुनश्च वेदवाक्येषु यत्नगौरवं प्रसज्यत इति 'इतरथे'त्यादिकेनोक्तमित्याह— **सूत्रार्थे क्लिश्यत** इति । स्वमनीषाकल्पितेषु सूत्रपदार्थेषु व्याख्यायमानेषु पुनश्च वेदवाक्येषु वक्तुर्ग्रन्थकारस्य ग्रन्थसन्दर्भप्रणयनेन व्याख्यातुश्च तद्व्याख्यानेन श्रोतुश्च महतो ग्रन्थस्य श्रवणधारणाभ्यां महान् यत्न आपद्यत इति ॥ ३६ ॥

यस्तु मन्यते— गुणवत्तरग्रन्थनिर्माणे श्रवणादेव श्रोतारः श्रोतु-

---

१. 'ऽथातः श', २. 'वर्तते', ३ 'पां सि', ४. 'ति सि' ख. पाठः.
५. 'यदुक्तं स्व' क. पाठः. ६. 'रः प्रपत्स्यन्ति किं' ख. पाठः.

**प्रयासो वेदवाक्येषु कार्यः सूत्रेष्वनेन किम् ।**
**फलवत्त्वाफलत्वाभ्यामेभिः करणसम्मतैः ॥ ३८ ॥**
**चोदनार्थ उपेतव्यो नोभयं यत्नगौरवात् ।**
**पदार्थानां प्रसिद्धत्वाद् व्याख्येयं नावशिष्यते ॥ ३९ ॥**

---

माद्रियन्ते किं गुणगणहारिणा दौर्जन्येनेति, तं प्रत्यर्थान्तरमवतारयति — **न व्याख्यास्यतीति** । एष हि भाष्यकारः सूत्रोच्चारणानन्तरं वेदवाक्यान्युदाहृत्य संशयपूर्वोत्तरपक्षविभागेनार्थनिर्णये यत्नं करिष्यति, न सूत्रावयवविवरणादरम् । तत्र श्रोतॄणामाशङ्का जायेत किं स्विदयमज्ञतया सूत्राण्युपेक्षितवान्, आहोस्विदनर्थकत्वाद्, उत प्रसिद्धत्वादिति । तदयमकुशलो भाष्यकारः यत् सूत्रेषु भाष्यं कर्तुमभिप्रवृत्तस्तान्युपेक्षितवानिति । इमं दोषं व्याख्याप्रत्याख्यानेन परिहरति । न वयमनभिज्ञाः, न चैतानि सूत्राण्यनर्थकानि, चोदनार्थपरतन्त्रत्वान्न व्याख्येयानीत्युपेक्षितानीति ॥ ३७ ॥

किं पुनश्चोदनार्थपरतन्त्रत्वे कारणमत आह — **प्रयास** इति । किं पुनः सूत्रेषु न प्रयस्यते । अत आह — फलवत्त्वेति तव्योन्तेन । फलवन्ति हि वेदवाक्यानि, फलवत्क्रतुप्रमितिप्रत्यासत्तेः । अफलानि सूत्राणि, तेषामनासत्तेः । अत एव च सूत्रैः करणभूतैश्चोदनार्थ एवोपेतव्यः, न पुनरुपायभूतानि सूत्राण्युपेक्षितव्यानि । तादिदं 'वेदवाक्यान्येवैभिरि'ति । भाष्यकारेणोक्तमिति वेदितव्यम् । इह हि वेदवाक्यानां प्राधान्यमुपदिशति यत् प्रधानविभक्त्या संयुज्य निर्दिशति विचार्यन्त इति । सूत्राणि करणविभक्त्या तृतीययैभिरिति । ननु मा नाम साक्षादफलत्वात् केवलानि सूत्राणि व्याख्यायन्ताम् । उभयं तु व्याख्यायतां सूत्राणि च तैश्च वेदवाक्यानीत्यत आह — नोभयमिति । उभयव्याख्यायां मुधा यत्नगौरवमापद्यत इति । इदं तु 'इतरथे'त्यादिकेनोततमिति वेदितव्यम् । ननु सत्यं यत्नगौरवम् । न तु मुधा । न ह्यव्याख्यातः सूत्रार्थो ज्ञायते । न च तदनभिज्ञो वेदार्थं ज्ञातुमीष्टे, तदुपायत्वात् तस्य । अत आह — पदार्थानामिति । एवं हि मन्यते — सत्यं वेदार्थज्ञानोपायभूतानि सूत्राणि ।

---

१. 'भिर्विचार्यन्ते इति द्रष्टव्यम् । इह' ख. पाठः.

**एवंशब्दादिको ग्रन्थः पक्षे चास्मिन् समर्थ्यते ।**
**पदच्छेदाद्यभावेन प्रत्याख्यानमतिस्त्वियम् ॥ ४० ॥**
**ब्रवीत्येव हि सूत्रार्थमतिरिक्तादि चेक्षते ।**
**नन्वशक्तमि  सूत्रं सम्यक् सूत्रितमित्यपि ॥ ४१ ॥**

---

न तु तान्यव्याख्यया दुर्ज्ञातार्थानि । पदार्थास्तावत् लोकप्रसिद्धा एव । तत्प्रसिद्ध्यैव च तत्पूर्वको वाक्यार्थोऽपि प्रसिद्ध एवेति न किञ्चिद् व्याख्येयमवशिष्यत इति ॥ ३८, ३९ ॥

अत्र च पक्षे भाष्यं सङ्गच्छतेतरामित्याह — **एवंशब्दादिक** इति । सर्वव्याख्यायां हि विशेषव्याख्याया अल्पत्वादसत्त्वमुपचरितम् । इह तु सर्वथैव सूत्रव्याख्या प्रत्याख्यायते इत्यवधारणयत्नगौरवपरिहारयोरुभयोरुपपत्तिरिति । पक्षान्तराभिधित्सयेदानीमिममपि पक्षं दूषयति— पदच्छेदादीति । यतः पदच्छेदादि न करोति, तस्मान्नायमभिनवो भाष्यकारः सूत्रार्थं विजानीत इति भवदासतन्त्रोपजीविभिरेवैतत् प्रत्याख्यापितं बुभुत्सुजनोत्साहमपहन्तुमिति ॥ ४० ॥

परमार्थतस्तु सूत्राणां तात्पर्यं ब्रवीत्येव न्यूनाधिकादिप्रत्यवेक्षणं च तत्र तत्र करोत्येवेत्याह — **ब्रवीत्येवेति** । क्व पुनरतिरिक्तादीक्षते अत आह — नन्वशक्तमिति । चोदनासूत्र एव तावत् 'नन्वशक्तमिदं सूत्रमिमावर्थावभिवदितुं चोदनालक्षणो धर्मो नेन्द्रियादिलक्षणः, अर्थश्च धर्मो नानर्थ इति । उभयविवक्षायां वाक्यभेद आपद्यते' इति परिचोद्य 'तत्तु वैदिकेषु, न सूत्रेष्वि'ति परिहरिष्यति । तथा यजुर्लक्षणानन्तरं कियदेकं यजुरिति यजुःपरिमाणज्ञापनार्थमुक्तम् 'अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद् विभागे स्यात्' (जै० २. १. ४६) इति । अस्यार्थः—यावन्ति पदान्येकप्रयोजनानि प्रविभज्यमानानि साकाङ्क्षाणि च, तावन्त्येकं वाक्यमिति । उदाहरणं तु 'देवस्य त्वा सवितुः प्रसव' इति मन्त्रः । अत्र हि सकलसवित्रादिविशेषणविशिष्टैकप्रधानभूतनिर्वापप्रकाशनं प्रयोजनम् । सर्वाणि च देवस्य त्वेत्यादीनि निर्वपामीत्यन्तो विभक्तानि सन्ति साकाङ्क्षाणीति देवस्य त्वेत्युपक्रम्य निर्वपामीत्यन्तमेकं वाक्यमिति स्थिते अवयवप्रयोज-

---

१. 'नानि', २. 'त्वेवमादी', ३. 'त्यन्तानि विभज्यमानानि स' ख. पाठः.

नाभिधित्सया भाष्यकारेण पृष्टम् 'अथ किमर्थमुभयं सूत्रितम् अयमर्थैकत्वादेकं वाक्यमिति विभागे साकाङ्क्षमिति चे'ति । तत्र प्रयोजनमुक्तम् । 'भवति हि किञ्चिदेकार्थं नं तु विभागे साकाङ्क्षम् । यथा — भगो वां विभजतु । पूषा वां विभजतु । अर्यमा वां विभजतु इत्यादि । अत्र ह्येकविभागमभिवदन्तः सर्वे एकार्थाः सन्तोऽपि नानावाक्यत्वं प्रतिपन्नाः । असति तु विभागे साकाङ्क्षमिति विशेषणे एकार्थतामात्रेणैव सर्वेषामैकमन्त्र्यमापद्यते इति । तथा विभागे साकाङ्क्षमित्येतावत्युच्यमाने 'स्योनं ते सदनं करोमि । घृतस्य धारया सुशेवं कल्पयामीति, तस्मिन् सीदामृते प्रतितिष्ठ । व्रीहीणां मेध सुमनस्यमानः' इत्यनयोरेकवाक्यता विभागे साकाङ्क्षत्वादापद्यते । तस्मिन् सीदेति विभक्तं सत् साकाङ्क्षं तद्वृत्तस्य पूर्वप्रकृतपरामर्शात्मनस्तेन विनानुपपत्तेः । सत्यपि च विभक्तसाकाङ्क्षत्वे प्रयोजनभेदाद् वाक्यभेदः । द्वे हि तत्र प्रयोजने । पूर्वस्य सदनकरणमुत्तरस्य पुरोडाशप्रतिष्ठापनम् । एवमुभयोः प्रयोजनमुक्त्वान्त उपसंहृतं 'तस्मात् सम्यक् सूत्रितमि'ति । तथा 'विशये प्रायदर्शनात्' (जै० २. ३. १६) इति सूत्रम् । तत्रोदाहरणापरिज्ञानादगमकं सूत्रमित्युक्तम् । इह हि संशये प्रायदर्शनं हेतुर्निर्दिश्यते । तत्र न विद्मः कः संशयः, कुत्र वा संशयः, कस्यां प्रतिज्ञायां प्रायदर्शनं हेतुरित्येवमाक्षिप्य वृत्तिकारमतेन समाहितम् । वृत्तिकारेण हि 'वत्समालभेत' 'वत्सनिकान्ता हि पशवः' इत्युदाहृत्य विचारितं किं यागचोदनेयमुतालम्भमात्रं वत्ससंस्कार इति । तदिह मन्दाशङ्कानिराकरणार्थं सामान्यतोदृष्टेन पूर्वपक्षितम् । आलभतिः किल प्राणिद्रव्यसंयुक्तो यागसङ्गतो दृष्टः, यथा 'यो दीक्षितो यदग्नीषोमीयं पशुमालभत' इति । तदयमपि प्राणिद्रव्यसंयोगाद् यजिमानिति भवति मन्दाशङ्का । तामपनेतुमिदमुक्तं 'विशये प्रायदर्शनादि'ति । अस्यार्थः — वत्ससंस्कारैः समभिव्याहृतोऽयमालभतिः । तदयमपि साहचर्याद् वत्ससंस्कार एवेति भवति मतिः । यथा अग्र्यप्राये लिखितोऽग्र्य इति । ननु लिङ्गमिदम् । लिङ्गं च प्रमाणप्राप्तमभिद्योतयति, नतु प्रापयति । तत् कुतः प्राप्तस्येदं लिङ्गमिति वक्तव्यम् । उच्यते । न तावदिह 'सोमेन

१. 'ति अत्र', २. 'कं सर्वे सा' ख. पाठः. ३. 'दं' क. पाठः. ४. 'स्यां च प्र' ख. पाठः. ५. 'यां हे', ६. 'रयिष्यते किं' क. पाठः. ७ 'माणान्तरेणप्राप्तार्थम' ख. पाठः.

सूत्रे चागमकत्वादि प्रत्याख्याने विरुध्यते ।
न चोपायानभिज्ञेन शक्योपेयावधारणा ॥ ४२ ॥
नान्यतो वेदविद्भ्यश्च सूत्रवृत्तिक्रियेष्यते ।
प्रत्याख्यानस्य हेतुश्च पदार्थानां प्रसिद्धता ॥ ४३ ॥
योक्ता सा वेदवाक्यानां तुल्यार्थत्वान्निवारयेत् ।

यजेते'तिवद् यागः प्रत्यक्षः । न च दैक्षपश्वादिवदनुमीयते । तत्र हि द्रव्यदेवतासम्बन्धान्यथानुपपत्तिर्यागावगमे हेतुः । इह तु न द्रव्यं देवतासंयुक्तमुपलभामहे, द्रव्यमात्रश्रुतेः । अतो दृष्टार्थ एवायं वत्ससंस्कार आलम्भः । स ह्यालभ्यमानो गां प्रस्तावयिष्यतीति बह्वेवञ्जातीयकं भाष्यकारेण व्याख्यातमित्यूहनीयम् । अतः सूत्रव्याख्याप्रत्याख्याने सकलमेवमादि भाष्यकारस्य विरुद्धमापद्यत इति । यत्तु प्रत्याख्याने कारणमुक्तमुपायभूतानि वेदार्थज्ञाने सूत्राणि, अतः किमेभिर्व्याख्यातैः, उपेय एव तु वेदार्थ एभिः करणभूतैर्व्याख्यातव्य इति । तद् दूषयति — न चेति । यत एव च तान्युपायभूतानि, अत एव सुतरां व्याख्येयानि । न ह्युपायानभिज्ञ उपेयमवधारयितुमलम् । ननु च तान्यपि व्याख्यायमानानि साध्यानि भवेयुः । न चासिद्धमसिद्धेनैव साध्यते । उच्यते । असिद्धमपि साधनमन्यसाधितं कार्ये व्यापार्यते, यथा द्रव्यदेवतोपपादितो यागः फलभावनायां, यथा चान्यतरासिद्धानि साधनानि साधनान्तरासिद्धानि साध्यं साधयन्त्येवेति ॥ ४१, ४२ ॥

सत्यमुपायानभिज्ञस्योपेयावधारणा नास्ति । उपायान्तरादेव तु विदितवेदार्थस्य किं सूत्रव्याख्यया । अत आह — नान्यत इति । ये ह्यन्यत एव विदितवेदार्थास्तेषामर्थे नैतानि सूत्राणि जैमिनिना प्रणीतानि, भाष्यकारेण च व्याख्यातानि । अन्यतोऽनभिज्ञांस्तु प्रति सूत्राणि प्रणीतानि भाष्यकारेण च व्याख्यातानि । न च तेऽव्याख्यातमेव सूत्रार्थमुन्नयन्ति । न चानिर्णीतसूत्रार्था वेदार्थमवधारयन्तीति युक्तस्तदर्थो व्याख्याप्रयास इति ॥ ४२६ ॥

यदुक्तं पदार्थानां प्रसिद्धत्वात् इति, तन्निराचष्टे — प्रत्याख्यानस्येति । प्रसिद्धपदार्थकत्वं हि वेदवाक्यानामप्यव्याख्येयत्वमापादयति ।

१. 'साधितानि,' २. 'इत्युक्तं' ख. पाठः.

**वाक्यार्थे तत्र सन्देहाद् व्याख्यानं चेत् प्रवर्तते ॥**
**सूत्रेष्वपि समानत्वात् प्रत्याख्यानं न युज्यते ।**
**न व्याख्यातव्यमित्येवं प्रत्याख्याने च सिध्यति ॥**
**दुष्टव्याख्यानिषेधेन तदपेता न वार्यते ।**
**अस्य दृष्टविरुद्धत्वात् फल्गुत्वाच्चापि पूर्वयोः ॥ ४६ ॥**
**मध्यमे चातिदौर्जन्यात् परिसङ्ख्यैव युज्यते ।**
**वैदिकं जैमिनीयं च यत्र वाक्यं विरुध्यते ॥ ४७ ॥**
**यथाश्रुतगृहीतेऽर्थे तत्रेदमुपदिश्यते ।**

---

तेष्वपि हि लोकप्रसिद्धान्येव पदानि पदार्थाश्च । वक्ष्यति हि 'य एव लौकिकाः शब्दास्त एव वैदिकास्त एव तेषामर्थः' इति । तदिदमुक्तं तुल्यार्थत्वादिति । तुल्या हि लोकवेदसूत्रेष्वपि पदार्था इति ॥ ४३½॥

अथैवमुच्यते — यद्यपि वेदवाक्येषु प्रसिद्धा एव पदार्थाः, तथापि वाक्यार्थेषु वचनव्यक्तिविशेषानवधारणाद् यथायथं संशयाः समुपनिपतन्तीति तन्निरासाय तत्र व्याख्यानं प्रवर्तत इति, तत् सूत्रेष्वपि समानमिति तद्व्याख्याप्रत्याख्यानमयुक्तमित्याह — **वाक्यार्थ** इति ॥ ४४½ ॥

अपिचायं भाष्यकारः सूत्रव्याख्यां प्रत्याचक्षाणः स्पष्टमेव न व्याख्येयानीत्याचक्षीत, एतावतैव प्रत्याख्याने सिध्यति यदयमध्याहारादिदोषदुष्टव्याख्यानिषेधं करोति, तदवगम्यते दोषापेता तु व्याख्यानेन न निवार्यत इत्याह — **न व्याख्यातव्यमिति** ॥ ४५½॥

तदेवमस्य प्रत्याख्यानपक्षस्य- दृष्टव्याख्याविरुद्धत्वात्, पूर्वयोश्च सर्वव्याख्योपालम्भयोः फल्गुत्वादनतिप्रयोजनत्वाद्, मध्यमस्योपालम्भस्य विशेषतो दौर्जन्यापादनाद्, न्यायाभासप्राप्तवेदवाक्यान्यथाकरणनिराकरणेन महाफला अनुक्तदुर्ज्ञाना च परिसंख्यैवास्य भाष्यस्यार्थ इत्याह — **अस्येति** ॥ ४६½ ॥

परिसंख्याविषयं तावदाह — **वैदिकमित्यर्थेन्तेन** । वेदवाक्यव्याख्यानार्थानि हि सूत्राणि । तदिमानि प्रायेण यथाश्रुतगृहीतान्यपि वेदवाक्यार्थनिर्णयसमर्थन्यायकलापं समर्पयन्त्येव । क्वचिदेव तेषां प्रतीघातो

---

१. 'दु' क. पाठः.

**अध्याहारादिभिः सूत्रं व्याख्येयं च यथाश्रुतम् ॥४८॥**
**नेयं विरोधेऽन्योन्यस्य वैदिकानां भवन्तु ते ।**
**यथा धर्मावबोधस्य प्रमाणं वैदिकं वचः ॥ ४९ ॥**
**तदर्थनिर्णये हेतुर्जैमिनीयं तथैव नः ।**
**वाक्यसामर्थ्यतुल्यत्वात् तथा पदतदर्थयोः ॥ ५० ॥**
**अध्याहारादिभिर्मुक्ता व्याख्या सर्वत्र युज्यते ।**

---

भवति । तद् यत्र वेदसूत्रयोर्यथाश्रुतगृहीतयोः परस्परविरोधो भवति तद्विषया परिसंख्येति । एवमवगते विषये स्वरूपमाह — तत्रेतिनेयमन्तेन । विरोधविषयेऽपि हि स्वरसतो यथाश्रुतगृहीतसूत्रग्रहणं प्रसक्तमनया वार्यते । यदिदं प्रसिद्धार्थग्रहणमध्याहारादिवर्जनं च तद् वेदाविरोधे । विरोधे तु सूत्रमध्याहारादिभिर्व्याख्येयं, वैदिकमेव वाक्यं यथाश्रुतं नेयमितीदमत्रोपादिश्यत इति । अथ किं सर्वदैव वेदवाक्यं यथाश्रुतं नेयं, नेत्याह — विरोध इति । यत्र हि वेदवाक्ययोरेवान्योन्यं विरोधो भवति, तत्र तयोरेकमध्याहारादिभिर्नीयत एव । यथोपक्रमावगतदातृश्रुतिविरोधादुपसंहारस्था प्रतिगृहीतृश्रुतिः दातृगोचरा दर्शिता । एवं ह्युक्तं 'यावतोऽश्वान् प्रतिगृह्णीयादिति प्रतिग्राहयेदि'ति । इदं तु विपरिणामोदाहरणम् । अध्याहारादयस्तु वेदवाक्ये विस्तरभयान्न प्रपञ्चिता इति ॥ ४७-४८½ ॥

ननु चोभयत्र प्राप्तौ परिसंख्या भवति । यथोक्तं —

"तत्र चान्यत्र च प्राप्तौ परिसंख्येति कीर्त्यते"

इति । न चेह विरोधाविरोधयोरुभयोरपि यथाश्रुतसूत्रग्रहणं प्रसक्तम् । नहि जातु प्रधानाननुगुणं गुणं यथार्थमुपादाय प्रधानमन्यथा नीयत इति सम्भवति । अपिच नित्यं वेदवाक्यमनित्यं सूत्रम् । अतोऽपि च नास्य तेन सह स्पर्धा युक्ता । तेन वेदविरोधे यथाश्रुतसूत्रग्रहणं न प्रसक्तमिति किं तन्निवृत्त्यर्थया परिसङ्ख्ययेत्यत आह—यथेति । एवं हि मन्यते— सत्यमयं न्यायः यद्वेदाविरोधे सूत्रमन्यथा क्रियत इति । न्यायाभासेन तु भ्राम्यतः प्राति भाष्यकारो 'लोक' इत्यादिभाष्येण परिसञ्चष्टे । एवं हि भ्रान्ताः श्रोतारो

---

१. 'धे । वेदवि' ख. पाठः. २. 'त् प्र' क. पाठः. ३. 'मेवेति' ख. पाठः
४. 'ति नान्या' क. पाठः.

**असम्भवादवश्यं या विरोधेऽन्यतरस्य तु ॥ ५१ ॥**
**अन्याय्यकल्पना सापि विकल्पेन प्रसज्यते ।**
**प्राथम्येनावरुद्धत्वादुपायवशगोऽथवा ॥ ५२ ॥**
**यथाश्रुतेन सूत्रेण न्याय्यां बाधेत चोदनाम् ।**

---

मन्वीरन् — न सूत्रैः सह वेदवाक्यानां कश्चिद् विशेषः । यथा हि वेदो धर्मे प्रमाणम्, एवं वेदार्थनिर्णयोऽपि नर्ते सूत्रेभ्यः सिध्यतीति नास्मान् प्रति वेदसूत्रयोः कश्चिद् विशेष इति । न च वेदसूत्रवाक्यानामन्यः स्वगतो विशेषः । लौकिकास्तावत् पदपदार्थां उभयत्र तुल्याः, वाक्यमप्याकाङ्क्षितयोग्यसन्निहितपदसमन्वयात्मकमुभयं वैदिकं जैमिनीयं च । नहि तयोरन्यतरदप्यध्याहारादिकमपेक्षते । तदेतदाह — वाक्यसामर्थ्येति ॥ ४९–५०½ ॥

ननु न विरुद्धार्थमुभयं सम्भावयितुं शक्यते । अतोऽन्यतरदन्याय्यमिति स्थिते, गुणत्वात् सूत्रमन्यथा कार्यमिति प्रागुक्तमत आह— **असम्भवादिति** । विचित्राशया हि जिज्ञासवः । अतस्ते कदाचित् प्रधानगुणगोचरं बलाबलं[2] जानन्तो वेदानुरोधेन सूत्रमन्यथा नयन्ति । कदाचिदुद्भूताचार्यगौरवा एवमालोचयन्ति — कथं हि न्यायसहस्रविज्जैमिनिरस्मदादिगोचरामनुपपत्तिं नाकलयतीति सम्भावयामः, यथैव तु तेन व्याख्यातं तथैव[3] श्रुत्यर्थो युक्तः । अन्यथैकश्रुत्यनुरोधेन बहुश्रुतिविनाश एवापद्यत इति । तदेवमालोचनाभेदाद् विकल्प इति ॥ ५१½ ॥

अथवा समसामर्थ्ययोरुभयोर्विकल्पो भवति । इह पुनर्वेदार्थनिरूपणावस्थायां सूत्राणि प्रथममुपनिपतन्ति । तान्यनुपजातविरोधीनि तावद् यथाश्रुतग्राह्याण्यापतन्ति । तैश्च प्राथम्येनावरुद्धबुद्धिः श्रोता जघन्यस्थानोपनिपातिनीमेव चोदनां बाधेत । मुख्यानुरोधेन हि जघन्यबाधो वक्ष्यते 'मुख्यं वा पूर्वचोदनाल्लोकवत्' (जै० १२. २. २३) इति । तदाह—**प्राथम्येनेति** । न्याय्यामिति परिसंख्यायाः प्रयोजनं सूचयति । असत्यां हि परिसङ्ख्यायां न्यायाभासेन न्याय्य[4]चोदनाबाधः प्रसज्येत । कथं पुनर्न्याय्या चोदना । उच्यते । गुणभूतानि सूत्राणि प्रधानभूतानि वेद-

---

१. 'त्राणाम', २. 'रां बलाबलगातिं जा', ३. 'वार्थः श्रुतेर्युक्तः', ४. 'य' ख· पाठः.

**तेन वेदाविरोधस्य सति सम्भव इत्ययम् ॥ ५३ ॥**
**विधीयतेऽर्थः शेषं तु यथाप्राप्तमनूद्यते ।**
**शेषभाजां भवेल्लोप इत्यध्याहारकल्पना ॥ ५४ ॥**

---

वाक्यानि, तद्व्याख्यानार्थानि हि तानि । न च गुणानुरोधेन प्रधानमन्यथा-कर्तुमुचितम् । प्रधानमविगुणं कथं निर्वर्त्येतेति हि गुणाः क्रियन्ते । प्रधानवैगुण्ये तु किं गुणैः । अत एव वक्ष्यति 'अङ्गगुणविरोधे च तादर्थ्यात्' (जै० १२. २. २५) इति । एष च न्यायः पूर्वस्य मुख्यानुग्रहन्यायस्यापवादकः । अत एव मुख्यदीक्षाकालबाधः प्रधानकालानुरोधेन दर्शितः । उक्तं हि 'पर्वणि दीक्षा पर्वणि सुत्ये'ति । अतः सूक्तं न्याय्यामिति ॥ ५२½ ॥

एवं विकल्पनियमाभ्यामुभयत्रप्राप्त्या परिसंख्यां प्रसाध्यात्रैव भाष्यं योजयति — तेनेति । वेदाविरोधग्रहणमुपलक्षणार्थं न्यायाविरोधमप्युपलक्षयति । तदयमर्थः— यदिदं प्रसिद्धार्थग्रहणमध्याहारादिवर्जनं च, तदुचितप्राप्तमनूद्य सत्यविरोधसम्भव इति विधीयत इति । ननु चात्रापि पक्षे त्रयो दोषाः प्राप्नुवन्ति । तथाहि— सति सम्भव इति विधिमुखेन प्रवर्तमानस्य नासतीत्यन्यनिषेधार्थता वक्तव्या । तत्र स्वार्थहानिरस्वार्थकल्पना-चापद्यते । तथा विरोधाविरोधयोरुभयोरपि यथाश्रुतसूत्रग्रहणं प्राप्तं, तद् बाध्यते । तत्र प्राप्तबाधः । अतः केन विशेषेणेयं परिसंख्या प्रस्तुतेति । उच्यते । यदि सति चासति च विरोधे यथाश्रुतसूत्रग्रहणं कार्यमिति सामान्यवचनमभविष्यत्, ततो दोषत्रयं पर्यहरिष्यत् । यदा तु न्यायाभासेन सामान्यवचनं कल्पयितुमभिप्रवृत्तः सति सम्भव इति प्रत्यक्षोपदेशं पश्यति, तदा सामान्यवचनमलब्धात्मकमेवेति न प्राप्तबाधादिदोषत्रयप्रसङ्गः । अप्राप्तविधिरेव तदा सति सम्भव इति । विनापि विधिना प्राप्स्यतः किं विधिनेति प्रयोजनालोचनायामन्यनिवृत्तिः फलं विज्ञायते । परमार्थतस्तु अप्राप्तविधिरेवायम् । यथा रशनामन्त्रे वक्ष्यति —

"अप्राप्तविधिरेवायमतो मन्त्रस्य निश्चयः[3] ।
परिसंख्या फलेनोक्ता"

इति । तदिदं विधीयतेऽर्थ[4] इत्यनेनोक्तमिति वेदितव्यामिति ॥ ५३½ ॥

---

१. '।नि हिं' क. पाठः. २; 'स्य' ख. पाठः. ३. 'यः ।इ', ४. त इ' क. पाठः.

**विप्रकर्षात् पशोश्चेति विभक्तिः परिणस्यते ।**
**पदेन व्यवधानं तु लोके सन्नियमादिति ॥ ५५ ॥**

---

इदानीं विरोधविषयेऽध्याहारादिकल्पनां सूत्रेषूदाहरणैर्दर्शयिष्यन्न-ध्याहारोदाहरणं तावदाह — **शेषभाजामिति** । वक्ष्यति हि जैमिनिः 'अपि वा शेषभाजां स्यात् —' (जै० ६. ४. ३) इति । अत्र हि शेषकार्या-णीडाप्राशित्रादीन्युदाहृत्य विचारयिष्यते — यद्येषामर्थेन गृहीतस्य हविषो दैवादपचारो भवति, किं तदा हविरन्तरमागमयितव्यं, शेषाद् वावदेयं, कर्मलोपो वेति । तत्रोक्तम् अपि वा शेषभाजा स्यादिति । न चानेन पूर्वपक्षो गृह्यते, अपिवाशब्दसम्बन्धात् । न च सिद्धान्तः, पूर्वपक्षाभावात् । अपि-च अनन्तराधिकरणे प्रधानार्थावत्तहविर्नाशे शेषादवदानेन पूर्वपक्षं परिगृह्य सिद्धान्तितं 'निर्देशाद्वान्यदागमयेत्' (जै० ६. ४. २) इति । द्रव्यान्तरोपा-दानेन तद् यदि द्रव्यान्तरागम एवानन्तर्यादत्रानुषज्यते, ततो न्यायान्तर-विरोध आपद्यते । शेषकार्याणाम् 'एकदेशद्रव्यश्चोत्पत्तौ विद्यमानसंयो-गात्' । (जै० ४. १. २८) इत्यनेनाधिकरणेनाप्रयोजकत्वस्य स्थितत्वात् । अथोत्तरपक्षातिक्रमेण शेषादवदानं शेषभाजामर्थेन स्यादिति सम्बन्धः, तदप्ययुक्तम् । शेषस्य प्रतिपत्त्यन्तरसम्बन्धाद्, नष्टावयवप्रतिपत्तिसम्ब-न्धाभावाच्च । तेनोत्सूत्रमेव द्रव्यान्तरागमेन पूर्वपक्षं परिगृह्य राद्धान्तितम् 'अपि वा शेषभाजां स्याल्लोप' इति लोपपदाध्याहारं दर्शयिष्यति । तदेष सूत्रार्थो भवति— शेषं भजन्ते यानीडाप्राशित्रादीनि, तेषां द्रव्यान्तरप्रयु-क्तिशक्तेरभावाद् विद्यमानशेषस्य प्रतिपत्त्यन्तरसम्बन्धाल्लोपः अकरणमेव स्यादिति ॥ ५४ ॥

विपरिणाममुदाहरति — **विप्रकर्षादिति** । अस्ति हि सवनीयः पशुः 'आश्विनं ग्रहं गृहीत्वा त्रिवृता यूपं परिवीयाग्नेयं सवनीयं पशुमुपा-करोती'ति अनुसवनं सवनीयाः पुरोडाशा निरुप्यन्त इति । सन्ति च सव-नीयाः पशुपुरोडाशाः । तत्र तन्त्रिणो धर्माः प्रसङ्गिन उपकुर्वन्तीति स्थिते, पशुतन्त्रमध्यपातित्वं पुरोडाशानां प्रतिपादयितुं सूत्रं 'पशोश्च विप्रकर्षस्तन्त्र-

---

१. 'त', २. 'पादयि', ३. वा भवति । त', ४. 'क्षान्तराभा' क. पाठः. ५ 'डा-दिकार्याणि ते', ६. 'यं पशु', ७. 'नं पु', ८. 'याः पु', ९. 'तन्त्रष' ख. पाठः.

**सूत्रेण व्यवधानं तु पानव्यापादि कल्पितम् ।**

---

मध्ये विधानात्' (जै० १२: २.३२) इति । तच्चैतद् यथाश्रुतगृहीतं न विवक्षितार्थाख्यानक्षमम् । विप्रकर्षो ह्यत्र प्रथमान्तः साध्यभूतोऽवगम्यते । तन्त्रमध्ये विधानादिति पञ्चम्यन्तं हेतुभूतम् । तच्चायुक्तम् । विप्रकर्षो हि पशोः प्रातरादिकालत्रयसम्बन्धः । स च प्रत्यक्षवचनासिद्धो न साध्यः । एवं हि श्रूयते 'वपया प्रातस्सवने चरन्ति पुरोडाशेन माध्यन्दिने सवने अङ्गै-स्तृतीयसवने' इति । तन्त्रमध्यविधानमपि साध्यं न हेतुनिर्देशार्हम् । अतः प्रथमापञ्चम्योर्विपरिणामो वक्ष्यते । पशोर्विप्रकर्षात् प्रातरादिकालत्रयं[3]-व्यापित्वात् पुरोडाशानां पशुतन्त्रमध्ये विधानम् । पशुर्हि पुरोडाशकाल-मपि व्याप्नोति । पुरोडाशास्तु स्वसवनसमाप्तेरव्यापकाः । अतः पशुतन्त्र-मध्यपतिताः पुरोडाशा इति पश्वर्थमनुष्ठानं पुरोडाशेषु प्रसज्यत इति । इदं च वार्त्तिककारेण विपरिणतमेवोदाहृतं विप्रकर्षादिति । व्यवहितकल्पनामु-दाहरति—पदेनेति । वेदाधिकरणे ह्येवं वक्ष्यति—पदसङ्घातात्मानो वेदाः । पदसङ्घाताश्च पुरुषकृता दृष्टाः, यथा नीलोत्पलवनाद्यर्थविषयाः । अत एतेऽपि कृत्रिमा इति । तद्विशेषप्रदर्शनार्थं चेदं सूत्रं 'लोके सन्नियमात् प्रयो-गसन्निकर्षः स्यात्' (जै० १. १. २६) इति । अत्र च सन्नियमादिति पद-व्यवहितः प्रयोगशब्दो लोक इत्यस्यानन्तरं सम्बन्धनीयः । तदयमर्थः— लोके शब्दप्रयोगः सन्नियमः सम्यङ्निबन्धनात्मको युक्तः, अर्थस्य चक्षु-रादिसन्निकर्षात् । न तु वेदे, अतीन्द्रियार्थत्वादिति । इदं च विपरिणाम-व्यवहितकल्पनयोः साधारणमप्युदाहरणं विपरिणामस्योक्तत्वाद् व्यवधान-मात्रोदाहरणत्वेनोक्तमिति वेदितव्यमिति ॥ ५९ ॥

सूत्रव्यवधानमुदाहरति—सूत्रेणेति । इदं हि समामनन्ति 'सो-मेन्द्रं चरुं निर्वपेत् श्यामाकं सोमवामिनः' इति । तत्र सन्देहः । किं लौकिके सोमवमने सोमेन्द्रश्चरुः, उत वैदिक इति । तत्र 'पानव्यापच्च तद्वत्' (जै० ३. ४. ३८) इति । अश्वप्रतिग्रहेष्टिवाक्यगताद्यविचार-पूर्वपक्षातिदेशः कृतः । तत्र 'यावतोऽश्वान् प्रतिगृह्णीयात् तावतो वारु-णांश्चतुष्कपालान् निर्वपेदि'त्युदाहृत्य विचारितं किं लौकिकेऽश्वप्रतिग्रह

---

१. 'तदेतन्न यथाश्रुतं विवक्षिताख्या' ख. पाठः. २. 'यसम्बन्धात्' ३. 'रपि ष्यते' क. पाठः.

इष्टिरियम्, उत वैदिक इति । तत्र पूर्वपक्षसूत्रं 'दोषात् त्विष्टिर्लौकिके स्यात्—' (३. ४. ३४) इति । दोषनिर्घातार्था हीयमिष्टिः दोषसंयोगेन श्रवणात् । एवं हि समामनन्ति 'वरुणो वा एतं गृह्णाति योऽश्वं प्रतिगृह्णाती'ति । स चायं दोषो लोके सम्भवति न वेदे, विहितत्वादश्वदाक्षिणाया ज्योतिष्टोमादौ । अतो लौकिक इति प्राप्त उक्तम्—'अर्थवादो वानुपपातात् तस्माद् यज्ञे प्रतीयेत' (३. ४. ३५) इति । अस्यार्थः—नेयं दोषनिर्घातार्थेष्टिः दोषाभावात्, न ह्यश्वप्रतिग्रहाद् वरुणग्रहणात्मनो दोषस्योपपातः प्रत्यक्षादिनावगम्यते । ततोऽर्थवादमात्रं दोषसङ्कीर्तनमिति फलकल्पनाया अभावाद् वैदिकत्वसामान्याच्च वैदिक इति स्थिते, पुनर्विचारितं—भवतु वैदिके, सा तु किं दातुः उत प्रतिग्रहीतुरिति । तत्र पूर्वपक्षसूत्रम्—'अचोदितं च कर्मभेदात्' (३. ४. ३६) इति । अस्यार्थः—दानप्रतिग्रहकर्मभेदात् । इह च 'यावतोऽश्वान् प्रतिगृह्णीयादि'ति प्रतिग्रहीतृश्रवणादचोदितमिष्टिकर्म दातुः अतः[३] प्रतिग्रहीतुः ऋत्विज इष्टिरिति प्राप्ते उक्तं—'सा लिङ्गादार्त्विजे स्यात्' (३. ४. ३७) इति । अस्यार्थः—ऋत्विजामयमार्त्विजो यजमानः यो दक्षिणाया दाता । तत्र दातुरियमिष्टिर्भवति । कुतः, लिङ्गात् । किं लिङ्गम् । अश्वप्रतिग्रहेष्टिवाक्यगतपूर्वोत्तरपदसामर्थ्यम् । तत्र हि 'प्रजापतिर्वरुणायाश्वमनयदि'ति दातारं सङ्कीर्त्यान्ते 'प्रतिगृह्णीयाद्' इति श्रुतम् । तच्च प्रथमावगतानुपजातविरोधिदात्रवरुद्धायां बुद्धावुपनिपतितं दातृगोचरमेवावगतम् । अतः प्रतिग्राहयेदिति विपरिणमति । तदिह 'पानव्यापच्च तद्वत्' (३. ४. ३८) इति सूत्रे 'सा लिङ्गादार्त्विजे स्याद्' 'अचोदितं च कर्मभेदात्' 'अर्थवादो वानुपपातात् तस्माद् यज्ञे प्रतीयेते'ति सूत्रत्रयव्यवहितो 'दोषात् त्विष्टिर्लौकिके स्यादि'ति पूर्वपक्षोऽतिदिष्टः । तदयमर्थः—पानव्यापदपि तद्वद् भवितुमर्हति यथाश्वप्रतिग्रहेष्ट्यौद्यपूर्वपक्षे[६]ऽभिहितम् । कुतः, दोषश्रुतेः । एवं हि श्रूयते । 'इन्द्रियेण वा एष वीर्येण व्यृध्यते यः सोमं वमती'ति । स चायमिन्द्रियवीर्यसमृद्धिविगमो लौकिके रसायनार्थं पीते वान्ते सम्भवति न वैदिके । सर्वप्रकृति-

१. 'गश्र', २. 'ति पूर्वपक्षित उ', ३. 'तः ऋत्वि', ४. 'मित्यार्त्वि', ५. 'ष्टिवाक्याद्यविचारपू', ६. 'क्षो', ७. 'तः', ८. 'वमने' क पाठः.

**पशुसामान्यविध्यादौ सूत्रमेवान्यथा कृतम् ॥ ५६ ॥**

---

विकृतिसोमेषु पानमात्रेण सोमप्रतिपत्तेः सिद्धत्वादिति पूर्वपक्षिते प्रतिविहितं—'दोषात्तु वैदिके स्यात्—'(३. ४. ३९) इति । रसायनार्थे हि वमनायैव पानम् । वमनेन हि शुद्धकायस्य सम्यगाहारपरिणामपरम्परया स्थैर्यं भवति । सोमप्रतिपत्तिस्तु सम्यग्जरणान्ता इति 'मामेवाङ्गाभिमतिगा' इति मन्त्रवर्णनादवगतम् । अतस्तत्रैव वमनेन पानव्यापादि जातायां तन्निबर्हणार्थश्चरुः । तदिदं सूत्रत्रयव्यवधानेऽपि सूत्रेणेति समुदायापेक्षयैकवचनमिति ॥ ५५½॥

सूत्रान्यथाकरणमुदाहरति —पश्विति । ज्योतिष्टोमे ह्यग्नीषोमीयसवनीयानुबन्ध्याः पशवः सन्ति । सन्ति चोपाकरणादयः पशुधर्माः । ते किमविशेषेण सर्वपश्वर्थाः उताग्नीषोमीयस्य सवनीयस्य वेति सन्देहः । तत्राविशेषात् सर्वार्थत्वे प्राप्ते विशेषप्रदर्शनार्थं सूत्रं 'तुल्यः सर्वेषां पशुविधिः प्रकरणाविशेषात्' (३. ६. १८) इति । इदं च यथाश्रुतगृहीतं विवक्षितविपरीतार्थमित्यापीतेन व्याख्यातं तुल्यः सर्वेषां पशुविधिः स्याद् यदि प्रकरणाविशेषो भवेत् । अस्ति तु प्रकरणे विशेषः आग्नेयः पशुरग्निष्टोम आलब्धव्य इत्यादिभिर्हि सवनीयं प्रकृत्य धर्मा विहिताः, अतः सवनीयप्रकरणाम्नाता इति सवनीयार्था इति पक्षं परिगृह्य स्थानादग्नीषोमीयार्था इति सिद्धान्तितम् । अग्नीषोमीयस्य हि स्थाने औपवसथ्येऽह्नि धर्मा विहिताः । अतस्तदर्था एव । यत्तु सवनीयानां प्रकरणमिति, तन्न । ज्योतिष्टोमप्रकरणे हि पशवस्तद्धर्माश्चाम्नाता इति न[1] प्रकरणतो विशेषलाभः । उत्तरेद्युराश्विनं ग्रहं गृहीत्वा त्रिवृता यूपं परिवीयाग्नेयं सवनीयं पशुमुपाकरोतीति सवनीयानामुत्पत्तिः । पूर्वेद्युरुत्पत्ताविह तदनुवादेनाश्विनोत्तरकालविधानासम्भवात् कालस्यानुपादेयत्वात् । काले हि कर्म चोद्यते न कर्मणि कालः । तत्र प्रकरणान्तराधिकरणन्यायेन कर्मभेदो भवेत् । एवं चादृष्टकल्पनागौरवं स्यात् । स्यादेतत् । 'वपया प्रातस्सवने चरन्ती'ति पूर्वेद्युरुत्पन्नकर्मोत्कर्षादिह तद्विपरिवृत्तौ न कर्मान्तरचोदना सम्भवतीत्यनुपादेयगुणपरत्वमध्यवसीयत इति । तन्न । अङ्गभूतो हि वपाप्रचारः । नासौ पूर्वेद्युरुत्पन्नं साङ्गं प्रधानकर्मोत्क्रष्टुमर्हति प्रधानानामनङ्गवशवर्तित्वात् । अतः आश्विनं ग्रहमित्येवोत्पत्तिवाक्यम् । एवं च[2] तदनुवादेनाग्नेयमजमि-

---

१. 'नात्र प्र', २. 'च इति त' ख. पाठः.

## अग्नयश्च स्वकालत्वाद् देयधर्मापयातनम् ।

त्यादिनोपादेयगुणविधानं सम्भवतीति वाक्यद्वयमपि सम्भवतीति सिद्धमेवोत्तरेद्युः सवनीयविधानम् । पूर्वं तु गुणविधानार्थमिति । आह च —

"गुणार्थोपवसथ्येऽह्नि सवनीयपुनश्श्रुतिः ।
उत्पत्तिः प्रक्रिया चैषामाश्विनग्रहणोत्तरा ॥

इति । अतः सिद्धं स्थानादग्नीषोमीयार्था धर्मा इति । किमिदं सूत्रान्यथाकरणं नाम । उच्यते—व्यवधारणकल्पनेयम् । यत्रान्यथाप्रतिभासमानोऽर्थः प्रकरणबलेनान्यथा वर्ण्यते सा व्यवधारणकल्पना । ननु नेयमध्याहारादिषु सन्निविष्टा । उच्यते । नायमादिशब्दो व्यवस्थितवचनः प्रकारवचनत्वात् । अध्याहारप्रकाराणां वाक्यदोषाणामेवमादीनामपि युक्तमेवोपवर्णनमिति ॥ ५६ ॥

वाक्यभेदमुदाहरति—अग्नय इति पादत्रयेण । वक्ष्यति हि 'ते सर्वार्थाः प्रयुक्तत्वादग्नयश्च स्वकालत्वात्' (३. ७. ३९) इति । इह च वरणभरणोपात्तानामृत्विजां लौकिकवैदिकसर्वकर्मार्थत्वेन पक्षं गृहीत्वा 'निर्देशाद् वा वैदिकानां स्यात्' (१२. २. ३) इत्यत्र यथाविनियोगं कार्यव्यवस्थोक्ता । तदेकवाक्यतयाग्निष्वपि तदेव विचार्यत इति भवति मतिः । तदयुक्तं, 'विहारो लौकिकानामर्थं साधयेत् प्रभुत्वात्' (१२. २. १) इत्यत्र लौकिकवैदिकसर्वकर्मार्थत्वन पूर्वपक्षं गृहीत्वा निर्देशाद् वैदिकानां स्यादित्यत्र यथानिर्दिष्टवैदिककर्मार्थत्वस्य प्रतिपादितत्वात् । अतः 'ते सर्वार्थाः प्रयुक्तत्वादि'त्यतो विच्छिद्य 'अग्नयश्च स्वकालत्वादि'त्यन्यत्र व्याख्यातम् । एवं हि तत्र पूर्वपक्षितं —यथा 'यस्य खादिरः स्रुवो भवती'ति स्रुवस्य खादिरतानारभ्याधीता 'प्रकृतौ वा द्विरुक्तत्वात्' (३. ६. २) इत्यत्र प्रकृत्यर्थेति वर्णिता, एवमग्नयोऽपि ते च प्रकृत्यर्था एवेति । अत्रोत्तरम् 'अग्नयश्च स्वकालत्वादि'ति । अस्यार्थः — अग्नयः प्रकृतिविकृत्यर्थाः । कुतः स्वकालत्वात् । न हि ते प्रकृतिं विकृतिं वारभ्याम्नाताः, अनारभ्याम्नानात् अतोऽगृह्यमाणविशेषत्वादुभयार्था एवेति युक्तम् । यच्चाग्नीनां सम्बन्धे होमहविश्श्रपणादि द्वारभूतं तत् प्रकृतिविकृत्योरुभयोरपि

१. 'म्बन्धार्थमर्हतीति' ख. पाठः. २. ति सि' क. पाठ. ३. 'क्रम द', ४. 'किं पुनरिदं', ५. माणान्तरब' ख. पाठः. ६. 'ति वं', ७. 'त्वा यथा' क. पाठः. ८. 'पि केवलं प्र' ख. पाठः.

**व्याख्यातं वाक्यभेदेन गुणकल्पास्त्वमी कृताः ॥५७॥**
**औत्पत्तिकस्तु गव्यस्य तथोष्णिक्ककुभोरिति ।**

---

**प्रत्यक्षश्रुतम्** । अतो द्वाराविशेषात् प्रकरणाविशेषाच्च सर्वार्था एवाग्नय इति **युक्तम्** । तथा 'अभ्युदये दोहापनयः स्वधर्मा स्यात्—' (९. ४. ४१) 'अपनयो वार्थान्तरे विधानात्—' (९. ४. ४२ ) इति सूत्रद्वयमेकवाक्यतया प्रतिभासमानं भित्त्वा व्याख्यातम् । तथा हि — दर्शपूर्णमासयोर्दधिपयसी प्रधानभूते प्रदेयतयाम्नाते 'ऐन्द्रं दध्यमावास्यायामैन्द्रं पयोऽमावास्याया-मि'ति । तत्र तावद् देयधर्माः कर्तव्याः । पुनश्च नैमित्तिकानुष्ठानान्तरमाम्नातं 'यस्य हविर्निरुप्तं पुरस्ताच्चन्द्रमा अभ्युदियात् स त्रेधा तण्डुलान् विभजेद् ये मध्यमाः स्युस्तानग्नये दात्रे पुरोडाशमष्टाकपालं निर्वपेद् ये स्थविष्ठास्ता-निन्द्राय प्रदात्रे दधनि चरुं येऽणिष्ठाः तान् विष्णवे शिपिविष्टाय शृते चरु-मि'ति । तदिह दधिपयसी देयधर्मानर्हतो न वेति विचारे नार्हतः चरुरत्र देयः न दधिपयसी, अत एव हि 'दधनि चरुं' 'शृते चरुमि'त्यधिकरण-त्वेन गुणभावश्चरुं प्रति दधिशृतयोराश्रित इति प्राप्ते, उक्तं— दोहापनये दधिपयसी अभ्युदयेऽपि स्वधर्मयुक्ते स्यातां पूर्वावगतप्रक्रान्तदेयापरित्या-गात् । अधिकरणत्वं तु तयोः सम्प्रतिपन्नदेवताकत्वेन तण्डुलैः सह श्रूय-माणयोरर्थाद् ज्ञातं न तद्गुणभावमापादयितुं क्षमते । दृष्टश्च प्रधानभूतस्या-प्यधिकरणतया निर्देशः । यथा रुक्मपात्र्यां महार्हा मणयः एको भागः स देवदत्तस्य रजतपात्र्यां प्रभूतं सुवर्णं यज्ञदत्तस्येति, सहैव पात्र्या भागो-ऽवगम्यते । एवमिहापि सहैव दधिपयोभ्यां चरुर्देवताभाग इति स्थितं दधिपयसोर्देयधर्माः कर्तव्या इति । 'अपनयो वार्थान्तरे विधानादि'ति तयोरेवा'भ्युदये दोहापनय' इति सूत्रेण प्रतिज्ञातान् देयधर्मान् वाशब्देन वारयतीति सम्भाव्यमाने न्यायविरोधादन्यत्र व्याख्यातं पशुकामेष्ट्यामभ्यु-दयेष्टिवाक्यसदृशशब्दान्तरविहितयोर्दधिपयसोर्देयधर्माणामपनयो वार्थान्तरे चरुश्रपणार्थे विधानादिति । गुणकल्पनामुदाहरति— **गुणकल्पास्त्वमी कृताः औत्पत्तिकस्त्विति** । गुणकल्पा इति । कल्पनं कल्पः गुणानां कल्पो गुणकल्पः । गौणो हि गुणादेवान्यवचनः शब्दोऽन्यत्र कल्प्यते

---

१. 'न निवा', २. 'मिदानीमु' ख. पाठः

## दर्शनाच्च विशेषस्य तथाभ्युदय इत्यपि ॥ ५८ ॥

यथाग्निर्माणवक इति । ज्वलनजातिवचनोऽग्निशब्दस्तज्जातीयां व्यक्तिं लक्षयति । ततस्तत्समवेतपैङ्गल्यादिगुणलक्षणया तद्गुणयोगिनि माणवके वर्तते । आह च —

"अभिधेयाविनाभूतप्रतीतिर्लक्षणेष्यते ।
लक्ष्यमाणगुणैर्योगाद् वृत्तेरिष्टा तु गौणता" ॥

इति । तदिहौत्पत्तिकसूत्रे ह्यौत्पत्तिकशब्द उत्पत्तौ भव इत्यनया व्युत्पत्त्या शब्दार्थसम्बन्धानां त्रयाणामनित्यताभिधानाद् विवक्षितनित्यत्वविपरीतवचन इति विवक्षितासम्भवेन गौणो गृहीतः । उत्पत्तिशब्दो ह्युत्पत्तिलक्षितोत्पद्यमानसमवेतसत्तागुणयोगात् शब्दार्थयोर्वर्तमानो गौणो भवति । अतश्च शब्दार्थस्वरूपाधीनः सम्बन्ध इत्युक्तं भवति । तत्स्वरूपनित्यत्वाच्च सम्बन्धोऽपि नित्य इति विविक्षितसिद्धिः । तथादित्यानामयनादिषु सत्रेषु किं द्वादशाहिको विध्यन्त उत गावामयनिक इति सन्देहे अहर्गणसामान्याद् द्वादशाहिक इति प्रतिज्ञाय, 'गव्यस्य च तदादिषु' (८. १. १८) इति गव्यस्य विध्यन्तो दर्शितः न । चायं गव्यशब्दः क्वचित् क्रतुभेदे प्रसिद्धः । न च विवक्षितगवामयनार्पणक्षम इति विवक्षितासम्भवाद् गौणो व्याख्यातः । एष च गोरवयवे तद्विकारे वा मुख्यः । तत्रैव 'गोपयसोर्यत्' (पा० ४. ३. १६०) इति स्मरणात् । तदयं सम्बन्धविशेषवचनस्तदन्तर्गतलक्षितसामान्यसम्बन्धगुणयोगिनि गवामयने प्रयुक्तो गौणो जायते । गवामयने हि 'गावो वा एतत् सत्रमासते'त्यर्थवादोदितगोकर्तृकत्वावगमाद् भवति गोसम्बन्धः । तदयमर्थः — आदित्यानामयनादिषु गवामयनस्य विध्यन्तोऽयनसामान्यातिरेकादिति । तथा दर्शपूर्णमासयोः सन्ति काम्याः सामिधेनीकल्पाः 'एकविंशतिमनुब्रूयात् प्रतिष्ठाकामस्ये'त्यादयः । तत्रागमेन सङ्ख्यापूरणमिति स्थिते आनीयमानास्वृक्षु सन्देहः किं ता अन्ते निविशन्तामुत समिध्यमानवतीसमिद्धवत्योर्मध्य इति । तत्र यथावगतक्रमानुरोधेनागन्तूनामन्ते निवेश इति प्राप्ते, उक्तं समिध्यमानवतीसमिद्धवत्योर्मध्य इति । कुतः । एवं ह्याह 'इयं समिध्यमानवती असौ समिद्धवती यदन्तरा तद्धाय्ये'ति धाय्यानां सामिधेनीनामन्तरालत्वेन संस्तवा-

**सूत्रकारप्रशंसा वा लोक इत्यादिनोच्यते ।**
**प्रसिद्धैरभिधानाद्धि न शिष्याः क्लेशिता यतः ॥ ५९ ॥**

---

दन्तराले विधानमवसीयते । तथा 'उष्णिक्ककुभोरन्ते दर्शनात्'(९. ३. ६) इति लिङ्गमुपदिष्टम् । तच्चायुक्तम् उष्णिक्ककुभोर्मुख्ययोरन्ते अभावात् 'त्रिष्टुभा परिदधाती'ति त्रिष्टुभोऽन्ते दर्शनात् । तदभिप्रायमिदमानीयमानासु च मध्ये सतीषु समिद्धवत्या जुहोतेन्ते(?) भवतः । ते च समाहृते त्रिष्टुभा समसङ्ख्ये इति सङ्ख्यासामान्यात् त्रिष्टुबन्ते भवति । एवमपि त्रिष्टुभोऽन्ते दर्शनादिति वक्तव्यम् । सत्यम् । तथापि 'त्रिष्टुभो वा एतद् वीर्यं यदुष्णिक्ककुभा'वित्यर्थवादावगतत्रिष्टुप्कार्यत्वादुष्णिक्ककुभोः कारणे कार्योपचारादुष्णिक्ककुप्छन्दस्त्रिष्टुभि प्रयुक्तः । तथा ज्योतिष्टोमे 'द्वादश शतं दक्षिणे'ति समधिगते षोडशानामृत्विजां समो विभाग उत विषम इति संशये, विशेषाश्रुतेर्भागसाम्यमुक्त्वा कर्मपरिमाणाद् दक्षिणापरिमाणं लोके तथा दर्शनादिति विशेषो दर्शितः । पुनश्च 'दर्शनाच्च विशेषस्य तथाभ्युदये' इति लिङ्गमुपदिष्टम् । अत्र चाभ्युदयशब्देनाभ्युदयसाधनत्वाद् द्वादशाहो लक्ष्यते । तत्र हि दीक्षाक्रमपरे वचने 'अध्वर्युर्ग्रहपतिं दीक्षयित्वेत्यादिके 'अर्धिनो दीक्षयति' 'तृतीयिनो दीक्षयति' इत्यादिभिः समाख्याभिर्ऋत्विजाम(र्धी[1]र्ध्या)दिभिः सम्बन्धोऽनूदितः । स चायं ज्योतिष्टोमविकारत्वाद् द्वादशाहस्य प्रकृतौ भागवैषम्यमन्तरेणानुपपद्यमानो वैषम्ये लिङ्गमिति । ननु च गुणकल्पा इत्युक्तम् । इह चौत्पत्तिकगव्यशब्दयोरेवं कथञ्चिद् गुणवादो दर्शितः उष्णिक्ककुप्शब्दे तूपचारः अभ्युदयशब्दे तु लक्षणा अतः कथं गुणकल्पा इति बहुवचनम् । उच्यते— जघन्यवृत्तिसामान्यात् लिङ्गसमवायाद्वा 'प्राणभृत उपदधाती'तिवद् गुणकल्पा इत्युक्तमित्यदोष इति ॥ ५८ ॥

यस्तूभयप्राप्तेर्मन्दत्वात् परिसंख्यामपि नानुमन्यते, तं प्रत्यर्थान्तरमाह—**सूत्रकारेति** । भाष्यकारो हि शिष्यानात्मानं च सूत्रकारप्रशंसया प्ररोचयति । अनेन खलु सूत्रकारेण प्रसिद्धैरेव पदैः पदार्था अभिहिताः, न तु गुणवृद्ध्यादिवत् परिभाषा काचित् कृता । अतोऽक्लेशेन गम्यार्थत्वादेतान्येव श्रोतुं व्याख्यातुं च युक्तानीति ॥ ५९ ॥

---

१. 'त्वा ब्रह्माणं दीक्षयतीत्येवमादि' ख. पु॰ २. 'चयिष्यति' क. पाठः.

भवितव्यं तु तेनेति प्रागस्मादेकवाक्यता ।
वेदाध्ययनवाक्याद् वा तेनाथेत्यस्य दूषणम् ॥ ६० ॥
प्रसिद्धार्थपदैः शक्यः सूत्रैर्वेदार्थनिर्णयः ।
न च सोऽस्त्यथशब्दस्य विना ते पूर्वकर्मणा ॥ ६१ ॥
प्रसिद्धार्थं पदं युक्तं तच्च नास्तीति दूषणम् ।
प्रसिद्धोऽप्यथशब्दादेः किं पदार्थोऽत्र वर्ण्यते ॥ ६२ ॥
प्रदर्शनार्थमित्येके केचिन्नानार्थवाचिनः ।
समुदायादवच्छिद्य भवदासेन कल्पितात् ॥ ६३ ॥
शक्तितोऽवयवं चैव वर्णयन्त्यष्टमादिवत् ।
न चात्र चोदनाव्याख्यागौरवं तत्र चोदितम् ॥ ६४ ॥

---

ये तु स्तुतौ वास्तुतौ वा तावानेवार्थ इति न स्तुनावाद्रियन्ते, तान् प्रत्यथशब्ददूषणपरमिदं भाष्यमित्याह— भवितव्यमिति । 'भवितव्यं तु तेने'त्यतः प्रागेकवाक्यतामापन्नेन, 'तत् तु वेदाध्ययनमि'त्यतो वा पूर्वमेकवाक्यतामापन्नेनाथशब्ददूषणमनेन भाष्येण क्रियत इति ॥ ६० ॥

प्रथमावधिना भाष्यं योजयति — प्रसिद्धार्थपदैरिति ॥ ६१ ॥

द्वितीयावधिना भाष्यं योजयति — प्रसिद्धार्थमिति । भवितव्यं तु तेनेति प्रसिद्धार्थं पदं युक्तमित्यर्थः । नन्वथशब्ददूषणव्यतिरिक्तेषु प्रसिद्धार्थपरिग्रहस्योक्तत्वादथादिशब्दव्याख्यानमयुक्तमिति चोदयति — प्रसिद्धोऽपीति ॥ ६२ ॥

परिहरति — प्रदर्शनार्थमित्येके इति । अन्ये तु वदन्ति — यदन्यद् भाष्यकारान्तरैरव्यामोहितं प्रसिद्धार्थं पदं तन्न नाम व्याख्यायताम् । इदं त्वथात इति पदद्वयं भवदासेनानन्तर्यार्थतया कल्पितम् । अतोऽवच्छिद्याथशब्दमात्रस्यानन्तर्यार्थत्वं वचनीयम् । यथाष्टमादावथशब्दस्यानन्तर्यार्थता प्रसिद्धा 'अथ विशेषलक्षणम्' (८. १. १) इति । तदाह — केचिदिति वदन्तेन । अपिच यत्नगौरवभयेनोभयंत्र व्याख्या प्रत्याख्याता । अत्र च नाद्यापि वेदवाक्यानि व्याख्यायन्ते । यद्यत्र सूत्राण्यु-

---

१. 'र्णै' ख. पाठः.

**यद्वाक्षेपो यथोक्तस्य वृत्ताभावादसम्भवात् ।**
**यदि लोकप्रसिद्धार्थग्रहणं क्रियते पदे ॥ ६५ ॥**
**स नास्त्यत्राथशब्दस्येत्यध्याहारादिकल्पनम् ।**
**वेदाध्ययनवृत्तत्वं स्नानस्योत्कर्षकल्पना ॥ ६६ ॥**
**नाख्यातेऽथशब्दार्थे ज्ञायते तेन वर्ण्यते ।**
**अनर्थकेऽथ वान्यार्थे प्रसिद्धिर्बाध्यते ध्रुवम् ॥ ६७ ॥**
**तस्मात् श्रुतार्थसिद्ध्यर्थं वृत्तं किमपि गम्यते ।**

---

प्रेक्ष्येरन् निर्विषयमेव भाष्यं स्यादिति युक्तैव सूत्रव्याख्येत्याह — नचेति ॥ ६३,६४ ॥

अथवा यत् प्रसिद्धार्थग्रहणमुक्तं तदेवं वृत्ताभावादथशब्दस्यानन्तर्यार्थत्वासम्भवादाक्षिप्यत इत्याह — यद्वेति । अत्रैव भाष्यं योजयति — यदीति । तत्रेत्यादिना भाष्यकारः प्रसिद्धार्थग्रहणमाक्षिपति । प्रसिद्धार्थग्रहणे ह्यानन्तर्यमथशब्दार्थः, न च तद् वृत्तमन्तरेण सम्भवतीति प्रसक्तमध्याहारादिकल्पनमिति । अत्र च पक्षे भवितव्यमित्यादि सामान्यविशेषोत्तरतयाथशब्ददूषणवद् व्याख्येयमिति ॥ ६५[1] ॥

अन्यथा परिहरति—वेदाध्ययनेति । अयमभिप्रायः—नाख्यातदुर्ज्ञानत्वादथशब्दो व्याख्यायते । किन्त्वथशब्दव्याख्यानमिषेणान्यदेव भाष्यकारस्य विवक्षितम् । तच्चैतदथशब्दार्थे कथिते चोद्यपरिहारक्रमेण शक्यते दर्शयितुम् । तथाहि वेदाध्ययनानन्तरोपानिपातिनः स्नानस्य 'अधीत्य स्नायादि'ति स्मार्तस्याध्ययनविधिदृष्टार्थताबलेनोत्कर्षकल्पनाथशब्दव्याख्याने सत्युपपत्तिक्रमेणावतरतीति युक्तमथशब्दोपवर्णनमिति ॥ ६६[1] ॥

अत्र भाष्यकारेण 'भवितव्यं तु तेने'त्यनेनाथशब्द आनन्तर्यार्थ इति प्रतिज्ञाय 'तथाही'ति प्रसिद्धपदार्थकत्वं हेतुरुक्तः । तद् व्याचष्टे — अनर्थक इति । आनन्तर्ये ह्यथशब्दार्थे भवति प्रसिद्धार्थता । आनर्थक्यान्यार्थत्वयोस्तु प्रसिद्धिबाधः । अतः श्रुतानन्तर्योपपादनाय किमपि वृत्तं गम्यते । नन्वधिकारार्थोऽप्यथशब्दो दृष्टः यथा — 'अथ शब्दानुशासनमि'ति । अतः कथमन्यार्थत्वे प्रसिद्धिबाधः । उच्यते— तत्र हि

---

१. 'वाथशब्दस्य त्र' ख. पाठः

विशिष्टलिङ्गविज्ञानाद् विशिष्टे लिङ्गिनीक्षिते ॥ ६८ ॥
सूत्रेणासम्भवं मत्वा नैतदित्यब्रवीत् परः ।
आनन्तर्योपदेशेन तद्दृष्टार्थतयापि च ॥ ६९ ॥
वेदाध्ययनमाक्षिप्तं किमसूत्रितचोदना ।
येन वृत्तेन जिज्ञासा विना नैवोपपद्यते ॥ ७० ॥
तदानन्तर्यमुक्तं हि दृष्टार्थमवकल्पते ।
क्रियमाणा च जिज्ञासा नियमाद् यस्य कस्यचित् ॥
क्रियेतानन्तरैवेति व्यर्थं तदुपदेशनम् ।
सङ्कल्पादिभिरप्येषा विना सत्यं न सिध्यति ॥ ७२ ॥
साधारणात् तु तेऽप्यत्र नोपदेश्याः कथञ्चन ।

---

शब्दानुशासनमेवोपरिष्टादधिक्रियिष्यते इति युक्तमधिकारार्थत्वम् । इह तु जिज्ञासाधिकाराभावात् सूक्तमन्यार्थत्वे[1] प्रसिद्धिर्बाध्यते इति ॥ ६७½ ॥

अत्र भाष्यम् 'अन्यस्यापि कर्मणोऽनन्तरं धर्मजिज्ञासा प्राप्नोती'ति । तदाक्षिप्य समादधाति— विशिष्टेति । अयमभिप्रायः— यद्यपि वेदार्थविचारात्मकविशिष्टलिङ्गविज्ञानाद् विशिष्टो वेदाध्ययनात्मको लिङ्गी विज्ञायते अनन्तरवृत्तः, तथापि सूत्रेण साक्षादनुपादानादिदं चोदितमिति ॥

पुनराक्षिपति— आनन्तर्येति । अयमभिप्रायः— नहि मन्वादिवददृष्टार्थोपदेशी जैमिनिः, अनेन चानन्तर्यमुपदिष्टं, तद् यस्यानन्तर्यं दृष्टार्थं[2] भवति तदानन्तर्यमिति गम्यते । वेदाध्ययनमेव वेदार्थविचारात्मिकायां धर्मजिज्ञासायां दृष्टार्थं, तेन विना तदनुपपत्तेः । अतस्तदाक्षिप्तम् । अतः असूत्रितोपालम्भो न युक्त इति ॥ ६९½ ॥

कथं पुनर्दृष्टार्थतया वेदाध्ययनमाक्षिप्यते अत आह — येनेति ॥

न च यत्किञ्चित्क्रियानन्तर्यार्थमुपदेशः तस्यावर्जनीयत्वेन नित्यप्राप्तेरित्याह — क्रियमाणेति ॥ ७१½ ॥

ननु सङ्कल्पप्रयत्नादिभिरपि विना[3] सा नोपपद्यत एवेति दृष्टार्थत्वेन वेदाध्ययनमाक्षिप्यत इत्याशङ्क्याह[4]— सङ्कल्पादिभिरिति ॥ ७२½ ॥

---

१. 'र्थे प्र' क. पाठः. २. 'मर्थः य', ३. 'ना जिज्ञासा', ४. 'इव परिहरति स' ख. पाठः.

**तस्माद् धर्मबुभुत्सायामसाधारणकारणम् ॥ ७३ ॥**
**निर्वृत्तं सूत्रकारेष्टं तच्च नाध्ययनादृते ।**
**अन्यस्यापीत्यनेनैव वेदपाठे प्रबाधिते ॥ ७४ ॥**
**प्रागपीति न वक्तव्यं तत्राप्यन्यस्य सम्भवात् ।**
**पूर्वेणैव हि लब्धार्थे तादृशीं त्वित्यनेन किम् ॥ ७५ ॥**
**वक्ष्यमाणमनालोच्य सम्भवेत् परिचोदना ।**
**न तावत् साध्यतेऽद्यापि चोदना धर्मसाधनम् ॥**
**इह वा तानि वाक्यानि विवरिष्यति जैमिनिः ।**
**धर्ममात्राभिधानाद्धि बुद्धादिवचनान्यपि ॥ ७७ ॥**
**पठित्वा धर्मजिज्ञासेत्यन्यस्यापीति चोदना ।**
**यद्वा भवतु नामेदृक् सूत्रं वेदमधीत्य तु ॥ ७८ ॥**

---

एवं वेदाध्ययनानन्तर्यमुपपाद्योपसंहरति—**तस्मादिति** ॥७३½॥

अपरमपि 'प्रागपि च वेदाध्ययनादि'ति भाष्यम् । तदाक्षिपति—**अन्यस्यापीति** । यदैव 'नैतदेवमि'त्यादिना वेदाध्ययनमतन्त्रीकृतं तदैवाध्ययनात् प्रागूर्ध्वं वान्यस्यापि कर्मणोऽनन्तरं धर्मजिज्ञासा प्राप्नोत्येवेति व्यर्थं प्रागिति पुनर्वचनमिति । अत्र परिहारभाष्यं 'तादृशीमि'त्यादि । तदाक्षिपति— **पूर्वेणेति** । 'तत् तु वेदाध्ययनं तस्मिन् हि सति सावकल्पते' इत्यनेनैव वेदाध्ययनप्राप्तेरुक्तत्वात् किमनुक्तं वक्तुं पुनरिदमुक्तमिति ॥ ७५ ॥

एवमाक्षिप्याद्यचोद्यपरिहारं[1] तावदाह — **वक्ष्यमाणमिति**[2] सार्धद्वयेन । अत्र हि नाद्यापि वेदवाक्यानि प्रमाणमिति साधितम् । तानि च वाक्यानि विवरिष्यति जैमिनिरित्यपि नावगम्यते । ततो बुद्धादि-[4]वचनपाठानन्तरं चैत्यवन्दनादिधर्मजिज्ञासाप्रसक्तेः परिचोदना युक्तैवेति ॥ ७७½ ॥

एवमनभिज्ञस्य परिचोदनेति समाधायान्यथा समाधत्ते— **यद्वेति**

---

१. 'अत्र परं प' क. पाठः. २. 'ति चोदनान्तेन', ३. 'पि चोदना प्र' ख. पाठः. ४. 'बुद्धवाक्यादि' क. पाटः.

जिज्ञासानन्तरं कार्येत्यत्रापि द्वयमीप्सितम् ।
नानधीत्य न चाप्यन्यत् कृत्वेत्येतन्न लभ्यते ॥ ७९ ॥
वक्ष्यमाणवचोभङ्ग्योर्वाक्यभेदप्रसङ्गतः ।
अधीत्यैवेति हि विधौ स्नानादेरप्यनन्तरा ॥ ८० ॥
भवेद् धर्मस्य जिज्ञासा नानन्तर्यविधिस्तदा ।
आनन्तर्यविधाने तु यो वेदाध्ययने कृते ॥ ८१ ॥
इत्येवमनुवादत्वात् प्रागप्येषा प्रसज्यते ।
बुद्धवाक्यादिपाठस्य तादृशीं त्वित्यपाक्रिया ॥ ८२ ॥

---

द्वयेन । अस्यार्थः — वेदमधीत्याथ धर्मजिज्ञासेतीदृशेऽपि सूत्रे परिचोदनावकाशोऽस्त्येव, उभयं हि विवक्षितं नानधीत्यानन्तरं नान्यत् कृत्वेति । तच्च वचोभङ्गिभेदेन वाक्यभेदादयुक्तमिति ॥ ७९½ ॥

वाक्यभेदमेव प्रपञ्चयति — अधीत्यैवेति द्वयेन । एकं हि वेदमधीत्याथ धर्मजिज्ञासेति वाक्यम् । तद् यदि वेदमधीत्यैवेति विदधाति, तदानन्तर्याविधानादन्यस्यापि स्नानसहधर्मचारिणी संयोगादिकर्मणोऽनन्तरं धर्मजिज्ञासा प्राप्नोति । अथैतद्भयादानन्तर्यमाश्रीयते, ततो योऽधीत्य जिज्ञासते तं प्रत्यानन्तर्यमात्रविधानादनधीतवेदस्य धर्मजिज्ञासा न वार्यत इति प्रागपि प्रसज्येत । उभयविवक्षा तु वाक्यभेदप्रसङ्गादयुक्तैवेति । वक्ष्यमाणालोचनेन तु नैतदेवमिति परिचोदनायां प्रागपि च वेदाध्ययनादिति भिन्नक्रमं योजनीयम् । अपिच प्राग् वेदाध्ययनादिति । अयमर्थः— यद्यपि वेदार्थो विचारयितव्यः, तथापि प्रथममेव विचारयितुमुचितः । सर्वं हि हानोपादानार्थं वस्तु प्रथममेव जिज्ञास्यते । ततो हीयतोपादीयेत वा । यत्त्वविचारितासिद्धमर्थं प्रथममेवोपादाय भ्रष्टावसरं जिज्ञास्यते, तदबुद्धिपूर्वकमापद्येत । अस्यापि चोद्यस्य तादृशीमित्येतदेवोत्तरमिति वक्ष्यामः ॥ ८१½ ॥

परिहारभाष्यमिदानीं समर्थ्यते — बुद्धवाक्यादीति । ननु वेदाध्ययनमिति वक्ष्यमाणालोचनेन वेदाध्ययनं वृत्तमित्युक्तम् । तदनाकलय्य वक्ष्यमाणानालोचनेन नैतदेवमिति परिचोदितं तादृशीमित्यनेन

---

१. 'णावलो' क. पाठः.

**प्रागपीति च चोद्यस्य सामर्थ्याद् वेदलाभतः ।**
**नैवैतयोर्वचोभङ्ग्योरेकोऽप्यर्थो विधीयते॥ ८३ ॥**
**अपिचेत्यादिकेनोक्तं किन्त्वित्येतद् विधीयते ।**

---

प्रवर्तिष्यमाणानेकविधवेदार्थविचारात्मिका धर्मजिज्ञासेयमिति जिज्ञासास्वरूपोपवर्णनेन परिहृतम्। अतः परिचोदनापरिहारत्वेनापुनरुक्तत्वमिति। एवञ्च वक्ष्यमाणानालोचनेन चोद्योत्तरतया भाष्यं व्याख्यायालोचनपरिचोदनायामपि एतदेवोत्तरमिति योजयति—प्रागिति। यत् तावदुभयप्रतिपादनेन वाक्यभेदप्रसञ्जनं कृतं, तदानन्तर्यमात्रपरत्वेन परिह्रियते तत्परत्वेऽध्ययनविधानासम्भवात्। प्रागपीति च चोद्यं परिशिष्यते। तस्यापि तादृशीमित्यनेनापाक्रिया, जिज्ञासासामर्थ्येन पूर्ववृत्तवेदाध्ययनलाभात्। नहीयमनुपात्तवेदेन शक्या कर्तुम्। अत एव यदुक्तमध्ययनात् प्रागेव धर्मजिज्ञासा युक्तेति, तदप्यनेन परिहृतं भवति। तादृशीयमनेकविधविचारायत्ता या विचारसिद्धमध्ययनमन्तरेण कर्तुमशक्या। विचार्यं त्वधीयानो विचारस्यानेककालसाध्यत्वादध्ययनकालातिपाताद् व्रात्यतामापद्येत। नचैवमनधीतवेदस्तदर्थं यावदवधारयितुमलमित्यविचारितोपात्तवेदाध्ययनपूर्वकत्वं धर्मजिज्ञासायाः। यत्तूक्तमविचारितोपादानेऽबुद्धिपूर्वकमुपादानमिति। केन वोक्तं बुद्धिपूर्वकमुपादानमिति। हितैषिणः पित्रादय एवैनं कुमारमनाकलितपारलौकिककल्याणं प्रवर्तयन्ति। अपिच सजातीयानहरहरविरतप्रवृत्तस्वाध्यायाध्ययनानुपलभमानः सामान्यतो जानाति नूनमस्मात् कर्मणः कोऽप्यभ्युदय एषां भविता कथमपरथा श्राम्यद्भिर्हितकामैः पित्रादिभिरमी प्रवर्त्यन्त इति। एवं विदितवतोऽहमप्येवमनुतिष्ठन् श्रेयः प्राप्स्यामीति चिन्तयतः स्वयमपि प्रवृत्तिरुपपद्यत एवेति ॥ ८२½ ॥

अत्रापरम् 'अपिच नैव वयमिह वेदाध्ययनात् पूर्वं धर्मजिज्ञासायाः प्रतिषेधं शिष्मः' इति भाष्यं, तस्यार्थमाह—नैवेति। ये एते पूर्वकल्पिते वचोभङ्गी तयोरेकोऽप्यर्थो नानेन सूत्रेण विवक्ष्यते किन्तु वेदाध्ययनम्। अनन्तरमुभयमुपनिपततीति, यदर्थो विचारयितव्यः यच्चाधीत्य स्नायादिति

---

१. 'माणवकम', २. 'चायमपि स', ३. 'य्येनदनुति', ४. 'धीयते', ५. 'क्षितम् ग' ख. पाठः.

**आनन्तर्यं पुरस्ताच्च नापि शिष्म इतीह तु ॥ ८४ ॥**
**केचिद्ध्याहरन्त्यस्य सूत्रस्यान्यपरत्वतः ।**
**न वार्यतेऽनधीतत्वं नानन्तर्यं विधीयते ॥ ८५ ॥**
**सामर्थ्यसिद्ध्यदृष्टार्थप्रसङ्गात् तेन लक्षणा ।**
**आनन्तर्यवचोव्यक्तिराश्रितैवात्र लक्ष्यते ॥ ८६ ॥**
**श्रुतार्थं तु परित्यज्य लक्षणार्थो विधीयते ।**

---

स्मृतिवचनबलेन गुरुकुलसकाशादपवर्तनम् । तत्रासमावृत्तः कथं नाम वेदार्थं विचारयेदित्येवमर्थमिदं सूत्रमि'त्यपिचे'त्यादिकेनोक्तमिति ॥८३½॥

इदं च भाष्यं न्यूनं मन्यमानैः[2] कैश्चि[3]दध्याहृत्य व्याख्यातं[4], ततस्तमुपन्यस्यति—**आनन्तर्य[5]मिति** । अस्य हि सूत्रस्य गुरुकुलवासावसाननिवृत्तिपरत्वादध्ययनमानन्तर्यं चोभयमपि न विवक्षितम् । भाष्यं तु यथाश्रुतं[6]मध्ययनविधानं[7]निषेधमात्रपरमु[8]पलभ्यते । अतो नापि परस्तादानन्तर्यं शिष्म इत्यध्याहृत्योभयवचनव्यक्तिनिषेधार्थतया व्याख्येयमिति ॥ ८४½ ॥

ननु नानन्वितपदार्थो वाक्यार्थः । न चे[9]ह सूत्रे तादृशानां पदार्थानामन्वयो दृश्यते, येन गुरुकुलवासावसाननिवृत्तिः प्रतीयेत । प्रत्युताध्ययनानन्तर्ययोरेव श्रुत्या विधानमुपलभ्यते । ततस्तदेव युक्तमत आह—**न वार्यत** इति । अनधीतवेदस्य सर्वक्रियास्वशक्तस्यानधिकाराद् धर्मजिज्ञासा दैवादेव वारिता, किं तन्निवृत्त्यर्थेनाध्ययनविधानेन । आनन्तर्यमपि न मन्वादिवददृष्टार्थमुपदिश्यते । नचादृष्टार्थोपदेशी जैमिनिरित्युक्तम् । अतो दृष्टार्थाध्ययनानन्तर्यबलेन गुरुकुलवासावसाननिवृत्तिर्लक्षणयाश्रीयत इति ॥ ८५½ ॥

एवमध्याहारपक्षमुपन्यस्य दूषयति — **आनन्तर्येति** । अयमभिप्रायः — श्रुतार्थानुपपत्त्यैव हि लक्षणा भवति । यदि चानन्तर्यवचनव्यक्तिर्नाश्रिता, किं लक्षणाया बीजम् । तस्मादानन्तर्यवचनव्यक्तिमाश्रित्यैव श्रौतार्थपरिग्रहे दृष्टार्थत्वप्रसक्तेर्लक्षणार्थो लक्षणया विषयीकृतोऽर्थः स्नानाभावो विधीयते । यथाश्रुतभाष्यस्वरसभङ्गश्चैवं सति न भविष्यतीति॥८६½॥

---

१. 'हस' २. 'नाः', ३ 'केचित', ४. 'तवन्तः तद्गुर', ५. 'तगृहीतम', ६. 'समाम्नमिवेषव', ७. 'भवगम्यते' ८. 'हे', ९. 'तः प' ग. पाठः.

**प्रतीता धर्मजिज्ञासा वेदाध्यायादनन्तरा ॥ ८७ ॥**
**तत्कालस्यावरुद्धत्वात् स्नानाभावं हि लक्षयेत् ।**
**विरोधो युगपत्प्राप्तेर्दौर्बल्यं वेदबाधनात् ॥ ८८ ॥**
**स्नानस्य तेन बाधः स्याद् धर्मजिज्ञासया बलात् ।**

---

केन पुनः सम्बन्धेनानन्तर्यमुपदिष्टं स्नानाभावं लक्षयतीत्यत आह — **प्रतीते**ति । अयमभिप्रायः — विरोधिसद्भावो हि विरोध्यन्तरनिवृत्त्या व्याप्तः । तद् यदैव वेदाध्ययनानन्तरा धर्मजिज्ञासा प्राप्ता भवति, तदैवाध्ययनानन्तरकालस्य तया व्याप्तत्वात् तत्परिपन्थि स्नानं निवर्तते । न हि गुरुगृहादनावृत्तः स्नाति । न च समावृत्तो धर्मं जिज्ञासितुमीष्टे । यथैव गुरुणा विनाध्ययनं न सिध्यति, तथैवार्थज्ञानमपि । अतोऽध्ययनानन्तरं धर्मजिज्ञासा कार्येत्युक्ते सत्यानन्तर्यस्वरूपे दृष्टार्थत्वप्रसक्तेः स्नानाभावलक्षणा युक्तेति ॥ ८७ ॥

ननु सत्यं विरोधिनोरेकेनावरुद्धे परं निवर्तते । विरोध एव तु कुतः । अध्ययनानन्तरं हि 'अधीत्य स्नायादि'ति स्मृत्यनुमितश्रुतिबलेन स्नास्यति । ततः सन्दिग्धप्रयोजनवेदार्थगोचरं विचारमारप्स्यते, अत आह — **विरोधो युगपदि**ति । अयमभिप्रायः — दृष्टार्थाध्ययनविधिबलेन ह्यध्ययने प्रवृत्तो न प्राङ् मीमांसाश्रवणाद् विरन्तुमर्हति । एको ह्युपनीतस्य माणवकस्य प्रणवादिरार्त्विज्यविचारावसानः शास्त्रार्थः । अतो युगपदुभयमुपनिपतितमिति युक्तो विरोध इति । ननु विरोधिनोः सहासम्भवादेको बाध्यताम् । 'अधीत्य स्नायादि'ति स्मृत्यनुमितश्रुतिबलेन न्यायप्राप्तदुर्बलधर्मजिज्ञासाबाधो युक्तः, अत आह — दौर्बल्यं वेदबाधनादिति । एवं हि मन्यते — 'स्वाध्यायोऽध्येतव्यः' इत्यधीतेन स्वाध्यायेनार्थं जानीयादिति विध्यर्थः । तद् यद्यध्ययनानन्तरं स्नायादितीममाम्नायमतिक्रामेत् । तच्चायुक्तम् । स्मृत्यनुरोधेन प्रत्यक्षश्रुतवेदबाधप्रसङ्गाद्, मूलमूलिबलाबलविपर्ययप्रसङ्गाच्च । अतो बलवद्धर्मजिज्ञासानुरोधेन दुर्बलस्नानबाधो युक्त इति ।

कः पुनर्वेदः योऽधीत्यस्नानं बाधते । ननूक्तं 'स्वाध्यायोऽध्येतव्य' इत्यर्थज्ञानपर्यन्तः शास्त्रार्थोऽनन्तरस्नानानुष्ठानेन बाधितो भवतीति ।

---

१. 'प्रतीता भ', २. 'बन्तं वेदा' ख. पाठः. ३. 'मथ', ४. 'याव' क. पाठः.

स्यादेतदेवं यद्यर्थज्ञानार्थमध्ययनं भवेत् । इदं त्वाचार्यकरणविध्यौपयिकं, अध्ययनविधावधिकाराश्रवणात् । आचार्यकरणविधिप्रयुक्त्या चानुष्ठानलाभे विश्वजिदादिवत् कल्पनानुपपत्तेः । अतः स्वयमधिकारविधुरोऽपि विधिरधिकारवन्तमाचार्यकरणविधिमनुरुध्य सिध्यति । आचार्यकरणविधौ त्वाचार्यकमेव कामयमानस्याधिकारः । कथं पुनराचार्यकरणविधिरनङ्गभूतमेवाध्ययनं प्रयोक्तुमुत्सहते । प्रयाजादयो हि दर्शपूर्णमासप्रकरणाधीतास्तदङ्गभूता इति युक्तं यत्ताभ्यां प्रयुज्यन्त इति । अध्ययनं त्वनारभ्याधीतं न श्रुत्यादिभिः कस्यचिदङ्गतया शक्यमवधारयितुम् । सत्यमेवमेवैतत् । अनङ्गभूतमेव तूपकारकमध्ययनमाचार्यकनियोगस्य । अतस्तत् तेन प्रयुज्यते क्रतुनियोगैरिवाधानम् । कः पुनराचार्यकरणविधेरध्ययनेनोपकारः । श्रूयताम् । उपनीयाध्यापनादाचार्यो भवति । न चाध्यापनमध्ययनमन्तरेण सम्भवति । अतोऽध्यापनपरमध्ययनम् । स्वाध्यायोऽपि 'भूतभव्यसमुच्चारेण भूतं भव्यायोपदिश्यत' इत्यध्ययननिष्पत्त्यर्थः । अतश्चान्यपरत्वात् स्वाध्यायाक्षराणामविवक्षितः प्रतीयमानोऽप्यर्थः । न चाविवक्षितोऽर्थो विचारं प्रयुङ्क्ते । अतः स्वाध्यायाध्ययनमात्रेणाचार्यकनियोगनिष्पत्तेरनारभ्या मीमांसा इति न स्नानस्मृतेः केनचिद् विरोधमुपलभामहे ।

अत्राभिधीयते — यत्तावदाचार्यकरणविधिप्रयुक्तमध्ययनमिति । तत्र न विद्मः कोऽयमाचार्यकरणविधिरिति । यदि मतम् — 'अष्टवर्षं ब्राह्मणमुपनयीत तमध्यापयेदि'ति, अविधिज्ञो देवानां प्रियः । नानेनाचार्यकं भावयेदिति विधीयते । अपितु अध्ययने अष्टवर्षो ब्राह्मणोऽधिकारीति बोध्यते[1] । ननुच नात्राष्टवर्षो ब्राह्मणोऽधीयीतेति श्रूयते । किन्तु अष्टवर्षमध्यापयीतेति । सत्यम् । प्रयोजकव्यापारपरा अपि विधयः प्रयोज्यव्यापारपरा दृष्टाः यथावेष्टौ 'एतयान्नाद्यकामं याजयेदि'ति 'अतिरात्रेण प्रजाकामं याजयेदि'ति च । ननुचोपनयीतेत्याचार्यकरणे नयतेरात्मनेपदमित्युपनयनेनाचार्यकं निर्वर्तयेदिति प्रत्येष्यते । नैवम्[3] । नात्राचार्यकार्थमुपनयनमात्मनेपदादवगम्यते । अपितु माणवकार्थादुपनयनादानुषङ्गिकमाचार्यत्वं वैश्वदेव्यामिक्षार्थादिवद् दध्यानयनाद् वाजिनेज्या । अकर्त्रभिप्रायार्थं हि नयतेरात्मनेपदविधानम् । आचार्यकार्थत्वे तूपनयनस्य

१. 'णोऽध्ययनेऽधि' ख. पाठः. २. 'चोध' क. पाठः. ३. 'मै' ख. पाठः.

कर्तारमेव क्रियाफलमभिप्रेयात् । अतोऽष्टवर्षमिति नायमाचार्यकरणविधिः । अथ मतम् — अनुमास्यामहे ऽवयमाचार्यकरणविधिम् । स्मर्यते हि —

"उपनीय तु यः शिष्यं वेदमध्यापयेद् द्विजः ।
सकल्पं सरहस्यं च तमाचार्यं प्रचक्षते ॥"

इति । तदस्याः स्मृतेर्मूलभूता उपनीयाध्यापनेनाचार्यकं भावयेदिति श्रुतिरनुमास्यते । तन्न । स्मार्तवाक्यसदृशं हि मूलमनुमीयते । यथाष्टकादिगोचरं कर्तव्यतावचनमुपलभ्याष्टका कर्तव्येति श्रुतिरपि कर्तव्यताविषयैवानुमीयते । न चेहोपनयनादिनाचार्यकं कुर्यादिति स्मृतिवचनम् । अपि तर्हि उपनीयाध्यापयितरि लौकिका आचार्यशब्दमुपचरन्तीति लोकसिद्धमेवाचार्यपदार्थं दर्शयति । तत् कथमितः सिद्धानुवादात् कर्तव्यताश्रुतिरनुमातुं शक्यते । न चाहवनीयादिवदलौकिकमाचार्यकम् । आहवनीयशब्दो हि आधानपवमानहविरादिजन्यमलौकिकमतिशयविशेषमभिनिविशमानोऽलौकिकार्थ इति युक्तम् । आचार्यशब्दस्तूपनीय वेददातरि उपचरितः ।

"उपनीय ददद् वेदमाचार्यः स उदाहृतः ।"

इति स्मृतेः । एवं तु सान्दृष्टिकमेव शिष्योपाध्यायवद्, नालौकिकमाचार्यकम् । अपिचाप्रवृत्तप्रवर्तनं हि विधेरर्थः । स्वयमेव चाचार्यके धनायन् यशस्यन् वा प्रवर्तेत इति किं तद्विधानेन । अतः शून्यहृदयैर्व्यवहृतमेवेदमाचार्यकरणविधिप्रयुक्तमध्ययनमिति । कथञ्चैष व्रतनियमादीतिकर्तव्यतावतोऽध्ययनविधेः प्रयोजकः । अध्यापनं ह्यध्ययनमन्तरेणानुपपद्यमानं लौकिकेन रूपेणाध्ययनमात्रं प्रयुङ्क्ताम् । अतोऽनन्यपरत्वात् स्वाध्यायाध्ययनविधेर्नाविवक्षितार्थतया शक्यं पूर्वपक्षयितुम् ।

यदप्युक्तम् उपनयनमाचार्यकनियोगाङ्गमित्युपनीयाध्यापनेनाचार्यकं भावयेदिति श्रुतिरनुमिता । अत्र च क्त्वाश्रुतेराचार्यकभावनासमानकर्तृकमुपनयनमवगम्यते । न च प्रयोगैक्यादृते समानः कर्ता भवति । न च तदङ्गाङ्गिभावादृते सम्भवतीत्याचार्यकरणविधौ सहाङ्गैरङ्गमुपनयनम् । तच्च केन द्वारेणोपकुर्यादिति चिन्तायामुपनेयासादनमेवोपनयनस्वभावालोचनया द्वारमवधारितम् । उपनेयोऽपि नाकिञ्चित्करोऽङ्गमिति

१. 'र स्मार्तं क' क. पाठः. २. 'भावयेदि' ख. पाठः. ३. 'ङ्गमुपं' क. पाठः.

तद्व्यापारापेक्षायामुपनयनं प्रक्रम्याध्ययनमाम्नातम् । उपकारकं च तदध्यापनविधेः । अतस्तदेवोपनयनद्वारेणाध्यापनविधिना प्रयुज्यते । उक्तं च 'कथमाचार्यकरणविधेः प्रयोजकत्वमुपनयनद्वारकं हि तदि'ति ।

अत्रोच्यते —नैवमध्ययनविधिः शक्यते प्रयोक्तुम्, अनङ्गत्वादनुपकारकत्वाच्च । यच्च समानकर्तृकत्वादुपनयनमध्यापनाङ्गमित्युक्तं, तन्न । विस्पष्टं हि वयमष्टवर्षं ब्राह्मणमुपनयीतेति द्वितीयासंयोगादुपनीयमानद्विजकुमाराङ्गमुपनयनमवगच्छामः । तस्य च तमध्यापयेदित्यध्ययनसम्बन्धाद् युक्तमेव संस्कारार्हत्वम् । अतो माणवकद्वारेणाध्ययनविध्यङ्गमुपनयनमिति सत्यप्युपनीयाध्यापनेनाचार्यकं भावयेदिति विधावनङ्गमेवोपनयनं कृतार्थसंयोगेष्वु कालोपलक्षणार्थत्वस्य स्थितत्वात् । यथा 'दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेते'ति । नहि तयोरन्योन्यमङ्गाङ्गिभावः, उभयोरपि कृतार्थत्वात्, एवमिहापि भवितुमर्हति । अस्तुवाध्यापनाङ्गमुपनयनम् । तत्तु समीपप्रापणमात्रम् । अतस्तावन्मात्रमाचार्यकरणविधिना प्रयुज्यताम्, अध्ययनाङ्गं तु विशिष्टमन्त्राद्युपेतमनेन प्रयुक्तमिति न प्रमाणं क्रमते । न च फलचमसवदधिकारतो विशेषलाभः । तत्र हि यागाङ्गसोमभक्षणप्रकरणाम्नातो भक्षयतिस्तदङ्गमेव भक्षणं विगाहते । न चेह तथा, अधिकाराभावात् । न च जुहूवदेतद् भवितुमर्हति । सा ह्यनुज्झितक्रतुसम्बन्धेति दूरेऽप्युद्दिष्टमात्रा सैव प्रतीयते । उपनयनं तु समीपप्रापणमनेकधा भिन्नमिति न विशिष्टावगतौ किञ्चित् कारणम् । अस्तुवा विशिष्टोपनयनमाचार्यकरणविधेरङ्गम्, प्रयुज्यतां च तत् तेन । न च तद्वारेणाध्ययनप्रयुक्तिः सम्भवति । अङ्गं हि तदध्ययनस्येत्युक्तम् । न चाङ्गमाकृष्यमाणं प्रधानमाकर्षति, प्रधानानामनङ्गवशवर्तित्वात् । तस्मान्न कथञ्चिदाचार्यकरणविधेः प्रयोजकत्वम् । कस्माच्चाध्ययनविधिराचार्यकरणविधिप्रयुक्त्या सिध्यति । कश्चित् क्वचिन्नियुक्त इति हि नियोगस्य स्वरूपम् । तदयं स्वयमनियुञ्जानो नियोगत्वादेव हीयेत । अनधिकारत्वात् अन्यमुपजीवतीति चेत् । न । उक्ताधिकारत्वात् । उक्तमष्टवर्षो ब्राह्मणोऽधिकारीति । यदर्थं हि यत् कर्म स तत्राधिकारी । माणवकार्थं चाध्ययनमिति तमध्यापयेदिति विधानादवगम्यते, अनन्यपरत्वादस्य ।

---

१. 'दध्यापनवि', २. 'रध्यापनविधि', ३. 'अन्य' ख. पाठः.

नहीदमध्यापनस्वरूपविधानपरम्, अन्तरेणापि विधानं वृत्त्यर्थमेव तु तत्र प्रवृत्तेः । अध्ययनविधिश्चाश्रुताधिकारोऽधिकारिणमपेक्षते । नहि ज्ञायते केन स्वाध्यायोऽध्येतव्य इति । अतोऽपेक्षितविधिबलादध्ययनाधिकृतपुरुषोपदेश एवायं तमध्यापयेदिति । तदयमर्थः — अष्टवर्षो ब्राह्मणोऽधीयीतेति । अतः प्रयोजकव्यापारद्वारेण प्रयोज्यव्यापारपरमिदमिति वर्णितमेवेति । अथ मतम् आत्मार्थमध्ययनं न माणवको बुध्यत इति न प्रवर्तेत इति, यद्येवमाचार्यार्थमपि न बुध्यत इति न प्रवर्तेतैव । आचार्य एवात्मार्थं प्रवर्तयतीति चेत्, तुल्यमस्य माणवकार्थत्वेऽपि प्रवर्तकत्वम् । स ह्यस्य हितकामो जानाति चास्येयमभ्युदयकारिणी क्रियेति । तमिममविद्वत्त्वात् स्वयमप्रवृत्तमन्यो हितकामः प्रवर्तयिष्यति स्त्रियमिव स्वाधिकारे निषादमिव स्थपतीष्टयाम् । अपिच आचार्यकरणविधिप्रयुक्तत्वेऽध्ययनस्य नार्थाविवक्षायां किञ्चित् कारणमुपलभ्यते । तद्यदि अध्ययनमात्रमात्मानुगुणतया प्रयुङ्क्ते नतु स्वाभाविकं शब्दानामर्थपरत्वं विहन्ति[1]; स्वाध्यायाध्ययनस्वरूपमात्रेण चाचार्यकनियोगनिष्पत्तेरभिधाव्यापारस्यानन्यपरत्वात् । अतो नार्थाविवक्षायां किञ्चित् कारणमस्ति । अस्तु वा आचार्यकरणविध्यौपयिकत्वेन विध्यन्तराणामर्थाविवक्षा, तथापि न मीमांसानारम्भेण पूर्वपक्षवर्णना शक्या कर्तुम् । आचार्यकरणविध्यर्थमात्रनिरूपणस्यापि मीमांसागतन्यायकलापाधीनात्मलाभत्वात् । तस्यापि स्वाध्यायशब्दवाच्यत्वादविवक्षितार्थत्वमिति चेत् । न । कल्पितस्य विधेरनधीतस्यास्वाध्यायशब्दवाच्यत्वात् । तस्य चाविवक्षितार्थत्वेऽन्यार्थविवक्षा अन्यार्थविवक्षायां पुनस्तद्विवक्षेत्यनवस्था स्यात् । न च व्यवस्थासम्भवेऽव्यवस्थितः शास्त्रार्थो युक्तो वर्णयितुम् । तद् वरं स्वाध्यायाध्ययनविधेरदृष्टार्थत्वं, न त्वाचार्यकरणविध्यर्थत्वेनाव्यवस्था । एवं हि स्वाभाविकमर्थपरत्वं शब्दानामपलपितं न भवति । न चैकविध्यनुरोधेन कृत्स्नस्वाध्यायाप्रामाण्यप्रसङ्गः । भूयोविरोधे ह्यल्पमन्याय्यमिति वक्ष्यति 'विप्रातिषिद्धधर्मसमवाये भूयसां स्यात् सधर्मत्वम्' (१२. २. २२) इति । 'त्यजेदेकं कुलस्यार्थे' इति न्यायविदो वदन्तीति नाविवक्षितार्थतया पूर्वपक्षो युक्तः ।

१. 'वैनमाचार्यार्थं' ख. पाठः. २. 'न्ति अध्य', ३. 'निर्वृत्ते' क. पाठः.

यदपि चात्र राद्धान्तितं सत्यप्याचार्यकरणविधिप्रयुक्तत्वेऽध्ययनस्य न तन्निवृत्तिरेव प्रयोजनं, बहिरङ्गत्वात् । यदेतदध्येतर्यर्थज्ञानं जायमानमुपलभ्यते तदेव तस्य प्रयोजनं न्याय्यम् । यत्कर्तृका हि या क्रिया सा तदर्थैवेति युक्तं, तथा दर्शनात् । ननु प्रथमभावी प्रयोजकविध्यधिकारानुप्रवेशश्चरमभाव्यर्थज्ञानाद् बलीयान् । अतो नाध्येत्रर्थतामध्ययनस्यापादयितुमुत्सहामहे । किं हि । प्रथमात्रगताचार्यकरणविध्यर्थत्वे पश्चाद्भाविन्यन्तरागता करिष्यति । नैवम् । प्रागप्यधिकारान्तरसम्बन्धानवगमादश्रवणात् । अन्यप्रयुक्तया चानुष्ठानोपपत्तौ विश्वजिदादिवत् कल्पनानुपपत्तेः । अत आचार्यकरणविधिप्रयुक्तमध्ययनमसति प्रयोजनसम्बन्धे दुःस्थितमेव, सर्वविधीनामधिकारपर्यवसायित्वात् । सोऽयमधीतसाङ्गवेदस्यान्तरा मीमांसाध्ययनं चाधिकारो निष्पद्यते । स हि तदा विदितपदार्थो वाक्यार्थं बुध्यमानो मदर्थमिदं कर्मेति जानाति । युक्तं चैतद् यत् क्रत्वपेक्षितमर्थज्ञानं प्रयोजनतया सम्बध्यत इति । एवं च परप्रयुक्तावप्यर्थपरत्वाविघाताद् युक्तैव तद्विचारार्था मीमांसेति । तदिदमनुपपन्नम् । नहि नियोगार्थनिर्वृत्तेरन्यदस्ति प्रयोजनं सर्वविधीनां येन परप्रयुक्तानुष्ठानोऽपि विधिः प्रयोजनमपेक्षते । इतरथा हि नित्येऽपि तत्कल्पनाप्रसङ्गात् । स्यादेतद् —— असत्यामपि विध्यपेक्षायामर्थाज्जातमर्थज्ञानं न हीयेतेति अर्थज्ञानमर्थाज्जातं न नियोगतः प्रतिपन्नमिति । तन्न । होमादप्यर्थाज्जातस्य हविर्विकारादेः प्रयोजनत्वापत्तेः । क्रत्वपेक्षितमर्थज्ञानं नैवं हविर्विकारादीति चेत् । तन्न । असत्यर्थपरत्वे क्रत्वनुष्ठानाभावात् किं केनापेक्ष्येत । कर्तृफलप्रदत्वमपि क्रियाणां नैकान्तिकम्, ऋत्विक्कर्मसु व्यभिचारात् । अतः प्रयोजकविध्यर्थः स्वार्थो वाध्ययनविधिरिति नार्थपरत्वे प्रमाणं पश्यामः । मध्ये चाधिकारकल्पना वृथैव, प्रवृत्त्यनङ्गत्वात् । भवन्ती वा स्वनियोग एव पर्यवस्येत् । एवं हि तदाध्येता जानाति नित्यो हि विध्यर्थः सम्पाद्यो ममेति । एवं च नियोगनिर्वृत्त्यर्थमध्ययनं, तदर्थश्च स्वाध्याय इति नार्थपरत्वम् । अर्थस्तु प्रतीयमानोऽपि पूर्वादिवापरो न विवक्षित इत्यविचारणीय एव । तस्मादविचारितमनोहरत्वादस्य पक्षस्य यथावार्त्तिकमेवाध्ययनविधिविचारो वाच्यः । स उच्यते । 'स्वाध्यायोऽध्येतव्यः', 'स्वाध्यायमधीयीत' इति

१. 'था लोके द', २. 'त् क्र' ख. पाठः. ३. 'नां यथोक्तं ये क. पाठः. ४. 'त्रर्थत्व' ख. पाठः.

च विधिरत्र श्रूयते । फलवद्व्यापारगोचरत्वं च स्वाभाविकं सर्वविधीना-मित्यपुरुषार्थात्मनोऽध्ययनादुत्तीर्य पुरुषार्थात्मकं फलमभिलषति । अध्यय-नमपि साध्यत्वाधीनं साधनत्वे निक्षिप्यते । तदयमर्थो जायते अध्ययनेन किमपि पुरुषाभिलषितं कुर्यादिति । न च तदुपात्तमित्याम्नानसामर्थ्याद् विश्वजिदादिवत् स्वर्ग एव सकलाध्येतृजनसमीहितं फलं कल्प्यते । ननु च द्वितीयान्तस्वाध्यायपदसमभिव्याहृतमध्ययनं तत्प्रधानमेवावगम्यते । ततश्चाध्ययनेन स्वाध्यायं संस्कुर्यादिति वाक्यार्थोऽवतिष्ठते । न च सक्तु-वदसंस्कार्यः स्वाध्यायः, फलवत्क्रतुज्ञानोपायभूतत्वात् । अतो न फलान्त-रकल्पनावकाशः ! न । अविनियोगात् । न खलु स्वाध्यायस्यार्थज्ञाने वि-नियोजिका श्रुतिरुपलभ्यते । अतो न तादर्थ्ये प्रमाणमिति न संस्कारा-र्हत्वम् । भूतश्च स्वाध्यायः भव्यमध्ययनं, भूतस्य भव्यार्थतायां दृष्टार्थता । इतरथा कल्प्यमदृष्टम् । न च तद् युक्तम् । अतो विनियोगभङ्गेन स्वाध्या-येनाध्ययनं संस्कुर्यादिति शास्त्रार्थो युक्तः । हुंफडादीनां चानर्थकानामध्य-यनादव्यापकमर्थज्ञानम् । तेषामदृष्टार्थमध्ययनं भवतीति चेत् । तदर्धजरती-यम् एकस्यैव विधेर्दृष्टादृष्टार्थत्वकल्पनात् । अत ऐकरूप्येणादृष्टार्थतैव युक्ता । ननु च रात्रिसत्रवदार्थवादिकमेव फलं श्रुतत्वाद् युक्तमाश्रयितुम् । श्रूयते हि 'यं यं क्रतुमधीते तेन तेनास्य क्रतुनेष्टं भवती'ति क्रतुफलप्राप्तिरध्यय-नस्य फलम् । अथोच्येत न प्रथमे गुरुसकाशादध्ययने फलमिदम्, अपि तर्हि धारणाद्यर्थं इति । तन्न । धारणाद्यर्थार्थवादस्यातिदेशतः प्रथमाध्यय-नसम्बन्धात् । अतो रात्रिसत्रन्यायेनार्थवादगतमेव विपरिणामेन फलमुप-कल्पयितुमुचितम् । स्यादेतदेवं यद्यर्थवादाः स्वरूपतोऽतिदिश्येरन् । न त्वेतदेवं, शास्त्रातिदेशनिराकरणात् । प्ररोचनामात्रेऽभिहार्थवादोत्थापितम-ध्ययनं विधिनापेक्षितं सम्बन्धुमिति नानाश्रयफलपदविपरिणामः शक्यते कल्पयितुम् । अतो नैषापि कल्पना युक्तेति विश्वजिदादिवत् स्वर्गफल-तैव युक्ता कल्पयितुम् । अतः स्वर्गार्थं गुरुसकाशादधीत्य स्नानस्मृतिब-लेनानन्तरं स्नात्वा पश्चात् सन्दिग्धं प्रयोजनवन्तं वेदार्थं विचारयतु मा वा । सर्वथा तावदध्ययनेनविध्यर्थो निष्पन्न इति न कथञ्चिद् वेदविरोध-मुपलभामहे ।

१. 'ऐकरूप्येणा' ख. पाठः. २. 'नं त्वर्थं', ३. 'नस्य वि' ४. 'यनमात्रादे-वाध्ययन', ५. 'नात्र कं' क. ख. पाठः.

अत्रोच्यते—'स्वाध्यायोऽध्येतव्यः' 'स्वाध्यायमधीयीते'ति च विस्पष्टं स्वाध्यायस्याध्ययनकर्मत्वमवगम्यते । न च सक्तुवद् विनियोग-भङ्गो युक्तः । सक्तवो हि भूतभाव्युपयोगरहिता न संस्कारमर्हन्ति । न च तथा स्वाध्यायः, भाव्युपयोगित्वात् । इह ह्यध्ययनानन्तरमक्षरग्रहणं, ततः पदावधारणं, ततः पदार्थस्मरणं, ततो वाक्यार्थज्ञाने, ततोऽनुष्ठानं, ततोऽभ्युदय इति परम्परया पुरुषार्थ[2]प्रयोजनप्रतिलम्भेन विपरिवृत्त्याध्ययनमात्रा[3]न्नादृष्टकल्पनावकाशः । यावद्धि विप्रकृष्टमपि दृष्टमुपलभ्यते, तावत् तदेवानुसरणीयम् । तदिह ब्राह्मणवाक्येषु प्रधानवाक्यानां फलवत्कर्मावबोधनं फलम्, अङ्गवाक्यानां तु सन्निपत्योपकारकारादुपकारकदृष्टादृष्टार्थेति-कर्तव्यताप्रकाशनम् । अर्थवादानां च विध्यपेक्षितविषयप्राशस्त्यप्रतिपादनम् । उद्भिदादीनां च नाम्नां गुणफलविधानम् । उपनिषदां तु साम्परायिकफलोपभोगोचितचेतनकर्तृप्रतिपादनद्वारेण सकलवेदप्रामाण्यप्रतिपादनमित्यूहनीयम् । मन्त्राणां च केषाञ्चिदनुष्ठीयमानपदार्थप्रकाशनम् । येषां तु न दृष्टं प्रयोजनं तेषां क्रतुपुरुषार्थादृष्टकल्पना । न च तददृष्टार्थत्वेनान्यत्रापि दृश्यमानप्रयोजनपरित्यागो युक्तः । स्वाध्यायोध्ययनविध्यध्यापितस्य मन्त्रब्राह्मणस्य प्रयोजनकल्पनावसरे यथाशक्ति प्रयोजनकल्पनैव युक्ता । तत्र हुमादीनां दृष्टप्रयोजनासम्भवे जपब्रह्मयज्ञादावदृष्टार्थता । दृष्टैकप्रयोगविधिगोचराणां दृष्टादृष्टप्रयोजनत्वं प्रोक्षणावघातादीनाम् । अतो नावश्यमैकरूप्यमेव सर्वत्रैवास्थेयम् । तदेष पूर्वोत्तरपक्षसंक्षेपार्थः—पारलौकिकादृष्टफलत्वादध्ययनस्य नार्थज्ञानपर्यन्तोऽध्ययनविध्यर्थ इति नावश्यमनन्तरं वेदार्थो मीमांसितव्यः । अतो न स्नानस्मृत्यध्ययनविध्योर्विरोधः । अविरुद्धं च न दुर्बलमपि बाधमर्हतीति पूर्वः पक्षः । सिद्धान्तस्तु—स्वाध्यायस्याध्ययनसंस्कार्यत्वावगमादधीतेन स्वाध्यायेन किं कुर्यादित्यपेक्षिते योग्यत्वेनार्थज्ञाने स्वाध्यायस्य विनियोगात्, तस्य चैहिकत्वादनन्तरं दृश्यमानत्वाच्च न व्यवहितामुष्मिकादृष्टस्वर्गफलकल्पना युक्तेत्यधीतेन स्वाध्यायेनार्थं जानीयादिति करणीभूतस्य वेदस्यानुग्राहकापेक्षायां, योग्य-

१ 'र्थावधारणं त', २. 'र्थप्राप्ति' क. पाठः. ३. 'त्रादृष्टकल्पनानवका' ४. 'तु', 'तेषु' ख. पाठः. ५. 'यवि', ६. 'स्य हि म', ७. 'नपरिक', ८. 'णां नानाविधह' ख. पाठः ९. 'प्यमेवावसे' क. पाठः. १०. 'पः' ख. पाठः. ११. 'नकर्मत्वाव' क. पाठः.

**दृष्टार्थत्वादिसंयुक्तं वाक्यं लक्षणया त्विति ॥ ८९ ॥**
**पुनरुक्त्या गतार्थत्वात् त्यक्तं कैश्चित् तदुच्यते ।**
**यद्यप्यस्य भवेद् वाच्यमानन्तर्यमसंशयम् ॥ ९० ॥**
**तथापि पूर्वतामात्रं लक्षयेदविरोधतः ।**
**ग्रन्थग्रहणमात्रे च कृते स्नानं विरुध्यते ॥ ९१ ॥**
**अधीत्येत्यधिगम्येति व्याख्याने त्वविरोधिता ।**

---

त्वेनेतिकर्तव्यतांशोपनिपातिनी मीमांसाध्ययनानन्तरमुपनिपतन्ती स्वकालोपनिपातिना स्नानेन विरुध्यत इति श्रुतिबलीयस्त्वेन युक्तः स्नानस्मृतेर्बाध इति सूक्तं स्नानस्य तेन बाधः स्यादिति ॥ ८८½ ॥

अत्र भाष्यं 'दृष्टार्थता चाध्ययनस्यानन्तर्ये व्याहन्येत, लक्षणया त्वेषोऽर्थः स्याद्' इति । तदध्ययनदृष्टार्थताप्रतिपादनस्य पुनरुक्तत्वाल्लक्षणया त्वेषोऽर्थः स्यादिति चाविज्ञायमानार्थत्वात् कैश्चिद् व्याख्यातृभिस्त्यक्तम् । तत्तावदाह— **दृष्टार्थेति कैश्चिदन्तेन** । स्वयं तु चिरन्तनलेख्येषु विद्यमानत्वात् समाधत्ते— तदुच्यत इति । अयमभिप्रायः —पूर्वं हि 'न चाधीतवेदस्ये'त्यादिभाष्येण पूर्वकालतामात्रं क्त्वाप्रत्ययेनोच्यते, नानन्तर्यम् । न च तदध्ययनदृष्टार्थत्वे विरुध्यत इति स्मृत्या सहाविरोधो दर्शितः । इदानीं तु यद्यप्यानन्तर्यवचनः क्त्वाशब्दः, तथापि समस्तस्मृत्यर्थपरिग्रहे वेदविरोधाद् वरं लक्षणेति । पौर्वापर्यविशेष आनन्तर्ये उक्ते तदन्तर्गतपूर्वकालतामात्रमध्ययनस्य लक्ष्यते । एवं हि दृष्टार्थाध्ययनेन सहाविरोधो भवतीति ॥ ९०½ ॥

अपरमपि स्मृत्या सहाविरोधप्रकारमाह — **ग्रन्थेति** । अधीत्येति इङो रूपे विरोधः नेण इति । इदं चान्वारुह्यवचनमिति नातिवादरणीयम् । इङो हि नित्यसहचरितोऽधिशब्द एकदेशभूतः, नहि तस्य केवलस्य प्रयोगो दृष्टपूर्वः । अत इङो रूपे समुदायप्रसिद्धिः । इणस्त्ववयवप्रसिद्धिः । सा च समुदायप्रसिद्धेर्दुर्बला । स्वाध्यायाध्ययनाधिकारे चाधीत्येति श्रुतं तद्विषयमेवावगम्यत इत्यतोऽपि नाधिगमार्थकल्पना युक्तेति ॥ ९१½ ॥

---

१. 'र्थ इति' क. पाठः.

**यस्त्वेवमविरोधित्वं कुर्वन्नाप्लवनं वदेत् ॥ ९२ ॥**
**अदृष्टायाथवाप्यन्यः संस्कारस्तस्य चोत्तरम् ।**
**इहास्नानादिनियमो यः कृतो ब्रह्मचारिणः ॥ ९३ ॥**
**अवधित्वमनाश्रित्य सोऽवसानमपेक्षते ।**
**ततोऽपेक्षावशात् स्नानमस्नानादिनिवर्तनम् ॥**
**विरोधसाहचर्याभ्यां दृष्टार्थत्वेन लक्षयेत् ।**

---

अत्र भाष्यं 'न चेदं स्नानमदृष्टार्थं विधीयते' इति । तद् व्याचष्टे— **यस्त्विति** । यो हि श्रुतिस्मृत्योरेवमविरोधो भवतीति गुरुगेहादनावृत्तस्याप्लवनमात्रम् 'अधीत्य स्नायादि'ति प्रयाजादिवत् प्रधानमदृष्टार्थं विधीयते । अथवा मन्त्राद्युपेतमध्ययनस्य प्रधानकर्मणः प्रोक्षणादिवददृष्टार्थं नरसंस्काररूपं स्नानं विधीयत इति मन्यते, तस्य वक्ष्यमाणमुत्तरमिति ॥ ९२[1] ॥

तदिदानीमुत्तरमाह— इहेति द्वयेन । ब्रह्मचारिणो हि 'न स्नायादि'त्यस्नानादिनियम उक्तः । न च तत्र कस्यचिदवधित्वमाश्रितम् । अतोऽसौ कियन्तं कालमिति भवत्यवसानापेक्षेति । यद्येवं ततः किमत आह—तत इति । अपेक्षितविधौ दृष्टार्थत्वम् । इतरथादृष्टार्थं स्नानविधानम् । न च दृष्टे सम्भवति तद् युक्तम् । अतोऽपेक्षावशादस्नानादिनियमनिवृत्तिमेव 'अधीत्य स्नायादि'ति स्नानं लक्षयति । तद्धि अस्नानविरोधि स्नानं, विरोधिसत्ता च विरोध्यन्तरनिवृत्त्या व्याप्ता । अतः स्नानेनास्नाननियमनिवृत्तिलक्षणा युक्तैव । तत्सहचरिताश्च गुरुकुलवासादय इति तन्निवृत्त्या तेषामपि निवृत्तिर्लक्ष्यत इति । ननु युक्तं विरोधिनोः सहासम्भवात् स्नानेनास्नाननिवृत्तिर्लक्ष्यत इति । गुरुकुलवासादिधर्मनिवृत्तौ (कु ? कु)तो हेतुः । यच्चास्नानादिनियमसहचरितो गुरुकुलवासादिस्तन्निवृत्त्या निवर्त्यत इत्युक्तं तदयुक्तम् । प्रमाणान्तरगोचरे हि विषये तद् युक्तम् । यथा लोके भोजनकाले केवलस्थलपरिमार्जनोपदेशे स्थला(ली)नि परिमृज्यन्तामिति भवति तत्सहचरितनिखिलभोजनोपकरणशङ्खशुक्तिकादिपरिमार्जनोपदेशः । श्रुतिस्मृत्योस्तु यावदुपात्तमात्रविषयत्वात् सहचरितादिग्रहणमन्याय्यम् । उच्यते — स्यादेवं यदि श्रुतिमूलेयम् 'अधीत्य स्नायादि'ति स्मृतिः

1. 'ति । प्र' क. पाठः.

**तस्माद्ध्ययनस्नानजिज्ञासाक्रमवाचिनाम् ॥ ९५ ॥**
**दृष्टार्थत्वाय शब्दानामेवं व्याख्येयमाश्रिता ।**
**स्नात्वा जिज्ञासमानोऽपि ननु वेदं न बाधते ॥ ९६ ॥**
**तेनाविरोधिता तस्येत्येवं वदत उत्तरम् ।**
**यथैवाध्ययनात् स्नानं स्मर्यते समनन्तरम् ॥ ९७ ॥**

---

स्यात् । इयं तु न्यायमूला । न्यायश्च सकलब्रह्मचारिधर्मनिवृत्तौ समानः । कः पुनरसौ । श्रूयताम् । ब्रह्मचारिधर्मो हि गुरुकुलवासादयोऽध्ययनाङ्गमध्ययनसमाप्तौ समाप्यन्ते इष्टिसमाप्ताविव व्रतमिति न्यायः । अतोऽस्नाननियमनिवृत्तिमूलेन सकलाग्नीन्धनादिब्रह्मचारिधर्मपर्यवसानलक्षणा युक्तेति । इदं तु 'किन्तु लक्षणये'त्यादिभाष्येणोक्तमिति वेदितव्यम् ॥ ९४½ ॥

प्रकरणार्थमिदानीमुपसंहरति — तस्मादिति । अयमर्थः—यदध्ययनशब्दोऽधिगमार्थ इति व्याख्यातं, यच्च स्नायादित्यस्नानादिनियमनिवृत्तिलक्षणार्थः स्नानशब्द इति, तथा 'अथातो धर्मजिज्ञासे'ति धर्मजिज्ञासाक्रमवचनोऽथशब्दोऽध्ययनानन्तरोपनिपातिस्मार्तस्नानाभावलक्षणार्थ इति यदुक्तं तत्र च सर्वत्र दृष्टार्थत्वं हेतुरिति ॥ ९५½ ॥

अत्र चोदयति — स्नात्वेत्यन्तेन । एवं ह्युक्तं 'दौर्बल्यं वेदबाधनादि'ति । एवं च वेदबाधो भवति यदि वेदार्थः सर्वथैवोपेक्ष्येत । यदि तु स्मृत्यनुरोधेनाध्ययनानन्तरं स्नात्वा सन्दिग्धं प्रयोजनवन्तं वेदार्थं बुध्यमानो जिज्ञासते, ततो न कश्चिद् वेदविरोधो दृश्यत इत्यविरोधिता स्नानस्येति । एवंवादिन उत्तरमाह—एवमिति स्नानबाधनमन्तेन । अयमर्थः—भवेदपि स्मृत्यनुरोधेनानन्तरं स्नानं यदि तावन्मात्रमेव स्मृतं स्यात् । इह च स्नानादुत्तरकालमपि नानाविधानि नित्यानि नैमित्तिकानि च कर्माणि स्मर्यन्ते । तद् यदि तान्यप्यनुरुध्यन्ते, ततोऽत्यन्ताय वेदबाधः । न च तान्यप्यविचारितवेदार्थो यथावदनुष्ठातुमीष्टे । न चाविदुषोऽधिकारोऽस्ति । वक्ष्यति हि— 'न चाविद्वान् विहितोऽस्ती'ति । तदवश्यमनुरुध्यापि स्मृतिं कियत्यप्यध्वनि गत्वा पुनस्तद्बाधो वक्तव्यः । तद् वरमधीतवेदत्वेन विचारयोग्यत्वान्माणवकस्याध्ययनानन्तरमागते काले प्रथ-

---

१. 'ति जि', २. 'त्रस', ३. 'वदतः' ४. 'तु' ख. पाठः. ५. 'मुपग' क. पाठः.

**तथा ततः परोऽप्यन्यः पदार्थेऽन्यः परस्ततः ।**
**ततश्चावश्यकर्तव्ये बाधे स्मार्तस्य कस्यचित् ॥ ९८ ॥**
**योग्यत्वादागते काले प्राथम्यात् स्नानबाधनम् ।**
**सोऽयं पाठक्रमस्यार्थाद् बाध इत्यवगम्यते ॥ ९९ ॥**
**गुणप्रधानयोर्वापि विरोधाद् गुणबाधनम् ।**

---

मोपनिपातिनो विरोधिनः स्नानस्यैव बाधनम् । अतोऽनधीतवेदत्वेन याव-न्नित्यनैमित्तिककर्मणोऽनुष्ठानायोग्यः, तावदकुर्वन्नपि तानि न प्रत्यवैति । अधीतवेदतया योग्योऽकुर्वन् प्रत्यवेयात् । न चाविद्वान् कर्तुं शक्नोति । न चाविचारयन् जानातीत्यध्ययनानन्तरमेव धर्मजिज्ञासा युक्तेति । इदं चो-त्तरविभवादुक्तम् । परमार्थतस्त्वध्ययनविध्यर्थसम्पादनाय प्रवृत्तो न प्राङ् मीमांसाश्रवणाद् विरन्तुमर्हतीत्यध्ययनविधिबलप्रभावित एवायमर्थः । नहि प्रधानमनङ्गननुष्ठितं पर्यवस्यति । वक्ष्यति हि 'साङ्गं प्रधानमेकशब्द्यादि'ति ॥ ९८ ॥

एवं स्मृतिबाधमुपपाद्यात्रैवाधिकरणमुदाहरति — **सोऽयमिति** । इतिरिवार्थे । पाठक्रमस्येव श्रुतिक्रमस्यायथमर्थाद् बाधोऽवगम्यत इत्यर्थः । उक्तं हि क्रमकोपाधिकरणे 'क्रमकोपोऽर्थशब्दाभ्याम्—' (५ ४. १) इति । अत्र हि 'अग्निहोत्रं जुहोति' 'यवागूं पचती'त्युदाहृत्य विचार्यते — किं हुत्वा पक्तव्यम्, उत पक्त्वा होतव्यमिति । अत्र पाठप्रामा-ण्याद् हुत्वा पक्तव्यमेति पूर्वपक्षित उक्तं पाठक्रमस्यार्थक्रमात् कोपो बाधः । अर्थवशेन ह्यत्र पाठक्रमोऽतिक्रमितव्यः । यथापाठक्रमानुष्ठाने ह्यर्थो न संवर्तेत । होमार्थो हि पाकः । स होमादुत्तरमनुष्ठितोऽनर्थकः स्यात् । होमश्च हवनीयादृते न सिध्येत् । तस्मादादौ श्रपणं ततो होम इति । तद्वदिहापि यद्यप्यध्ययनानन्तर्यरूपक्त्वाश्रुत्या स्नानस्य क्रमोऽवगतः, त-थाप्यध्ययनदृष्टार्थतासामर्थ्येन बाधितव्य इति । तत्परिग्रहेऽध्ययनवि-ध्यर्थ एव बाधितः स्यात् । श्रुतिक्रमोऽप्यर्थानुसारेण बाध्यत एव, अर्था-र्थत्वात् सर्वस्येति क्रमकोपाधिकरणे टीकाकारेणोक्तमिति । अधिकरणान्त-

---

१. 'रं कर्म', २. 'वै' ख. पाठः. ३. 'णार्थमु', ४. 'त', ५. 'श्रा-न्याद्', ६. 'रकालम', ७ 'रेऽधन बाधितव्य ए' क पाठः.

**स्नानोपलक्षिता चात्र निवृत्तिर्गुरुवेश्मनः ॥ १०० ॥**
**विरोधित्वेन बाध्येत न तु मध्वादिभक्षणम् ।**
**तस्माद् गुरुकुले तिष्ठन् मधुमांसाद्यवर्जयन् ॥ १०१ ॥**
**जिज्ञासेताविरुद्धत्वाद् धर्ममित्यवगम्यते ।**
**गुरुगेहनिवृत्त्यंशो यावच्च न समाप्यते ॥ १०२ ॥**
**तावत् सकलवाचित्वान्न स्नानं पर्यवस्यति ।**

रमत्रैवोदाहरति — गुणप्रधानयोरिति । वक्ष्यति — 'अङ्गगुणविरोधे च तादर्थ्यात्' (१२. २. २५) इति । अत्र च प्रधानभूतसुत्याकालानुरोधेनाङ्गभूतदीक्षणियाकालबाधो वक्ष्यते, प्रधानार्थत्वादङ्गानाम् । प्रधानविरोधे सत्यानर्थक्यात् । एवमिहाप्यध्ययनस्नानयोः क्रममधीत्यस्नायादिति स्मृतिरुपदिशति । क्रमश्च क्रमवतामङ्गमित्यविवादं सर्ववादिनाम् । तद् यद्येष क्रमोऽनुरुध्येत, ततः प्रधानभूतं दृष्टार्थमध्ययनमेव बाधितं भवेत् । न च गुणानुरोधेन प्रधानबाधो युक्त इति ॥ ९९½ ॥

एवं तावत् स्मृतेरत्यन्तबाधो भणितः । इदानीं विरोधानुसारित्वाद् बाध्यबाधकभावस्य यावन्मात्रमेव विरुध्यते तद् बाधितव्यम् । गुरुकुलेवासपरित्यागमात्रं च धर्मजिज्ञासापरिपन्थि, तदायत्तत्वात् तस्याः, न मधुमांसादिसेवेति न ते बाधितव्या इत्याह — **स्नानेति** ॥ १००½ ॥

तस्मात् स्मृत्येकदेशबाधोऽयं न समस्तस्मृतेर्बाध इत्याह — **तस्मादिति** ॥ १०१½ ॥

नन्वेवं परित्यक्ताग्नीन्धनादिब्रह्मचारिधर्मः स्नातको जात इति 'स्नातको नित्यं शुचिः सुगन्धिः स्नानशीलः' इति विधिप्राप्तं मध्वादिसेवनवद् धर्मजिज्ञासायामविरोधि यत् स्नानं तदपि क्रियतामेत आह—**गुरुगेहेति** । सकलब्रह्मचारिधर्मनिवृत्तौ हि स्नातकशब्दः प्रयुक्तः, नाग्नीन्धनादिकतिपयधर्मनिवृत्तौ । अतो यावद् गुरुगेहनिवृत्तिर्मध्वादिसेवासमुदायस्यांशो न समाप्यते, तावत् स्नातक एव न भवतीति न स्नानमस्ना-

१. 'रिष्यति' क. पाठः. २. 'ति स', ३. 'नामविवादसिद्धम्', ४. 'नीं तु वि', ५. 'लप', ६. 'त्वाद्धर्मज्ञानस्य न', ७. 'न वा', ८. 'ति', ९. 'भित्याह', १०. 'हाद्विनि' ख. पाठः.

गुरुगेहादनावृत्तः स्नातको हि न कथ्यते ॥ १०३ ॥
तत्परत्वविधानाच्च न तावद् दारसङ्ग्रहः ।
व्याख्याय कीर्तिता चात्र स्नायादिति पुनः स्मृतिः ॥
समावर्तिष्ट भेत्यादिस्मृतेर्यद्यप्यनन्तरम् ।
विपरीतार्थमित्यस्मात् तद्वाक्यादपनीयते ॥ १०५ ॥
अथशब्देन यो बाधः पुरस्तादुपवर्णितः ।
तन्मात्रस्यैव बाधोऽत्र दृष्टार्थत्वात् प्रदर्शितः ॥१०६॥

---

नादिनियमनिवृत्तिः पर्यवस्यति । स्नानं न प्राप्नोतीत्यर्थः । सकलब्रह्मचारिधर्मनिवृत्तिवाची स्नातकशब्द इति ॥ १०२½ ॥

व्याख्याय तदेव प्रयोगानुसारेणाह — **गुरुगेहादिति** । यावद्धि गुरुगेहान्न निवर्तते न निष्क्रामति, तावत् स्नातको न कथ्यते । अतो न स्नातकधर्मं लभत इति । यद्येवं तर्हि मा स्नातु, दारपरिग्रहं किन्तु न करोति । उपात्तदारोऽपि गुरौ निवसन् धर्मं जिज्ञासत एवं, अत आह — **तदिति** । गुरुगेहान्निष्क्रान्तस्य कृतमन्त्रानुपेतस्नानस्य तत्र स्नानात् परो दारसङ्ग्रहो विहितः 'स्नातकः सदृशीं भार्यां विन्देत' इति । तत् कथमकृतस्नानस्य भवेदिति ॥ १०३½ ॥

अत्र भाष्यं 'वेदमधीत्य स्नायाद् गुरुकुलान्मा समावर्तिष्टे'ति । तदसङ्गतार्थमिव लक्ष्यते । कथं हि वेदमधीत्य स्नायाद् गुरुकुलान्मा समावर्तिष्टेति । तद् विच्छिद्य योजयति — **व्याख्यायेति** । पूर्वं हि 'न चेदं स्नानमदृष्टार्थमि'त्यादिना भाष्येण स्मृतिवाक्यं व्याख्याय पुनस्तदेव कीर्तितमस्याः स्मृतेरयमर्थ इत्युक्तं भवति ॥ १०४ ॥

नन्वानन्तर्याद् गुरुकुलान्मा समावर्तिष्टेत्यनेनैकग्रन्थोऽवगम्यते । किं तत्परित्यागे कारणमत आह — **समावर्तिष्टेति** । नह्यानन्तर्यमेव सम्बन्धे कारणम् । अपितर्हि, योग्यतापि । इह च विरोधादानन्तर्येऽप्यसम्बन्ध इति ॥ १०५ ॥

अथापनीतं कथं व्याख्येयमत आह — **अथशब्देनेति** । पूर्वं हि गुरुकुलवासावसानबाधनार्थोऽथशब्द इति व्याख्यातं 'गुरुकुलान्मा समा-

---

१. 'हि' २. 'वत्सत', ३. 'भित्सत' . पाठः.

**स्मृतिप्राप्तमिदानीं तु मधुमांसाद्यवर्जनम् ।**
**प्रतिषेधन्नदृष्टार्थं सूत्रकारो न शोभते ॥ १०७ ॥**
**निवृत्य गुरुगेहाच्च जिज्ञासार्थः पुनर्भवेत् ।**
**प्रवेशः सोऽप्यदृष्टार्थ इति नैवेह सूत्रितः ॥ १०८ ॥**
**निर्गमो हि कृतार्थस्य दृष्टार्थो गुरुवेश्मनः ।**
**स्मर्यते तस्य नार्थः स्यादकृतार्थस्य निर्गमे ॥१०९॥**
**अथशब्दप्रसिद्ध्यैव वेदग्रहणहेतुता ।**
**आनन्तर्योपदेशित्वादतश्शब्देन किं पुनः ॥ ११० ॥**

---

वर्तिष्ट कथं वेदवाक्यानि विचारयेदि[1]त्यादिना भाष्येण । न च तत्र हेतु-रुक्त इति स्मृतिदृष्टार्थताप्रसङ्गेन मनसि विपरिवर्तमानोऽभिहितः । अथशब्दो ह्यानन्तर्यपरत्वेऽदृष्टार्थः स्यादिति तत्परिहाराय गुरुकुलान्मा समावर्तिष्टेत्ये-वंपरो व्याख्यायत इति । यद्वा गुरुकुलवासनिवृत्तिमात्रं बाध्यते न कृत्स्न-स्मृत्यर्थ इति, तत्रायं हेतुरित्याह — तन्मात्रस्येति ॥ १०६ ॥

एतदेव विवृणोति — **स्मृतिप्राप्तमिति** । इदानीमधीते वेदे-ऽधीत्य स्नायादिति स्मृतिप्राप्तं मध्वादिसेवनं प्रतिषेधयन् सूत्रकारोऽदृष्टार्थो-पदेशी स्यात् तेषां धर्मजिज्ञासायामविरोधात् । न च तद्युक्तमिति ॥ १०७॥

यस्तु स्मृतेरविरोधं वदन्नेवमाह — स्मृतिवशादनन्तरं स्नात्वा गुरु-गेहं प्रविश्य धर्मो विचारयिष्यते तन्न कश्चिद् विरोधः स्यादिति, तं प्र-त्याह — **निवृत्येति** । निर्गत्य हि पुनः प्रवेशोऽदृष्टार्थः स्यादिति । पूर्वं चेदमुद्भाष्यमेव परिचोद्यान्यथा परिहृतम् । इदानीं भाष्यानुसारेणादृष्टार्थ-तया परिह्रियते इत्यपौनरुक्त्यम् ॥ १०८ ॥

ननु कथं प्रवेशोऽदृष्टार्थः स्यात्, तस्य हि विचारो दृष्टमेव प्रयोज-नमत आह — **निर्गम इति** । कृतार्थस्य निर्गमो निस्सरणं दृष्टार्थं स्यात् । इतरथादृष्टार्थम् । अतो निर्गत्यप्रवेशोऽदृष्टार्थ इति वदता निवृत्तेरदृष्टार्थत्व-मुक्तं भवति ॥ १०९ ॥

अतश्शब्दमिदानीमनुसन्धत्ते — **अथेति** । यदैवाथशब्देन दृष्टार्थ-

---

[1]. 'स्यात्' ख. पाठः. २. 'घ्यकाराद्' क. पाठः.

**योग्यत्वमथशब्देन यद्यपि प्रतिपादितम् ।**
**तदेव हेतुरत्रेति नातश्शब्दाद् विना भवेत् ॥१११॥**
**लक्षणं पुरुषस्यैव तदा तद्धि प्रसज्यते ।**
**जिज्ञासायाश्च हेतुत्वे फलार्थित्वादि सम्भवेत् ॥**
**अतश्शब्दग्रहीतं वा तत्राध्ययनमाश्रितम् ।**
**हेतावकथ्यमाने हि मङ्गलाद्यर्थ्यसौ भवेत् ॥ ११३ ॥**
**स्नानबाधस्य वा हेतुरत इत्युच्यते पुनः ।**
**योग्यस्याधीतवेदत्वान्नावस्थातुं हि लभ्यते ॥ ११४ ॥**

---

मानन्तर्यमुपादिष्टं, तदैव क्रियामात्रानन्तर्यस्यादृष्टार्थत्वाद् वेदग्रहणं वेदार्थनिर्णये हेतुरित्युक्तमेवेति किमतश्शब्देनेति ॥ ११० ॥

परिहरति — **योग्यत्वमिति** । आनन्तर्योपदेशाद् वेदाध्ययनेन धर्मज्ञाने योग्यो भवतीति ज्ञायते, न तु तद्धेतुकैव धर्मजिज्ञासेति ॥१११॥

अतश्चैवंविधः पुरुषो धर्मज्ञाने योग्य इत्येतावदेवाथशब्देनोक्तं स्यात्, न हेतुविशेष इत्याह — **लक्षणमिति** । न च हेत्वन्तराभावात् पारिशेष्यसिद्धमध्ययनं शक्यं वक्तुमित्याह—**जिज्ञासाया इति** ॥११२॥

धर्मफलार्थित्वाचार्यकयशःप्रभृति जिज्ञासाया हेतुत्वेन सम्भवति । तद्धेतुत्वे च धर्मजिज्ञासायाः शूद्राधिकारो दोष इति परिहारान्तरमाह— **अतश्शब्द इति** । अथशब्दो ह्यानन्तर्यमुपदिशन् यद् वेदाध्ययनानन्तर्यमुपादिशतीत्युक्तं, तद् वक्ष्यमाणातश्शब्दप्रतिपाद्यहेतुत्वबलेन । इतरथा त्वर्थान्तरवचनोऽयमथशब्दः सम्भाव्येतेति ॥ ११३ ॥

अन्यथा पौनरुक्त्यमाह — **स्नानबाधस्येति** । यद्यप्यथशब्देन वेदाध्ययनं धर्मजिज्ञासाया हेतुरिति प्रतिपादितं, तथापि हेत्वन्तरवचनत्वादतश्शब्दो न पुनरुक्तः । स्नानबाधस्य हेतुत्वमतश्शब्दो वदति । स्नानबाधहेतुमाविष्करोति — योग्यस्येति । अधीतवेदो हि नित्यनैमित्ति-

---

१. 'क्तं भवतीति कि', २. 'का ध', ३. 'नयोग्यं भवति इ', ४. 'तं भवति त', ५. 'दतीति' ख. पाठः.

**सन्वाच्येच्छान्तरं कर्म ज्ञानं व्याप्नोति तावता ।**
**ज्ञानोपसर्जना सैव न तु त्रिध्यादि गम्यते ॥ ११५॥**
**इषेस्तु कर्म बाह्यः स्याद्धर्मः सा वाथवा द्वयम् ।**
**समानकर्तृकत्वं तु तुमुनोक्तं लिङा विधिः ॥ ११६॥**
**एवं विषयनानात्वान्न काचित् पुनरुक्तता ।**
**सूत्रितेच्छाभिनिर्वृत्त्यै द्वितीयेच्छात्र सूत्रिता ॥**

---

कानुष्ठानयोग्यो[१] जाता यद्यविद्वत्तया नानुतिष्ठेत्, प्रत्यवेयात् । अतोऽधीतवेदत्वान्नावस्थातुं लभ्यते झटिति विद्वत्तायां यतितव्यमिति ॥ ११४ ॥

अत्र भाष्यं 'धर्मं जिज्ञासितुमिच्छेदि'ति । तत्र सन्धातुलिङ्तुमुनामिच्छार्थत्वात् पौनरुक्त्यमाशङ्क्य विषयभेदात् परिहरति — **सन्वाच्येति** । सन्वाच्या तावदिच्छा आन्तरं समानपदोपात्तं ज्ञानमेव कर्म व्याप्नोति[२] । तर्कभिकेति[३] यावत् । तावता च भागेन सैव गम्यते, न लिङादेरर्थो विध्यादि[४]: । इषिस्तु यद्यपीच्छावचनः, तथापीच्छान्तरवचनत्वादपुनरुक्तः । तथाहि — सन्वाच्येच्छाया[५] बाह्यः पदान्तरोपात्तो[६] वा धर्मः कर्म, ज्ञानेच्छा वा, धर्मज्ञानेच्छाद्वयं वा । कर्मभेदप्रकटनमिच्छाभेदस्फुटीकरणार्थम् । लिङ्तुमुनोस्तु विधिसमानकर्तृकत्ववचनत्वात् स्पष्टो विषयभेद इत्यपुनरुक्ततेति । किं पुनरत्रासूत्रितद्वितीयेच्छोपादाने भाष्यकारस्य प्रयोजनं, धर्मं जिज्ञासेतेत्येवं हि वचनीयमत आह — **सूत्रितेच्छेति** । एवं हि मन्यते — यथा शिष्यो बालः प्रेषणायामयोग्यत्वाद् धर्मज्ञाने प्रवर्तयितुं सूत्रकारेणाध्येषितो धर्मजिज्ञासेति वदता, तथा तद्वतिमनुविदधानेन भाष्यकारेण सूत्रितेच्छा कथं निर्वर्त्स्यतेति द्वितीयेच्छा असूत्रितोक्ता । अत इच्छोपदेशेनापि कर्तव्यतोपदिष्टा भवेत्, तत्पूर्वभावित्वादिच्छायाः । नचेच्छा नेष्यते । बुभुक्षावत् । तथाहि एको बुभुक्षमाणो भुङ्क्ते । अन्यस्तु मन्दानलत्वादबुभुक्षुस्तामपि कामयत एवेति ॥ ११५—११७ ॥

---

१. 'ग्यो भवति य' क. पाठः. २. 'प्नोति', ३. 'प्रा', ४. 'दिरिति', ५. 'विषयभेदादपु' ख. पाठः. ६. 'तद्वाप्ये', ७. 'त्तो धर्मो ज्ञा', ८. 'र्मं । इच्छा' कभमक. पाठः.

**प्रकृत्या विकृतिर्यस्माच्चतुर्थ्यन्ता समस्यते ।**
**तादर्थ्ये यूपदार्वादौ तेनास्मिन्नसमासता ॥ ११८ ॥**
**सा हि तस्येत्यनेनोक्तो धर्मस्येत्येष विग्रहः ।**

---

तत्र धर्मजिज्ञासासमासपदं विगृह्णता भाष्यकारेण 'धर्माय जिज्ञासा धर्मजिज्ञासा । सा हि तस्य ज्ञातुमिच्छे'त्युक्तम् । तदाक्षिपति—प्रकृत्येति । यत्र हि तादर्थ्ये चतुर्थीसमासो भवति, तत्र प्रकृत्या विकृतिः समस्यमाना दृष्टा । यथा यूपाय दारु यूपदार्विति । अप्रकृतिविकारयोस्तु न समासः यथा रन्धनाय स्थाली, अवहननायोलूखलमिति । तथा 'प्रकृतिविकृतिग्रहणं कर्तव्यमि'ति तादर्थ्यसमासे वार्त्तिककारेणोक्तम् । न च सामर्थ्यप्रदर्शनार्थं तत् । अतोऽप्रकृतिविकारयोरपि यत्र सामर्थ्यं तत्र समासो भवत्येव । अतो धर्मजिज्ञासापदेऽपि सामर्थ्यस्य विद्यमानत्वाद् युक्तस्तादर्थ्यसमास इति वचनीयम् । सामर्थ्यस्यैव प्रकृतिविकारभावमन्तरेणानुपपत्तेः । विग्रहवाक्यार्थाभिधानशक्तिर्हि सामर्थ्यम् । न च यथा रन्धनाय स्थालीति श्रूयमाणा चतुर्थी बाह्यनिमित्तभूताया अरन्धनप्रकृतेरपि स्थाल्यास्तादर्थ्यमभिद्योतयति तथा रन्धनस्थालीति समासः, मन्दत्वात् तादर्थ्यस्य । प्रकृतेरेव तु दार्वादेर्यूपादिविकृतिभावापत्तेर्व्यक्तं तादर्थ्यमिति यूपाय दार्विति विगृह्य कथितं यूपदारुसमासादपि सुज्ञानम् । अत एव समासविधौ तादर्थ्यग्रहणं प्रकृतिविकृतिगोचरं व्याख्यातं तत्रैव तादर्थ्यस्य स्पष्टत्वात् । आह च—

"बाह्यस्य हि निमित्तस्य तादर्थ्यं नैव तादृशम् ।
यादृशं प्रकृतेः स्पष्टं विकारं प्रति दृश्यते ॥"

इति । तथाच नाप्रकृतिविकृत्योस्तादर्थ्यसमासो दृष्टचरः । अश्वघासादिषु षष्ठीसमासाश्रयणात् । वैयाकरणाख्यायां तु सत्यपि समासेऽलुग्विधानाद् विभक्तिः श्रूयते इति युक्तमेव वृत्तिविग्रहयोरैकार्थ्यमसत्यपि प्रकृतिविकृतिभावे । धर्मजिज्ञासापदसमासस्तु विवादास्पदीभूत एव । तस्माद-समासोऽयम् ॥ ११८ ॥

---

१. 'पदार्वादाविति', २. 'था तादर्थ्यसमासे प्र' ३. 'ति वा', ४. 'त्ताया' ख. पाठः. ५. 'रन्धनायस्था' क. पाठः. ६. 'स्फुटत्वा', ७. 'च' ख. पाठः.

**धर्मायेति तु तादर्थ्ये षष्ठी वृत्तेति कथ्यते ॥ ११९ ॥**
**प्राप्नोत्यत्र चतुर्थ्येव विशेषश्चेद् विवक्षितः ।**
**सामान्यस्य विवक्षायां तादृशं कथ्यते कथम् ॥**
**सम्बन्धमात्र एवैषा षष्ठ्युत्पन्ना तथापि तु ।**
**विशिष्टनिष्ठता तस्य भाष्यकारेण वर्ण्यते ॥ १२१ ॥**
**साधनाभासता चात्र पूर्वपक्षार्थगोचरा ।**
**अन्यसाधनमन्यस्य साधनाभास उच्यते ॥ १२२ ॥**
**क्रत्वर्थं पुरुषार्थस्य तदर्थं च क्रतोरिति ।**
**शेषलक्षणशब्दश्च कृत्स्नशास्त्रविवक्षया ॥ १२३ ॥**

---

एवमाक्षिप्य समादधाति—**सा हीति** । नायं चतुर्थीसमासः । किन्तु अश्वघासादिवत् षष्ठीसमास एवायम् । तथाहि 'सा हि तस्य ज्ञातुमिच्छे'ति षष्ठ्यन्तेन तदा विगृह्णातीति । ननु धर्माय जिज्ञासेति विग्रहवचनं तत् कथं व्याख्येयमत आह—धर्मायेति । नेदं विग्रहवचनं, किन्तु षष्ठ्यर्थविशेषप्रदर्शनमिति ॥ ११९ ॥

अत्र चोदयति—**प्राप्नोतीति** । तादर्थ्यरूपार्थविवक्षायां हि चतुर्थ्येव प्राप्नोति । सम्बन्धसामान्यविवक्षायां तु तादर्थ्यवचनं कथमिति ॥ १२० ॥

परिहरति—**सम्बन्धमात्रेति** । सूत्रकारेण हि सम्बन्धसामान्यविवक्षाया धर्मजिज्ञासेति षष्ठीसमासः प्रयुक्तः । निर्विशेषसामान्यानुपपत्तेस्तु विशेषाकाङ्क्षायां भाष्यकारेणैव तस्य सामान्यस्य तादर्थ्यरूपविशेषनिष्ठता वर्ण्यते, तेनायमपि न दोष इति ॥ १२१ ॥

अत्रापरं धर्मजिज्ञासास्वरूपप्रदर्शनार्थं 'कान्यस्य साधनानि कानि साधनाभासानी'ति भाष्यम् । तत्र साधनाभासपदं व्याचष्टे—**साधनाभासतेति** । पूर्वपक्षरूपार्थो धर्मस्य साधनाभासमिति । कथं पुनः पूर्वपक्षरूपार्थः साधनाभासः, अत आह—अन्यसाधनमिति । अन्यस्य हि साधनमन्यस्य साधनवदवभासमानं साधनाभासं भवतीति ॥ १२२ ॥

एतदेवाभिव्यनक्ति—**क्रत्वर्थमिति** । क्रत्वर्थं हि पर्णमय्यादि

**प्रसिद्धः शक्यते ज्ञातुं प्रसिद्धत्वात् तु नेष्यते ।**
**अप्रसिद्धस्त्वशक्यत्वान्नतरामित्यतोऽब्रवीत् ॥ १२४॥**
**जिज्ञास्यः संशयाद् धर्मः श्रेयस्करतयापि च ।**
**असन्दिग्धो ह्यजिज्ञास्यो यो वा स्यान्निष्प्रयोजनः ॥**
**स्वरूपादिषु धर्मस्य द्विधा विप्रतिपद्यते ।**
**पूर्वं प्रमाणरूपाभ्यां पादेनाद्यस्य निर्णयः ॥ १२६॥**

---

पुरुषार्थस्यापापश्लोकश्रवणादेरुच्यमानं साधनाभासं भवति । पुरुषार्थं च गोदोहनादि क्रतोरुच्यमानं तदाभासं भवतीति । अत्र भाष्यकारेण 'को धर्मः कथंलक्षणः इति चोदनासूत्रेण व्याख्यातमि'त्युक्त्वा 'कान्यस्य साधनानीत्यादि शेषलक्षणेन व्याख्यानमि'त्युक्तम् । तदयुक्तमिव दृश्यते, शेषलक्षणशब्दो हि तृतीयाध्याये प्रसिद्धः । न च तत्र साधनादि सर्वं व्याख्यायते, अतः कथमित्याशङ्क्याह—**शेषलक्षणेति**। नायं तृतीयाध्यायविवक्षया शेषलक्षणशब्दः प्रयुक्तः, किन्तु परिशिष्टसकलशास्त्रविवक्षया । अत एवैकवचनमिति ॥ १२३ ॥

अत्र भाष्यकारेण शास्त्रारम्भमाक्षिपतोक्तम्— 'धर्मः प्रसिद्धोऽप्रसिद्धो वा स्यात् । यदि प्रसिद्धः, न जिज्ञास्यः । अथाप्रसिद्धः, नतरामि'ति । तत्राभाववचनत्वान्नञः कोऽयमातिशायनिकः प्रत्ययः । नहि निषेधस्य स्वगतो विशेषः कश्चिदस्तीत्याशङ्क्याह—**प्रसिद्ध** इति । सत्यम् । नाभावस्य स्वगतो विशेषः, तथापि निषेध्यतन्त्रत्वाद् निषेधस्य तदतिशयात् सोऽप्यातिशेते इति । तदिह प्रसिद्धे ज्ञानेच्छामात्रस्यैवाभावः, न ज्ञानस्य । अप्रसिद्धे तु न ज्ञानं न चेच्छेति द्वयनिषेधादतिशयो युक्तः । अशक्यत्वान्नेष्यते न ज्ञायते चेत्यर्थ इति ॥ १२४ ॥

अत्र परिहारभाष्यं 'धर्मं प्रति विप्रतिपन्ना बहुविदः । स हि निःश्रेयसेन पुरुषं संयुनक्ती'ति, तद् व्याचष्टे— **जिज्ञास्य** इति । सान्दिग्धस्य हि प्रयोजनवतो निर्णयाय मतिमन्तो यतन्ते । तथाच धर्मः । तस्मादयमपि जिज्ञास्यत इति ॥ १२५ ॥

कीदृशः पुनर्धर्मे संशयः किन्निमित्तो वा, अत आह —**स्वरूपादिष्विति** । पूर्वं तावद् धर्मस्य स्वरूपादिषु मध्ये प्रमाणस्वरूपाभ्यां द्वेधा

स्थिते वेदप्रमाणत्वे पुनर्वाक्यार्थनिर्णये ।
मतिर्बहुविदां पुंसां संशयान्नोपजायते ॥ १२७ ॥
केचिदाहुरसावर्थः केचिन्नासावयं त्विति ।
तन्निर्णयार्थमप्येतत् परं शास्त्रं प्रणीयते ॥ १२८ ॥

---

विप्रतिपद्यते । विप्रतिपत्तिः क्रियते इति भावे प्रत्ययः । वादिविप्रतिपत्तिश्च संशये निमित्तमिति नैयायिकाः । तस्मादेष संशयो भवति किं खलु धर्मे प्रमाणं, किंस्विद् योगिप्रत्यक्षमुत चोदनेति । प्रमाणसंशयादेव तु स्वरूप-संशयः, किं यागादिर्धर्म उत चैत्यवन्दनादीति । तदत्राद्यस्याध्यायस्य प्रथमपादे निर्णयः कार्य इत्याह—पादेनेति । अत्र हि सम्भावितेतरप्रमाणनिषेधेन सम्भाविताप्रामाण्यनिषेधेन च प्रामाण्यमुपपादयिष्यते । तदुपपादनाच्च स्वरूपोपपादनमपि कृतं भवति । त्रिपाद्यां तु कथंलक्षण इत्यमुना प्रतिज्ञातः प्रमाणप्रकारो निरूप्यते। प्रामाण्यं त्विहैवोपपादितम् । अत एव पादावसाने 'इति प्रमाणत्वमिदं प्रसिद्धम्' इति वदति । अर्थवादाधिकरणे च 'सिद्धप्रमाणभावस्य' इति, प्रकारस्य तु तद्गतः प्रमाणादनतिभेदात् कृत्स्नोऽध्यायः प्रमाणलक्षणमित्याख्यायते इति ॥ १२६ ॥

एवमाद्यपादप्रयोजनमुक्त्वोपरितनतन्त्रप्रयोजनमाह—स्थित इति द्वयेन । अज्ञानामेकमार्गदर्शनां चासंशयाद् बहुविदां वाक्यार्थनिर्णये संशयान्न मतिरुपजायते । प्रथमं तावद् विध्यर्थवादमन्त्रनाम्नामर्थे प्रयोजने संशयः स्तुत्याद्युपयोगप्रतिपादनेनार्थवादाधिकरणादिरपनेष्यते । पुनश्च द्वितीये यजति ददाति जुहोतीत्यादिनां चार्थभेदाभावाद् भेदसंशयः शब्दान्तराधिकरणादिभिरित्येषा दिक् । अतः सन्दिग्धप्रयोजनवत्त्वात् परमपि शास्त्रं प्रणेतव्यमिति ॥ १२८ ॥

इत्युपाध्यायसुचरितमिश्रकृतौ काशिकाटीकायां
प्रथमसूत्रं समाप्तम् ॥

---

१. 'रूपम् । वा,' २. 'आहोस्वित् चै', ३. 'राकरणेन', ४. 'नस्येति', ५. 'र्गिणां चा', ६. 'प्रदर्शनेना', ७. 'त्वादप' ख. पाठः.

## चोदनालक्षणोऽर्थो धर्मः ॥ २ ॥

**धर्मे सामान्यतः सिद्धे प्रमाणं चोदनोच्यते ।**
**स्वरूपादेस्ततः सिद्धिः स्वरूपं चेह सूत्र्यते ॥ १ ॥**
**द्वयमेकेन सूत्रेण श्रुत्यर्थाभ्यां निरूप्यते ।**
**स्वरूपेऽपि हि तस्योक्ते प्रमाणं कथ्यतेऽर्थतः ॥ २ ॥**

---

चोदनालक्षणोऽर्थो धर्मः इति शास्त्रारम्भसूत्रम् । तद् व्याचष्टे — **धर्म** इति । अयमभिप्रायः — प्रथमसूत्रे हि विशेषधर्मजिज्ञासा प्रतिज्ञाता, तदभिप्रायेण को धर्म इति पृष्टम् । विशेषश्च प्रमाणविशेषात् सिध्यति । पाषण्डागमे हि प्रमाणे चैत्यवन्दनादयः क्रियाविशेषा धर्मा भवन्ति । वेदागमे तु यागादयः । तदिह सामान्यतः सिद्धधर्मोद्देशेन प्रमाणविशेषश्चोदना विधीयते । ततश्च धर्मविशेषसिद्धिः । यस्तु सामान्यात्मा धर्मस्य प्रीतिसाधनत्वं, सोऽविवादसिद्ध एव सर्ववादिनाम् । नहीह केचिद् विवदन्ते यः प्रीतिसाधनं धर्म इति । तथाच नृगुणवादिनो 'यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः' इत्याहुः । 'शुभा चित्तवासने'ति सौगताः । 'पुण्याः पुद्गला' इत्यार्हताः । सर्वे चैते प्रीतिसाधनतयैव तैर्धर्मा इष्यन्ते । अत एव चास्यां वचनव्यक्तावर्थशब्दोऽनुवाद इति वक्ष्यति 'लभ्यतेऽर्थानुवादेन' इति । एषैव चात्र वचनव्यक्तिर्वार्त्तिककारस्याभिमता । इतरथा 'अर्थशब्दस्य विध्यनुवादयोरसम्भवः इति वक्ष्यति[2] । ननु च स्वरूपविशेषेऽपेक्षिते प्रमाणविशेष[3]विधानमसङ्गतम्, अत आह — स्वरूपादेरिति । धर्मपदार्थस्येदं प्रमाणमित्युक्ते प्रमाणाधीनत्वात् प्रमेयसिद्धेरर्थादिदमुक्तं भवति यच्चोदनाप्रवेदितं तद् धर्मस्वरूपमिति । आदिशब्देन तदाभासमुपादत्त इति । यस्तु विवक्षिततिरोधानमुक्तमिति मन्यते, तं प्रत्याह — स्वरूपमिति । सामान्यतः सिद्धधर्मस्य स्वरूपविशेष इह सूत्र्यते इति ॥ १ ॥

नन्वेवमन्यतरविधावन्यतरस्याश्रौतत्वात् 'को धर्मः कथंलक्षण इत्येकेनैव सूत्रेण व्याख्यातमि'ति भाष्यं नोपपद्यते, अत आह — **द्वयमिति** । एकत्र श्रुत्युपात्ते अपरमर्थाद् व्याख्यातं भवतीति प्रमाणविधा-

---

१ 'षजि' क. पाठः. २. 'ती॰ति', ३. 'षाभिधान' ख. पाठः.

**किमाद्यपेक्षितैः पूर्णः समर्थः प्रत्ययो विधौ ।**
**तेन प्रवर्तकं वाक्यं शास्त्रेऽस्मिंश्चोदनोच्यते ॥ ३ ॥**
**चोदनैव प्रमाणं चेत्येतद्धर्मेऽवधारितम् ।**
**साकाङ्क्षमिति मन्वानो युक्तिलेशं द्वयेऽस्पृशत् ॥**

---

वर्थात् स्वरूपासिद्धिरुक्ता । स्वरूपविधावपि प्रमाणमर्थात् सिध्यतीत्याह— स्वरूप इति । यश्चोदनालक्षणः स धर्म इत्युक्तेऽर्थाच्चोदना धर्मे प्रमाणमित्युक्तं भवति । नह्यप्रमाणकं वस्तु स्वरूपक्लृप्त्यै[1] प्रभवतीति ॥ २ ॥

अत्र भाष्यकारेण 'चोदनेति क्रियायाः प्रवर्तकं वचनमि'ति चोदनापदार्थो व्याख्यातः । तदयुक्तं, प्रवर्तकस्य चोदनात्वात् प्रत्ययस्य लिङादेस्तत्त्वादत आह— **किमादी**ति । अयमभिप्रायः — सत्यं प्रत्ययमात्रस्य प्रवर्तनात्मको विधिरर्थः । नतु तावन्मात्रस्य प्रवर्तकत्वं, स्वव्यापारे हि पुरुषः कर्तृत्वेन नियुज्यते । अंशत्रयात्मिका च भावना तद्व्यापारः । अतः समानप्रत्ययोपादानश्रुतिबलप्रतिलब्धभावनापरिरम्भो विधिरातदीयनिखिलविशेषणलाभाद्[2] न नरं प्रवर्तयितुमुत्सहते । सकलतद्विशेषणलाभश्च नर्ते वाक्यात् सिध्यतीति युक्तमुक्तं प्रवर्तकं वाक्यं चोदनेति । एवंचावयवार्थः[4] किमिति साध्याकाङ्क्षां निर्दिश्यादिशब्देन साधनेतिकर्तव्यताकाङ्क्षे निर्दिशति । एतदुक्तं भवति — किं केन कथमित्यनेनात्मनापेक्षितैः साध्यादिभिः पूर्णः प्रत्ययः प्रवृत्तिपर्यन्ते विधौ समर्थः, तद्रहितस्य भावस्यानुष्ठानायोग्यत्वात् । तत्पूरणं चेदमनेनेत्थं कुर्यादिति वाक्यादिति वाक्यमेव चोदनेति ॥ ३ ॥

अत्र भाष्यकारेण चोदनायास्तदितरेषां च प्रमाणानां धर्मे प्रामाण्याप्रामाण्यप्रदर्शनार्थमुक्तं 'चोदना हि भूतमि'त्यादि । तदयुक्तं, सूत्रकारेण सदौत्पत्तिकसूत्राभ्यां[3] वक्ष्यमाणत्वाद् भाष्यकारस्यापि तत्रैव तद्विवरणमुचितम् । अतः[5] किमत्राक्षेत्रे क्लेशेनात[6] आह — **चोदनेति** । अयमभिप्रायः — चोदनालक्षण इति समासपदम् । समासश्च सति सामर्थ्ये भवति । विशेषणविशेष्यार्थवचनं च पदानां सामर्थ्यम् । नच व्यवच्छे-

---

१. 'सिद्ध्यै प्र', २. 'माहुरिति', ३. 'षसम्पदो न' क. पाठः. ४. 'प चा', ५. 'प्यप्र', ६. 'त' ख. पाठः.

सम्भाव्यते प्रमाणत्वं शब्दस्यैवंविधेष्वपि ।
इन्द्रियादेरसामर्थ्यं वक्ष्यमाणमदीदिशत् ॥ ५ ॥
अत्यन्तासत्यपि ज्ञानमर्थे शब्दः करोति हि ।
तेनोत्सर्गे स्थिते तस्य दोषाभावात् प्रमाणता ॥ ६ ॥
चोदनेत्यब्रवीच्चात्र शब्दमात्रविवक्षया ।
नहि भूतादिविषयः कश्चिदस्ति विधायकः ॥ ७ ॥

---

दाद्यते पदानां विशेषणविशेष्यभावः । अतश्चोदनालक्षणत्वयोरितरेतरव्यवच्छेदात् चोदनैव प्रमाणं, प्रमाणमेव चोदनेत्यवधारणद्वयमत्र विवक्षितम् । तच्चोपपत्तिसाकाङ्क्षमिति मीमांसागोत्रानुसारी भाष्यकारोऽनुपपत्तिकार्थं वचनं क्षणमप्यक्षममाणः प्रतिज्ञासूत्र एव सम्भावनाप्रसिद्ध्यर्थमवधारणद्वये युक्तिलेशमस्पृशदिति ॥ ४ ॥

तत्र प्रमाणमेवेत्यवधारणायां तावद् युक्तिलेशमाह — **सम्भाव्यत** इति । एवंविधेष्वतीन्द्रियेष्वप्यर्थेषु शब्दस्य प्रामाण्यं सम्भाव्यते । अतः प्रतिज्ञायां सम्भावितं प्रामाण्यं हेतुनोपपादयिष्यत इति । चोदनैवेत्यवधारणे युक्तिलेशं दर्शयति — इन्द्रियादेरिति । वक्ष्यति हि सत्सूत्रेणेन्द्रियादेरसामर्थ्यं तदनागतावेक्षणेन भाष्यकृतेह कथितमिति ॥ ५ ॥

कथं पुनः शब्दस्य प्रामाण्यं सम्भाव्यते, अत आह — **अत्यन्तेति** । अर्थगोचरज्ञानजननशक्तिर्हि प्रमाणानां प्रामाण्यम् । सा चैवं नाम शब्दानां व्यापिनी यदत्यन्तासत्यपि गगनकुसुमसंसर्गादौ धियमुपजनयतीति युक्ता तेषु प्रामाण्यसम्भावनेति । नन्वेवं तद्वदेवाप्रमाण्यमापद्यत इति प्रामाण्यं साधयतोऽप्रामाण्यमापतितम्, अत आह—तेनेति । अयमभिप्रायः— उत्सर्गो हि ज्ञानजननेन प्रामाण्यम् । तत् पौरुषेयेषु शब्देषु वन्ध्यासुतो यातीत्यादिषु । तद् दोषादपोद्यतापि । अपौरुषेये तु शब्दे पुन्दोषाभावात् स्वयमदुष्टत्वाच्च प्रमाणतैवानपोदिता सेत्स्यतीति ॥ ६ ॥

अत्र 'चोदना हि भूतमि'त्यादिभाष्ये चोदनापदेन शब्दमात्रं विवक्षितमित्याह — **चोदनेति** । कारणमाह — नहीति । विधायको हि

---

१. 'सहमानः प्र', २. 'न क', ३. 'प्रमाणत्वं सा' ख. पाठः. ४. 'ने प्रा', ५ 'तु पु' क. पाठः. ६. 'ष्यं तदिह चो' ख. पाठः.

इन्द्रियादिव्युदासेन शब्दो यावन्न साध्यते ।
तावच्च तद्विशेषस्य कुतो वावसरो भवेत् ॥ ८ ॥
निमित्तमात्रं वोच्येत प्रमाणं चेह लक्षणम् ।
प्रमाणं वापि शब्दो वा तज्ज्ञानं वा निरूप्यते ॥ ९ ॥
पदार्थस्तन्मतिर्वा स्याद्वाक्यार्थाऽधिगमोऽपि वा ।
पूर्वेषां तु प्रमाणत्वे फलत्वं तस्य गम्यते ॥ १० ॥
ज्ञाने लक्षणशब्दोऽयं यदि नाम प्रयुज्यते ।
चोदनोक्तिस्तदा कार्यं तत्कार्यं वापि लक्षयेत् ॥ ११ ॥

---

शब्दो मुख्यश्चोदनापदार्थः । न चासौ भूतादिविषयः सम्भवतीति शब्द-सामान्यं लक्षयतीति ॥ ७ ॥

इतश्चैतदेवमित्याह — **इन्द्रियेति** । समानजातीययोरेव स्पर्धार्हत्वात् शब्दमात्रमेव प्रत्यक्षादिसामान्येन स्पर्धामर्हति, न तद्विशेषः । भवति हि सम्प्रधारणा किं लौहमानीयतामुत दारवमिति । न तु किं लौहमुत खादिरमिति ॥ ८ ॥

अत्र भाष्यकारेण 'लक्ष्यते येन तल्लक्षणमि'ति लक्षणपदार्थो विवृतः । तदिदं निमित्ताभिप्रायं प्रमाणाभिप्रायं वेत्याह — **निमित्तमात्रमिति** । प्रमाणं वेत्यत्रापि पक्षे शिष्यबुद्धिप्रथिम्ने प्रमाणविकल्पानाह — **प्रमाणं वेति** । प्रमाणं वेत्यत्रापि पक्ष इत्यर्थः । प्रमाणं हि कारकविशेषः । विवक्षातश्च कारकप्रवृत्तिः । अतो यदेव शब्दादीनां वाक्यार्थज्ञानावसानानां[1] मध्ये प्रकृष्टसाधकतया[2] विवक्ष्यते तत् प्रमाणमिति । प्रमाणप्रसङ्गेन फलमपि दर्शयति—**पूर्वेषामिति** । शब्दादीनां प्रामाण्ये वाक्यार्थज्ञानं फलम् । आन्तरालिकं तु करणव्यापारतया प्रतिपादयितव्यम् । वाक्यार्थज्ञाने तु प्रमाणे हानादिबुद्धिः फलमिति विवेचनीयमिति ॥ १० ॥

ननु प्रमाणपक्षे ज्ञानमपि लक्षणपदार्थः । तद्धि प्रमाणम्[3] । अतः कथं शब्दविशेषवाचिना चोदनापदेन सामानाधिकरण्यमत आह — **ज्ञान**

---

१. 'ज्ञानानां' ख. पाठः. २. 'न', ३. 'णं तत् क' क. पाठः.

**निमित्तमात्रे शब्दे च प्रमाणे मुख्यवृत्तयोः ।**
**सामानाधिकरण्यं स्याच्चोदनालक्षणत्वयोः ॥ १२॥**
**द्रव्यक्रियागुणादीनां धर्मत्वं स्थापयिष्यते ।**
**तेषामैन्द्रियिकत्वेऽपि न ताद्रूप्येण धर्मता ॥ १३ ॥**
**श्रेयस्साधनता ह्येषां नित्यं वेदात् प्रतीयते ।**
**ताद्रूप्येण च धर्मत्वं तस्मान्नेन्द्रियगोचरः ॥ १४ ॥**

---

इति । अस्यार्थः — न[1] तावद् ज्ञानमेव प्रमाणमिति नियमः । विवक्षावशेन हि शब्दादीनां प्रामाण्यमुक्तमेव । अपिच यदि ज्ञानमेव प्रमाणं तद्विवक्षया च लक्षणशब्दः प्रयुक्तः, तथापि चोदनाशब्देन तद्गोचरं ज्ञानं तत्कार्यं लक्ष्यते यदि तद्विवक्षया लक्षणशब्दप्रयोगः । अथ तु पदार्थज्ञानादिविवक्षया, तदा शब्दकार्यस्य[2] ज्ञानस्य यदपरं[3] कार्यं पदार्थज्ञानादि तच्चोदनापदेन लक्ष्यते । अस्ति हि कार्यकार्यस्यापि परम्परया सम्बन्धो लक्षणाबीजमिति ॥ ११ ॥

निमित्तार्थे तु लक्षणपदे शब्दे च प्रमाणे मुख्यार्थयोरेव द्वयोरपि सामानाधिकरण्यमित्याह — **निमित्तेति** ॥ १२ ॥

अत्र चोदनैवेत्यवधारणे धर्मस्येन्द्रियादिगोचरत्वमपाकृतम् । तदयुक्तं, द्रव्यादिर्हि धर्मः । स चैन्द्रियिक एवेति प्रत्यक्षसूत्रे वक्ष्यते, अत आह — **द्रव्येति** । अयमर्थः — सत्यं द्रव्यादयो धर्माः । न तु स्वरूपेण किन्तु श्रेयस्साधनतारूपेण[4] । अतो न तदैन्द्रियिकमिति न धर्मस्येन्द्रियगोचरत्वापत्तिः । आदिशब्देनाकृतेरुपादानमिति ॥ १३ ॥

केन तर्हि रूपेणामी धर्माः यद् वेदवेद्यमिति, तद् दर्शयति — **श्रेय इति त्वमन्तेन** । श्रेयस्साधनशक्त्यात्मना[5] हि द्रव्यादयो धर्माः । न तद्रूपममीषां वेदादृते शक्यतेऽवगन्तुम् । नहि 'गोदोहनेन पशुकामस्य प्रणयेत्' इत्यादिश्रुतिमन्तरेण गोदोहनादयः श्रेयस्साधना इति प्रमाणान्तरं प्रक्रमत इति । प्रकृतमनैन्द्रियिकत्वं धर्मस्योपसंहरति तस्मादिति ॥ १४ ॥

---

१. 'नावश्यज्ञा', २. 'स्य य', ३. 'परं प', ४. 'नरू', ५. 'नत्वात्म' ख. पाठः.

प्रदर्शनार्थमत्रोक्तमिन्द्रियं सूत्रकारवत् ।
नान्यत् किञ्चेति वा छेदः सामान्यार्थः प्रयुज्यते ॥
तदसामर्थ्यसिद्ध्यै च पुनरिन्द्रियकीर्तनम् ।
किञ्चेति मध्यमच्छब्दो हेतुप्रश्ने प्रयुज्यते ॥ १६ ॥
यद्यपि त्वनुमानस्याप्येवमादौ समर्थता ।
विना सम्बन्धबोधेन न तु तस्योद्भवः क्वचित् ॥ १७ ॥
न सामान्यविशेषाभ्यां धर्मसम्बन्धदर्शनम् ।
लिङ्गस्य कस्यचित् सिद्धं येन स्यादनुमानता ॥ १८ ॥

---

अत्र भाष्यकारेण 'नान्यत् किञ्च नेन्द्रियमि'तीन्द्रियमात्रमशक्तं धर्म इत्युक्तम् । न चैतावता चोदनैवेत्यवधारणोपपत्तिः । अनुमानादिशक्तिप्रसक्तेरनिवारितत्वात्, अत आह -- प्रदर्शनार्थमिति । यथा हि सूत्रकारेण सर्वप्रमाणानिमित्तत्वे विवक्षिते 'तत्प्रत्यक्षमनिमित्तमि'ति प्रत्यक्षमात्रस्यानिमित्तत्वमुक्तं, तथा तच्छीलमनुविदधानेन भाष्यकारेण प्रदर्शनार्थमिन्द्रियमात्राशक्तिरुपवर्णितेति । नान्यत् किञ्चेति वा प्रमाणसामान्यनिराकरणाय भाष्यं छेत्तव्यमित्याह — नान्यदिति । कथं पूर्वस्माद् विच्छिन्नं नेन्द्रियमिति व्याख्येयमत आह — तदिति । इन्द्रियपूर्वकं हि सर्वमितरदिन्द्रियाशक्तावशक्तमिति भावः । नान्यादिति वा सर्वार्थं छित्त्वा किञ्चेति हेतुं पृष्ट्वा नेन्द्रियमिति पूर्ववद्धेतुतया वक्तव्यमित्याह — किञ्चेति ॥ १६ ॥

नन्वनुमानमेवञ्जातीयकेषु समर्थम्, अनुमीयते खल्वङ्गारेभ्यो भूतोऽग्नीन्धनसंयोगः । तथाचेन्धनाग्निसंयोगाद् भविष्यदङ्गारावगमः । विप्रकृष्टश्च धूमादग्निः । कुड्यादिव्यवहितश्च स्वरेण पुत्रः । गन्धाच्च सूक्ष्म द्रव्यावगमः । अतः कथं सर्वनिषेधासिद्धिरत आह— यद्यपीति द्वयेन । सत्यं भूतादावनुमानं समर्थं, न तु तद् विना सम्बन्धबोधमुद्भवति । सम्बन्धश्च क्वचित् सामान्यतोऽवगम्यते, यथाग्निसामान्येन धूमसामान्यस्य । क्वचि-

---

१. 'कृता प्र', २. 'भिन्द्रि' ख. पाठः. ३. 'न्धबोधश्च' क. पाठः.

**ननु शब्दोऽपि सम्बन्धबोधान्नर्ते प्रवर्तते ।**
**पदं तन्न तु तद्वाच्यो धर्मो वाक्यार्थ एव सः ॥ १९ ॥**
**वाक्यस्यावाचकत्वं च पदार्थानां च हेतुता ।**
**सम्बन्धेक्षानपेक्षाणां वाक्यार्थे स्थापयिष्यते ॥ २० ॥**

---

द्विशेषतः, यथा रोहिणीकृत्तिकयोः । न च द्विधापि किञ्चिल्लिङ्गं नित्यातीन्द्रियेण धर्मेण सम्बद्धमुपलब्धं, येनानुमानं भवेदिति ॥ १८ ॥

अत्र चोदयति — **नन्विति** । शब्दोऽपि नागृहीतसम्बन्धः प्रतिपादकः, बालानामनवगतेः । अतः कथं शब्दमयी चोदना धर्मे प्रमाणं भविष्यतीति । परिहरति — पदमिति । ततः किमत आह — न त्विति । कस्तर्ह्यसौ[1] अत आह — वाक्यार्थ इति ॥ १९ ॥

ननु च न वाक्यमपि सकलवर्णपदोपसंहारातिरेकेण[2] किञ्चिदतीन्द्रियं तत्त्वम्, अपि तर्हि संहत्यार्थमभिदधति पदान्येव । अतः कथमगृहीतसम्बन्धं वाक्यं वाक्यार्थस्य वाचकं भविष्यतीति, अत आह — **वाक्यस्येति** । स्यादयं दोषो यदि वाक्यं वाचकमित्यभ्युपेयते, नत्वेतदेवमिति । कुतस्तर्हि वाक्यार्थावगतिः, अत आह — पदार्थानामिति । ते वा कथमगृहीतसम्बन्धास्तं गमयिष्यन्ति । नह्यन्यस्य दर्शनेऽन्यकल्पना युक्ता, अतिप्रसङ्गात् । अन्यमपि तत्प्रतिबद्धं[3] विद्वानन्यमनुमिनोति इति प्रतिबन्धबलादुचितमत आह — सम्बन्धेति । सम्बन्धदर्शननिरपेक्षाणामेव पदार्थानां वाक्यार्थे ज्ञातव्ये तद्भावभावेन तद्भूताधिकरणे हेतुत्वमुपपादयिष्यत इति ॥ २० ॥

अत्रापरं भाष्यं, 'नन्वतथाभूतमप्यर्थं ब्रूयाच्चोदना, यथा यत्किञ्चन लौकिकं वचनं नद्यास्तीरे फलानि सन्ती'त्येवमादि । तदयुक्तम् । कथं हि याद्दशताद्दशैरथ्यापुरुषवाक्यमुपमानं चोदनायाः । अपौरुषेयी हि सा । पुरुषाश्रया हि शब्दे दोषाशङ्का । अतः कथमतथाभावशङ्का ।

अत्र केचिदाहुः — शब्दशक्तिनिरूपणद्वारेण प्रतिज्ञाक्षेपार्थमिदं भाष्यम् । अत्र किल चोदनासूत्रेण कार्यरूपो वेदार्थ इति प्रतिज्ञातं तद-

---

१. 'कोऽसौ'. २. 'रेकेण', ३. 'न्धं वि', ४. 'शानुगुणर' ख. पाठः.

नेनाक्षिप्यते । अर्थासंस्पर्शिनि हि शब्दे केयमर्थविशेषप्रतिज्ञा चोदनानाम्। सर्वे शब्दाः खलु न स्वभावतोऽर्थं स्पृशन्ति । यदेव हि यादृशमेकदैकेन प्रयुक्तं वाक्यमर्थवदासीत्, तदेव हि तादृशमपगतसकलकलाध्मातादिदोषमन्यदा भवति वितथम् । नचैतदवैलक्षण्ये युक्तम् । यदाहुः— 'लक्षणयुक्तस्य बाधासम्भवे तल्लक्षणमेव बाधितं भवती'ति । न चार्थवत्तां प्रत्यक्षादीनामेष धर्मो दृश्यते । नहि तिमिरादिदोषरहितं चक्षुः सम्यगसम्यक् च ज्ञानं जनयतीति दृष्टपूर्वम् । अपिच स्वाभाविकेऽर्थसम्बन्धे कथमसत्यर्थे ज्ञानं जनयति । तथाहि बाधितोऽपि संसर्गः शतकृत्वः शब्दादवगम्यते अङ्गुल्यग्रे हस्तियूथशतमिति । न चेदमन्यत्र दृष्टम् । नहि चक्षुषा शुक्तौ रजतमिति वेदितायां नेदं रजतमिति बाधकोदये चक्षुरेव पुना रजतमिति बोधयति । शब्द एव तु निरङ्कुशः स्वगोचरमन्यगोचरं वा प्रमाणान्तरेण बाधितमपि बोधयतीति । नूनमसमीक्षितपारमार्थिकार्थसद्भावो बोधयन्नप्यर्थमनर्थक इति प्रतिजानीमहे । तदिदमुक्तम्— अर्थासंस्पर्शि यत् प्रमाणं तस्य बाधकोत्पत्तौ सत्यां न पुनः प्रतिपक्षविज्ञानं तन्निमित्तमेवोपलभ्यते । शब्दे पुनः स्पष्टेऽपि बाधकज्ञाने पुनः शब्दनिमित्तमेव प्रतिपक्षविज्ञानमुदेति अङ्गुल्यग्रे हस्तियूथशतमिति । कथं तर्हि शब्दादर्थावगतिः, सामयिकीति वदन्ति । यदाहुः—

> "अनागमश्च सोऽभ्यासः समयः कैश्चिदिष्यते ।
> अभ्यासात् प्रतिभाहेतुः सर्वशब्दः समासतः ॥"

इति । इमं चाक्षेपमपनेतुमिदं भाष्यं 'विप्रतिषिद्धमिदमभिधीयते ब्रवीति च वितथं च' इत्यादि । तस्य चायमर्थः—अर्थमवबोधयति अर्थासंस्पर्शि चेति चित्रम् । नहि प्रत्याय्यप्रत्यायकभावादन्यः शब्दार्थयोरस्ति सम्बन्धः । स चेदमर्थमवबोधयति, कथमर्थासंस्पर्शी स्यात् । स्यादेतत् । बाधकज्ञानसमधिगम्यमर्थासंस्पर्शित्वम् । उक्तं चेदं सत्यपि बाधकज्ञाने लौकिकेषु वाक्येषु शब्दादेव ज्ञानमुत्पद्यते अङ्गुल्यादिवाक्येभ्य इति । मैवम् । अनभिज्ञो भवान् बाध्यबाधकभावस्य । अङ्गुल्यग्रे हस्तियूथशतमिति प्रमाणान्तरदर्शनमत्र बाधितं, न पुनर्हस्तियूथशतमिति । प्रमाणान्तर-

---

१. 'ता', २. 'तीति बा' ख. पाठः. ३. 'ति जा', ४. 'र्थं', ५. 'भ्या' क. पाठः.

दृष्टं ह्यर्थं परस्मै प्रतिपादयितुं पुरुषाः प्रयुञ्जते वाक्यानि । ततश्च प्रमाणान्तरेणायमनेन दृष्ट इत्येतावच्च शब्दादवगम्यते । अतोऽत्र प्रमाणान्तरेण तस्यार्थस्य यद् दर्शनं तदेव बाधितं भवति । हस्तियूथे तु शब्दो न प्रमाणमिति तच्छब्दादप्रसक्तमेवेति न तद् बाध्यते । कथं तर्हि हस्तियूथसंसर्गावगमः । पदानां सन्निधानदोषात् पदार्थविवेकाग्रहणनिबन्धनोऽयं भ्रमः । न पुनराभिधानिकः संसर्गः । योग्यता हि निबन्धनमन्विताभिधानेऽभिहितान्वये वा । नचाङ्गुल्यग्रस्य करिधारणयोग्यता सम्भवति । तस्मान्नार्थासंस्पर्शी शब्द इति सूक्तमर्थविशेषप्रतिज्ञानं चोदनालक्षणोऽर्थो धर्म इति ।

इमौ त्वाक्षेपपरिहारौ न मृष्यामहे । तत्र यत् तावदुक्तं कार्यरूपो वेदार्थ इति चोदनासूत्रेण प्रतिज्ञातमिति, तदयुक्तं, भाष्यविरोधात् । भाष्यकारो हि 'को धर्मः कथंलक्षण इत्येकेनैव सूत्रेण[1] व्याख्यातमि'त्युक्त्वा सूत्रमवतारयति । तत्प्रमाणस्वरूपयोरेकं श्रौतमन्यदार्थमित्येव वक्तुं युक्तम् । उक्तं च तद् वार्त्तिककृता 'कार्यार्थताप्रतिज्ञानं पुनरशाबरमजैमिनीयं चे'ति । नहि चोदनासूत्रे तादृशः पदार्थानामन्वयो दृश्यते । न च पदार्थान्वयनिरपेक्षो वाक्यार्थो युक्तः । कथं च प्रमाण[2]लक्षणे कार्यार्थताप्रतिज्ञानं सङ्गच्छते । ननु च प्रामाण्यमेव कार्यार्थतां विना न सम्भवतीति प्रमाणलक्षणानुगुणैव कार्यार्थताप्रतिज्ञा । नह्यकार्यार्थं वचः प्रामाण्यमर्हति । अनपेक्षालक्षणं हि तत् । न च सिद्धार्थं वचनमनपेक्षं भवति । तस्य हि साधकबाधकयोरन्यतरोपनिपातः सम्भवति । तत्र साधकसम्भवेऽनुवादत्वम्, इतरत्र बाधितविषयत्वादप्रमाणत्वम् । अतएव चापौरुषेयत्वमपि वेदवाक्यानाम् । प्रमाणान्तरप्रतिपन्नविषयता हि पौरुषेयता, न पुनः पदवर्णादिकार्यता । न चातीन्द्रियमर्थं पुरुषाः शक्नुवन्त्यवगन्तुम् । अतः कथमतीन्द्रियार्थान् शब्दान् निबध्नीयुरिति प्रयोजनवदर्थविशेषप्रतिज्ञानमिति ।

अत्र वदामः — यत् तावत् सिद्धार्थत्वादनुवादत्वमिति, तदयुक्तम् । यदि प्रमाणान्तरसिद्धोऽयमर्थ इति सिद्धमर्थं बोधयति, भवतु तत् सापेक्षत्वादप्रमाणम् । भूतार्थमपि तु यद् ज्ञानान्तरागोचर[3]तया स्वगोचर-

१. 'हि तन्निब' क. पाठः. २. 'णं वक्ष्यत इत्यु', ३. 'णज्ञानल' ख. पाठः.

मवगमयति, न तत् सापेक्षम् । अथ मतं परिनिष्पन्नविषयाणि खलु प्रत्यक्षादीनि, तानि तादृशविषयविशेषे सम्भवन्तीति प्रमाणमनुवादीकुर्वन्ति इति । तन्न । नहि प्रमाणान्तरसम्भावनया प्रमाणमनुवादो भवति, अतिप्रसङ्गात् । दूरस्थो हि वह्निरनुमानादवगतः शक्य आसीदता प्रत्यक्षयितुमिति न तस्यानुवादत्वमापद्यते । यत्तु बाधितविषयत्वादप्रमाणत्वमिति, तदस्तु यदा तु नैतदेवमिति विपर्ययः । अबाधितार्थं तु सिद्धार्थगोचरमपि किमप्रमाणं भविष्यति । तदपि बाधकसम्भावनयाप्रमाणमिति चेद्, अस्तु तावत् पौरुषेयेषु । अपौरुषेयं तु सिद्धार्थमपि कथं बाध्यतया सम्भाव्येत । नह्यदुष्टकारणजं ज्ञानं बाध्यते । शब्दे च न स्वाभाविका दोषाः । पुरुषो ह्ययथार्थज्ञानानुरोधेन शब्दं दूषयति । ननु सिद्धार्थमपौरुषेयमित्येवं दुर्भणमित्युक्तम् । किमिदानीमतीन्द्रियार्थत्वमपौरुषेयत्वम् । हन्तैवं सुरभि गगनकुसुममित्यपि वाक्यमपौरुषेयमापद्येत । तस्यापि न केनचिदिन्द्रियेणार्थोऽवगम्यते । स्यादेतत् । असदर्थमेवेदं वाक्यं, सदर्थं चातीन्द्रियार्थमपौरुषेयमिति । वैदिकं वाक्यं कार्यार्थं कथं सदर्थं, तस्यापि न प्रमाणान्तरेणार्थोऽनुभूयते । मानुभावि । न तु प्रतिक्षिप्यते, शब्दादवगम्यते च । गगनकुसुमवाक्यं तु प्रमाणान्तरप्रतिक्षिप्तार्थमेव, नास्तीति हि तदर्थमवगमयति । केन पुनः प्रमाणान्तरेणास्यार्थः प्रतिक्षिप्यते । न तावद् भावप्रमाणैः, भावविषयत्वेनाभावानवभासनात् । अभावस्तु प्रमाणमनभिमतमेव भवताम् । नन्वस्ति तावद् नास्तीति ज्ञानं तत् प्रतिक्षेप्स्यति । तद् भोः किं प्रमाणमप्रमाणं वा । नाप्रमाणं प्रतिक्षेपायालम् । प्रमाणत्वे च षष्ठप्रमाणापत्तिः । ननु च गगनकुसुममस्ति नास्तीति च व्याहन्यते । अतो व्याघाताद् गगनकुसुमवाक्यमसदर्थम् । किमत्र व्याहन्यते । सदसत्त्वं हि वस्तुनः सिद्धस्य परस्परविरुद्धमवगम्यमानं व्याघातसंविदमुपजनयति । नचेह परस्परविरुद्धसदसत्त्वावगमः, निस्स्वभावत्वादभावस्य भवत्सिद्धान्ते । नन्वस्ति तावन्नास्तीति शब्दप्रयोगः । मा भूज्ज्ञानम् अतः स नभस्सुमनस्सत्तां प्रणोत्स्यति । न, अर्थनिबन्धनत्वाच्छब्दाना विरोधस्य । नच नास्तीति कश्चिदस्यार्थो दृश्यते । न चानर्थकः शब्दोऽर्थान्तरं विरुणद्धि । ननु नायमनर्थकः, विविक्तं हि कुसुमेन गगनमेव तस्यार्थः । विविक्तमि-

१. 'यत्र नै' ख. पाठः.

त्यवाच्यमनधिकार्थत्वात् । गगनं तु गगनपदप्रवेदितमिति पुनरुक्तं नास्तीति पर्यायतापत्तिश्च । दृश्यते प्रतियोगिनि कुसुमे केवलगगनोपलम्भो नास्तीत्युच्यत इति चेत्, स तर्हि नास्तीति कुसुमवद् गगनमपि न स्यादेव । नास्तीति पदास्पदमेवासादिति लौकिका मन्यन्ते । तस्मान्नास्तीति ज्ञानं प्रमाणमप्रमाणं वा शब्दो वा नास्तीति गगनकुसुमं न प्रतिक्षिपतीति तदपि स्वशब्दादवगतं सदेव स्यात् । यदि तु तथाविधमेव नास्तीति वक्तुमिच्छा, न शब्दप्रयोगं वारयामः । वस्तुसत्ता तु न निवारयितुं शक्यत इत्युक्तम्[1] । अतः सदतीन्द्रियार्थं गगनकुसुमवाक्यमपौरुषेयमापन्नमायुष्मताम् । यथा[2] चेदमसदर्थं, तथा वैदिकमप्यतीन्द्रियकार्यार्थमसदर्थम् । नहि प्रमाणागोचरं वस्त्वस्तीति शक्यते वक्तुम् । न च कार्यं प्रत्यक्षादिगोचरम् । न च शब्दगम्यम्, अपदार्थस्यावाक्यार्थत्वात् । अगृहीतसम्बन्धस्य चापदार्थत्वात् । प्रमाणान्तरागोचरे[3] च सम्बन्धस्य ग्रहीतुमशक्यत्वात् । प्रपञ्चयिष्यते चैतदौत्पत्तिकसूत्रे[4] इत्यलमनेनातिपरिस्पन्देन ।

अतः सिद्धमिदं न कार्यार्थत्वादपौरुषेयत्वमिति । कथं तर्हि, पूर्वापरकोटिविरहात् । यस्य खलु न पूर्वापरकोटी प्रसंख्यायेते, तन्नित्यं यथा गगनम् । एवञ्च वेदाः इति[5] नित्याः । का पुनरियं नित्यता वेदानाम् । यदि नित्यवर्णपदारम्भः, समानोऽयं लौकिकवाक्येषु । अथानुपूर्व्यनित्यत्वात् तान्यनित्यानि, तुल्यं तदनित्यत्वं वेदवाक्यानाम् । अतो न पुरुषप्रमाणगोचरागोचरार्थत्वादन्यत् पौरुषेयापौरुषेयत्वं पुंवेदवचसाम् । वाच्यो वा विशेषः । स उच्यते । क्रमवन्ति हि पदानि वाक्यमुच्यते । तद् यत्र स्वतन्त्र एव पुरुषः क्रममारचयति तत् पौरुषेयम् । यत्र तु क्रमरचनायामस्वतन्त्रः पुरुषः यथैव पूर्वपूर्वाध्येतृभिरुक्तः क्रमस्तथैव विवक्षति, तदपौरुषेयम् । अनित्यत्वेऽपि[6] च क्रमव्यक्तीनामवान्तरजातितस्तत्त्वान्यत्वव्यवस्था शब्दाधिकरणे वक्ष्यते । पदनित्यत्वे चैष एव प्रकारस्तत्रैव दर्शयिष्यते । पूर्वापरकोटिविरह एव वेदेऽपि कथमिति यो मन्यते

१. 'रि', २. 'यथा त्विदमनुपपन्न तथा' ख. पाठः ३. 'णान्तरागो' क. पाठः. ४. 'वार्त्तिके इ', ५. 'इतीति' ख. पाठः. ६. 'न्यत्वे च' क. पाठः.

स वक्तव्यः । न तावत् पूर्वापरकोटी वेदानां प्रत्यक्षेणोपलभ्येते । न चानुमीयेते, विपरीतानुमानात् । एवं ह्यत्रानुमीयते अनागतः कालो न वेदशून्यः, कालत्वादिदानीन्तनकालवदिति । एवमतीतेऽपि काले प्रयोगो दर्शयितव्यः । नच प्रागभावो वेदानां कैश्चिदुपलब्धः । जगदादौ वेदा महेश्वरेण प्रणीता इति चेद्, न । जगदादेरभावात् । नचार्वाचीन एव काले केनचिद् वेदाः सन्दृब्धा इति कर्तृस्मरणमस्ति । नचास्मर्यमाणोऽपि जीर्णकूपादिवदासीत् कर्तेति युक्तं वक्तुम् । तत्र हि प्रयोजनाभावादुपपद्येतापि कर्तुरस्मरणम् । अदृष्टार्थनिर्मितेषु वेदेषु प्रत्ययिततरनिर्मातृस्मरणमन्तरेण के श्रद्दधीरन् । वक्ष्यति च —

"वैदिको व्यवहारस्तु न कर्तृस्मरणादृते ।"

इति । तदेवं पूर्वापरकोटिविरहादेवापौरुषेयत्वं, न कार्यार्थतयेति व्यर्थं तत्प्रतिज्ञानम् । अव्यापकं च, मन्त्रार्थवादोपनिषदामतादर्थ्यात् । ननु च तेषामपि कार्यार्थता द्वितीये पादे वक्ष्यते—'विधिना त्वेकवाक्यत्वात्—(१. २. ७) इति । इहापि च भाष्यकारेणोक्तं 'चोदना हि भूतं भवन्तमित्यादिशक्नोत्यवगमयितुम'न्तेन । एतदुक्तं भवति — कार्यमेव प्रतिपादयन्ती चोदना भूतादिकमप्यवगमयति, न तु प्रतिपादयति । तदुक्तं 'शक्नोत्यवगमयितुम्' इति । अत्रोच्यते-- न तावदर्थवादानां कार्यार्थता अर्थवादाधिकरणे उक्ता । अपि तु भूतार्थानामेव स्तुत्या विध्यन्वयो दर्शितः । चोदना हि भूतमित्यादिभाष्याभिप्रायस्त्वनन्तरमेव वार्त्तिककारेण व्याख्यातः । यस्त्वयमस्यार्थो वर्ण्यते चोदना हि भूतादिकं गमयति, न तु प्रतिपादयतीति । तन्न । यदि भूतादिकं गमयति, कथं न प्रतिपादयति । नहि गमकत्वादन्यत् प्रतिपादकत्वम् । अथ कार्यपरत्वमनेन प्रकारेण वर्ण्यते, सर्वं हि पदजातं कार्यपरं न भूतादिस्वरूपे[२] प्रमाणमिति कथमनाद्यनन्तं विज्ञानमानन्दं ब्रह्मोपनिषद्भ्यः सेत्स्यति । कस्मिंश्च कार्यार्थे प्रामाण्यमुपनिषदाम् । ननु तासामपि प्रतिपत्तिकर्तव्यतापरत्वमेव[३] । अस्ति च ज्ञानविधानमात्मा ज्ञातव्य इति । तदयमर्थो भवति — विज्ञानमानन्दमात्मानं जानीयादिति । नन्वेवमस्वरूपपराच्छब्दात् कथमात्मरूपसिद्धिः । नह्यन्यपरः शब्दोऽर्थान्तरे प्रमाणं, प्रत्युत विपरी-

१. 'र्थस्त्व', २. 'ति न कस्मिं', ३. 'वावगम्यते । अ' ख. पाठः.

तमपि सम्भाव्येत । अतद्रूप एव हि तद्रूपज्ञानकर्तव्यतावचनं लोके दृश्यते । तथा अपितर्येव पितरं जानीयादिति । वेदे चानुद्गीथ एवोङ्कारे उद्गीथोपासनाविधानम् 'ओमित्येतदक्षरमुद्गीथमुपासीते'ति । स्यादेतत् । प्रमाणान्तरादेवात्मस्वरूपसिद्धिरिति । केषां प्रमाणान्तरात् ! संसारिणो हि न तावत् कार्यकरणसङ्घातातिरिक्तं सच्चिदानन्दं ब्रह्मापरोक्षमीक्षन्ते । ते हि देहमेवात्मानं मन्यमानाः दुःखिनमनित्यं जडं च पुरुषं जानन्ति । ये पुनरपवर्तितनिखिलानाद्यविद्यानुबन्धोपदर्शितशरीरेन्द्रियादिप्रपञ्चाः समुत्खातसकलमि[1]तिमातृमेयमानविभागमपरिस्पन्दमानन्दं फलभूतं ब्रह्माधिरूढाः, ते किं केन पश्येयुः । अतो न कथञ्चिदात्मस्वरूपं सिध्येत् । तस्मादुपपत्तितो ग्रन्थतश्च न कार्यार्थता प्रतिज्ञातुं शक्यते ।

यच्च 'नन्वतथाभूतमित्यर्थासंस्पर्शितया शब्दानां प्रतिज्ञाक्षिप्यत' इति, तदयुक्तम् । तथाहि—कोऽयमर्थासंस्पर्शः । यदि तावत् संयोगाद्यन्यतमसम्बन्धाभावः, सोऽनुज्ञायत एव । नह्यसौ शब्दार्थयोः संयोगादिलक्षणः सम्बन्धोऽभ्युपेयते । अथार्थानवबोधकत्वं, कुतोऽर्थसंवित् । समयादिति चेद्, नन्वयं सम्बन्धपरिहार एव प्रतिमर्त्यादिपक्षासम्भवात् समयो निराकरिष्यते । किं तन्निराकरणार्थमत्र प्रयस्यते । यच्चार्थासंस्पर्शितानिराकरणार्थमुक्तं प्रमाणान्तरदर्शनमत्र बाध्यते । न पुनर्हस्तियूथमिति । तस्य कोऽर्थ इति न विद्मः । प्रमाणान्तरदृष्टार्थविषय एव लौकिकः शब्दः । स कथं प्रमाणान्तरबाधेन बाध्यते । स्यान्मतं— देशकालविशेषावच्छिन्नमर्थं प्रमाणान्तराणि बोधयन्तीदमिदानीमत्र चेति । अतो नद्यादिविशेषफलसंसर्गबाधे तानि बाधितानि भवन्ति । शब्दस्तु देशकालानवच्छिन्नमर्थमाचक्षाणो न संसर्गविशेषबाधे बाधितो भवतीति । तदयुक्तम् । य एव संसर्गो यदा वक्तुरिष्टस्तमेव तदानीं शब्दोऽभिधत्ते, न संसर्गमात्रम् । नहि नानाविधानेकनदीतीरफलसंसर्गविशेषवर्ति सामान्यमस्ति, यः शब्दार्थः स्यात् । न चाविवक्षित एव संसर्गः शब्देनाभिधीयत इति साम्प्रतम् । वक्तृवाचकयोरसंप्रतिपत्त्या व्यवहारासिद्धेः । नर्मदातीरे फलानि सन्तीति वा विशेषवचने कः परिहारः । तत्राप्यासन् भविष्यन्ति[2] वेति चेत् । न । सन्तीति वर्तमानापदेशात् । अपि चात्यन्तासम्भावी वन्ध्यासुतादि-

१. 'के प', २. 'वितव' ख. पाठः.

संसर्गः कदा कुत्र वा भविष्यति, यः शब्दार्थबाधपरिहाराय घटिष्यते । संसर्गावगमापलापस्तु संविद्विरुद्ध एव । यदि तूच्यते — सर्वमेव लौकिकवाक्यमर्थे न प्रमाणं वक्तृज्ञानेऽप्रामाण्यात् । एवं ह्याह — 'अपिच पौरुषेयाद् वचनादेवमयं पुरुषो वेदेति भवति प्रत्ययः । नैवमर्थ' इति । अतो न क्वचिच्छब्दार्थबाध इति । साधु परिहृतमेवंवादिना शब्दानामर्थासंस्पर्शित्वम्, अर्थे न प्रमाणं स्पृशति चार्थमिति । अपिच मा नाम भवत्वर्थे प्रमाणम् । वक्तृज्ञाने तावत् प्रमाणमेव । अतः स एव शब्दार्थ इति तद्बाधेऽपि शब्दार्थबाधो दुष्परिहर एव । स्यान्मतं — न वक्तृज्ञाने शब्दो वाचकतया प्रमाणं, लैङ्गिकत्वात् संविदः, संवित्कारणको हि शब्दः कार्यभूतोऽवगतः कारणभूतां संविदमनुमापयति, कार्याच्च कारणबुद्धिरनुमानमित्यविवादम् । आह च — "न प्रसिद्धकारणत्वात् संविद" इति । इदं तदर्थासंस्पर्शितापरिहाररहस्यम् । किमत्र वाच्यमपरं, शब्दो नार्थे न ज्ञाने वा प्रमाणं तस्मान्नार्थासंस्पर्शीति । अथोच्येत — न मः शब्दो नार्थे प्रमाणमिति । स्वाभाविको हि वृद्धव्यवहारे शब्दार्थयोरवधृतः सम्बन्धः । लोके तु क्वचिद् व्यभिचारदर्शनाद् वक्तृप्रमाणपरतन्त्रत्वाद् वाक्यानां वक्तृज्ञानपर्यवसानं, नार्थे निश्चयजनकत्वम् । वेदे तु वक्तुरभावान्नार्थे प्रामाण्यं विहन्यते । नहि तत्र प्रमाणान्तरपरतन्त्रः शब्दो वर्तत इति । तन्न । नहि क्वचिद् व्यभिचारदर्शनेन प्रमाणमनर्थाविषयं भवति । नहि शुक्तौ रजतज्ञानं बाधितमिति स्वगोचरमन्यगोचरं वा भवति । अर्थमेव तु दोषादन्यथा स्थितमन्यथा बोधयतीति वृत्तिकारग्रन्थे वक्ष्यामः ।

तदिहापि सर्वं शाब्दमर्थविषयमेव । किञ्चिदेव तु दोषवशाद् विपर्येतीति युक्तं वक्तुम् । अपिच यदि पुंगिरामर्थे न प्रामाण्यं, कुतस्तर्हि विशिष्टा वक्तृधीरनुमास्यते । नह्यनासादितार्थविशेषपरिष्वङ्गाः स्वरसेन संविदोऽप्यनुमीयन्ते । तदवश्यमासां विशेषमनुमित्सता अर्थविशेषपरिरम्भो वक्तव्यः । न चानारूढो बुद्धावर्थो वक्तृबुद्धिं विशिनष्टि । यदप्येके मन्यन्ते — पुंवाक्येषु तावत् क्वचिद् व्यभिचारदर्शनादर्थे निश्चयो न जायते । न चानिश्चितोऽर्थो ज्ञातो भवति । नहि ज्ञानमनिश्चयात्मकं किञ्चिदस्ति ।

१ 'था वो' क. पाठः. २. 'दो व्यतिभियन्ते' क. ख. पाठः.

तस्मादज्ञातेऽपि वाक्यार्थे श्रोतुरयं विमर्शो भवति । अयमाप्तोऽन्योन्यान्वययोग्यार्थमेव पदजातं ब्रवीति, तेन नूनममुनामीषामन्वयो ज्ञात इति वक्तुरेवान्वयज्ञानमनुमिनोति । श्रोतुस्तु विमर्शमात्रमिति । तद्युक्तम् । कथं हि श्रोता बुद्धावनारूढमेवान्वयविशेषं वक्तृज्ञानविशेषणतया कल्पयति । ताल्वादिव्यापारादेवाप्तस्य प्रतीत्यान्वयमयं वाक्यं रचयतीत्यन्वयधियमनुमिनोतीति चेत् । न । अन्वयज्ञानमात्रानुमानात् । विशिष्टान्वयज्ञानानुमानं तु वक्तरि नात्मीयविशेषज्ञानमन्तरेणोपपद्यते । यत्तु कथमनिश्चितोऽर्थो ज्ञात इति । अत्र ब्रूमः — त्रेधा खल्वपि वक्तारो निरूपिताप्तभावो निरूपितानाप्तभावोऽनिरूपितोभयरूपश्च । सर्वत्र च शब्दान्निर्णय एव । परं निरूपिताप्तभावे सम्यगेतदवगतमनेनेति वक्तरि निश्चय एव प्रतितिष्ठति । विपरीते विपर्येति । अनिरूपितान्यतररूपेऽपि शब्दान्निश्चय एव । क्वचिद् व्यभिचारात् तावदागन्तुकः सन्देहः । न क्वचिदपि शब्दः संशयहेतुः । ननु तथाप्याप्तप्रमाणानुसारी शब्दान्निश्चय इति पूर्वमुत्पन्नमपि ज्ञानं व्यभिचारदर्शनभुवा संशयेन प्रतिबद्धं न प्रमाणम्, उत्तरकालं चाप्तप्रमाणानुसारिणि निर्णयेऽनुवाद इति कदा प्रमाणं भविष्यति । स्वकाल इति ब्रूमः । स्वकाले च तेनोत्पत्तिमता संशयात्मना चासावर्थः परिच्छिन्नः । एतावच्च प्रमाणानां प्रामाण्यम् । अतः कथमप्रमाणं भविष्यति । यदि परं शङ्कितव्यभिचारनिवृत्त्यर्थमाप्तत्वेन दोषाभावमात्रमाश्रीयते, सर्वप्रमाणसाधारणं चेदं शङ्कितदोषनिवृत्त्या औत्सर्गिकं प्रामाण्यमिति । न च प्रमाणान्तराप्रतीतमपूर्वमर्थं प्रतियतः[3] श्रोतुरनुवादः शब्द इति युक्तम् । न ह्यारान्चैत्रोऽयमिति निश्चिते पुनश्च कुतश्चिन्मैत्रसादृश्यात् सन्दिग्धे स एवायमिति निश्चिते पूर्वं चैत्रज्ञानमप्रमाणं भवति । अतो वक्तृप्रमाणनिश्चयेन प्रमाणमेवैतदभूदिति श्रोता निश्चिनोति । तस्माद् द्वयमप्येतत् प्रमाणं यच्च शब्दाद् ज्ञानं, यश्च वक्तृप्रमाणानुसारी निश्चयः । प्रथममपूर्वार्थपरिच्छेदार्त्[4] । परं तु शङ्कानिराकरणात् । उक्तं च वार्तिककृता —

"प्रामाण्यस्थापनं तु स्याद् वक्तृधीहेतुसम्भवात् ।"

इति । यदपि नानिश्चयात्मकं ज्ञानमस्तीत्युक्तम् । तदप्यस्मान् पराजित्य

१. 'न्नं विज्ञा' क. पाठः. २. 'रभुवा', ३. 'ती' क. ख. पाठः. ४. 'दुत्तरं' ख. पाठः.

**नित्यत्वादेरसिद्धत्वादभ्युपेत्योच्यतेऽथवा ।**
**सुतरामप्रमाणत्वं वक्तृप्रामाण्यवर्जनात् ॥ २१ ॥**

---

वक्तुमुचितम् । प्रमाणं भ्रमः संशयः स्मरणं संवाद इति पञ्चधा ज्ञानं विभजामहे । तस्मात् सर्वमेव शाब्दमर्थगोचरं प्रमाणमप्रमाणं च । दोषसदसद्भावनिबन्धनश्च प्रमाणेतरविभागः प्रत्यक्षादिवदेव । यदाह—'यस्य च दुष्टं करणं यत्र च मिथ्येति भवति प्रत्ययः, स एवासमीचीनः प्रत्ययः नान्यः' इति । न हीदमक्षजज्ञानमात्राभिप्रायं, स एवासमीचीनः प्रत्यय इति प्रत्ययमात्रपरिग्रहात् । पौरुषेयश्च शब्दः स्वयमदुष्टोऽपि वक्तृदोषादेव दुष्यति । ननु च ज्ञानकारणमेव दुष्टं ज्ञानं दूषयति । शब्दे च शब्दो ज्ञानकारणं न वक्ता । स हि शब्दव्यक्तावेवोपयुक्तः । दुष्टेनापि वक्त्राभिव्यक्तः शब्दो विगलितनिखिलकल[1]ाध्मातादिदोप एव कथमसमीचीनप्रत्ययोत्पादकारणं भविष्यति । न हि तिमिरादय इव चक्षुरादीनां दुष्टेनापि वक्त्रोच्चरितानां शब्दानां दोषा उपलभ्यन्ते । न । दोषवैचित्र्यात् । न ह्येकरूपा एव सर्वे दोषाः । कार्यदर्शनात् तु किञ्चिदेव क्वचिद् दोषपक्षे निक्षिप्यते । तदिह मणेरिवारुण्यबोधे जपाकुसुमसन्निधानमनाकाङ्क्षितायोग्यपदसन्निकर्ष एव शाब्दे दोषः । तथाभूतोच्चारणेन दुष्टः पुमाञ् शब्दं दूषयति । ततः सिद्धो दोषसदसद्भावनिबन्धनः शाब्दे प्रमाणेतरविभागः । नन्वङ्गीकृते शब्दादर्थबोधे यत् तदर्थासंस्पर्शितासिद्धयर्थमुक्तं बाधितेऽप्यर्थे शब्दनिबन्धनमेव ज्ञानमुत्पद्यते इति । तत्र कः परिहारः शब्दादर्थबाधपरिहारेण । तदस्माभिः परिजिहीर्षितम् । किमत्र दुष्परिहरम् । नहि बाधितविषया अपि द्विचन्द्रादिङ्मोहालातचक्रपीतशङ्खप्रतिबिम्बादिविभ्रमा न पुनराविर्भवन्ति । यावद्दोषभाविनो हि ते पुनरपि चक्षुषै[2]वोपजन्यन्ते । तदिहापि यावदयोग्यान्वयपदसन्निधानमयथार्थज्ञानोदय इति किमनुपपन्नम् । तस्मान्नितावाक्षेपपरिहाराविति ॥

अन्यथा वर्णयिष्यन्नाक्षेपभाष्याभिप्रायं तावदाह—**नित्यत्वादेरिति** । अयमभिप्रायः—बौद्धलोकायतिकयोरिदं प्रत्यवस्थानम् । न हि ते नित्यान् वर्णान् पदानि वेदवाक्यानि वा मन्यन्ते । न चोन्मत्तप्रल-

---

१. 'सकल' ख. पाठः. २. 'मित्तसेव' ख. ग. पाठः.

**प्रमाणान्तरदृष्टं हि शब्दोऽर्थं प्रापयेत् सदा ।**
**स्मृतिवच्च स्वयं तस्य प्रामाण्यं नोपपद्यते ॥ २२ ॥**
**नूनं तत्रानुभूतोऽसावित्याप्तोक्तिनिबन्धना ।**
**बुद्धिः साक्षाददृष्टेऽपि युक्तार्थे पुरुषोक्तितः ॥ २३ ॥**

---

पितप्रायाणि प्रजापतिवपोत्खननादीनि वाक्यानि विध्येकवाक्यतया प्राशस्त्यप्रतिपादनेन प्रमाणमाहुः । अतो युक्तं यादृशतादृशरथ्यापुरुषवाक्योपमानं चोदनानाम् । तत्साधर्म्याद् वैतथ्यानुमानमिति । अथवा नित्यत्वमभ्युपेत्य प्रसङ्गमापादयन्तीत्याह — अभ्युपेत्येति । एवं हि मन्यते — यदि नित्या वेदाः, सुतरामप्रमाणं भविष्यन्ति । पौरुषेयवाक्यं हि कदाचिद् गुणवद्वक्तृप्रणीतं प्रमाणं भवति । नित्यं तु कुतः प्रमाणं भविष्यतीति ॥ २१ ॥

ननु पौरुषेयमपि न वक्तृगुणापेक्षया प्रमाणम् । अपितु स्वभावादेव । कथं ह्युत्पन्नमविपर्यस्तमसन्दिग्धं च ज्ञानमप्रमाणं भविष्यति । अतः किमपौरुषेयतया सुतरामप्रामाण्यमापद्यते, अत आह — **प्रमाणान्तरेति** । प्रमाणान्तरदृष्टार्थगोचरं हि पुंवचः कथं स्वमहिम्ना प्रमाणं भविष्यति । न हि प्रमाणान्तरपरतन्त्रा स्मृतिः स्वतः प्रमाणं भवति । भवति चात्र प्रयोगः । न स्वतःप्रमाणं पुंवचः, प्रमाणान्तरप्राप्तार्थप्रापणात् । स्मृतिवदिति ॥ २२ ॥

ननु च निरपेक्ष एवाप्तपुरुषवाक्यमात्राद् व्यवहारः प्रतायमानो दृश्यते । स कथमस्वतःप्रमाणादुत्पत्स्यते, अत आह — **नूनमिति**. एवं हि मन्यते — वक्तृगोचरार्थं हि पुंवचः । अतः स्वयमदृष्टेऽप्यर्थे नूनमयमर्थो वक्त्रनुभूत इति वक्त्रनुभवपुरस्सरमेवाप्तोक्तिनिबन्धना प्रामाणिकस्य मतिर्युक्ता । न पुनराप्तत्वमदृष्टेन रूपेण प्रामाण्यकारणम् । यस्त्वनपेक्षितप्रमाणान्तर एव पौरुषेयाद् व्यवहरति, स प्रतिहन्येतापीति ॥ २३ ॥

---

१. 'ग्धं न स्व' ख. पाठः.

**नात्मीयादन्यदीयाद्वा प्रत्यक्षादेर्विना क्वचित् ।**
**वचसः सत्यता दृष्टा तथा स्याच्चोदनास्वपि ॥ २४ ॥**

**तेन सत्यपि विज्ञाने प्रतिभादेर्यथैव हि ।**
**स्वातन्त्र्यान्न प्रमाणत्वं तथा वेदेऽपि दृश्यताम् ॥ २५ ॥**

**स्वर्गयागादिसम्बन्धविषया चोदना मृषा ।**
**प्रत्यक्षाद्यगतार्थत्वादीदृग्बुद्धादिवाक्यवत् ॥ २६ ॥**

---

कस्मादेवं बुद्धिर्युक्ता, अत आह — **नात्मीयादिति**दृष्टान्तेन । तदेवं लोकवाक्येषु प्रमाणान्तरपरतन्त्रं प्रमाण्यमुपपादितं चोदनास्वापादयति — तथेति ॥ २४ ॥

कथं पुनरुत्पन्नमसन्दिग्धमविपर्यस्तं प्रमाणान्तरेण ज्ञानमप्रमाणं भविष्यति, अत आह — तेनेति । यदा हि प्रमाणान्तरपरतन्त्रं सर्वशब्दानां प्रामाण्यमित्युपपादितं, वेदे चाभ्युपेतनित्यत्वे वक्तृप्रमाणान्तराभावः । तदा कथं प्रमाणं भविष्यति । नहि स्वतन्त्रमनियतनिमित्तं ज्ञानं प्रमाणं भविष्यति । नहि प्रतिभा ज्ञानमुत्पन्नमित्येतावता प्रमाणमिष्टम् । अतो वेदादुत्पन्नं ज्ञानमप्रमाणं, स्वातन्त्र्यात् प्रतिभादिवदिति ॥ २५ ॥

दर्शयितव्यं प्रयोगान्तरमाह — **स्वर्गेति** । प्रत्यक्षाद्यगतार्थत्वादिति हेतुसिद्ध्यर्थमुक्तं स्वर्गयागादिसम्बन्धविषया इति । यो हि मन्यते — भावना हि वाक्यार्थः । स च स्पन्दो वा प्रयत्नो वा । सर्वथा प्रत्यक्षादिभिरवगम्यत इत्यसिद्धो हेतुरिति । तं प्रत्युच्यते । कस्यचित् केनचित् क्रिया भावना, सा स्वरूपेण प्रत्यक्षापि साध्यसाधनसम्बन्धात्मना शब्दादेवावगम्यते । अत एव धर्मस्यातीन्द्रियत्वमपि सेत्स्यति । साध्यसाधनसम्बन्ध एव शब्दस्य विषयः । नह्यनासादितयागस्वर्गादिसाध्यसाधनसम्बन्धविशेषो भावयेदिति शब्दार्थः । अतः सिद्धं प्रत्यक्षाद्यगतार्थत्वादिति । अत्र च लोकायतिकप्रयोगे बुद्धवाक्यं दृष्टान्तः, तत्प्रयोगे लोकायतिकवाक्यमिति द्रष्टव्यमिति ॥ २६ ॥

यद्वाप्तेनाप्रणीतत्वाद् बालोन्मत्तादिवाक्यवत् ।
व्योमादिवच्च नित्यत्वात् प्रामाण्यस्य निराकृतिः ॥
यदि वा पुरुषाधीनप्रामाण्याः सर्वचोदनाः ।
स्वतो वा न प्रमाणं स्युर्वाक्यत्वात् पुरुषोक्तिवत् ॥
प्रामाण्यं वा नरापेक्षं सर्वशब्देषु गम्यताम् ।
शब्दैः सम्बध्यमानत्वादप्रामाण्यं यथैव हि ॥ २९ ॥
न स्याद् वक्तृगुणानां चेद् वचः प्रामाण्यहेतुता ।
तद्दोषैरप्रमाणत्वं किमित्यस्य भविष्यति ॥ ३० ॥

---

एतस्मिन्नेव साध्ये दृष्टान्तहेत्वन्तरमाह — यद्वेति । सिद्धं च नित्यानां वेदानामाप्ताप्रणीतत्वमिति वेदानामेव चाप्रमाणत्वं नित्यत्वाद् व्योमादिवदिति । ये च बौद्धा नित्यं व्योमेति सङ्गिरन्ते तेषामयं प्रयोग इति ॥ २७ ॥

इदानीं श्वराहकलहन्यायेन नैयायिकादिमतानुज्ञया तावन्नास्तिकमतस्थ एवं वादी मीमांसकं प्रति प्रयोगमाह — यदि वेति । यद्यवश्यं वेदाः प्रमाणमिति वक्तव्यं परं यथा वैशेषिकैरुक्तं 'तद्वचनादाम्नायस्य प्रामाण्यमि'ति तथोच्यताम् । यत् पुनरिदं मीमांसकैरुक्तं नित्या वेदाः प्रमाणं चेति । तदतिदूरमपभ्रष्टं चेति भावः । सर्वशब्देन च दृष्टार्थपुरुषोपदेशैर्मन्वाद्युपदेशैश्च सिद्धसाधनताशङ्कां निराकरोति । तदयमर्थो भवति — दृष्टादृष्टार्था अपि वैदिक्यश्चोदना धर्मिण्यः । पुरुषाधीनप्रामाण्या इति साध्यम् । वाक्यत्वात् पुरुषोक्तिवदिति । स्वतो वा न प्रमाणमिति प्रतिज्ञाय तावेव हेतुदृष्टान्तावित्याह — स्वतो वेति ॥ २८ ॥

प्रामाण्यं वा धर्मीति प्रतिज्ञाय नरापेक्षमिति साधयितव्यम् । शब्दैः सम्बध्यमानत्वादप्रामाण्यवदिति हेतुदृष्टान्तौ वाच्यावित्याह — प्रामाण्यं वेति । अत्रापि सर्वशब्दस्य तदेव प्रयोजनं, नरापेक्षप्रामाण्यवादिनां चाप्रामाण्यं तदपेक्षमिति सिद्धमेवेति ॥ २९ ॥

अपि च यदेव यत्कारणकं तस्यैव तद्विपर्ययाद् विपर्ययो दृष्टः,

---

१. 'दृष्टान्तान्तरमाह' ख. पाठः. २. 'ध मीं' क. पाठः. ३. 'तद्वदे' ख. पाठः.

**एवं स्थिते तु वेदस्य सति वासति वा नरे ।**
**प्रामाण्यं दुर्लभं मत्वा नन्वित्येतदचूचुदत् ॥ ३१ ॥**
**तत्र विप्रतिषिद्धत्वं बुद्धवाक्येऽपि युज्यते ।**
**ततोऽपि प्रत्ययोत्पत्तेस्तस्माज्जात्युत्तरं त्विदम् ॥३२॥**

---

यथा तेजःकारणकस्य धर्मस्य तद्विपर्यये जले शैत्यम् । एवं शब्दप्रामाण्यस्यापि वक्तृगुणविपर्ययाद् विपर्ययो दृश्यते । तस्मादिदमपि तत्कारणकम् । अथवा यन्न यत्कारणकं तन्न तद्विपर्ययाद् विपर्येति, आलोकविपर्ययादिव घटः । न च तथा वक्तृगुणविपर्यये प्रामाण्यं न विपर्येति । तस्माद् तत्कारणकमिति वीतावीतप्रयोगौ हृदि निधायाह — **न स्यादिति** । एषां च प्रयोगपरम्परा तार्किकाणां चित्तमनुरञ्जयितुं वार्त्तिककृता प्रणीतेति वेदितव्यम् । सर्वत्र चात्र प्रयोगार्थे 'नन्वतथाभूतमि'त्यादिभाष्यं सुव्याख्यानमिति न प्रतिप्रयोगं विवृतमिति ॥ ३० ॥

यदि तु निराकृतस्वपक्षो मीमांसकः सिध्यतु तावन्नरापेक्षमेव वेदप्रामाण्यमिति ब्रूयात्, स वक्तव्यः — नैवं सिध्यति । प्रसिद्धे हि वक्तृगुणभावः सिध्यत्यपि । न च वेदानां प्रणेतुर्गुणसद्भावे प्रमाणमस्ति, प्रत्यक्षाद्यभावात् । आगमस्य च तत्प्रणीतत्य तद्गुणसद्भावेऽप्रामाण्यान्नित्यप्रामाण्यस्य चानन्तरमेव निराकृतत्वात् । सर्वं चेदमभिप्रेत्य नन्विति चोदितमित्याह — **एवं स्थित इति** ॥ ३१ ॥

एवमाक्षेपभाष्याभिप्रायमुक्त्वा परिहारभाष्याभिप्रायं विवरिष्यन्नाक्षिपति तावत् — **तत्रेति** । एवं हि भाष्यकारेणोक्तं — 'विप्रतिषिद्धमिदमभिधीयते ब्रवीति च वितथं चेति' । तदयुक्तं, न हि प्रत्यय उत्पन्न इत्येव प्रमाणं भवति । यदि हि तथा स्याद्, बुद्धवाक्येऽपि मृषात्वेन मीमांसकः पक्षीकृते शक्यमिदं वक्तुं विप्रतिषिद्धमिदमभिधीयते ब्रवीति च वितथं चेति । तत्र मीमांसकाः प्रतिहन्येरन् । तस्माज्जात्युत्तरमिदम् । जातिर्नाम वादिना स्थापनाहेतौ प्रत्युक्ते यः प्रतिषेधायासमर्थो हेतुः । जात्यु-

---

१. 'मेवेदं प्रा', २. 'भाष' ख. पाठः. ३. 'तुः सा जातिः जा' ख. ग. पाठः

सर्वविज्ञानविषयमिदं तावत् प्रतीक्ष्यताम् ।
प्रमाणत्वाप्रमाणत्वे स्वतः किं परतोऽथवा ॥ ३३ ॥

त्तरं च केचित् क्वचिद् विषयविशेषे साध्वेव मन्यन्ते । एवं ह्याहुः—'दुष्टसाधनप्रयोगे दुष्टमेवोत्तरं देयमि'ति । तद्युक्तं, निग्रहस्थानद्वयापत्तेः । यो हि सन्तं दोषमनुक्त्वा अन्यमसन्तं जल्पति, तस्य पर्यनुयोज्योपेक्षणनिरनुयोज्यानुयोगाख्ये द्वे निग्रहस्थाने स्याताम् । तस्मादनुत्तरमेवेदमिति ॥ ३२ ॥

अत्रानन्तरमाक्षिप्तभाष्यसमाधानमुपेक्ष्यैव तावदौपोद्धातिकीं कथामवतारयति — **सर्वविज्ञान**मिति । एवं हि मन्यते—यदा हि सर्वसंविदामौत्सर्गिकं प्रामाण्यं, बाधकारणदोषाधीनं चाप्रामाण्यमिति सिद्धं भविष्यति । वेदे चापौरुषेये तदुभयाभावादसन्दिग्धार्थप्रवेदनाच्च प्रामाण्ये सिद्धे यदि परं ज्ञानानुत्पत्तितो वैतथ्यमाशङ्क्येत, तत्र विप्रतिषिद्धमिदं ब्रवीति ज्ञानं जनयति वितथं न जनयतीति समञ्जसमेवोत्तरं भविष्यतीति । ननु तथापि पराधीनं शब्दप्रामाण्यमिति पूर्वपक्षिते तन्मात्रस्यैव स्वतःप्रामाण्यप्रतिपादनेन सिद्धान्तयितुमुचितं, किं महाविषयविचारेण । उच्यते—प्रासङ्गिकं सर्ववचनम् । अपिच यावज्ज्ञानस्वभावानुबन्धि प्रामाण्यमिति सामान्यतो न साध्यते, तावत् तद्विशेषे क्वचित् साधितमपि प्रामाण्यं न प्रमाणं स्वतः शाब्दज्ञानं ज्ञानत्वाद् ज्ञानान्तरवदित्यभिभूयेतापि । यज्जातीयानुबद्धं हि यद्रूपं तज्जातीयान्तरमपि नातिक्रामति, औष्ण्यमिवाग्निजातीयम् । अतो यदि ज्ञानजात्यानुबद्धं परतःप्रामाण्यं, तत् कथं शाब्दमप्यतिक्रामेत् । आह च—

"सामान्यानुगता शक्तिर्या काचन निरूपिता ।
तदन्वितो विशेषोऽपि तद्द्वारव्यपदेशभाक् ॥"

इति । सर्वज्ञानानुबन्धि स्वतःप्रामाण्यमागन्तुनाप्रामाण्येनापोद्यत इति साधिते निरपवादं वेदानां प्रमाण्यं सेत्स्यतीति सूक्तमेव सर्ववचनम् । एषा चात्र मीमांसा — किं प्रमाणत्वाप्रमाणत्वे द्वे अपि स्वतःसिद्धे, अपि वा परतः, अप्रामाण्यं स्वतः प्रामाण्यं परतः, विपर्ययो वेति पूर्वपक्षप्रतिक्षेपेणान्त्यपक्षपरिग्रहेण सिद्धान्तो भविष्यतीति ॥ ३३ ॥

---

१. 'ष्यति', २. 'नु प' क. पाठः. ३. 'तः प्रामाण्यं वा परतोऽप्रा', ४. 'तः वि' ख. पाठः.

**स्वतोऽसतामसाध्यत्वात् केचिदाहुर्द्वयं स्वतः ।**

---

तदेवं वादिविप्रतिपत्त्या संशय्याद्यपक्षं गृह्णाति — **स्वतोऽसता-मिति** । सत्कार्यवादिनो हि सर्वमेव कार्यजातं सदुत्पद्यत इति मन्यमानाः प्रामाण्याप्रामाण्यात्मकमपि द्वयं स्वत एवास्थिषत । एवं हि मन्यन्ते— यत् स्वतोऽसत् तन्न साध्यं, यथा शशविषाणम् । न च घटादयो न साध्याः तस्मात् स्वतः सन्त इत्यावीतहेतुः । अपि चोपादाननियमदर्शनात् कस्यचित् खलु घटादेर्विकारस्य किञ्चिदेव मृदाद्युपादानकारणमिति नियमो दृश्यते । तच्चैतदसदुत्पत्तावन्याय्यम्, असत्त्वाविशेषेण हि सर्वं सर्वस्मादुत्पद्येत । तत्रोपादाननियमो न स्याद् मृदेव घटस्य, कटस्य वीरणमिति । तत्र सर्वार्थी सर्वत्र प्रवर्तेत, अविशेषात् । शक्तितो नियम इति चेद् , न । अविशेषात् । तत्रैतत् स्यात् — यस्य भावस्य यदुत्पत्तिशक्तिरस्ति तामन्वयव्यतिरेकाभ्यां निश्चित्य यो यदर्थी स तदुपादत्त इति । तच्च नैवम् , अविशेषात् । वयं हि ब्रूमः शक्त्यात्मना विकार उपादानेऽस्तीति । भवन्तोऽपि विकारोत्पत्तिशक्तिरुपादानेऽप्यस्तीति[1] । तदत्र वाचोयुक्तिमात्रं भिद्यते, नार्थविशेषः कश्चिदुपलभ्यत इति । अपिच, उपादाननियमदर्शनाद् उपादाननिमित्तासमवायिभ्यस्त्रिभ्यः खल्वपि कारणेभ्यो भवतां कार्यमुत्पद्यते । त्रिष्वपि च तन्नास्ति । असदेवोत्पन्नं तत् । कुतोऽयं कारणविधानियमः इदमुपादानमिदं नेति । यत्र कार्यं वर्तते तदुपादानमिति चेद् , वृत्तिनियमे[2] हेतुर्वक्तव्यः । तत् खलु सर्वस्मादसदेव जातमिति किंकृता वृत्तिनियमः । अस्ति स नामोपादानस्य कोऽप्यतिशयविशेषः यत् तत्रैव कार्यं वर्तेत इति चेत् । स तर्हि शक्तिभेदो वक्तव्यः । निमित्तमैसमवायि[3] च नोभयमनभ्युपगमात् । दण्डादयो हि घटस्य निमित्तकारणम् । असमवायिकारणं मृदवयवसंयोगविशेष इति वः सिद्धान्तः । स उपादानमिति चेद् , न । व्यतिरेकाव्यतिरेकविकल्पानुपपत्तेः । स्यादेतत् । उपादानकारणं शक्तिभेद इति । मैवम् । स ह्युपादानाद् व्यतिरिच्यते, न वा । व्यतिरेके उपादानस्य पूर्ववद् भावादनुपादानत्वम्, तस्यापि ततो भिन्नस्य तत्त्वं दुर्भणमेव । अव्यतिरेके तु वस्तुमात्रमनतिशय-

---

१. 'धाननि' क. पाठः. २. 'मे', ३. 'मेवास', ४. 'वा' ग. पाठः.

मुपादानमिति वस्तुत्वाविशेषात् सर्वोपादानत्वापातः । तस्माद् विकारोत्पत्तिशक्तिमुपादानेषु सङ्गिरमाणैर्विकारा एवोपादाने शक्त्यात्मना सन्तीति संगर्यिन्ते । वयमपि चाव्यक्तानेव विकारानुपादानेषु संगिरामहे, न स्थूलानिति नावयोर्विशेष इति । सत्त्वे कारकव्यापारानर्थक्यमिति चेद् न । अभिव्यक्तिफलत्वात् । तत्रैतत् स्यात् — सन्ति चेद् विकारा उपादानेषु तदर्थिनां कारकव्यापारोऽनर्थकः स्यात् । ते हि तदा सतामेवोत्पादनायं नेहेरन् । तस्मादसन्तो विकारा इति । तच्च नैवम्, अभिव्यक्तिफलत्वात् । सन्तोऽपि हि विकाराः पूर्वमनभिव्यक्ताः कारकव्यापारैरभिव्यज्यन्ते । अतोऽर्थवत्त्वं कारकव्यापाराणाम् । अभिव्यक्तावुत्पत्तिशब्दोऽनर्थक इति चेद्, न । अभिव्यक्तिभेदात् । तत्रैतत् स्यात्—यदि पूर्वं सन्त एव मृदादिषु घटादयो गृहोदरेष्विव दीपादिभिः कुलालादिव्यापारैरभिव्यज्यन्ते, कोऽयं विभागः दीपो घटमभिव्यनक्ति, कुलालस्तूत्पादयतीति । तच्च नैवम्, अभिव्यक्तिभेदात् । द्वेधा खल्वभिव्यक्तिः । एका अप्रतिबद्धाकारस्य वस्तुनो बोधनिमित्तस्य तन्निमित्तभावो येन प्रतिबध्यते तदुत्सारणं, यथा[1] घटस्यान्धकारतिरोहितस्य तदुत्सारणमभिव्यक्तिः । अन्या तु प्रतिबद्धाकारस्याकारप्रतिबन्धकोत्सारणं, यथा मृदि घटाकारः पूर्वाकारेण प्रतिबद्धः तस्य पूर्वस्याकारस्य प्रोत्सारणं घटाभिव्यक्तिः । अभिव्यक्तिविशेष एवायमुत्पत्तिशब्दः, ब्राह्मणविशेष इव कठादिशब्दोपचार इत्यनवद्यम् । स्यान्मतम् अभिव्यक्तिसत्त्वान्न प्रसङ्गपरिहार इति । न, असत्त्वात् । यो मन्वीत —सत्कार्यवादिनो हि भावान्तरवदभिव्यक्तिरपि सतीति कारकव्यापारानर्थक्यप्रसङ्गो दुष्परिहर इति । स वक्तव्यः । न, असत्त्वात्, स्यादयं दोषः यद्यभिव्यक्तिरपि सती घटादिवदिष्यते । सा त्वसती कारकव्यापारेण भाव्यत इति किमनुपपन्नम् । तदसत्त्वेऽतिप्रसङ्ग इति चेद्, न । प्रसङ्गसाम्यात् । तत्रैतत् स्यात्—यदि किलाभिव्यक्तिरसती कुलालेन क्रियते, किमपराद्धं घटेन यन्न क्रियत इति । तच्च नैवं, तुल्योऽयमावयोरतिप्रसङ्गः । तवाप्यन्धकारतिरोहितस्य घटस्याभिव्यक्तावभिव्यक्तिरसती घटस्तु सन्नेवेति सिद्धान्तः । तत्र शक्यं प्रसञ्जयितुम् अभिव्यक्तिवद् घटोऽपि जन्येत, तद्वद् वाभिव्यक्तिरपि सती स्यादिति प्रसङ्गसाधारण्येनान्यतरोऽपर्यनुयोज्यः । अतः सिद्धमेवोपादानेषु सन्त एव सर्वे भावाः कारकव्यापारै-

[1] 'येह' ख. ग. पाठः.

**अपरे कारणोत्पन्नगुणदोषावधारणात् ॥ ३४ ॥**
**स्वतस्तावद् द्वयं नास्ति विरोधात् परतो न च ।**

---

रभिव्यज्यन्त इति, प्रामाण्याप्रामाण्ये स्वतस्सती एवेति सत्कार्यवादिनां सिद्धान्त इति । मतान्तरमुपन्यस्यति— अपर इति । एवं हि मन्यते — सर्वं खल्वपि कारणाधीनात्मलाभं कार्यं तत्कारणगुणदोषाभ्यां शुद्धमशुद्धं च भवति । तद् यावदिन्द्रियादिज्ञानकारणवशादुत्पन्नौ गुणदोषौ न ज्ञानस्य स्वतोऽवधार्येते, न तावत् प्रामाण्याप्रामाण्ययोरन्यतरन्निश्चीयते, नचानिश्चितयोर्व्यवहाराङ्गत्वं, तदर्थं च प्रमाणानुसरणम् । अतः कारणोत्पन्नगुणदोषावधारणादेव द्वयमाहुरिति सम्बन्ध इति ॥ ३४ ॥

स्वतो द्वयमिति तावन्निराकरोति-- स्वत इति । कारणमाह — विरोधादिति । इदमत्राकूतं — यत्तावदुक्तम् असतः शशविषाणाद् व्यावृत्तं साध्यत्वं घटे दृश्यमानं सत्तां गमयतीति । तदयुक्तम् । अभावविरोधात् । असन्निकृष्टार्थविषयं ह्यनुमानं, तत् कुतो मृदि योग्यानुपलम्भनिराकृतसद्भावविषयं घटं विषयीकरिष्यति । उपादाननियमस्तु शक्तिभेदादुपपन्न एव । किञ्चिदेव हि मृत्तन्त्वादि कस्यचिदेव घटादेरुत्पादने शक्तं न सर्वं सर्वस्येति, यो यदर्थी स तदुपादत्त इति किं नोपपद्यते । यदि मतं न कार्यकारणान्तरालपतितां परां शक्तिमीक्षामह इति । न, शक्तिसिद्धिमर्थापत्तिग्रन्थे वक्ष्यामः । यत्तूक्तं विकारा एव शक्त्यात्मना सन्तस्तदुत्पत्तिशक्तिर्वोपादानेष्वस्तीति नावयोर्विशेष इति । तन्न । महानयं विशेषः यद् विकारसत्तामभावो बाधते, शक्तिं तु सूक्ष्मामर्थापत्तिः साधयतीति । तेऽपि हि शक्त्यात्मना सन्तो न योग्यानुपलब्ध्या निराकर्तुं शक्यन्त इति चेत् , केयं शक्त्यात्मता । यतस्तेऽसन्तोऽपि जनिष्यन्त इति चेत् । तदिष्टम् । अनभिव्यक्तिरिति चेद् , न । साक्षस्याप्यालोकेऽनुपलम्भात् । नन्वालोकेऽपि नावृतमुपलभ्यते । किमिदानीमावृतो मृदि घटः । सत्यम् । केन । न तावदुपादानं कार्यमावृणोति, नित्यावरणप्रसङ्गात् । मृदाकार आवृणोतीति चेत् । कोऽयं मृदाकारः । यदि तज्जातिः, सोपरिष्टादप्यनुवर्तत इति नित्यावृतिरेवं प्राप्नोति । प्राच्यो मृत्पिण्डसन्निवेश इति चेत् । स वा किमु-

---

१ 'व प्राच्यो' ग. पाठः.

**निःस्वभावत्वमेवं हि ज्ञानरूपे प्रसज्यते ॥ ३५ ॥**

परिष्टान्न भविष्यति, यन्न घटमावरिष्यति । हन्त सोऽप्यनुत्पत्त्यविनाशधर्मा सद्धादिभिरिष्यत इत्यनिवार्यैव नित्यावृतिः । सूक्ष्माश्च मृदवयवसन्निवेशविशेषा न महान्तं घटमाच्छादयितुमुत्सहन्ते इति यत्किञ्चिदेतत् । यत्तु त्रिभ्योऽपि कारणेभ्यः सदुत्पत्तौ किंकृतो विधानियम इति । शक्तिभेदकृत एव । किञ्चिदेव तथा नाम शक्तं, यद् विकारभावमनुभवति । किञ्चित्तु बहिरेव सत् तदुत्पत्तौ व्याप्रियते । स चायं शक्तिभेदः कार्यदर्शनसमधिगम्य एवेति नाप्रमाणकः । भेदाभेदौ तु न क्वचिदात्यन्तिकाविति नाप्रसङ्गातिप्रसङ्गौ । यत्तु पृष्टमुपादाननिमित्तासमवायिनां का शक्तिरिति । तदतिदूरमपभ्रष्टम् । शक्तिर्हि शक्तिरेव, न कारणं, तद्वतो द्रव्यस्य कारणत्वात् । कारणवच्च कारणशक्तिरपि कार्यसिद्धिमनुधावतीति प्रमाणबलादुपपत्स्यते । कारकव्यापारानर्थक्यं च दुष्परिहरमेव । अभिव्यक्त्यर्थो व्यापार इति । अत्र तूक्तो दोषः । अपिचाभिव्यक्तिसत्त्वे तुल्यमानर्थक्यम् । असत्त्वे च सर्वत्र प्रसङ्गः शक्यमनुमातुम्[1] । सर्वं हि विमतिपदं[2] कार्यमसत्, कार्यत्वादभिव्यक्तिवत् । कार्यं चाभूत्वा भवनात् तद्वदेवाभूत्वा भवति, उपलब्धियोग्यत्वे सत्यनुपलम्भाद् अभिव्यक्तिवदेव । यत्तु अभिव्यक्तौ प्रसङ्ग इत्युक्तम् । तदयुक्तम् । प्रत्यभिज्ञानं हि बलवदसूतप्रादुर्भावं घटस्य वारयति । विपरीतं च तत् सत्कार्यवादिनामिति किमनेनातिनिर्बन्धेन भ्रान्तभाषितेन । प्रकृते च विरोधात् कथं ह्येकज्ञानजात्यनुबन्धिनी प्रमाणत्वाप्रमाणत्वे भविष्यतः, विरुद्धधर्मावेशस्य भेदनिबन्धनत्वात् । अतो यथा नैकस्याग्नेः शीतोष्णत्वम्, एवं न ज्ञानस्य प्रमाणत्वाप्रमाणत्वमिति । सोऽयं प्रकृताप्रकृतगोचरे तन्त्रेण विरोधो व्याख्यातव्यः । प्रामाण्याप्रामाण्यात्मकद्वयं न स्वतः, स्वभावविरोधात् । कार्यकारणात्मकत्वं च द्वयं न स्वतः सिद्धं, कार्यसत्ताया अभावविरोधादिति । परतो द्वयमिति निराकरणार्थमाह — परत इति । कारणमाह — निःस्वभावत्वमिति[3] । एवमुभयपराधीनवादी वक्तव्यः—किं खलु कारणोत्पन्नगुणदोषावधारणात् प्राग् ज्ञानं न जायत एव, जातमपि वा[4] रूपान्तरेणावतिष्ठत[5] इति । न तावज्ज्ञानं

१. 'तुमिति स', २. 'दास्पदं का', ३. 'णस्वभावत्व' ग. पाठः, ४. 'तोऽपि द्व' ख. पाठः, ५. 'वा स्वरू' क. ख. पाठः.

**कथं ह्यन्यानपेक्षस्य विपरीतात्मसम्भवः ।**
**किमात्मकं भवेत् तच्च स्वभावद्वयवर्जितम् ॥ ३६ ॥**
**विज्ञानव्यक्तिभेदेन भवेच्चेदविरुद्धता ।**

---

जायते, संविद्विरोधात् । जातं तु केनात्मनात्रस्थास्यते । नह्येतद्राशिद्वयातिरिक्तमस्ति राश्यन्तरं येनावतिष्ठेत । अन्यतरधर्मकमेव तदुत्पन्नं प्रागनवधृततथाभावमुपरिष्टादवधार्यत इति चेद्, न । गुणावधारणाधीननिश्चयाभ्युपगमात् । तदवधारणाद्धि प्राङ् निश्चय एव नासीत् । कथं प्रामाण्यमासीदिति शक्यते वक्तुम् । अथ पूर्वमपि निश्चिताकारमेव[1] ज्ञानं, किं गुणावधारणेन । दोषानाशङ्कमानस्तु तन्निराकरणार्थमेव[2] यतत इति युक्तम् । एतच्च वक्ष्यत एवेति सूक्तं निःस्वभावत्वमिति ॥ ३५ ॥

स्वतो न द्वयं विरोधादिति यदुक्तं, तत् प्रकृतगोचरे विवृणोति — **कथमिति** । उक्तमिदमस्माभिः नैकस्यां ज्ञानजातौ परस्परविपरीतयोः प्रामाण्याप्रामाण्यात्मनोः सम्भवः समावेशः सम्भवतीति । एकस्तु स्वभाव उपाध्यन्तरसन्निधानादाभिभूतो भवति, अप्स्विवाग्निसंयोगे शैत्यम् । तदपेक्षश्च तास्वौष्ण्यभ्रमः । स्वाभाविकोभयवादिनस्तु नान्यानपेक्षस्य ज्ञानस्योभयात्मकता सम्भवतीति । परतो न द्वयं निस्स्वभावत्वप्रसङ्गादित्येतद् विवृणोति — किमात्मकमिति । सर्वं हि जगद् राशिद्वये शक्यमन्तर्भावयितुं प्रमाणमप्रमाणं चेति । तदत्रोभयपराधीनत्ववादिनो ज्ञानमुन्मुक्तोभयरूपं केन रूपेण निरूप्यत इति ॥ ३६ ॥

स्वतो न द्वयं विरोधादित्यत्र किञ्चिदाशङ्कते — **विज्ञानेति** । एवं हि मन्यते — यदि ज्ञानजातेरेवायं स्वभावभेदोऽभ्युपेयते, एकस्मादेव वा ज्ञानव्यक्तौ, ततः स्यादपि विरोधः । यदा तु शीतोष्णस्वभावतोयतेजोद्रव्यवत् प्रमाणाप्रमाणज्ञानव्यक्तिभेदाभ्युपगमः, तदोभयोर्व्यधिकरणयोः कस्य केन विरोध इति । परिहरति — तथापीति । अयमभिप्रायः — तोयतेजसोर्हि[3] भिन्नजातीययोः स्वभावभेदो युक्तः । ज्ञानव्यक्तयस्त्वेकजातीयाः । तत्र न तावदासां जात्यनुबन्धी स्वभावभेदो न्याय्यः । व्यक्त्यनुबन्धी तु तत्कारणाद् भवतीति युक्तं[4] वक्तुम् । तदनपेक्षत्वे तु प्रामाण्याप्रामाण्ययोः

---

१. 'रमेव नि' क. ख. पाठः. २. 'कमेव । तच्च', ३. 'तत्र ता' ग. पाठः. ४. 'क्तं त' क. ख. पाठः.

**तथाप्यन्यानपेक्षत्वे किं क्वेति न निरूप्यते ॥ ३७ ॥**
**तस्मात् स्वाभाविकं तेषामप्रमाणत्वमिष्यताम् ।**
**प्रामाण्यं च परापेक्षमत्र न्यायोऽभिधीयते ॥ ३८ ॥**
**अप्रामाण्यमवस्तुत्वान्न स्यात् कारणदोषतः ।**

---

किं कुत्र भविष्यतीति दुरधिगमम् । समानं हि द्वयोरपि ज्ञानत्वम् । स्वाभाविके चोभयस्मिन् न बाह्यचिह्नापेक्षास्तीति दुर्भणः[1] प्रमाणाप्रमाणविवेक इति साधूक्तं स्वतो न द्वयं विरोधादिति । किं पुनरुभयोः पराधीनत्वं स्वाभाविकत्वं वा चोदनाप्रामाण्यपरिपन्थि येन प्रयस्यता निरस्यते । नन्वेवमपि चोदनानां स्वत एव प्रामाण्यं भविष्यति प्रथमपक्षे । द्वितीयेऽपि पराधीन उभयस्मिन् दोषाभावादपौरुषेया वेदाः प्रमाणमिति किमुभयनिराकरणेन । अप्रामाण्यं स्वतः प्रामाण्यं परत इत्येतदेव तु वेदप्रामाण्यपरिपन्थीति तन्निराकर्तुमुचितम् । तच्च निराकरिष्यत एव । सत्यम् । आद्ययोरपि पक्षयोरप्रामाण्यमापद्यत एव । तथाहि — स्वाभाविके तावदुभयस्मिन्नन्यतरनिर्णयकारणं बाह्यमपश्यतां नैकत्रापि विश्वासो भवेत् । व्यवहारार्थं च प्रमाणानुसरणम्, अविश्वासे च तदभावात् फलतोऽप्रमाणत्वम् । एवमुभयपराधीनत्वेऽप्यसत्यप्यप्रामाण्यकारणे प्रामाण्यकारणस्याप्यभावात् तद्व्यवहारो न जायत इत्यप्रमाणमेवेति साध्वेवोभयनिराकरणमिति ॥ ३७ ॥

एवमुभयं स्वतः परतो वेति निराकृते पूर्वपक्षान्तरमाह— **तस्मादिति**[2] क्षमन्तेन । तेषां ज्ञानानां स्वाभाविकमप्रमाणत्वम्, परापेक्षं च प्रामाण्यम् । अयं चात्राभिप्रायः—दृष्टव्यभिचारो हि जातेऽपि विज्ञाने न तावन्निर्विचिकित्सं व्यवहरमाणो दृश्यते, यावद् गुणवदिन्द्रियादिकरणत्वं संवादो वा न दृष्टः । व्यवहारफलं च प्रामाण्यम्, अतः स्वतोऽप्रमाणमेव पराधीनं प्रामाण्यमिति । एष चात्र स्वतोऽप्रमाणत्वे परतश्च प्रमाणत्वे न्यायोऽभिधीयत इत्याह — **अत्रेति** ॥ ३८ ॥

स्वतोऽप्रामाण्यं तावन्न्यायं दर्शयति —**अप्रामाण्यमिति** । न्यायस्तर्कः । स चानुमानम् । एष चात्र प्रयोगो भवति —अप्रामाण्यं न कारणवद्, अवस्तुत्वात् । यद्यदवस्तु तत्तन्न कारणवत् । यथा शशविषाणम् ।

---

१. 'दुर्लभः प्रा' ग. पाठः. २. 'ति ते' क. ख. पाठः.

**वस्तुत्वात् तु गुणैस्तेषां प्रामाण्यमुपजन्यते ॥ ३९॥**

---

कारणदोषत इति च कारणदोषाणामेव परैरप्रामाण्यकारणत्वेनाश्रयणादुक्तम् । यदेव मीमांसका मन्यन्ते कारणदोषेभ्योऽप्रामाण्यं जायत इति । तन्न । अकारणकत्वादवस्तुन इति । परापेक्षं प्रामाण्यमित्यत्र प्रयोगमाह—वस्तुत्वादिति । तेषां कारणानां गुणैः प्रामाण्यं जन्यत इत्यर्थः । प्रयोगश्च भवति — प्रामाण्यं कारणवद् वस्तुत्वाद् घटवत् । न चाकार्यं नाम किञ्चिद् बौद्धानां वस्त्वस्ति, येनानैकान्तिको हेतुर्भवेत् । नभसोऽप्यावरणाभावमात्रस्यावस्तुत्वात् । गुणैरिति चानुवादमात्रम् । कारणगुणा हि प्रामाण्ये कारणमिति मन्यन्ते । न पुनरेते व्याप्तावनुप्रवेशनीयाः । के पुनरमी गुणा नाम, ये प्रामाण्यस्य कारणम् । न हीन्द्रियादिव्यतिरिक्ता गुणाः केचिदुपलभ्यन्ते । यदि मतं— भेषजभेदैराहितातिशयविशेषा गुणा इति । तन्न । एवं हि तैरनाहितातिशयविशेषाणां न प्रामाण्यं जायेत । अतो वक्तव्या गुणाः । त उच्यन्ते । विशुद्धिरिन्द्रियादीनां गुणपदार्थः । वातादिधातूनां साम्यमिति यावत् । साम्येन हि त इन्द्रियेषु वर्तमाना गुणा उच्यन्ते । तथा स्थिताश्च[१] प्रामाण्यं जनयन्ति । विषमं तु वर्तमानेषु धातुषु तद्दोषसमुत्थास्तिमिरादयो दोषा जायन्ते । शब्देऽपि वक्तुराशयविशुद्धिर्गुणः । विप्रलम्भाभिप्रायादयो दोषाः । तेषां च प्रामाण्याभावात्मन्यवस्तुन्यप्रामाण्ये[२] कारणत्वासम्भवान्न तज्जन्यमप्रामाण्यम् । प्रामाण्यं[३] त्वर्थनिश्चयो वस्त्वात्मक इति युक्तं यद्गुणेभ्यो जायते ज्ञायते चेति । सर्वमुत्पत्तावनिश्चयात्मकमप्रामाणमेव[४] ज्ञानमा गुणसंवादज्ञानोदयात्, परतस्तु तद्वशेन प्रामाण्यं जायते तस्य । नन्विदानीमसदेवातिवृत्तं ज्ञानमिति किं प्रमाणीभविष्यति । यदा ताव[५]त्तदासीत् तदा सहजेनाप्रामाण्येनाभिभूतमुत्तरकालं च तदसदेवेति किमन्यतः प्रामाण्यं भविष्यति । सत्यमेवम् । अन्यदेव गुणसंवादज्ञानोत्तरकालभाविप्रमाणम् । अवगते हि क्वचिदर्थे प्राग्दृष्टव्यभिचारो ज्ञानस्वभावालोचनेनाजातविश्वासो न तावन्निर्विचिकित्सं व्यवहरति यावदिन्द्रियादिगुणावधारणपुरस्सरमेवमेवैतदिति न निश्चिनोति । गुणावधारणात् संवादज्ञानाद् वा प्रमाणे जातेऽवगते च तस्य

---

१. 'णाः यं', २. 'शयानां न', ३. 'स्तु प्रमाणं ज' ख. पाठः. ४. 'त्मव', ५. 'णं भ' क. पाठः. ६. 'बदा' ग. पाठः.

**प्रामाण्यं हि यदोत्सर्गात् तदभावोऽथ कृत्रिमः ।**
**तदा स्वप्नादिबोधेऽपि प्रामाण्यं केन वार्यते ॥ ४० ॥**
**मत्पक्षे कारणाभावात् प्रामाण्यं नोपजायते ।**
**हेतुमत्त्वप्रसङ्गोऽतो न भविष्यत्यवस्तुनः ॥ ४१ ॥**
**इन्द्रियादिगुणाश्चास्य कारणं तदसद् द्विधा ।**
**दुष्टत्वादिन्द्रियादीनामभावेऽन्यतरस्य वा ॥ ४२ ॥**

---

प्रामाण्ये व्यवहाराः प्रवर्तन्ते । तस्यापि न ज्ञानस्वभावालोचनेन प्रामाण्यं, तद्रूपस्याप्रामाण्यप्रतिबन्धात् । किन्तु गुणावधारणादेव । अतः सूक्तं गुणैः प्रामाण्यं जन्यत इति । यदाहुः—'निश्चयात्मकप्रामाण्योत्पादनं तु वस्तुरूपत्वात् संवादकारणगुणज्ञानकार्यत्वेन स्वध्यवसानमिति तदेवाश्रीयते' इति ॥ ३९ ॥

किञ्च इतश्च न स्वतः प्रामाण्यमित्याह—**प्रामाण्यं** **हीति** । अयमर्थः—यदि ज्ञानस्वभावानुबन्ध्यौत्सर्गिकं प्रामाण्यम्, एवं सति प्रामाण्याभावस्यावस्तुनोऽकृत्रिमत्वान्न पराधीनत्वमिति सर्वज्ञानानामपि प्रमाणत्वप्रसङ्गः[1] । स्वप्नादिज्ञानानामपि ज्ञानत्वाविशेषात्, तन्मात्रानुबन्धित्वाच्च प्रामाण्यस्य । अप्रामाण्यस्य चावस्तुनोऽकार्यत्वादिति ॥ ४० ॥

कथं नामाप्रामाण्यमकृत्रिमम् । दोषभावे हि तस्य भावः, तदभावे चाभावो दृश्यते । कामिली पीतमिदमिति शङ्खं जानाति, तदपगमे[2] शुक्लम् । अतो जानीमः यथादोषभावभाव्यप्रामाण्यं तत् कार्यमिति, अत आह—**मत्पक्ष इति** । अयमभिप्रायः—नात्र दोषैरप्रामाण्यं जन्यते । सत्सु तु दोषेष्वसन्तो गुणा न स्वकार्यं प्रामाण्यं जनयन्तीति नावस्तुनोऽप्रामाण्यस्य हेतुमत्त्वप्रसङ्गदोष इति ॥ ४१ ॥

किं पुनः प्रामाण्ये कारणं, यदभावात् तस्यानुत्पत्तिः, अत आह—**इन्द्रियादीति**कारणमन्तेन । आदिशब्देनार्थपुरुषादीनां ग्रहणम् । इन्द्रियपुरुषगुणाश्च व्याख्याता एव । अर्थस्यापि स्थूलत्वादयो गुणाः सूक्ष्मत्वादयो दोषा इति । समधिगतं तावदिन्द्रियादिगुणाः प्रामाण्ये

---

१. 'ण्यमिति', २. 'ङ्गः, तदा स्व', ३. 'दभावे शु' ख. पाठः.

**अत एव वचोभ्रान्तिर्दोषैर्मिथ्यात्वधीरिति ।**
**तद्व्याप्तेस्तु गुणाभावास्तत्कृता ह्यप्रमाणता ॥ ४३ ॥**
**तस्मात् कारणशुद्धत्वं ज्ञानप्रामाण्यकारणम् ।**
**स्वभावतोऽप्रमाणत्वं तदभावेन लक्ष्यते ॥ ४४ ॥**
**अन्वयव्यतिरेकाभ्यामप्रामाण्यं न दोषतः ।**
**नाज्ञाने दृश्यते ह्येतत् कारणाभावहेतुके ॥ ४५ ॥**
**ततश्च पुरुषाभावात् सति वा शुद्ध्यसम्भवात् ।**

---

कारणमिति । कथं तु तदभावः, अत आह — तदसदिति । ते एव विधे दर्शयति — दुष्टत्वादिति । दोषा ह्यागन्तवो गुणानुत्सारयन्ति । इन्द्रियादीनामन्यतमस्याभावे निराश्रया गुणा न भवन्ति, यथा नित्यवेदवादिनामसति कर्तरि तद्गुणा इति ॥ ४२ ॥

यत एव दोषैर्गुणा निराक्रियन्ते, अत एव मीमांसकानामयं भ्रमो दोषैर्मिथ्यात्वधीर्जन्यत इति । परमार्थेन तु गुणविरोधिनो दोषास्तानेव निवारयन्ति । अतः कारणाभावादसति प्रामाण्ये स्वाभाविकमप्रामाण्यमवतिष्ठत इत्याह — **अत एवेति** ॥ ४३ ॥

अतः सिद्धं शुद्धिपर्यायगुणावधारणाधीनं प्रामाण्यम् । स्वभावतश्च ज्ञानानामप्रामाण्यं, शुद्ध्यभावेन तल्लक्ष्यते । असति हि शुद्धत्वे कारणाभावनिराकृतेन प्रामाण्येनानपोदितमप्रामाण्यं लक्ष्यत इत्युपसंहरति — **तस्मादिति** ॥ ४४ ॥

इतश्च दोषतो नाप्रामाण्यमित्याह — **अन्वयेति** । अस्यार्थः — त्रिविधमप्रामाण्यमज्ञानसंशयविपर्ययैः । तत्राज्ञानात्मकं तावदप्रामाण्यं कारणाभावमात्रसमधिगम्यमेव, न दोषानपेक्षत इति मीमांसकैरभ्युपगन्तव्यम् । अतो दोषव्यतिरेकेऽपि कारणाभावमात्रान्वयेऽप्रामाण्यदर्शनान्न दोषतोऽप्रामाण्यमिति ॥ ४५ ॥

एवं च गुणाधीनप्रामाण्याभ्युपगमान्नित्यवेदवादिनां च पुरुषाभावाद्, अनाश्रयगुणासम्भवात्, कर्तृमद्वेदवादिनामपि कर्तृगुणेषु प्रमाणा-

---

१. 'किं तत्र तद', २. 'तः शु' ख. पाठः.

**निर्मूलत्वात् प्रमाणत्वं चोदनायां न युज्यते ॥**
**स्वतः सर्वप्रमाणानां प्रामाण्यमिति गम्यताम् ।**
**नहि स्वतोऽसती शक्तिः कर्तुमन्येन शक्यते ॥**

सम्भवादसन्मूलभूतेषु कर्तृगुणेषु न चोदनानां प्रामाण्यमवकल्पत इत्याह—**ततश्चेति** ॥ ४६ ॥

एवं तावत् परतः प्रामाण्येन कृतः पूर्वपक्षः । सिद्धान्तमिदानीमारभते—**स्वत** इति । कारणमाह—नहीति । अयमभिप्रायः—न तावद् गुणज्ञानात् संवादज्ञानाद् वा प्राग् ज्ञानं न जायत एव । नवोत्पन्नमपि संशयात्मकमवभासते । नहि स्याद् वा घटो न वेति इन्द्रियसन्निकृष्टं घटं बुध्यामहे, अपितर्हि घट एवायमिति निश्चयात्मकमेव ज्ञानमुत्पद्यते । अत एव ज्ञानोत्पत्तेरनन्तरमेव सर्वप्रमातॄणां व्यवहारप्रवृत्तिरुपलभ्यते । भ्रान्तिसंविदितरजतोऽपि हि सम्यग्रजतबोध इवार्थक्रियायै घटमानो दृश्यते । तदस्य संशयानस्य नोपपन्नम् । अतो जातो निश्चयः । किमन्यत् प्रामाण्यं भविष्यति । सत्यपि संवादे गुणज्ञाने वा तावदेव प्रामाण्यस्य तत्त्वं नाधिकं किञ्चिदिति किं नस्तदुपेक्षणेन । तादृशस्यैव व्यभिचारादस्ति परापेक्षेति चेद्, न । एवमपि ज्ञानस्यानपेक्षत्वाद्, विप्रलब्धपूर्वस्यापि निरपेक्षमेव निश्चयात्मकं ज्ञानमुत्पद्यते । प्रमाता तु विप्रलम्भकबुद्धिसादृश्यात् तथात्वमाशङ्कते । साशङ्कस्यापि न प्रामाण्यशक्तिरवसीदति, पूर्ववत् प्रमेयपरिच्छेदात् । प्रमातुस्तु आशङ्का दोषदर्शनप्रभवा । तदसौ तद्भावाभावयोरन्यतरनिश्चये निवर्तते, न संवादज्ञानमपेक्षते । सत्येव हि घटज्ञाने जाताशङ्कः किं घटज्ञानान्तरेण करिष्यति । नह्यस्यास्तन्निवर्तकं, तस्मिन् सत्येव भावात् । अतः स्वाभाविकमेव सर्वसंविदां निश्चयात्मकत्वम् । आशङ्का तु यदि नाम जातु जायते, एवमपि तन्निराकरणार्थमपवादसद्भावाभावावनुसर्तव्यौ, न संवादगुणज्ञाने । तदुपेक्षायां हि प्रामाण्यमेव नावतिष्ठेत । गुणसंवादज्ञानयोरप्येवमेव, सापेक्षत्वेन प्रथमज्ञाने प्रामाण्यशक्त्याधानाशक्तेरप्यनवस्थापातादित्येतत् परस्तात् प्रपञ्चयिष्यत इति । एवं तावत् प्रकृताभिप्रायो व्याख्यातः । अपि

१. 'सत्सु मू' ख. पाठः. २. 'ज्ञा' क. ख. पाठः. ३. 'मप्रमाणं भ', ४. 'भावात् तदसौ', ५. 'द' ग. पाठः. ६. 'न' क. पाठः. ७. 'व्यव' ख. पाठः.

**आत्मलाभे च भावानां कारणापेक्षता भवेत् ।**
**लब्धात्मनां स्वकार्येषु प्रवृत्तिः स्वयमेव तु ॥ ४८ ॥**
**जातेऽपि यदि विज्ञाने तावन्नार्थोऽवधार्यते ।**

---

च सर्वभावानामेव स्वकार्यजननशक्तिरसती नान्येन क्रियेत । अभिव्यक्तिमात्रकरणात् । नन्वातुरस्य रोगापहृतशक्तेरसत्येव भोजनादिशक्तिर्भेषजभेदैराधीयते । मैवम् । तिरोहिताभिव्यक्तेः । इतरथा पूर्वशक्तिविनाशापूर्वोत्पादधर्मिकल्पनाभिरतिगौरवं भवेत् । अत एव नष्टशक्तीनां भेषजभेदैरपि न प्रतीकारः । असती तु शक्तिस्तेषामपि जन्येतैव, अविशेषात् । अतः सर्वे भावाः स्वहेतुभ्यः शक्तिमन्तो जाता एव कुतश्चिदागन्तुकाद्धेतोस्तिरोहितशक्तयः सामग्रीविशेषैरभिव्यक्तशक्तयः कार्यमारभन्ते । नचैवं ज्ञानेऽप्यभिव्यक्त्यपेक्षा सम्भवति, अर्थावग्रहाद्, रूपान्तरेण ज्ञानस्यानिरूपणादुत्पत्तावेवार्थपरिच्छित्तेरवश्यम्भावादिति ॥ ४७ ॥

ननु स्वतःप्रामाण्यवादिनापि गुणवदिन्द्रियादिकारणिकैव प्रमाणोत्पत्तिरास्थेया । तद् यदि गुणाः प्रमाणोत्पत्तौ कारणम् । एवं सति तत्कार्येऽप्यर्थनिश्चये तदधीनतैव युक्ता । तदायत्तप्रामाण्याश्रयणाद्, अत आह— **आत्मलाभ** इति । अयमभिप्रायः—प्रमाणोत्पत्तावपि न गुणा गुणा इत्येवापेक्ष्यन्ते; किन्तु दोषनिराकरणौपयिकतया । दोषा हि प्रमाणोत्पत्तिं विघ्नन्ति । ते गुणैरुत्सारिता न तां विहन्तुमुत्सहन्ते इति । अत एवासत्स्वपि वक्तृगुणेषु कारुणिकत्वादिषु वेदे दोषाभावमात्रादेव प्रामाण्यं सिध्यति । अपिच कारणं नाम गुणः प्रमाणोत्पत्तौ । नैतावता प्रमाणकार्येऽप्यर्थनिश्चये तदपेक्षा युक्ता । आत्मलाभमात्र एव हि भावाः कारणमपेक्षन्ते, न कार्यनिष्पत्तौ । नहि मृत्पिण्डदण्डादिकारणापेक्षो जन्मनि घट इति उदकाहरणेऽपि तस्य तदपेक्षा दृष्टा । लब्धात्मनस्तु स्वयमेव कारणनिरपेक्षा प्रवृत्तिरवगता । अतः सर्वथा तावदर्थव्यवस्थापनायामन्यानपेक्षमेव प्रमाणमिति सिद्धमिति ॥ ४८ ॥

स्वतोऽसती शक्तिरन्येन कर्तुं न शक्यत इति यदुक्तं तत् प्रपञ्चयति—**जातेऽपीति** त्रिभिः । अयमभिप्रायः— प्रामाण्यस्य ह्यन्यानपे-

---

१. 'व प' ख. पाठः.

यावत् कारणशुद्धत्वं न प्रमाणान्तराद् भवेत् ॥ ४९ ॥
तत्र ज्ञानान्तरोत्पादः प्रतीक्ष्यः कारणान्तरात् ।
यावद्धि न परिच्छिन्ना शुद्धिस्तावदसत्समा ॥ ५० ॥
तस्यापि कारणे शुद्धे तज्ज्ञाने स्यात् प्रमाणता ।
तस्याप्येवमितीत्थं च न क्वचिद् व्यवतिष्ठते ॥ ५१ ॥
यदा स्वतःप्रमाणत्वं तदान्यन्नैव गृह्यते ।
निवर्तते हि मिथ्यात्वं दोषाज्ञानादयत्नतः ॥ ५२ ॥
तस्माद् बोधात्मकत्वेन प्राप्ता बुद्धेः प्रमाणता ।

---

क्षत्वमेव निबन्धनम् । यदि जातेऽपि विज्ञाने कारणगुणावधारणाधीनं प्रामाण्यं भवेत्, ततः शुद्धिज्ञानोत्पादः कारणान्तरात् प्रतीक्षितव्यः । तस्याः शुद्धेरपरिच्छिन्नाया असत्समत्वात् तस्यापि शुद्धिज्ञानस्य कारणशुद्धौ सत्यां तस्याः शुद्धेर्ज्ञाने च सति प्रमाणता भवति । एवमेव मूलकारणशुद्धिज्ञानस्यापरापरशुद्धिज्ञानापेक्षायामनवस्थापातान्न कथञ्चित् प्रामाण्यमापद्यत इति ॥ ४९–५१ ॥

स्वतस्तु प्रामाण्ये नानवस्थेत्याह— यदेति । कारणमाह— निवर्तत इति । अयमभिप्रायः— अर्थनिश्चयस्तावज्ज्ञानस्वभावादेव सिद्धः । मिथ्यात्वशङ्का तु तद्धेतुभूतदोषाज्ञानादयत्नेनैव निवर्तते । नहि दोषाणामज्ञानं प्रागभावो यत्नसाध्यः । ननु नाज्ञानमात्रादभावः सिध्यति । सत्यपि तस्मिन् भावात् । नच दोषाभावावधारणमन्तरेण प्रामाण्यं सिध्यति । सत्यं, तदपि त्वयत्नसाध्यमेव, प्रायेण तावत् प्रमातॄणामनाशङ्क एव ज्ञानोत्पत्तौ व्यवहारो दृश्यते । जाताशङ्कस्यापि प्रसिद्धा एव शङ्कानिराकरणोपायाः, दाहच्छेदादयः स्वर्णादाविति । तावतैव निश्चयोत्पादान्नातिदूरगमनम् । एतच्चोपरिष्टाद् वक्ष्यत एवेति ॥ ५२ ॥

तस्माद् बोधस्वभावानुबन्धि ज्ञानानामौत्सर्गिकं प्रामाण्यं कारणदोषार्थान्यथात्वज्ञानाभ्यामपोद्यत इत्युपसंहरति — तस्मादिति । अर्थान्यथा-

---

१. 'पि भावात् तस्मिन् नच' क. पाठः.

**अर्थान्यथात्वहेतूत्थदोषज्ञानादपोद्यते ॥ ५३ ॥**

**अप्रामाण्यं त्रिधा भिन्नं मिथ्यात्वाज्ञानसंशयैः ।**

**वस्तुत्वाद् द्विविधस्यात्र सम्भवो दुष्टकारणात् ॥**

**अविज्ञाने तु दोषाणां व्यापारो नैव कल्प्यते ।**

**कारणाभावतस्त्वेव तत्सिद्धं नस्त्वदुक्तिवत् ॥५५॥**

**दोषतश्चाप्रमाणत्वे स्वतःप्रामाण्यवादिनाम् ।**

**गुणज्ञानानवस्थावन्न दोषेषु प्रसज्यते ॥ ५६ ॥**

---

त्वज्ञानं च द्वेधा। नैतदेवमिति पूर्वावगतरूपोपमर्दनेन, तत्त्वप्रकाशनेन वा । हेतवो ज्ञानानामिन्द्रियादयः । तेषु वातादिसमुत्थास्तिमिरादयो दोषाः तज्ज्ञानेनोत्सर्गतः प्राप्नुवती प्रमाणतापोद्यत इति ॥ ५३ ॥

यत्पुनरप्रामाण्यमवस्तुत्वान्न कारणैर्जन्यत इत्युक्तं, तत् परिहरति— **अप्रामाण्यमिति** । यदि नाम त्रेधा भिन्नमप्रामाण्यं ततः किं जातमत आह— वस्तुत्वादिति । अयमभिप्रायः—त्रिविधं खल्वप्रामाण्यं ज्ञानाभावसंशयविपर्ययैः । तत्र संशयविपर्ययौ प्रति अवस्तुत्वादिति हेतुरसिद्धः, ज्ञानात्मकवस्तुत्वात् तयोरिति ॥ ५४ ॥

ज्ञानप्रागभावस्त्ववस्तुतया सिद्ध एव । नचास्माकमप्यसौ दोषैर्जन्यते, ज्ञानकारणाभावादेव त्वदुक्तिवत् तत्सिद्धेः । अतस्तस्मिन्नकारणके साध्यमाने सिद्धसाध्यतैवेत्यभिप्रायेणाह — **अविज्ञान** इति । न चाप्रामाण्यश[1]ब्दवाच्यतामात्रेण संशयविपर्यययोरप्यकारणकत्वं शक्यमनुमातुम्, अज्ञानवद्, वाचोऽपि गोशब्दवाच्यतया विषाणित्वापत्तेरिति[2] ॥ ५५ ॥

नन्वियमनवस्था प्रामाण्य इव पराश्रयेऽप्रामाण्येऽपीष्यमाणे आपद्यत एव, पारतन्त्र्यं ह्यनवस्थामापादयति। अतः को विशेषः, अत आह— **दोषत** इति । अस्यार्थः स्वतःप्रामाण्यवादिनां मीमांसकानां दोषतोऽप्रमाणत्वे नानवस्था भवति । दोषेषु ज्ञातव्येषु यथा गुणज्ञानेऽनवस्थापादितेति ॥ ५६ ॥

---

१. 'ब्दा' ख. पाठः. २. 'त्वानुमानापत्तेः' ग. पाठः.

**साक्षाद् विपर्ययज्ञानाल्लघ्व्येव त्वप्रमाणता ।**
**पूर्वाबाधेन नोत्पत्तिरुत्तरस्य हि सिध्यति ॥ ५७ ॥**
**दुष्टकारणबोधे तु सिद्धेऽपि विषयान्तरे ।**

---

स्वतःप्रामाण्यवादिनामिति चानवस्थापरिहारबीजमुक्तं, तदुद्घाटयति — **साक्षा**दिति । अयमभिप्रायः — सजातीयापेक्षायां ह्यनवस्था भवति । यथा प्रामाण्यस्य प्रमाणापेक्षायामुक्तम् । अप्रामाण्यं तु स्वतः प्रमाणेन नैतदेवमिति साक्षाद् विपर्ययज्ञानेन यत्र तावदवगम्यते, तत्र लघुतरमेव गृहीतमिति न पराश्रयत्वमात्रमनवस्थामापादयतीति । ननु स्वतःप्रामाण्ये पूर्वमपि ज्ञानमुत्पन्नमसन्दिग्धमिति किमप्रमाणं भविष्यति येन परेण पूर्वं बाध्यते । तेनैव तु किं न परं बाध्यते, अत आह — पूर्वेति । अयमभिप्रायः — सत्यम्, उत्सर्गतः पूर्वस्यापि प्रामाण्यं प्राप्तमेवापवादभूतेन तूत्तरेण बाध्यमानं तदप्रमाणं भवति । यत्तु तेनैव किं नोत्तरं बाध्यत इति । तन्न, नहीच्छामात्रेण बाध्यबाधकभावो व्यवस्थाप्यते । यद्धि यद्बाधकमवभासते तत् तस्य बाधकमभिधीयते । नचानागतोत्तरबाधकरूपेण पूर्वमवभासत इति 'नचानागतबाधेने'त्यत्रैव वक्ष्यति । उत्तरस्य तु पूर्वज्ञानबाधमन्तरेणोत्पत्तिरेव न सम्भवति । उत्पन्नं च तत् । अतस्तदेव पूर्वस्य बाधकम् । तच्च स्वत एव प्रमाणमिति न काचिदनवस्थेति ॥ ५७ ॥

नन्वस्तु साक्षाद् विपर्ययज्ञानेन परेण पूर्वस्य बाधः, उभयोरपि समानविषयोपनिपातात् । यत्र तूत्तरं कारणदोषविषयं भवति, तत्र विषयभेदान्न बाधो युक्त इति दुरुक्तं हेतूत्थदोषज्ञानात् प्रामाण्यमपोद्यत इत्यत आह — **दुष्टेति बाधोऽन्येन** । अयमभिप्रायः — यद्यपि दुष्टकारणबोधे विषयभेदः पीतशङ्खादिविभ्रमेषु, तथाप्यर्थात् तुल्यार्थतां प्राप्य बाधो भवत्येव । शङ्खे हि पीत इति विदिते परतश्च ज्ञानकारणदोषेऽवगतेऽर्थात् पीतिमा शङ्खस्य प्रतिक्षिप्तो भवति । यत्कारणाधीनात्मलाभं हि यत् कार्यं, तत् तद्दोषे दुष्यति । एष च ज्ञानस्य दोषः यदन्यथास्थितस्यान्यथाप्रकाशनम् । अतः कारणदोषेऽवगतेऽर्थान्यथात्वमेवावगतं भवति । एवं च साक्षाद्विप-

---

१. प्रमाणस्य' ग. पाठः. २. 'धमानम' क. पाठ..

**अर्थात् तुल्यार्थतां प्राप्य बाधो गोदोहनादिवत् ॥**
**तत्र दोषान्तरज्ञानं बाधधीर्वा परा न चेत् ।**
**तदुद्भूतौ द्वितीयस्य मिथ्यात्वादाद्यमानता ॥ ५९ ॥**

र्थयज्ञानेन तुल्यत्वमिति । अत्रैव वैदिकन्यायमुदाहरति — गोदोहनादिवदिति । दर्शपूर्णमासयोः क्रत्वर्थेन चमसेनापां प्रणयने विहिते भवत्यपरो गुणफलसम्बन्धविधिः । यथा 'गोदोहनेन पशुकामस्य प्रणयेदि'ति । अस्यार्थः — गोदोहनेन पशून् भावयेदिति । तदिदं पुरुषाभिलषितपश्वर्थतया पुरुषार्थमेवं सद् गोदोहनं क्रत्वर्थस्य चमसस्य बाधकमिष्यते । तत्रापि च स्फुटो विषयभेदः । क्रतूपकारो हि चमसस्य साध्यः । पशवो गोदोहनस्यार्थादेव तुल्यार्थतया तत्रापि बाधो वक्ष्यते । गोदोहनं हि द्रव्यम् । न तत् क्रियामनाश्रितमुदासीनं फलं भावयितुमलमिति यांकाञ्चित् क्रियामाश्रयतया समीहमानं सन्निहितं क्रत्वर्थमपां प्रणयनं गृह्णातीति तदाश्रितेन पशवो भावयितव्या इति शास्त्रार्थोऽवतिष्ठते । एवंच तेनैव क्रत्वर्थमपां प्रणयनं सिद्धमिति चमसो निवर्तते । नन्वसावेव क्रतौ विनियुक्त इति कथं तत्परित्यागेन गोदोहनेन क्रतूपकारो भाव्यते । सत्यम् । पशुकामप्रयोगे तु क्रतुरपि गोदोहनमेव स्वोपकारसाधनतयानुजानाति । कार्यार्थी हि स्वगुणं प्रत्यादरः, न स्वीयतया । तच्च कार्यं फलार्थत्वादेव गोदोहनादासादितं क्रतुनेति किमादरेण स्वगुणे । आह च —

> "सर्वस्यैव हि कार्यार्थः स्वगुणग्रहणादरः ।
> अन्यार्थगुणसिद्धे तु कार्येऽस्याः स्वगुणेन किम् ॥"

इति । तदिह यथा पुरुषार्थेनैव गुणेन भिन्नविषयोऽपि क्रत्वर्थश्चमसोऽर्थात् तुल्यार्थतया बाध्यते, एवमत्रापीति न दोष इति ॥ ५८ ॥

किमेष एवोत्सर्गः यत् सर्वदा परेण पूर्वं बाध्यते, नेत्याह — **तत्रे**ति । यदि तत्र दुष्टकारणबोधे नैतदेवमिति विपर्यये वा परा बाधधीर्न भवति कारणदोषज्ञानं वा, तदा पूर्वस्य बाधो भवति न त्वन्यथेति । अथोभयोरन्यतरोद्भूतौ किं नाम भविष्यति, अत आह — तदुद्भूताविति । तदा बाधके सापवादे प्रथममेव निरपवादमौत्सर्गिकं प्रामाण्यं लभत इति ॥ ५९ ॥

१. 'र्थं', २. 'व गो' ग. पाठः.

**स्वत एव हि तत्रापि दोषाज्ञानात् प्रमाणता ।**
**दोषज्ञाने त्वनुत्पन्ने नाशङ्का निष्प्रमाणिका ॥ ६० ॥**

---

ननु प्रमाणेन सता तृतीयेन बाधकं बाध्यते । तदेव तु कथं प्रमाणमत आह—**स्वत** इति । सर्वं खलु विज्ञानं जातं स्वत एव प्रमाणमविज्ञायमानदोषम् । तथाच तृतीयम् । अतस्तेन बाधकबाधने कृते भवत्याद्यस्य मानतेति । नन्वसत्स्वपि दोषेषु दोषाशङ्का यथा आदिमे जाता, एवमन्तिमेऽपीति प्रामाण्यं नावतिष्ठते, अत आह — दोषेति । अयमभिप्रायः — जाते दोषज्ञाने सम्भाविता दोषाः प्रामाण्यं विघ्नन्ति । तृतीये तु दोषज्ञानं न तावदुत्पन्नम् । शङ्का तु नोत्प्रेक्षामात्रेण कर्तुमुचिता, सर्वव्यवहारोच्छेदप्रसङ्गात् ।

"अत एव च गीतासु नरं नारायणोऽब्रवीत् ।
नायं लोकोऽस्ति कौन्तेय ! न परः संशयात्मनः ॥"

इति । यस्य तु तृतीये विज्ञाने दोषज्ञानं बाधकज्ञानं वा जायते, तस्यास्तु चतुर्थज्ञानावसानो निर्णयः । नत्वेतदेवं, प्रायेण हि प्रथमज्ञानजन्मन्येव निरपवादो निर्णयो दृश्यते । क्वचित् तु बाधकावसानस्तृतीयज्ञानोदयोऽपि नातिप्रचुरः । नतरां चतुर्थज्ञानजन्म । सत्यपि तु तस्मिन् न स्वतःप्रामाण्यं विहन्यते इत्येवम्परतयैवेदमस्माभिरुक्तम् । अस्तु चतुर्थज्ञानान्निर्णय इति वार्त्तिककारोऽप्यत एव 'एवं त्रिचतुरज्ञानजन्मन' इति वक्ष्यतीति । किं पुनः कारणमनुत्पन्ने दोषज्ञाने नाशङ्केति । नहि प्रयोजनानुवर्तीनि प्रमाणानि । दृष्टव्यभिचारस्य हि प्रमातुरेकत्रापि नाश्वासो भवेद् यदि चैवमुच्छिद्यन्ते व्यवहाराः । कामं प्रमाणतो हि ते परिनिस्तिष्ठन्ति । न तेभ्यः प्रमाणमत आह — निष्प्रमाणिकेति । अयमभिप्रायः—यावद्धि दोषाणामभावो नावधार्यते, तावत् प्रमाणेतरसाधारणधर्मदर्शिनो भवत्याशङ्का प्रमाणवती । दोषाभावावधारणे तु जाते तानाशङ्कमानस्याभावविरोध एव । अर्थेन्द्रियादयो हि ज्ञानकारणम् । तद्दोषा दूरत्वतिमिरादयः । तद्यथा दूरे सन्तस्तरवो वनमित्येकाकारतया परिगृहीताः सन्निकर्षे नाना दृश्यन्ते । तदा दूरत्वदोषादेकत्वबुद्धिरुपजातेति निश्चीयते । नानात्वबुद्धेस्तु न कश्चिद् दोषो दृश्यत इति कथमाशङ्क्यते ।

---

१ 'षाश', २. 'को वा', ३. 'नान्निर्णयः क., 'नाद् ज्ञानोदयो निर्णयः' ख. पाठः. ४. 'काधीनस्तु' क. पाठः. ५. 'आत्मे' ख. पाठः.

**एवं त्रिचतुरज्ञानजन्मनो नाधिका मतिः ।**
**प्रार्थ्यते तावदेवैकं स्वतः प्रामाण्यमश्नुते ॥ ६१ ॥**
**शब्दे दोषोद्भवस्तावद् वक्त्रधीन इति स्थितिः ।**
**तदभावः क्वचित् तावद् गुणवद्वक्तृकत्वतः ॥ ६२ ॥**

---

एवं सन्तमसे गव्यश्वभ्रमे स एव दोषः । दिवा तु गोज्ञाने न कश्चिद्दोषः सम्भाव्यत इति तत्प्रमाणम् । एवं चक्षुरादिदोषाणां तिमिरादीनामभावेऽवगते निष्प्रमाणिकैव दोषाशङ्का । यत्रापि सादृश्यचलत्वादयो विषयदोषा भ्रान्तिहेतवः, तत्रापि भेदकधर्मावधारणे निश्चलत्वेऽवगते च न काचिद् दोषाशङ्केति न तत्समयभाविनो ज्ञानस्याप्रामाण्यमिति ॥ ६० ॥

एवं त्रिचतुरैरेव ज्ञानैर्दोषाभावसिद्धेर्न ततोऽधिका मतिः प्रार्थनीया प्रामाण्यसिद्धये, येनानवस्था भवेत् । यावदेव तु तृतीयं चतुर्थं वा ज्ञानमुत्पन्नं[1], तावदेवैकं पूर्वमुत्तरं वा निरपवादं स्वतःप्रामाण्यमापद्यत इत्याह — **एवमिति** ॥ ६१ ॥

समधिगतं तावत् सर्वप्रमाणानां स्वतःप्रमाणत्वं दोषतश्चाप्रमाणत्वमिति । प्रकृतमिदानीं वेदानां प्रामाण्यं यथा सिध्यति तथा प्रतिपादनीयम् । तदर्थं च वक्त्रधीना एव शब्दे दोषा न स्वाभाविका इत्याह — **शब्द इति** । अयमभिप्रायः — यदा वक्त्रधीनाः शब्दे दोषा इति समधिगतं भवति, तदा वेदे वक्तुरभावान्निराश्रया दोषा न सम्भवन्तीति निरपवादं प्रामाण्यमुपपन्नं भवति वेदानाम् । स्थितं चेदं यत् पराधीनः शब्दे दोष इति, स हि ना(र्था ? र्थ)संस्पर्शीति पूर्वमुपपादितम् । पुरुष एव भ्राम्यन्नन्यदन्यथा बुद्ध्वा तथैव परस्मै प्रतिपादयन् शब्दं दूषयति[2] । क्वचिच्चान्यथैव ज्ञात्वा विप्रलिप्सयान्यथा वदति, तत्रापि तदधीनैव शब्दे दोषावगतिः । स्थानकरणादिदोषाद् वा कलाध्मातास्वूकृतैणीकृतादिदोषदुष्टः शब्दो लक्ष्यते । सर्वथा पराधीन एव शब्दे दोषावगमः, न पुनरसुरभिगन्धवत् स्वभावदुष्टः शब्द इति । स इदानीं वक्त्रधीनो दोषो गुणवद्वक्तृप्रयुक्ते वा क्वचित् पौरुषेये वाक्ये न भवतीत्याह — तदभाव इति ॥ ६२ ॥

---

१. 'त्पन्नं' क. पाठः. २. 'कथयञ्छब्दं' ख. ग. पाठः.

**तद्गुणैरपकृष्टानां शब्दे सङ्क्रान्त्यसम्भवात् ।**
**यद्वा वक्तुरभावेन न स्युर्दोषा निराश्रयाः ॥ ६३ ॥**
**पौरुषेये द्वयं दृष्टं दोषाभावो गुणास्तथा ।**
**प्रामाण्यं तत्र गुणतो नैव स्यादित्युदाहृतम् ॥ ६४ ॥**
**तस्माद् गुणेभ्यो दोषाणामभावस्तदभावतः ।**
**अप्रामाण्यद्वयासत्त्वं तेनोत्सर्गोऽनपोदितः ॥ ६५ ॥**
**प्रत्ययोत्पत्तिहेतुत्वात् प्रामाण्यं नापनीयते ।**

---

ननु वक्तृगुणा वक्तर्येव दोषानुत्सारयन्ति, कथं तैर्निरस्तैः शब्दो निर्दोषो भवत्यत आह — **तद्गुणैरिति** । उक्तं वक्तृदोषा एव शब्दं दूषयन्तीति । स चेद् गुणैरुत्सारितो दोषः, कः प्रसङ्गः शब्दे दोषाणाम् । **नहि** वक्तर्यनाश्रितानामेव दोषाणां शब्दे सङ्क्रान्तिः सम्भवतीति फलतः सङ्क्रान्तिवाचोयुक्तिरिति । वक्त्रभावादेव वा निराश्रया दोषा नोत्सहन्ते भवितुं नित्यवेदवाक्य इत्याह — **यद्वेति** । दोषाभावाच्च न स्वतःप्रामाण्यं वेदानां विहन्यत इति भावः ॥ ६३ ॥

नन्वङ्गीकृतं तावद् भवतापि पुंवाक्येषु गुणेभ्यो दोषाभाव इति । एवं च कुतोऽयं विवेकः दोषनिराकरण एव गुणा व्याप्रियन्ते नतु प्रामाण्य इति, अत आह — **पौरुषेये** इति । अयमर्थः — सत्यं पौरुषेयवाक्येषु दोषाभावगुणात्मकमुभयं दृश्यत एव । यथा तु गुणतो न प्रामाण्यं तथा प्रामाण्यं प्रागुक्तमेव अनवस्था हि तथा स्यादिति । अतो दोषाभावमात्रौपयिका गुणा न स्वरूपेण प्रामाण्य उपयुज्यन्त इति ॥ ६४ ॥

एतदेवोपसंहरति — **तस्मादिति** । अप्रामाण्यस्य हि द्वयं कारणं कारणदोषज्ञानं बाधकप्रत्ययो वा । गुणनिराकृतेषु च दोषेषु पुंवाक्येषु नोभयमपि सम्भवति । न ह्यसन्तो दोषा ग्रहीतुं शक्यन्ते । न चादुष्टकारणजनितस्य ज्ञानस्य बाधकः प्रतितिष्ठति । अतोऽप्रामाण्यस्य यत् कारणद्वयं तदसत्त्वादुत्सर्गतः प्रामाण्यमनपोदितमिति ॥ ६५ ॥

असति चापवादे न प्रत्ययजनकत्वेनोत्सर्गतः प्राप्तं प्रामाण्यं पुंवाक्यानामपनीयत इत्याह— **प्रत्ययोत्पत्तिरिति** । अत्र चोदयति—दोषा-

**दोषाभावो गुणेभ्यश्चेन्ननु सैवास्थितिर्भवेत् ॥ ६६ ॥**
**तदा न व्याप्रियन्ते हि ज्ञायमानतया गुणाः ।**
**दोषाभावे तु विज्ञेये सत्तामात्रोपकारिणः ॥ ६७ ॥**
**तत्रापवादनिर्मुक्तिर्वक्त्रभावाल्लघीयसी ।**
**वेदे तेनाप्रमाणत्वं नाशङ्कामपि गच्छति ॥ ६८ ॥**
**अतो वक्त्रनधीनत्वात् प्रामाण्ये तदुपासनम् ।**
**न युक्तमप्रमाणत्वे कल्प्ये तत्प्रार्थना भवेत् ॥ ६९ ॥**

---

भाव इति । यद्याप्तवाक्येषु गुणनिबन्धनो दोषाभावः, एवं तर्हि गुणज्ञानाधीन इव प्रामाण्येऽनवस्थैव । कः खल्वत्र विशेषः, गुणज्ञानाधीनं वा प्रामाण्यं तदधीनो वा दोषाभाव इति । यदेव हि दोषाभावं ग्रहीतुं गुणज्ञानमपेक्ष्यते, तस्यैव हि गुणज्ञानाधीनो दोषाभावः, तस्याप्येवमिति सैव पूर्वोक्तानवस्था । ततश्च प्रामाण्योत्खातिरिति ॥ ६६ ॥

परिहरति — तदेति । अयमभिप्रायः — यदि ज्ञाता एव गुणा दोषानुत्सारयेयुः, एवमनवस्था भवेत् । नत्वेतदेवमिति । कथं नाम व्याप्रियन्ते अत आह— दोषाभावे इति । सन्मात्रतया गुणा दोषानुत्सारयन्ति । अतोऽसन्तो दोषा न ज्ञाता इति सहजं प्रामाण्यमवतिष्ठत इति ॥ ६७ ॥

तदेवं तावद् गुणनिराकार्यदोषेष्वपि पुंवाक्येषु दोषपरिहार उक्तः । अकर्तृसन्दृब्धे तु वेदे निराश्रया दोषाः शङ्कामपि नाधिरोहन्तीत्यप्रामाण्यशङ्कापि नास्त्येवेत्याह — तत्रेति । प्रामाण्यस्यौत्सर्गिकस्याप्रामाण्यमपवादभूतं तन्निर्मुक्तिर्वेदे लघीयसी न पुंवाक्यवद् गुणापेक्षितया गुर्वीति भाव इति ॥ ६८ ॥

यतः पुंवाक्येष्वपि न गुणापेक्षं प्रामाण्यम्, अतो न शब्दानां प्रमाणता वक्त्रधीना । तद्गुणापेक्षायां तु तदधीनता भवेत् । न चैतदेवमिति वर्णितमेव । अतो यद् नैयायिकादिभिः प्रामाण्यसिद्ध्यर्थं वेदे वक्तुरुपासनं कृतं महेश्वरेण वेदाः प्रणीता इत्याश्रितं तदयुक्तं, दोषाभावादेव तेषां स्वतः प्रामाण्यसिद्धेरित्यभिप्रायेणाह — **अत इति न युक्तमन्तेन** । अप्र-

---

१. 'त', २. 'स्तीत्या, ३. 'क्ष' क. पाठः.

**ततश्चाप्ताप्रणीतत्वं न दोषायात्र जायते।**
**प्रयोगाणां तु सर्वेषां वक्ष्यामः प्रतिसाधनम् ॥७०॥**
**पौरुषेये तु वचने प्रमाणान्तरमूलता।**
**तदभावे तु तद् दुष्येदितरन्न कदाचन ॥ ७१ ॥**

---

माणत्वानुगुणैव दोषाशङ्कामुपजनयन्ती कर्तृकल्पनेत्याह — अप्रमाणत्वेति ॥ ६९ ॥

अत एव च यदपि नास्तिकैराप्ताप्रणीतत्वेनाप्रामाण्यप्रसञ्जनं कृतं, तदप्यत्र नित्ये वेदे दोषाय न जायत इत्याह — ननश्चेति। अयमभिप्रायः — पौरुषेयवाक्यमाप्ताप्रणीतत्वेन दुष्यति। तद्धि तदप्रणीतमर्थादनाप्तप्रणीतं भवेत्। ततश्च तद्दोषदुष्टमप्रमाणं भवेत्। नित्यं तु यदि नामाप्ताप्रणीतम्, एवमपि निर्दोषमेवेति न तस्याप्ताप्रणीतत्वेन प्रामाण्यं विहन्यते। पौरुषेयमपि हि नाप्ताप्रणीतत्वेनाप्रमाणम्. अपि तु अनाप्तप्रणीततया। सा च नित्ये नास्तीति किमप्रमाणं भविष्यतीति। ननु व्याप्तिबलेन परैराप्ताप्रणीतत्वेनाप्रामाण्यं साधितं बालादिवाक्यनिदर्शनेन 'यद्वाप्तनाप्रणीतत्वादित्य'त्र। अतो हेतुदोषा एव विरुद्धासिद्धादयोऽभिधीयन्ताम। किं स्वगोत्रानुसारिणा वचनेन, अत आह — प्रयोगाणामिति। न परमस्य प्रयोगस्य, सर्वेषामेव प्रयोगाणामुत्तरत्र प्रतिसाधनं वक्ष्याम एव 'चोदनाजनिता बुद्धिरि'त्यादिना। अतः प्रतिहेतुविरुद्धा अप्रामाण्यहेतवः संशयजनकतया नाप्रामाण्यं निश्चाययन्ति यदि तुल्यबलाः। अथ तु प्रामाण्यहेतवो बलीयांसः, ततस्तद्बाधिता नतरामात्मानमप्रामाण्यहेतवो लभन्त इति ॥ ७० ॥

कथं पुनराप्ताप्रणीतत्वं न दोषाय. आप्ता हि प्रमाणेनार्थं प्रतिपद्य वाक्यमारचयति। तच्च मानान्तरसंवाददेव हि प्रमाणं भवति। आप्ताप्रणीतं ह्यसन्मूलप्रमाणान्तरं कथं प्रमाणं भविष्यतीत्यत आह — पौरुषेयेति। अयमभिप्रायः - वेदवाक्यं मूलान्तरानपेक्षमेव स्वार्थे प्रमाणं, किं तस्य प्रमाणान्तरेण। पौरुषेये तु वचसि प्रमाणान्तरं मूलकारणमिति तत् तदभावे दुष्यतीति ॥ ७१ ॥

---

१. 'न इति' क. पाठः. २. 'न्न' ग. ग. पाठः.

**तेनेतरैः प्रमाणैर्या चोदनानामसङ्गतिः ।**
**तयैव स्यात् प्रमाणत्वमनुवादत्वमन्यथा ॥ ७२ ॥**
**अन्यस्यापि प्रमाणत्वे सङ्गतिर्नैव कारणम् ।**
**तुल्यार्थानां विकल्प्यत्वादेकं तत्र हि बोधकम् ॥७३॥**

---

यत्तु असन्मूलान्तराणामसम्भवत्संवादानां कथं प्रामाण्यमिति, तदयुक्तम् । येनैव हि कारणेन प्रमाणान्तरमूला न चोदनाः, तेन येयमसङ्गतिस्तासां प्रमाणान्तरैः, सैव सुतरां प्रामाण्यकारणम् । अत एव 'अर्थेऽनुपलब्धे' इति वक्ष्यति । 'अप्राप्ते शास्त्रमर्थवदि'ति च । प्रमाणान्तरमूलत्वेऽनुवादत्वमेवासामापद्यते, न प्रामाण्यम् । न हि नो गन्तृमात्रं प्रमाणमित्यभिप्रायेणाह — तेनेति ॥ ७२ ॥

यदपि तावत् प्रमाणान्तरगोचरार्थं पुंवचनं, तस्यापि प्रामाण्ये न संवादः कारणम् । किमङ्ग पुनः प्रमाणान्तरागोचरार्थानां वेदवाक्यानामित्यभिप्रायेणाह — अन्यस्यापीति । तदपि स्वत एव प्रमाणमिति भावः । नन्वेक एवार्थोऽनेकेभ्य आप्तवाक्येभ्योऽवगम्यते । सर्वाणि च तानि प्रमाणानि । यथा — 'अष्टवर्षं ब्राह्मणमुपनयीत'

"गर्भाष्टमेऽब्दे कुर्वीत ब्राह्मणस्योपनायनम्"

इति च । अतः कथमुच्यते प्रमाणान्तरागोचरार्थत्वमेव प्रामाण्ये कारणमिति, अत आह — **तुल्यार्थानामिति** । एकार्थोपनिपातिनां हि व्रीह्यादीनां विकल्पो वक्ष्यते 'एकार्थास्तु विकल्पेरन्—' (१२. ३. १०) इति । अतोऽत्रापि प्रमातृभेदाद् व्यवस्थितविकल्प एव प्रमाणानां, शाखादिविकल्पवत् । न पुनरन्योन्यसंवादः प्रामाण्ये कारणम् । तथा हि — गौतमीयगोभिलीये छन्दोगानां, याज्ञवल्कीयं वाजसनेयिनां प्रमाणं विकल्प्यत्वात् । विकल्पनीयत्वादेकैकं स्मृतिवाक्यमेकैकस्य प्रमातुर्बोधकं न त्वन्योन्यसंवादात् प्रामाण्यम्, धर्मद्रोणाध्यायिनामपि नान्योन्यसंवादः प्रामाण्ये कारणम् । एकस्माद्धि तमर्थं विदितवतोऽन्यदनुवाद एव । अन्यस्यैव तु तत् प्रमाणम् । एवं भिषग्विद्यास्वपि दर्शयितव्यमिति ॥ ७३ ॥

---

[illegible] ख. पाठः. २. 'ना', ३. 'दःप्रामाण्ये कारणम । भ' ख. ग. पाठः.

**यत्रापि स्यात् परिच्छेदः प्रमाणैरुत्तरैः पुनः ।**
**नूनं तत्रापि पूर्वेण सोऽर्थो नावधृतस्तथा ॥ ७४ ॥**
**सङ्गत्या यदि चेष्येत पूर्वपूर्वप्रमाणता ।**
**प्रमाणान्तरमिच्छन्तो न व्यवस्थां लभेमहि ॥ ७५ ॥**
**कस्यचित् तु यदीष्येत स्वत एव प्रमाणता ।**

---

यत्र तर्हि प्रमातुरेकस्यैवैकार्थगोचरा नानाप्रमाणैः परिच्छेदा जायन्ते तत्र कथम् । यथा कश्चिद् दूरे सन्तमग्निं प्रथममाप्तवाक्यादवगच्छति, पुनश्चोपसर्पन् धूमादनुमिनोति, ततः पुनरत्यन्तमासाद्य प्रत्यक्षयति । तत्र हि सर्वाण्येव प्रमाणानि, परस्परसङ्गतार्थानि च । अतः कथं न संवादः प्रामाण्ये कारणमित्यत आह—यत्रापीति । अयमभिप्रायः—यदि तावदनधिकविषयाण्येव तानि सर्वाणि, तत एकमेव तत्राद्यं प्रमाणम् । इतराणि त्वनुवादभूतानि । नचैतान्यनधिकविषयाणि । न ह्यसावर्थः पूर्वेण प्रमाणेन तथावगतः यथोत्तरैरवगम्यते, उत्तरोत्तरकालसम्बन्धातिरेकात् । अपिचाप्तवाक्यात् पर्वतोऽग्निमानिति सामान्यतोऽवगम्यते । पुनस्तदेकदेशविशेषो धूमानुमानादवगम्यते । असाधारणधूमदर्शनाच्च काष्ठादिभेदभिन्नः प्रत्यक्षेण च समुन्मीलिताखिलविशेषो विशदतरमयमित्यपरोक्षमवसीयते इत्यधिकाधिकविषयाणां न संवादतः प्रामाण्यमिति ॥ ७४ ॥

संवादनिबन्धने च प्रामाण्येऽनवस्थापद्यत इत्याह—सङ्गत्येति ॥७५॥

नन्वविसंवादि ज्ञानं प्रमाणमर्थक्रियास्थितिश्चाविसंवाद इति जातायामर्थक्रियायां किं प्रमाणान्तरापेक्षया । यथाहुः—

> "प्रमाणमविसंवादि ज्ञानमर्थक्रियास्थितिः ।
> अविसंवादनम्"

इति । 'प्रत्यक्षमनुमानं च द्वे एव प्रमाणे इति प्रतिज्ञाय नह्याभ्यामर्थं परिच्छिद्य प्रवर्तमानोऽर्थक्रियायां विसंवाद्यते' इति च । अतोऽर्थक्रियावसानैव प्रमाणस्थितिरिति न ज्ञानान्तरापेक्षायामनवस्था । अत आह—कस्येति । अयमभिप्रायः—अर्थक्रियाज्ञानमपि न तावदप्रमाणमर्थक्रियां व्यवस्थापयि-

---

१. 'गते', २. 'पोऽनु', ३. 'दिना', ४. 'पोऽपि वि' ख. पाठः. ५. 'पि नानदप्र', ६. 'णं नार्थे' ग. पाठः.

**प्रथमस्य तथाभावे प्रद्वेषः किन्निबन्धनः ॥ ७६ ॥**

**श्रोत्रधीश्चाप्रमाणं स्यादितराभिरसङ्गतेः ।**
**स्याच्चेत् तज्जनितेनैव ज्ञानेनान्येन सङ्गतिः ॥ ७७ ॥**

---

तुमलमिति तत्प्रामाण्यार्थमपरापरार्थक्रियानुसरणेनानवस्थैव । यदि त्वनपेक्षितज्ञानान्तरमेव तत् प्रमाणम्, एवं सति प्रथममर्थज्ञानमेव किमनपेक्षं न प्रमाणमिष्यते । नह्यनयोरवबोधरूपत्वेऽसंशयात्मकत्वे च कश्चिद् विशेषो दृश्यते । अपिच प्रमाणेनार्थं परिच्छिद्य प्रवर्तमानोऽर्थक्रियाया-मविसंवादं मन्यते । तत्रार्थक्रियास्थितेः प्रागविसंवादानवगतेर्न प्रामाण्यनिश्चय इति कथं प्रवृत्तिः । अप्रवृत्तस्य वा कथमर्थक्रियास्थितिः । तदिहोभय-स्मिन्नन्योन्याधीने दुरुत्तरमितरेतराश्रय(त्व)म् । अथ सन्देहादेव प्रवृत्तो-ऽर्थक्रियास्थित्या अविसंवादं बुद्ध्वा प्रामाण्यं मन्यते, कृतं तर्हि प्रमाणेन । अर्थक्रियार्थमेव हि तदर्थ्यते । सा चेत् सन्देहादेव जाता, स एव साधी-यान् । तस्यैव व्यवहारोपयिकत्वात् । अतो यदप्युक्तं हिताहितप्राप्तिपरिहार-योर्नियमेन सम्यग्ज्ञानपूर्वकत्वादविदुषां तद्व्युत्पादनार्थं प्रमाणनिश्चयप्रणय-नमिति, तदप्ययुक्तम् । अतत्पूर्वकत्वात् तयोः । अपि चास्मिन् मते सकृज्जात-विनष्टेषु विद्युदादिभावेषु न काचिदर्थक्रिया जातेति तज्ज्ञानं प्रमाणं न स्यात् । अथ तत्रापि शब्दप्रयोगोऽर्थक्रियेत्युच्यते, तर्हि निर्विकल्पके अप्रामाण्यप्र-सङ्गः । तस्मादविसंवादि प्रमाणमिति मन्यामह एव । अर्थक्रियास्थितिस्तु अविसंवाद इति न मृष्यामहे । अर्थान्यथात्वहेतूत्थदोषज्ञानाभ्यामेव तूत्प-न्नस्य ज्ञानस्य विसंवादः । तदभावाच्चाविसंवादः । तावता च प्रामाण्यमिति सिद्धं न संवादापेक्षं प्रामाण्यमिति ॥ ७६ ॥

अपि च संवादापेक्षिणि प्रामाण्ये श्रोत्रजा बुद्धिरिन्द्रियान्तरजन्याभि-र्बुद्धिभिरसंवादादप्रमाणमापद्यते इत्याह — **श्रोत्रे**ति । यदि त्वस्याः श्रोत्र-ज्ञानान्तरसंवाददेव प्रामाण्यमिष्यते, तथा सति वेदेऽपि तत्तद्वाक्योच्चारणा-नुगामिनी शतकृत्वो बुद्धिरुत्पद्यत इति सापि नाप्रमाणमित्याह — स्याच्चे-

---

१. 'प्रमाणान्त' क. पाठः. २. 'त्वा', ३. 'च' ख. पाठः. ४. 'थवा न' ग. पाठः. ५. 'या तु अवि' क. पाठः. ६. 'दात् प्रा' ग. पाठः.

वेदेऽपि शतकृत्वः स्याद् बुद्धिरुच्चारणानुगा ।
प्रमाणान्तरजन्या तु बुद्धिर्नास्ति द्वयोरपि ॥ ७८ ॥

यथा त्वेकेन्द्रियाधीनज्ञानान्तरनिबन्धना ।
सङ्गतिः कारणं क्लृप्ता तथा वेदेऽपि कल्प्यताम् ॥

तस्माद् दृढं यदुत्पन्नं नापि संवादमृच्छति ।
ज्ञानान्तरेण विज्ञानं तत् प्रमाणं प्रतीयताम् ॥ ८० ॥

न चानुमानतः साध्या शब्दादीनां प्रमाणता ।
सर्वस्यैव हि सा प्राप्ता प्रमाणान्तरसाध्यता ॥ ८१ ॥

---

दिति । प्रमाणान्तरजन्या तु संवादबुद्धिर्न परं वेदे, श्रोत्रेऽपि प्रत्यक्षे च नास्तीत्युक्तमेवेत्याह —प्रमाणेति ॥ ७८ ॥

तदेवं स्थिते यद्येकेन्द्रियाधीनज्ञानसंवादात् श्रोत्रं प्रमाणमित्युच्यते; एवं सति वेदेऽपि तत्तद्वाक्योद्भावितबुद्धिसंवादाद् दुर्वारं प्रामाण्यमित्याह— यथेति । पौनरुक्त्यं त्वत्रानवहिता मन्यन्ते इति, किं तदाक्षेपपरिहाराभ्यामिति ॥ ७९ ॥

यत एते संवादापेक्षिणि प्रामाण्ये दोषाः, तस्माद् विमुच्य संवादग्रहणं यदुत्पन्नं दृढमसन्दिग्धं ज्ञानान्तरेण च नैतदेवमिति न विसंवाद्यते । विज्ञानं विशिष्टविषयं ज्ञानम्, अधिकविषयमिति यावत् । एतेन स्मरणं व्यवच्छिनत्ति । तद्धि पूर्वज्ञानादविशिष्टमनधिकविषयत्वात् तदेव प्रमाणमित्याह — तस्मादिति ॥ ८० ॥

क्व पुनः प्रमाणान्तरासंङ्गतार्थं वचः प्रमाणं दृष्टं, येन वेदवाक्यानां प्रामाण्यमाश्रीयते । पौरुषेयं हि सर्वं प्रमाणान्तरप्रतिपन्नार्थमेव, अत आह— नचेति । अयमभिप्रायः — नानुमानसाध्यप्रामाण्यानि प्रमाणानि, येन क्व दृष्टमिति पर्यनुयुञ्ज्यामहे । अनुमाने हि दृष्टान्तापेक्षा भवति । स्वत एव त्र प्रमाणानां प्रामाण्यमिति न तेषामनुमानेन प्रामाण्यं साधनीयमिति । अनुमानेन च प्रामाण्यसाधने तस्याप्यनुमानान्तरापेक्षायामनवस्थेत्याह — सर्वस्येति ॥ ८१ ॥

---

१. 'तद्वा' क. पाठः. २. 'गोचरार्थं' ग. पाठः. ३. 'मो' क. पाठः.

**ननु प्रमाणमित्येवं प्रत्यक्षादि न गृह्यते ।**
**न चेत्थमगृहीतेन व्यवहारोऽवकल्पते ॥ ८२ ॥**
**प्रमाणं ग्रहणात् पूर्वं स्वरूपेणैव संस्थितम् ।**
**निरपेक्षं स्वकार्येषु गृह्यते प्रत्ययान्तरैः ॥ ८३ ॥**
**तेनास्य ज्ञायमानत्वं प्रामाण्ये नोपयुज्यते ।**
**विषयानुभवो ह्यत्र पूर्वस्मादेव लभ्यते ॥ ८४ ॥**

---

अत्र चोदयति — नन्विति । अयमभिप्रायः — यथा अप्रमाणमप्रमाणतया नावसीयत इति परापेक्षम्, एवं प्रमाणमपि प्रमाणतया न प्रकाशत इति तदपि परापेक्षमापद्यते । न हि प्रमाणत्वेनागृहीतं प्रत्यक्षादि व्यवहारार्थं कल्पते । तदर्थं च प्रमाणानुसरणं न व्यसनेनेति ॥ ८२ ॥

परिहरति प्रमाणमिति । अयमभिप्रायः — यथा अविदितस्वरूपशक्तीन्यपि चक्षुरादीन्द्रियाणि परानपेक्षाण्येव कृतकार्याणि कार्यान्यथानुपपत्त्या पश्चादवसीयन्ते, न चैतेषां ज्ञानं कार्यं प्रत्युपयुज्यते, तस्य निरपेक्षैरेवेन्द्रियैः कृतत्वात् । एवं प्रमाणमपि प्रत्यक्षादि प्रत्ययान्तरग्रहणात् पूर्वं स्वकार्ये विषयपरिच्छेदे निरपेक्षमेव संस्थितमतिक्रान्तं स्वरूपेणैव कदाचिद् गृह्येतापि यदि जिघृक्ष्यते । न तु तस्य ग्रहणं प्रामाण्य उपयुज्यते । यादृशं हि रूपमस्य प्रत्ययान्तरेणापि ग्रहीतव्यं तेनैव रूपेण तत् प्रागप्यासीदेव । घटप्रत्यक्षेण हि घटो घटोऽयमिति निश्चिताकारः प्रवेदितः । तावदेव च तस्य प्रमाणत्वं, प्रमाणान्तरेणापि घटोऽमुना परिच्छिन्न इत्येव प्रवेदनीयम्, नाधिकं किञ्चिदिति जायमानमपि कृतकरमेव तत् प्रमाणान्तरम् । अप्रमाणे तु पूर्वानवगतरूपज्ञानायार्थवत् प्रत्ययान्तरमिति वक्ष्यति । संस्थितमिति प्रमाणपर्यवसानं दर्शयति । कार्यान्तरनिष्पत्त्या हि प्रमाणं सन्तिष्ठते । संस्थिते चानर्थकं प्रत्ययान्तरमिति ॥ ८३ ॥

यतश्च स्वरूपेण प्रत्ययान्तरैः प्रमाणमवसीयते, तच्च स्वरूपमवगतपूर्वमेव, अतोऽस्य प्रमाणस्य प्रत्ययान्तरेण ज्ञायमानत्वं न प्रामाण्य उप-

---

१. 'नाध्यव', २. 'यावक' ग. पाठः. ३. 'ण गृहीतं ते' क. पाठः. ४. 'तान्तर प्र' ग. पाठः. ५. 'ज्ञापना' क. पाठः.

**अप्रमाणं पुनः स्वार्थग्राहकं स्यात् स्वरूपतः ।**
**निवृत्तिस्तस्य मिथ्यात्वे नागृहीते परैर्भवेत् ॥ ८५ ॥**
**नह्यर्थस्यातथाभावः पूर्वेणात्तस्तथात्ववत् ।**
**तत्राप्यर्थान्यथाभावे धीर्यद्वा दुष्टकारणे ॥ ८६ ॥**

---

युज्यते । इदं हि तस्य प्रामाण्यं यत् स्वविषयप्रकाशनं, तच्च पूर्वस्मा- देव स्वस्माल्लब्धमित्यनर्थकं प्रत्ययान्तरमित्युक्तमेवार्थं व्यक्तीकर्तुमाह — **तेने**ति ॥ ८४ ॥

अप्रमाणे तु प्रत्ययान्तरमर्थवदिति[1] युक्तैव तत्र तदपेक्षेत्याह — **अप्रमाण**मिति[2] । अयमर्थः — अप्रमाणं हि स्वरूपेणार्थं गृह्णाति । यादृशं हि ज्ञानस्य स्वरूपं तादृशमेवार्थेऽध्यारोपयतीति यावत् । इदं रजतमिति हि शुक्तौ[3] रजताकारमप्रमाणं तामपि तदाकारतया गृह्णाति । अत एव च तन्मिथ्या भवति । तच्चैतन्मिथ्यात्वमेवात्मनो न तेनात्मना प्रवेदितमिति तत्प्र- वेदनाय युक्तैवान्यापेक्षा । असति हि मिथ्यात्वग्राहिणि प्रत्ययान्तरे न स्वार्थे ज्ञानस्वरूपारोपो मिथ्यात्वं निवर्तते । असत्यां च तन्निवृत्तावप्रमाणादेव प्रा- माण्यव्यवहारः प्रतायेत । अतस्तन्निवृत्तयेऽर्थवत् प्रत्ययान्तरमिति ॥ ८५ ॥

कस्मात् पुनः प्रत्ययान्तरैरगृहीतं मिथ्यात्वं न निवर्तते, अत आह— **नही**ति । यादृशं ज्ञानं तथार्थो न भवतीति योऽयमर्थस्यातथाभावः नायं पूर्वेणाप्रमाणेनोपात्तः । अपरिच्छिन्न इति यावत् । प्रमाणेनैव हि तथात्वं, तस्य हि तथात्वमर्थस्य कार्यं, तच्च तेनैव प्रकाशितमिति न तत्र परापेक्षा[4] । अन्यथात्वं त्वर्थस्याप्रमाणादसिद्धमिति तत्र प्रमाणान्तरं सावकाशमिति । आह— अस्तु परतो मिथ्यात्वम्, एवमपि न प्रामाण्यं चोदनानाम्, अनु- मानेन मिथ्यात्वावगमात् । उक्तं हि —

"स्वर्गयागादिसम्बन्धविषयाश्चोदना मृषा ।"

इति, अत आह — **तत्रापी**ति । अयमभिप्रायः — न यतःकुतश्चित् पर- स्मान्मिथ्यात्वम्, अपितु तत्राप्यर्थातथाभावे मिथ्यात्वेऽन्यथात्वविषयैव

---

१. 'माणान्त', २. 'ति । अप्र' ग पाठः. ३. 'ति शु', ४. 'ति । अस्तु' क. पाठः.

**तावतैव च मिथ्यात्वं गृह्यते नान्यहेतुकम् ।**
**उत्पत्त्यवस्थमेवेदं प्रमाणमिति मीयते ॥ ८७ ॥**

**अतो यत्रापि मिथ्यात्वं परेण प्रतिपाद्यते ।**
**तत्राप्येतद् द्वयं वाच्यं नतु साधर्म्यमात्रकम् ॥**

---

या धीः नेदं रजतमिति वा शुक्तिरेयमिति वा सा कारणं, दुष्टकारणविषया वा । यथा वक्ष्यति—'यस्य च दुष्टं करणं यत्र च मिथ्येति भवति प्रत्ययः' इति ॥ ८६ ॥

किमेष मन्त्रः । अनुमानादपि मिथ्यात्वमवसीयमानं न कदाचिदपि निग्रहस्थानमापादयतीति, अत आह — **तावतेति** । चकारो हेतौ । नायं मन्त्रः । किन्त्वनुमानान्मिथ्यात्वमवगन्तुमेव न शक्यते, प्रतिहेतुविरुद्धत्वादनुमानानाम् । नास्तिकानामपि चाभ्युपेतस्वागमाप्रामाण्यप्रसङ्गाच्च । शक्यते हि तदागमानामपि वाक्यत्वादिना मिथ्यात्वमनुमातुम् । चोदनाजनितासन्दिग्धाविपर्यासितज्ञानविरुद्धाश्च हेतवो न प्रामाण्यमाच्छादयितुमुत्सहन्ते चोदनानामिति तावतैव कारणद्वयेन मिथ्यात्वं गृह्यते, न पुनः परोक्तदुरुक्तहेतुसङ्घातेनेति । ननु यदपि तदर्थान्यथात्वज्ञानं दुष्टकारणज्ञानं वा, तदपि नाप्रमाणं मिथ्यात्वं प्रतिष्ठापयति । प्रामाण्यं च पूर्वज्ञानविरोधात् तस्यापि दुरध्यवसानमिति कथं पूर्वस्य मिथ्यात्वमत आह — **उत्पत्त्यवस्थमिति** । तदिदमुभयविधं मिथ्यात्वग्राहि ज्ञानमुत्पत्त्यवस्थितं प्रमाणमिति मीयते । यथा प्रमाणं भवति तेनात्मना मीयत इत्यर्थः । तत् खलूत्पत्तिदशामधिरूढमिति न तावदनुत्पत्तिलक्षणेनाप्रामाण्येन परिभूयते । निश्चयत्वात्मकत्वाच्च न संशयरूपेण । न चास्य बाधकान्तरमुपलभ्यत इति प्रमाणमेव । अतस्तेन शक्यते पूर्वस्य मिथ्यात्वमापादयितुम् । तस्यापि बाधकोदये प्रमाणेतरविभागो भणित एवेति सूक्तं द्वेधैव मिथ्यात्वमिति ॥ ८७ ॥

यतश्च द्वेधैव मिथ्यात्वमवगम्यते न प्रमाणान्तरेण, अतः परस्मा अपि मिथ्यात्वं प्रतिपादयितुकामेनैतदेव मिथ्यात्वहेतुद्वयं वक्तुमुचितम् । न त्वप्रमाणसाधर्म्यमात्रप्रयोजकं, यथा परैः कृतमित्याह — **अत इति** ॥ ८८ ॥

---

१. 'द्वमा', २. 'न प' क. पाठः.

**चोदनार्थान्यथाभावं कुर्वतश्चानुमानतः ।**
**तज्ज्ञानेनैव यो बाधः स कथं विनिवार्यते ॥ ८९ ॥**
**तन्मिथ्यात्वादबाधश्चेत् प्राप्तमन्योन्यसंश्रयम् ।**
**नानुमानादतोऽन्यद्धि बाधकं किञ्चिदस्ति ते ॥९०॥**
**नचान्यैरग्रहेऽर्थस्य स्यादभावो रसादिवत् ।**
**तेषां जिह्वादिभिर्यस्मान्नियमो ग्रहणेऽस्ति हि ॥९१॥**

---

आगमविरोधश्चानुमानेनाप्रामाण्यं साधयतामित्याह — **चोदनेति** । अयमभिप्रायः — चोदनाजनितं ज्ञानं त्रिविधाप्रामाण्यरहितं स्वतश्च प्रमाणमिति स्थितम् । अतस्तेनैवाप्रामाण्यप्रतिज्ञा बाध्यते । तस्मिन् परिपन्थिनि न वाक्यत्वादीनामप्रामाण्येन सम्बन्ध एव ग्रहीतुं शक्यत इति ॥ ८९ ॥

अत्र किञ्चिदाशङ्कते — **तन्मिथ्यात्वादिति** । अयमभिप्रायः — प्रमाणं सच्चोदनाजनितं ज्ञानमनुमानमुपमृद्नाति । तदेव तु तत्प्रतिहतं मिथ्या सत् कथं तद्बाधाय प्रभवतीति । परिहरति — प्राप्तमिति । अयमभिप्रायः — मिथ्या सता चोदनाज्ञानेनानुमानं न बाध्यते । तदबाधितेन लब्धप्रतिष्ठेनानुमानेन मिथ्या क्रियते । अतस्तन्मिथ्यात्वादनुमानप्रमाणता, तत्प्रामाण्याच्च तन्मिथ्यात्वमितीतरेतराश्रयमिति । यदि चोदनाज्ञानस्य बाधकान्तरं भवेद्, एवं तदापादितमिथ्यात्वं नानुमानबाधाय प्रभवतीति इतरेतराश्रयं च नाशङ्क्येत, नत्वतो भवदुक्तादनुमानादन्यत् किञ्चिद् बाधकमस्तीत्याह — नेति ॥ ९० ॥

ननु प्रमाणान्तरैश्चोदनार्थस्यापरिग्रहात् संवादाभावादेव चोदनाजनितस्य[1] ज्ञानस्य सिद्धं मिथ्यात्वमिति नेतरेतराश्रयमत आह — **नचेति** । उक्तमिदं न संवादनिबन्धनं प्रामाण्यमिति मा भूद् रसादेर्ज्ञानाप्रामाण्याद-भावो रसादीनामिति । कथं पुनस्तेषां संवादतः प्रामाण्येऽभावो रसादीनामित्यत आह — तेषामिति । तेषां रसादीनां जिह्वादिभिरेव ग्रहणं नियतम् । अत इन्द्रियान्तरसंवादाभावाद् रसज्ञानाप्रामाण्ये रसादीनामभावो भवेदिति[2] ॥ ९१ ॥

---

१. 'धदोषर', २. '.ग.स' क. पाटः

तद्विधैवार्थबोधश्चेत् तादृग् धर्मे भविष्यति ।
ममासिद्धमिदं तु वेदाज्जातेऽवबोधने ॥ ९२ ॥
वक्तुं न द्वेषमात्रेण युज्यते सत्यवादिनाम् ।
द्वेषादसम्मतत्वाद् वा नच स्यादप्रमाणता ॥ ९३ ॥

---

यदि तु सजातीयज्ञानान्तरसंवादाद् रसज्ञानं प्रमाणमिष्यते, तथा सति धर्मेऽपि तादृग् वेदोत्थापितज्ञानसंवादः सम्भवतीत्याह—तद्विधेति । इदं च संवादतः प्रामाण्यनिराकरणार्थं प्रागुक्तम् । इदानीमितरेतराश्रयप्रसञ्जनायोच्यत इति तात्पर्यभेदादपौनरुक्त्यमिति । यदि तूच्यते—असिद्धमेव नश्चोदनाप्रामाण्यं, कथं तयाप्रामाण्यपक्षो बाध्यत इति । तदयुक्तम् । उत्पद्यते खल्वपि वेदवचनश्रावेणां नास्तिकानामपि धर्माधर्मविशेषविषयावबोधः । नच सन्दिह्यते स्याद् वा अग्निहोत्रात् स्वर्गो नवेति । नच विपर्ययः । तदिदं तेषामपि चोदनाजनितं ज्ञानं प्रमाणमेव । ज्ञानापह्नवस्तु सत्यवादिनामयुक्त एव । नहि तत् सम्भवति विदितपदपदार्थसम्बन्धश्चोदनावाक्याद्नार्थं बुध्यत इति । अनृतं तु वदन्तो 'नानृतं वदेदि'ति प्रतिषेधमतिक्रामन्तो महान्तमनर्थं प्राप्नुयुः । अतो न प्रद्वेषमात्रेणासिद्धवचनं युक्तं, तदेतदाह—ममेति । यस्त्वाह—सत्यमुत्पद्यते ज्ञानं, द्वेषादेव तदप्रमाणमाचक्ष्महे । परस्परविरुद्धसिद्धान्ताः प्रायेण हि तार्किका द्वेषादेव किञ्चिदप्रमाणमातिष्ठन्ते । किञ्चिचास्मदीयमिदं दर्शनमित्यनुरागेण प्रमाणमिति । अतः द्वेषाचोदनानां प्रामाण्यं बाध्यते । अन्यतश्च परिच्छेदान्नेतरेतराश्रयमिति, तं प्रत्याह—द्वेषादिति । नाप्रमाणतेति सम्बन्धः । न द्वेषमात्रेणाप्रमाणता सिध्यति । तथाहि न किञ्चित् प्रमाणं नामावकल्पते । सर्वे हि वादिनः परस्परेण सिद्धान्तान् विगर्हयन्तो दृश्यन्ते । तत्र कतमत् प्रमाणतयाध्यवसीयते । अतो यथोक्तलक्षणमेव सर्वं प्रमाणमिति । स्यान्मतं—मा भूद् द्वेषादप्रामाण्यम् । यावत् तु वादिप्रतिवादिनोः सम्मतिः सम्प्रतिपत्तिर्न भवति, न तावत् प्रामाण्यं प्रतितिष्ठति । नचाप्रतिष्ठितप्रामाण्यं प्रमाणं परबाधनाय प्रभवति । नच नश्चोदनाप्रामाण्ये सम्प्रति-

---

१. 'नि । द्वे' ख. पाठः.

**नचात्मेच्छाभ्यनुज्ञाभ्यां प्रामाण्यमवकल्पते ।**
**अग्निदाहादिदुःखस्य नह्यप्रत्यक्षतेष्यते ॥ ९४ ॥**
**नचाभिलाषिकं ज्ञानं प्रामाण्येनावधार्यते ।**
**तस्मादालोकवद्वेदे सर्वसाधारणे सति ॥ ९५ ॥**
**नैव विप्रतिपत्तव्यं बौद्धादेर्वक्ष्यतेऽन्तरम् ।**
**पुरुषाशक्तितस्तत्र सापवादत्वसम्भवः ॥ ९६ ॥**

---

पत्तिरस्तीति कथमनुमानबाधः । अत आह — असम्मतत्वादिति । स एवान्वयः । शेषं पूर्ववदिति ॥ ९३ ॥

यथाच द्वेषासम्मतिभ्यां नाप्रामाण्यम् एवं प्रामाण्यमपि नात्मेच्छाभ्यनुज्ञाभ्यां भवति, येनोभयथापि प्रसिद्धप्रामाण्येनाप्रामाण्यानुमानेन चोदनैव बाध्यत इत्यभिप्रायेणाह — नचेति[1] । अप्रामाण्यानुमानस्य हि प्रामाण्यं नास्तिकैरिष्यते । अप्रमाणेषु हि वेदेषु दुःखप्रायो वेदवादिनां सिद्धान्तः परिहृतो भवतीति । प्रागभर्वीयाद् धर्मानुग्रहाच्च तेषामियमभ्यनुज्ञा वेदाप्रामाण्यवादोः प्रमाणमिति । उभयं चेदं न प्रामाण्ये कारणम् । उक्तमेव तु तत्र कारणमिति । द्वेषादप्रामाण्यं नेत्यत्रोदाहरणमाह — अग्नीति । यदि द्वेषादप्रामाण्यं स्यादग्निदाहादिदुःखमप्रत्यक्षं भवेत्, तस्य ज्ञानस्याप्रत्यक्षत्वादप्रत्यक्षविषयस्य चाप्रत्यक्षशब्दवाच्यत्वात् । नैचेयं[2] दाहदुःखस्याप्रत्यक्षतेष्यते कैश्चित् । द्वेषतस्त्वप्रामाण्ये सा प्रसजेदिति ॥ ९४ ॥

आत्मेच्छया न प्रामाण्यमित्येतद् दर्शयति — नचेति । आभिलाषिकज्ञानस्य सर्वो हि प्रामण्यमभिलषति । तथा सति हि सर्व एवाशामोदकैरपि तृप्ता भवेयुः । नतु तस्य प्रामाण्यं कैश्चिदिष्यत इति । अतः सिद्धं चोदनाविरुद्धमप्रामाण्यानुमानमप्रमाणमित्युपसंहरति — तस्मादितितव्यमन्तेन । नन्वेवं बौद्धादयोऽपि स्वागमान् गृहीत्वा प्रत्यवतिष्ठेरन्, अत आह — बौद्धादेरिति । बौद्धादेरागमाद् वेदानामन्तरं[3] विशेषो वक्ष्यत इत्यर्थः ॥ ९५३ ॥

वक्ष्यमाणमेवान्तरमनागतावेक्षणन्यायेन सूचयति — पुरुषेति । बौद्धाद्यागमेषु प्रामाण्यापवादोऽप्रामाण्यं सम्भवति । अतीन्द्रियमर्थं[4] द्रष्टुं पुरु-

---

१. ज्ञा यद् वं', २. 'दः' ग. पाठः. ३. 'नेयं' क. पाठः. ४. 'रं व' ख. ग. पाठः.

**वेदस्यापौरुषेयत्वे सिद्धा त्वेवं प्रमाणता ।**
**कर्तृमत्त्वे तु वेदस्य सम्यङ्मिथ्यात्ववादिभिः ॥९७॥**
**कर्ता गुणाश्च दोषाश्च महाजनपरिग्रहः ।**
**एवमादि विना युक्त्या कल्प्यं मीमांसकैः पुनः ॥**
**इदानीमिव सर्वत्र दृष्टान्नाधिकमिष्यते ।**

---

षाणामशक्तेः । स्वयमेव च तैः स्वागमानां पौरुषेयत्वमाश्रितमिति बुद्ध्वा-त्मानं समर्पितवन्तः कथमधुनातिक्रामन्ति । अपौरुषेयास्तु वेदा इति वेदा-धिकरणे वक्ष्यामः । ततश्च दोषाभावाद् एवम् उक्तेन प्रकारेण स्वतःप्रमाणता वेदस्य सिद्धा भवतीति पौरुषेयत्वमपौरुषेयत्वं चान्तरं बौद्धाद्यागमानां वेदस्य चेति ॥ ९६½ ॥

एवं तावदपौरुषेयत्वान्नित्या वेदाः स्वतः प्रमाणमित्युक्तम् । ये तु नै-यायिकादयः प्रामाण्यसिद्ध्यर्थं कर्तृमत्त्वं वेदानां कल्पयन्ति, ये च मिथ्यात्व-वादिनो मिथ्यात्वसिद्ध्यर्थमेव, तेषां न तावदस्मर्यमाणकर्तृकल्पना प्रमाण-वती । अपिचादृष्टकल्पनापि बह्वी विना युक्त्या प्राप्नोतीत्याह — **कर्तृ-मत्त्वे** इति **कल्प्यमन्तेन** । सम्यग्वादिभिस्तावदीश्वरः कर्ता, तस्य चा-प्रतिघातज्ञानादयो गुणाः —

> "ज्ञानमप्रतिघं यस्य वैराग्यं च जगत्पतेः ।
> ऐश्वर्यं चैव धर्मश्च सह सिद्धं चतुष्टयम् ॥"

इति कल्पिताः । नच तत्कल्पनायां युक्तिरपि साधीयसी दृश्यत इति सम्बन्धपरिहारे वक्ष्यामः । एवं मिथ्यात्ववादिनामपि दोषवत्कर्तृकल्पना निष्प्रमाणिकैव । तथा सति हि नाद्य यावद् वेदसम्प्रदायोऽनुवर्तेत । म-हता खलु प्रयत्नेन शिष्याचार्यपरम्परया वेदान् धारयन्तो दृश्यन्ते, तदर्थं चानुतिष्ठन्तः । तदनाप्तसन्दृब्धानामनुपपन्नं, तथा सति हि जातबाधैरचि-रादेव हीयेरन् । अतोऽस्मान्महाजनपरिग्रहादवगच्छामः न कर्तृमन्तो वेदा इति नतरां दोषवत्कर्तृका इति । मीमांसकैस्तु न किञ्चिद् दृष्टादधिकमि-ष्यते । शिष्याचार्यपरम्परया प्रतता हीदानीं वेदा दृश्यन्ते । ईदृशमेव सर्व-

---

१. 'र्थोश्वातु', १. 'दा न' ख. पाठः,

**एवम्भूतस्य वेदस्य ज्ञानोत्पत्तिं प्रकुर्वतः॥ ९९॥**
**स्वरूपविपरीतत्वसंशयौ भाष्यवारितौ।**
**निवारयिष्यते चापि दुष्टकारणकल्पना॥ १००॥**
**पुरुषाभावतस्तेन तद्द्वारेणाप्यशङ्कितौ।**
**तथा सत्यतथाभावो बुद्ध्यनुत्पत्तिमाश्रितः॥ १०१॥**

---

काले मीमांसकैरिष्यते। अतो न काचिन्मीमांसकानामदृष्टकल्पनेत्याह— मीमांसकैरिति॥ ९८½॥

तदस्यैवम्भूतस्य नित्यस्य वेदस्य ज्ञानं चोत्पादयतः स्वरूपविपरीतत्वं विपर्ययः संशयश्च भाष्यकारेणैव व्यक्तं निराकृतावित्याह— **एवम्भूतस्येति**। अयमभिप्रायः— एतावदेव हि प्रामाण्यं यदुत्पन्नमसन्दिग्धमबाधितं च प्रत्ययान्तरेण ज्ञानमिति। चोदनाजनितमपि ज्ञानमुत्पन्नं तावत्। संशयविपर्ययावपि भाष्यकारेणास्य वारितौ। एवं ह्याह— 'नच स्वर्गकामो यजेतेति वचनात् सन्दिग्धमवगम्यते भवति वा स्वर्गो न वेति। नचैष कालान्तरे देशान्तरे पुरुषान्तरेऽवस्थान्तरे वा विपर्येति। तस्मादवितथमि'ति। अतस्त्रिविधाप्रामाण्यविरहात् प्रामाण्यं चोदनाजनितज्ञानानामिति॥ ९९½॥

नन्वेवमपि कारणदोषाशङ्कायामप्रामाण्यमेवात आह— **निवारयिष्यत** इति **अभावतोऽन्ये**न। पुरुषाश्रया हि शब्दे दोषा इत्युक्तम्। ते चापौरुषेयत्वप्रतिपादनेनैव वेदाधिकरणे निराकरिष्यन्त एव। तच्चैवम्भूतस्येत्यनेन सूचितमिह विवृतम्। वक्ष्यमाण एवार्थः पूर्वमेवम्भूतशब्देनोक्त इति वेदितव्यमिति। एवञ्च साक्षादनुपजातावपि संशयविपर्ययौ कारणदोषाशङ्कयापि न वेदे शङ्कितव्यावित्याह— तेनेति॥ १००½॥

एवं तावदाक्षिप्तं भाष्यमुपेक्ष्यैव तदुपोद्घातभूतं स्वतःप्रामाण्यं प्रसाध्य वेदाः प्रमाणमिति सिद्धान्तितम्। इदानीं यत्तु 'ब्रवीती'त्यादिभाष्यमाक्षिप्तं, तस्याभिप्रायमाह— **तथेति**। अयं भाष्याभिप्रायः— अतथाभूतप्रतिज्ञया चोदनानामप्रामाण्यं प्रसाध्यते। तच्च त्रिविधमित्युक्तम्।

---

१. 'क्तमेव नि', २. 'प्रमाणं', ३. 'नमि', ४. 'वारयिष्य' ५. 'त्तु' ख. पाठः.

**तत्र विप्रतिषिद्धत्वं ब्रवीतीत्येवमादिना ।**
**यथादृष्टार्थवादित्वं तच्चेत् प्रत्ययितादिति ॥ १०२ ॥**
**इन्द्रियेति तु मूलं चेदस्यास्तीत्येवमब्रवीत् ।**

---

तदिह तावत् संशयविपर्ययलक्षणमप्रामाण्यं नास्तीत्यनन्तरमेव वक्ष्यामः । पारिशेष्याद् बुद्ध्यनुत्पत्तिलक्षणमेवाप्रामाण्यमाश्रित्यातथाभावः प्रतिज्ञात इत्यापतति । तत्रेदमुत्तरं 'विप्रतिषिद्धमिदमभिधीयते ब्रवीति च वितथं चे'-त्यादि । यदर्थं ज्ञापयति तद् ब्रवीतीत्युच्यते[1] । तद् यदि चोदना ब्रवीति, कथमसावज्ञानात्मकेन वैतथ्येनाभिभूयते । एवञ्च व्याख्यायमाने न बुद्धवाक्यानां प्रामाण्यप्रसङ्गः । नह्युत्पत्तिमात्रेण ज्ञानस्य प्रामाण्यमाश्रितं, येनायमुपालम्भो भवेत् । तेभ्यो हि ज्ञानमुत्पन्नमपि पौरुषेयवाक्यजनितत्वेन कारणदोषाशङ्कया अप्रमाणं भवति । नचेह तथा, अपौरुषेयत्वस्य वक्ष्यमाणत्वात् । इहापि च ब्रवीतीति च कर्तृविभक्त्या चोदनास्वातन्त्र्यस्य सूचितत्वात् । चोदना हि स्वतन्त्रैवार्थं ब्रवीति, नतु तया कश्चित् पुरुष इत्यभिप्राय इति ॥ १०१[2] ॥

अपरमपि 'यत्तु लौकिकं वचनं तच्चेत् प्रत्ययितात् पुरुषादिन्द्रियविषयं वा अवितथमेव तत् । अथाप्रत्ययितात् पुरुषादनिन्द्रियविषयं वा तत् पुरुषबुद्धिप्रभवमप्रमाणमे'ति भाष्यम् , अत्र प्रत्ययितपदं तावद् व्याचष्टे— **यथेति** । अयमर्थः— अत्र भाष्ये प्रत्ययितपदेन यथादृष्टार्थवादित्वमभिधीयते इति । इन्द्रियाविषयं वेत्यनेन तु तस्यैव मूलसद्भावः प्रतिपाद्यत इत्याह— **इन्द्रियेति** । तदयमत्र भाष्यार्थो भवति । यत्तु पौरुषेयवाक्यं निदर्शितं, तत्र विकल्प्य दूषणमभिधीयते । द्वेधा हि पौरुषेयं वाक्यं प्रत्ययितवाक्यमप्रत्ययितवाक्यं च । प्रत्ययितवाक्यं[3] च द्विविधं प्रमाणमूलं भ्रान्तिमूलं च । प्रत्ययोऽस्य संजात इत्येतस्मिन्नर्थे हि तारकादिस्मृतेरितजन्तं प्रत्ययितशब्दमाभियुक्ताः स्मरन्ति । द्वेधा च प्रत्ययः प्रमाणमप्रमाणं च । तदेवमेतावदेव प्रत्ययितरूपमवतिष्ठते यदसौ वदति तत्रावश्यं प्रत्ययोऽस्य सञ्जातः । यथादृष्टार्थवादीति यावत् । अत एवेन्द्रियाविषयं वेति सम्भवव्यभिचाराभ्यां विशेषणमर्थवद् भवति । इन्द्रियशब्देन च प्रत्यक्षद्वारेण सर्वप्रमाणान्युपलक्षयतीति । प्रमाणविषयविषयमिति लुप्तमध्यमपद-

---

१. 'ति चेद्यु', २. 'त', ३. 'क्यमपि' द्वि' ख. पाठः.

**द्रष्टृत्वसत्यवादित्वे तच्चेत् प्रत्ययितादिति ॥ १०३ ॥**
**दृश्यमानार्थवादित्वे स्यादनाप्तोक्तिसत्यता ।**
**एवं त्वेकाङ्गवैकल्यात् प्रत्युदादरणस्थितिः ॥ १०४ ॥**
**एकैकाभावमात्रे स्यादाप्तत्वैन्द्रियकत्वयोः ।**

---

श्वायमुष्ट्रमुखवद् बहुव्रीहिः । तद् यदि प्रमाणप्रतिपन्नविषयमाप्तवचो दृष्टान्तः तदा साध्यविकलः तस्यावैतथ्यात् । अथाप्रमाणमूलमनाप्तवाक्यं वा तद् यदि नाम वक्तृदोषदुष्टमप्रमाणं, न तेनोपमानेन नित्यं वेदवाक्यं वितथम् । मिथ्यात्वहेतोः पुरुषदोषस्य तत्रासम्भवात् । पुरुषबुद्धिप्रभवमिति चाप्रामाण्यबीजकथनम् । पुरुषबुद्धिप्रसूतं हि तत् । अतो यादृशं पुरुषेण बुद्धं न तदनुरूपं तेन वाक्यं प्रयुक्तमनाप्तेन वा विप्रलिप्सुना । विप्रलम्भाभिप्रायैव हि तस्य बुद्धिः । आप्तस्यापि भ्रान्तिः । अनाप्तवाक्यं च वक्तुः प्रमाणमूलमपि श्रोतुरप्रमाणमेव, विसंवादबाहुल्यादनाश्वासात् । अत एव च तस्य सदपि द्वैविध्यं नोपदर्शितमस्माभिः । अन्यतरविधानुपातिनोऽप्यनाप्तवाक्यस्याप्रामाण्यात् । अतएव वक्ष्यति 'शक्येऽप्यसत्ये मिथ्यात्वमि'ति ॥ १०२½ ॥

अन्ये तु द्रष्टृत्वसत्यवादित्वे प्रत्ययितपदार्थ इत्याहुरित्याह— द्रष्टृत्वेति । यथावस्थितार्थदर्शी यथादृष्टार्थवादी च पुरुषः प्रत्ययितपदेनाभिधीयत इति । एवं च प्रत्ययितस्याप्रमाणज्ञानासम्भवादनर्थकमिन्द्रियविषयं वेति विशेषणमित्यप्रत्ययितवचनविशेषणार्थमेवं[3] प्रयुक्तम् । ततश्चायमर्थो भवति— अनाप्तोक्तिरपि सत्या भवति यदि दृश्यमानार्थवाद्यनाप्तो भवतीत्याह — दृश्यमानेति ॥ १०३½ ॥

इदं तु व्याख्यानमनुपपन्नमित्याह — एवमिति । अयमर्थः— अत्र ह्यवैतथ्ये प्रत्ययितवाक्यमिन्द्रियविषयं चेतरस्योदाहृतम् । यथाहुः— 'प्रत्ययितस्य वचनमव्यभिचारिप्रमाणान्तरपूर्वकं यच्चोपलभ्यमानविषयमनाप्तस्ये'ति । तदत्र प्रत्ययितेन्द्रियविषयप्रत्युदाहरणे एकाङ्गवैकल्याद् या प्रत्युदाहरणस्थितिः, साप्तत्वैन्द्रियकत्वयोरेकैकाभावमात्र एव भवेत् । उभयाभावे तु द्व्यङ्गविकलं प्रत्युदाहरणमापद्येत ॥ १०४½ ॥

---

१. 'द्धं त' ग. पाठः. २. 'संविद्द्वै' ख. पाठः. ३. 'व यु' क. ख. पाठः.

**अप्रत्यायितपक्षे स्यादैन्द्रियस्याप्यसत्यता ॥ १०५ ॥**

**अनिन्द्रियत्वपक्षे वासत् प्रत्ययितभाषितम् ।**
**व्याहतग्रन्थतैवं स्यात् तस्मात् पूर्वेण सत्यता ॥**

---

यद्येकैकाभावमात्रे प्रत्युदाहरणम्, ततः किं जातमत आह — **अप्रत्यायिते**ति । अस्यार्थः — प्रत्ययितप्रत्युदाहरणे अथाप्रत्ययितादित्युच्यमाने प्रत्ययिताभावमात्रेण प्रत्युदाहरणं देयम् । तत्रैन्द्रियकस्येन्द्रियविषयस्यार्थस्य यत् प्रतिपादकं वाक्यं तस्याप्यसत्यता भवेत् । प्रत्ययिताभावमात्रेण ह्यसत्यता दर्शनीया । इन्द्रियविषयमपि चानाप्तस्याप्रत्ययितवाक्यमेवेति किं नासत्यम् । यदि त्वनिन्द्रियविषयमेवाप्रत्ययितवाक्यं प्रत्युदाह्रियते, तन्न । इन्द्रियविषयं वेत्यस्यानिन्द्रियविषयं वेत्यनेनैव प्रत्युदाहरणाद्, उभयंप्रत्युदाहरणे च ह्यङ्गवैकल्यप्रसङ्गात् । एवमिन्द्रियविषयप्रत्युदाहरणेऽप्यनिन्द्रियविषयं वेत्यत्रेन्द्रियविषयाभावमात्रेणासत्यता दर्शनीया । तत्र प्रत्ययितभाषितमपि तथाविधं सदसत्यं प्राप्नोति, तस्याप्यनिन्द्रियविषयत्वात् । अप्रत्ययितस्याप्यनिन्द्रियविषयमित्युच्यमाने पूर्ववद् ह्यङ्गविकलता । अनिन्द्रियत्वपक्ष इति । यदा प्रत्ययितवाक्यस्यानिन्द्रियत्वमनिन्द्रियविषयता भवति, तदा तस्याप्यसत्यत्वं प्राप्नोतीत्यर्थः ॥ १०५½ ॥

किमतो यद्येवमत आह — **व्याहते**ति । अयमर्थः — एवं हि पूर्वापरविरुद्धार्थाभिधानेन ग्रन्थो व्याहतो भवति । उदाहरणवेलायां हि प्रत्ययितवाक्यमनिन्द्रियमेव श्रोतुः प्रमाणमित्युदाहृतमाप्तप्रत्ययात् । तदिदानीमिन्द्रियविषयप्रत्युदाहरणेऽप्रमाणतयोच्यत इति व्याघातः । एवमनाप्तवाक्यमपि श्रोतुरिन्द्रियविषयं स्वप्रत्ययाश्रयणेन सत्यमित्युक्तम् । तत् प्रत्ययितप्रत्युदाहरणे मिथ्यात्वेनोच्यत इति पूर्वापरविरोधादग्रन्थतापत्तिः । अयं चात्र वार्त्तिककारस्याभिप्रायः — न तावत् प्रत्ययितशब्देन तथाभूतार्थदर्शित्वमुच्यते । यौगिको ह्ययं न सांविज्ञा(यि ? नि)कः । प्रत्यभिज्ञायमानावयवार्थान्वयपरित्यागे कारणाभावात् । प्रत्ययोऽस्य सञ्जात इति हि प्रकृतिप्रत्ययविभागमभियुक्ताः स्मरन्ति । द्वेधा च प्रत्ययः सम्यङ्मिथ्या चेति ।

---

१. 'णाभ्युपगमं ह्य' ख. पाठः. २. 'पीन्द्रि' क. पाठः. ३. 'वादिरव' ग. पाठः.

अतो न यथार्थदर्शी प्रत्ययितः । किन्तु यथादृष्टार्थवादी । सत्यवादीति यावत् । एषैव हि सत्यवादिता यो वाङ्मनसयोर्विसंवादविरहः । अत एव सत्यनियमे साक्षिणां

"सत्यं साक्ष्ये ब्रुवन्[३] साक्षी लोकानाप्नोति पुष्कलान् ।"

इति फलं दर्शयित्वा व्यतिरेके दोषं दर्शयन्तो मानवाः पठन्ति

"साक्षी दृष्टश्रुतादन्यद् विब्रुवन्नार्यसंसदि ।
अवाङ्नरकमाप्नोति प्रेत्य स्वर्गाच्च हीयते ॥"

इति । अत्र हि दृष्टश्रुताभिधानं सत्यमितरदसत्यमिति गम्यते । अतः सत्यवादितैव केवलं प्रत्ययितपदेनोच्यते न साधुद्रष्टृत्वमिति तस्यैवेन्द्रियविषयं वेति विशेषणं, नाप्रत्ययितवचसः, तद्धीन्द्रियविषयमप्यप्रमाणमेव । न चेदमवैतथ्यमात्रप्रदर्शनार्थम्, अप्रामाण्यानुमानस्य दृष्टान्ते साध्यवैकल्यप्रदर्शनार्थत्वात् । तस्य च प्रामाण्यप्रतिपादनमन्तरेण कर्तुमशक्यत्वात् । अत एव भाष्यान्ते 'तत् पुरुषबुद्धिप्रभवमप्रमाणमि'त्याह । एवं हि तदुपपद्यते । यदि पूर्वं प्रमाणतोक्तासीदनाप्तवाक्यं च श्रोतुः प्रमाणान्तरसङ्गतार्थमप्यप्रमाणं प्रागनिश्चयात् उपरिष्टादनुवादादाप्तवाक्यमपि नार्थं प्रमाणमिति चेत्, अयमपरोऽस्य दोषः । न क्वचित् पुंवचः प्रमाणं, क्व साध्यविकलता प्रतिपाद्यते । नच दृष्टान्तदूषणादर्थान्तरमस्य भाष्यस्य मनोहरमुपलभामहे । तदेवं तावन्न समुदायशक्त्या प्रत्ययितशब्दः साधुद्रष्टरि वर्तत इत्युक्तम् । स्यादेतत्—सञ्जातप्रत्यय एव प्रत्ययितः । प्रत्यय एव तु न सम्यक्त्वं व्यभिचरति, सर्वधियां यथार्थत्वात् अतो यथार्थविदेव प्रत्ययित इति । तन्न । वक्ष्यते हि वृत्तिकारग्रन्थवार्तिके यथार्थायथार्थज्ञानविभागः । एवं तावत् प्रत्ययितपदार्थानुसारेण नायमर्थो भाष्यस्य । यदि तु विकल्पवाचिवाशब्दानुपपत्त्यैवं व्याख्यायते प्रत्ययितविशेषणं हीन्द्रियविषयं चेत्यस्मिन् समुच्चयार्थो वाशब्दो भवेदिति । तन्न, अनेकार्थत्वान्निपातानाम् । दृष्टं हि निपातानामनेकार्थत्वम् । न तु प्रत्ययितशब्दस्य साधुदर्शिवचनत्वम् । अपि च समानोऽयमावयोरनुयोगः । तवापि हि प्रत्युदाहरणगतो वाशब्दः समुच-

१. 'क्षि', २. 'वान्तं' क. पाठः. ३. 'अत एव त' ग. पाठः. ४. 'दि द्वि' क. ग. पाठः. ५. 'वेत् । तदपि न. अ' ग. पाठः.

**परेण मूलसद्भाव इन्द्रियेण तु दर्शितः ।**
**अप्रामाण्यनिवृत्त्यर्थं दोषाभावोपवर्णनम् ॥ १०७ ॥**

---

यार्थ एव । न ह्यप्रत्यायितवाक्यमात्रमनिन्द्रियविषयमात्रं वा मिथ्या, भवत्सिद्धान्ते अप्रत्ययितेन्द्रियविषयानिन्द्रियविषयप्रत्ययितवाक्यसम्यक्त्वाभ्युपगमात् । अतो न कश्चिद् विशेषः । पूर्वापरविरोधमात्रमधिकमेवंवादिभिः स्वीकृतम् । यदि तूच्यते न प्रत्ययितप्रत्युदाहरणमथाप्रत्ययितादिति । किन्तु प्रत्ययितवाक्यमनपेक्षं प्रमाणमित्युक्तम्, इतरच्च स्वप्रमाणापेक्षं, तदेव तु अनिन्द्रियविषयमप्रमाणमिति 'अथाप्रत्ययितादि'त्यादिनोच्यत इति । तदयुक्तम् । यदैव हीन्द्रियविषयमनाप्तवाक्यं प्रमाणमित्युक्तं, तदैवार्थादिदमुक्तं भवति विपरीतमप्रमाणमिति किं तत्प्रदर्शनेन । यस्य तु प्रमाणोदाहरणे विशेषणद्वयमुपात्तं, तस्यैव तद्व्यतिरेके तत्कथनमर्थवत्[1] । प्रत्ययिताभावमात्र एव तावदप्रामाण्यम् । अप्रत्ययितस्य ह्यप्रतीतवादितयावधृतस्य वचनान्नैतदेवमिति विपर्ययः, कथञ्चिद् वा संशयो भवति । उभयथापि चाप्रामाण्यमेव । यद्यपि चात्र न शब्दः स्वमहिम्ना संशयहेतुः, तथापि वक्तरि क्वचिद् व्यभिचारदर्शनाद् यथायथं संशयविपर्ययौ भवतः । तावता चाप्रमाणमनाप्तवचः । प्रत्ययितस्य त्वनिन्द्रियविषयमप्रमाणमेव । तस्य हि निश्चयजनकं वचः स्वतःप्राप्तप्रामाण्यमेवापवाददर्शनादप्रमाणं भवति । एवंचोभयप्रत्युदाहरणोपपत्तिः । अतः सूक्तं परमते ग्रन्थव्याघात इति । यत इदं व्याख्यानमनुपपन्नमतः पूर्वव्याख्या साधीयसीत्याह — तस्मादिति । अस्यार्थः — **पूर्वेण** 'तच्चेत् प्रत्ययितादि'त्यनेन प्रत्ययितवाक्यस्य सत्यतोच्यते । **परेण** तु 'इन्द्रियविषयं वे'त्यनेन **मूलसद्भावो दर्शितः** । प्रत्ययितस्य वचो वक्तुरेव प्रमाणमूलं प्रमाणं, न श्रोतुरिन्द्रियविषयमनुवादप्रसङ्गादिति भाव इति ॥ १०६ ॥

नन्वेवं प्रत्ययितत्वेन प्रामाण्यं वदता भाष्यकारेण गुणत एव प्रामाण्यमुक्तं भवति । गुणो हि प्रत्ययितत्वमत आह— **अप्रामाण्ये**ति । दोषाभाव एवात्र प्रत्ययितत्वोपन्यासेनोपवर्णितः, न तु गुणादेव प्रामाण्यमिति ।

---

१. 'प्रमा' ग पाठः २. 'कश्च', ३. 'ह्यनृतवादितया' ख., 'ह्यप्रत्ययिततया' ग. पाठः.

**गुणात् प्रामाण्यमित्येवं तत् पूर्वं सुनिराकृतम् ।**
**पूर्वत्र प्रतिषिद्धत्वान्नैतत् प्रामाण्यकारणम् ॥ १०८ ॥**
**समुच्चयार्थो वाशब्दः पूर्वस्मिन्नुत्तरत्र च ।**
**विकल्पेनोभयोराह प्रत्युदाहरणे पृथक् ॥ १०९ ॥**
**शक्येऽप्यसत्ये मिथ्यात्वं दृष्टं सत्येऽप्यशक्तिके ।**

कस्मादेवं व्याख्यायते, अत आह — गुणादिति । वर्णितामिदं दोषाभावमात्रौपयिका गुणाः, न गुणतया प्रामाण्ये कारणमनवस्थाप्रसङ्गादिति । अतस्तदनुसारेणैव भाष्यव्याख्यानमुचितमिति ॥ १०८ ॥

ननु यदीन्द्रियविषयत्वं प्रत्ययितवाक्यस्य विशेषणमेव न राश्यन्तरस्य, कथं तर्हि विकल्पार्थवाची वाशब्दः, अत आह — **समुच्चयेति पूर्वस्मिन्नन्तेन** । पूर्वं तावत् समुच्चयार्थ एव वाशब्द इति । उत्तरस्तु विकल्पार्थ एवेत्याह — उत्तरत्रेति । उभयोः प्रत्ययितेन्द्रियविषयविशेषणयोर्विकल्पेन प्रत्युदाहरणे दर्शयतीति ॥ १०९ ॥

ते एव प्रत्युदाहरणे दर्शयति — **शक्येऽपीति** । असत्ये असत्यवादिनि[1] पुरुषे शक्येऽप्यर्थे यद् वाक्यं तस्य मिथ्यात्वं शक्यते ग्रहीतुमिति शक्ये अनतीन्द्रिये दृष्टार्थ इत्यर्थः । दृष्टसत्योऽपि प्रत्ययितो यदाशक्तिको भवति, प्रत्याय्यमानमर्थं ग्रहीतुमसम्भावितशक्तिरिति यावत् । तदा तद्वाक्यमपि मिथ्येति किं पुनस्तथाविधेऽर्थे प्रत्ययितो वाक्यं प्रणयति । बाढम् । यदा भ्राम्यति यथा श्रुतिविरोधबाध्यस्मृतिसिद्धान्ते स्मृतिनिबन्धनकारैः[3], यथा च[2] दृष्टार्थसंव्यवहार एवाप्तः कुतश्चिद् भ्रमनिमित्तात् कमपि संसर्गमारचयति तदसम्भवत्प्रमाणं वचो मिथ्या भवति । विप्रलिप्सा तु तस्य न सम्भवति । नच न भ्रान्तिरपि, ब्रह्मर्षीणामपि भ्रान्तिराशङ्क्यते, किमङ्ग पुनरर्वाचीनानामाप्तानामिति । अत्रापरं भाष्यम् 'अशक्यं हि तत् पुरुषेण ज्ञातुमृते वचनात्' इति । तत्र न विद्मः किं तद्वृत्तेन परामृश्यत इति । वाक्यं हि प्रकृतं, न तद् ज्ञातुमशक्यं सुज्ञानत्वात् । विषयस्तु समासान्तर्गतो न तावत् तदा निष्कृष्यपरामर्शमर्हति । विलिङ्गत्वाच्च । पुल्लिङ्गो हि विषयः नासौ नपुं-

१. 'असत्यवादिनि', २. 'ना' क. पाठः. ३. 'राः ।' ग. पाठः. ४. 'का',
५. 'देवमस' क. पाठः.

**नानेन वचनेनेह सर्वज्ञत्वनिराक्रिया ॥ ११० ॥**
**वचनाद्दत इत्येवमपवादो हि संश्रितः ।**
**यदि षड्भिः प्रमाणैः स्यात् सर्वज्ञः केन वार्यते ॥**

---

सकलिङ्गतच्छब्दपरामर्शार्हः । तस्माद् व्याख्येयमिदम् । तदुच्यते । ज्ञातु-मिति सामान्यतो ज्ञानसम्बन्धोपस्थापितं ज्ञेयं तदिति निर्दिशति । एत-दुक्तं भवति — यत् तदिन्द्रियाणामविषयभूतं ज्ञेयं, तत् पुरुषेण नर्ते वच-नाद् ज्ञातुं शक्यमिति समासान्निष्कृष्ट एव विषयार्थो ज्ञेयतया परामृश्यते । इदं च सर्वज्ञनिराकरणपरतया कैश्चिद् व्याख्यातं, तान्निराकरोति — ना-नेनेति । अस्याभिप्रायः — न तावदिह सर्वशब्दः श्रूयते सर्वे अर्था ज्ञातुं न शक्यन्त इति । न च सर्वज्ञनिराकरणं क्वचिदुपयुज्यते, धर्माधर्मज्ञाननिषे-धमात्रेण चोदनैवेति प्रतिज्ञासिद्धेरिति ॥ ११० ॥

अपिच न ज्ञातुं शक्यत इत्युक्त्वा वचनादृत इति पुनरपवादो भा-ष्यकारेणाश्रितः । अतोऽवगम्यते अतीन्द्रियज्ञानमेव भाष्यकारो वारयति, न तु सर्वज्ञानम् । अतीन्द्रियं हि वचनादृते ज्ञातुमशक्यमित्यभिप्रायेणाह — वचनादिति । अपिच भावाभावात्मकस्य जगतः पूर्वो भागो भावप्रमाणै-रुत्तरो भागोऽभावप्रमाणेनावगम्यते इति षड्भिः प्रमाणैः षोढा भिन्नं सर्वं प्रमेयमवगम्यत एवेति नायमीदृशः सर्वज्ञो निराकार्य एवेत्याह — य-दीति । नन्ववगतं तावद् नानेन सर्वज्ञो निराक्रियत इति । किं नामा-नेन क्रियते । पूर्वेण तावत् पौरुषेयापौरुषेयवाक्ययोर्मिथ्यात्वे हेतुसदसद्भावो दर्शितः । अंशे च साध्यविकलता । तदेतावतैव पर्यवसिते किमशक्यमित्या-दिनाशङ्क्य निराक्रियत इति न ज्ञायते । उच्यते — प्रत्ययितवाक्यमती-न्द्रियविषयमप्रमाणमित्युक्तम् । तत्रेदमाशङ्क्यते किमिदं प्रत्ययितवचनम-तीन्द्रियविषयमिति । अप्रतिहतदर्शनशक्तिरेव ह्याप्तः, स खलु काष्ठाप्राप्तज्ञान-प्रकर्षो धर्माधर्मावप्यपरोक्षमीक्षत एव, अतश्च न चोदनैवेत्यवधारणमुपपद्यते । तत्रेदमुत्तरमशक्यं हीति । नायमेतावानतिशयः कस्यचित् पुरुषस्य यदती-न्द्रियं विषयं द्रष्टुं वचनमन्तरेण शक्नोतीति । इदं च सूत्रकारेणैव प्रत्यक्ष-

---

१. 'नर्ते', २. 'तुमश', ३. 'मनेनाद्य' ख. ग. पाठः.

एकेन तु प्रमाणेन सर्वज्ञो येन कल्प्यते ।
नूनं स चक्षुषा सर्वान् रसादीन् प्रतिपद्यते ॥ ११२ ॥
यज्जातीयैः प्रमाणैस्तु यज्जातीयार्थदर्शनम् ।
भवेदिदानीं लोकस्य तथा कालान्तरेऽप्यभूत् ॥ ११३ ॥
यत्राप्यतिशयो दृष्टः स स्वार्थानतिलङ्घनात् ।

---

सूत्रे वक्ष्यमाणमनागतावेक्षणेन भाष्यकृता प्रतिज्ञासमर्थनार्थमुक्तम् । तदेव तु न्यायकथायाः क्षेत्रमिति तत्रैव विस्तरेण सर्वज्ञं निराकरिष्यामः ॥ १११ ॥

नन्वस्तु षड्भिः प्रमाणैः षट्प्रमेयवित् सर्वज्ञः । एकेनैव तु चक्षुषा सर्वगोचरं ज्ञानं जन्यत इति निराकार्यम्, अत आह— एकेनेति । अयमभिप्रायः — दिव्येन चक्षुषा सर्वं बुद्धो जानातीति ये वदन्ति, ते नूनं स्वयमपि चक्षुषा रसादीन् प्रतिपद्यन्ते । कथमपरथा स्वभावनियमं जानन्तो बुद्धचक्षुषः सर्वगोचरतामातिष्ठन्ते । एवं च सन्तु स्वयमेव सर्वसंविदः । किं परप्रत्ययाश्रयणेनेत्युपालभमानोऽतितुच्छतया नायं पक्षो निराकरणं प्रयोजयतीति दर्शयति । एष चानिराकरणच्छलेन निराकरणमार्ग एव वार्त्तिककृता दर्शितः शिष्यान् व्युत्पादयितुम् । इतरथा तु क्रियमाणोऽसङ्गत एव भवेदिति ॥ ११२ ॥

आह — यद्यप्यर्वाचीनानां चक्षुर्न सर्वगोचरं, तथापि बुद्धचक्षुः सातिशयं दिव्यमासीत् सर्वगोचरमिति किमनुपपन्नम्, अत आह — यज्जातीयैरिति । अस्यार्थः चक्षुरादिजातीयैर्हि प्रमाणै रूपादिजातीयस्य सम्बन्धस्य वर्तमानस्य चाद्यत्वे दर्शनमुपलभ्यते, अतः कालान्तरेऽपि तथैवाभूदिति युक्तम् । एवं हि दृष्टानुसारिणी कल्पना कृता भवति । प्रयोगश्च भवति — बुद्धचक्षुर्नातीतादिविषयं, चक्षुष्ट्वादस्मदादिचक्षुर्वत् । अचक्षुर्वा, अतीतादिविषयत्वात् शब्दवदिति ॥ ११३ ॥

नन्ववगतं तावत् प्रमातृभेदाद् दूरे दूरतरे च चक्षुः प्रकाशयतीति तत् काष्ठाप्राप्तप्रकर्षं सर्वं प्रकाशयिष्यति । ज्ञानस्यापि यथोत्तरं लोकशास्त्रयोर-

---

१. 'त्वस्याः क'. २. 'ण धर्मवन्निरा' ख. पाठः.

वक्ष्यति च — 'ईदृशं वा प्रकाशत्वं तस्ये'ति । अतोऽवश्याभ्युपगन्तव्यः संवित्तिसिद्धये प्रकाशभेदः । किमिदानीमसिद्धैव संवित् संवेद्यं साधयति संविदन्तरासिद्धा वा । न तावत् पूर्वः कल्पः । अप्रसिद्धा ह्यसती न संविद् व्यवहाराय घटत इत्युक्तम् । संविदन्तराधीनायां तु सिद्धावव्यवस्थापात इत्युक्तम् । सत्यम् । न संबिदन्तराधीनसिद्धिः संवित् संवेद्यं साधयति । स्वरूपसत्येव तु । कथमधीविषया सतीति चेद् , न धीविषयभावः सत्ता । किन्तु सामान्यमुत्पत्त्युत्तरकालभावि तद्गताम् । अतो मृत्सलिलप्रच्छन्नबीजादिवदविदितस्वरूपसामर्थ्यैव संविद् विषयं व्यवस्थापयति । स च व्यवस्थितः सत्यां जिज्ञासायां संविदं संविदन्तराधानेन साधयति । नन्वियं विषयसामर्थ्येन संवित्सिद्धिः प्रत्युक्ता 'वस्त्वन्तरं प्रकल्प्यं स्यात्' इत्यत्र यथा न प्रत्युच्यते तथानन्तरमेव वक्ष्यामः

"यावज्जिज्ञासितज्ञानादव्यवस्थापि नापतेत् ।"

इति । अतएव सहोपलम्भनियमोऽपि परैरुक्तोऽस्मान् प्रत्यसिद्ध एव । विषयवित्तिकाले संविदोऽनुपलम्भात् । विषयमात्रमेव हि इदं नीलमिति नश्चकास्ति, नाहं नीलमिति । संवित्प्रकाशे च तथा प्रकाशानुपपत्तिः । नहि स्वगोचरा संवित् परनिरूपणात्मिका भवति, स्वपरवेद्ययोरिदमहङ्कारयोरविशेषापत्तेः । अयं स्वात्मानमहमिति प्रतिनिर्दिशति परमिदमिति । नत्वभेदेनेदङ्कारमहङ्कारं चोभयमेकत्र प्रयुङ्क्ते । अतो नास्तीदं नीलमित्यत्र संविदुपलम्भ इत्यसिद्धो हेतुः । स्वप्रकाशसंविद्वादिनामेव त्वयमुपालम्भ इत्युक्तम् ।

स्यादेतत् । अज्ञातो ज्ञापकहेतुः कथं ज्ञापयतीति । नायं दोषः । अज्ञातस्यापि चक्षुषो ज्ञानजननोपलब्धेः । ननु चक्षुरङ्कुरस्येव बीजं ज्ञानस्य कारकमेवेति युक्तमज्ञातस्यापि जनकत्वम् । मैवम् । ज्ञानहेतोरेव ज्ञापकत्वसमाख्यानात् । अपि च न ज्ञानं ज्ञापकहेतुः ज्ञानत्वात् । ज्ञानस्य हि जनका धूमादयो ज्ञापकाः न ज्ञानमेवेति कथमज्ञापकस्य ज्ञापकधर्मा आपाद्यन्ते । स्वरूपसत्यैव संविदा विषयः साध्यते । सा तु पश्चाज्ज्ञानान्तरेण साध्यत इति । असति तु ग्राह्यत्वे संविदेव न सिध्येदित्यापाद्य ग्राह्यग्राहकत्वमेकत्वे दूषणमुच्यते 'नैकत्राद्वितीये तत् सिध्यती'ति । यदपि च संवेदनमसत्यभेदे नीलसंवेदनयोरनुपपन्नमिति । तदप्यनेनैव निराकृतम् ।

विदं रजतमिति । न च तत् स्मरणं, बाह्येन्द्रियापेक्षत्वात् । न च शुक्तिकैव तत्र प्रकाश्यत इति युक्तं वक्तुम्, अन्यतरप्रकाशस्यानन्यविषयत्वात् । इतरथानाश्वासात् । अतः क्वचिल्लब्धप्रकर्षेण चक्षुषैव सर्वमजातादि प्रकाशयिष्यते । अस्तु वा संयुक्तसंयोगात् सर्वार्थसन्निकर्षः । यदेव हि किञ्चिच्चक्षुषा सन्निकृष्यते, तेनैव प्रणाल्या संयुक्तं सर्वमिति संयुक्तसमवेतानामिवानिवार्यस्तत्संयोगिनां सन्निकर्षः । मैवम् । एवं हि न कश्चिदसर्वज्ञो भवेत्, सर्वस्य तथाविधसन्निकर्षाव्यभिचारात् । यत्त्ववर्तमानमपि चक्षुषो विषय इति, तन्न । शुक्तिरेव हि भ्रान्तौ चक्षुषो विषयः प्राप्यकारित्वात्, असन्निहितरजतप्राप्त्यसम्भवात् । इतरथा त्वनपेक्षितार्था एवासन्निहितरजतादिविभ्रमा भवेयुः । नचैवमस्ति, निराधिष्ठानविभ्रमादर्शनात् । कथं तर्हि तैमिरिकस्य केशदर्शनं, न हि तत् किञ्चिद् ग्राह्यमपेक्षते । असत्केशारोपप्रवृत्तेः । न । तत्राप्यालोकांशानां तथा प्रतिभासात्, सूक्ष्मत्वाच्च तेषामन्यदन्याकारतया गृहीतमिति न लक्ष्यते । कथमिदानीमन्याकारतया वेदनं, दोषेभ्य इति भाष्यकारो वक्ष्यति । समानं चेदमितरस्यापि । तवापि ह्यवर्तमानं रजतं वर्तमानतयावगम्यत इति समानोऽनुयोगः । यदि दोषतः, को दोषः शुक्तौ रजतानुभवस्य । शुक्तिरेव रजतानुभवस्य दोष इति चेत्, हन्तैवमर्थापेक्षिता चोपपादिता भवति । नेदं रजतमिति च प्रसक्ततद्रूप्यनिवारणेन बाधकज्ञानमितीदमेव साधु मन्यामहे यद् वर्तमानमवर्तमानरजताकारेणावसीयते, नो वर्तमानमेव रजतं वर्तमानतया । तस्मात् सिद्धं सन्निहितवर्तमानविषयमेव चक्षू रजतादीन् प्रकाशयतीति न तावच्चाक्षुषं प्रत्यक्षमनागतादीनामीक्षणाय क्षमते इति ।

स्यादेतत् —अस्तु चक्षुषो विषयनियमः प्राप्यकारित्वात् । मनस्तु सकलातीतादिविषयं किं नेष्यते इति मानसप्रत्यक्षगोचरा भविष्यदादयो भावा भविष्यन्तीति । तन्न । मनसो बहिरस्वातन्त्र्यात् । इतरथा त्वन्धाद्यभावप्रसङ्गात् । तस्यापि मनसो भावात् । कथं तर्हि प्रथमज्ञानप्रक्षयिणीन्द्रियव्यापारे

१. 'त्' , २. 'ज्ञो न भ' ग. पाठः.

**भविष्यति न दृष्टं च प्रत्यक्षस्य मनागपि ।**

---

द्वितीयक्षणोपलब्धिः न चेन्मनो बहिः स्वतन्त्रम् । न, तत्रापीन्द्रियव्यापाराविरामात् तज्ज्ञानाविरामोपपत्तेः । का कथा स्वप्ने । तत्र खलु वर्तमानतया विविधान् संसर्गान् मनो दर्शयति । न, स्मृतित्वात् । तत्र च मनसोऽस्वातन्त्र्यस्य वक्ष्यमाणत्वात् । कथं वर्तमानाभासः । दोषात् । व्यक्तश्च दोषो निद्रा । यथा वक्ष्यति 'निद्रा मिथ्याभावस्य हेतुरि'ति । कथमननुभूते स्मृतिरिति चेत् । वक्ष्यति 'अत्रजन्मन्येकत्रे'ति । नन्ववगतं प्रतिभासु मनसः स्वातन्त्र्यम् । केषाम् । यद्यर्वाचीनानां, न । तासां लिङ्गाद्याभासजत्वात् । प्रायः सहचरितहृदयप्रसादोद्वेगप्रभाविता हि प्रतिभा, नत्वैकान्तिकहेतुका । अत एवानिश्चयात्मिका बुद्धिः । अथ लोकोत्तराणां, न । तासामस्मदादिप्रतिभास्वभावानतिवृत्तेरिति वक्ष्यामः । विमतिपदं च लोकोत्तरत्वं नास्मदादिभिः क्वचिदाश्रयिष्यते । बाह्यलिङ्गादिनिरपेक्षे च बहिर्मनासे वर्तमाने सर्वस्यानपेक्षितोपायान्तरो मनोमात्रनिबन्धनः प्रसजन् सर्वबोधः केनापवर्तायेतुं शक्यते । अदृष्टविशेषाल्लिङ्गाद्यनपेक्षं बहिर्वृत्तिरिष्यत इति चेद्, न । इन्द्रियान्तरारम्भवैयर्थ्यात् । तत एव तत्तददृष्टविशेषाहितसंस्कारात् सर्वप्रतीतिसिद्धेः । तदपि वा व्यर्थम्, अकरणस्यैव वात्मनोऽदृष्टविशेषादेव प्रतीतिक्रियासिद्धेः । अथ नादृष्टमनुपायमर्थं साधयतीति मा भूत् शरीरारम्भवैयर्थ्यमिति । एवं तर्हि न लिङ्गाद्यनपेक्षमपि मनः क्वचिद् वर्तमानमुपलब्धमित्यस्तु तदपि बहिर्बाह्यापेक्षम् । अतो न मानसमपि प्रत्यक्षं भविष्यदादौ समर्थमिति सिद्धम् । भावनाबलजमपि सर्वज्ञनिराकरणक्षेत्रे निराकरिष्यामः, अवगतविषयत्वाद् भावनायाः । तथा सति च भावनावैयर्थ्याद्, अधिकस्य च ततोऽप्यसिद्धेः । अपिच भावनाबलजमक्षजं वा, न वा । न तावदक्षजमित्युक्तम् । सर्वाक्षशक्तिपरिक्षयस्यानन्तरमेवोक्तत्वात् । अनक्षजं तु न प्रत्यक्षम्, अन्वर्थत्वात् प्रत्यक्षशब्दस्य । अत एव न भविष्यति प्रत्यक्षस्य सामर्थ्यं दृष्टमित्याह—भविष्यतीति । प्रत्यक्षस्य हि न भविष्यद्विषयता, तद्विषयस्य वा न प्रत्यक्षतेत्यभिप्रायः ।

---

१. 'नःस्वा', २. 'ति दोषो मि' क. पाठः. ३. 'प्रवृत्तिसि' क., 'प्रतिपत्तिसि'. ४. 'पि बाह्यार्थे', ५. 'यमसमर्थं' ख. पाठः. ६. 'तर्हि इदमपि' क. पाठः. ७. 'ति भा', ८. 'द्धेः । भा', ९. 'असमर्थ' ख. पाठः.

प्रसङ्गो वर्णितः । न ज्ञानं चेतना, अपितु संवेदनमिति चेत् । अस्ति वानयोर्विशेषः । नन्वेवं नीलं जानाति संवेत्तीति च सह प्रयुज्येत, अर्थभेदेनापर्यायत्वादिति नात्ममनस्संयोगो ज्ञानम् । अतो न तत्प्रभावितं भावानां ज्ञातत्वम् । सोऽयमहेतुकः प्राप्यकर्मभावोऽर्थस्य ज्ञातताल्माजन्यो नावकल्पते । हेत्वभावेन कार्याभावप्रतिबद्धेन तदनुमानात् । सेयं प्रत्यक्षादीनामनुमानविरोधानुपपत्तिः । तानि ह्यर्थं प्रापयन्ति । हेत्वभावानुमानं च तत्प्राप्तिं प्रतिक्षिपति । सेयमनुपपत्तिर्ज्ञानकल्पनया समाधीयते । अस्ति कश्चिदात्मसमवायी ज्ञानसंवेदनादिपदपर्यायवाच्यो जानातिधातूपादानः क्रियाभेदो यस्मिन्नर्थानां प्राप्यकर्मतेति । ननु ज्ञानं गुणः गुणकाण्डे पाठात् न तु क्रिया । अतः कथं तस्यार्थः कर्मेत्युच्यते । नहि विभोरात्मनः स्पन्दसमवायः सम्भवति । नचापरिस्पन्दात्मिका क्रिया, पञ्चानामपि कर्मणां स्पन्दात्मकत्वात् । न । धात्वर्थमात्रस्य क्रियात्वात् । वक्ष्यति च—'क्रिया धात्वर्थमात्रं स्यात्' इति । बुध्यत इत्यादिभ्यश्च शब्देभ्यः क्रियाप्रत्यय एवोपजायमानो दृश्यते पूर्वापरीभावावगतेः । अतो युक्तैव ज्ञानकर्मता विषयाणां ज्ञानाकारवादिनाम् । अपिचावश्यमप्राप्तपूर्वस्य नीलादेः प्राप्तिर्वक्तव्या । अन्यथा प्रागिवोत्तरकालमप्यप्रतिभासमाने विषयाकारे आन्ध्यमेव जगतो भवेत् । भासते विषयाकारो न केनचित् प्राप्यत इति चेत्, कस्य भासते । यदि न कस्यचित्, किंकृतो व्यवहारभेदः । एको हि नीलं विद्वांस्तदुपाददानो दृश्यते । नापरो विद्वान् । सोऽयं स्वतन्त्रे नीले किंकृतो विशेषः । नहि स्वतन्त्रो भासमानः सर्व(स्या ? स्य)स्यान्न वा कस्यचिद् वनवह्निरिवानुपलभ्यमानः केनापि । अतोऽवश्यमस्य क्वचित् सन्ताने प्राप्तिर्वक्तव्या । तथाच 'यदाभासं प्रमेयं तदि'ति पठन्ति । नचाप्रमाकर्मणः प्रमेयता सम्भवति । अस्त्ययं प्रमेयादिविभागः, किन्तु भ्रान्तिपरिकल्पितः । तथाचोक्तम्— "अविभक्तोऽपि बुद्ध्यात्मा" इति । सत्यमुक्तम् । अयुक्तं तु तत् । एवंहि न किञ्चित् पारमार्थिकं नाम भवेत् । चिन्मात्रतापि हि प्रतीतिवशादेवाश्रीयते । तद्वदेव तु विषयाकारोऽपि भासमानः कथमपारमार्थिको भवेत् । तद्विपर्यस्तत्वे वा कथं संवित्स्वरूपमविपर्यस्तं भवेत् । उभयत्रापि बाधादर्शनात् । अतः संविदेवात्मनो भिन्नमर्थमिदमिति दर्शयन्ती नान्यथा वक्तुं शक्यत इति सिद्धमिदमिति बहिः प्रसिद्धो विषयो ज्ञानं साधयतीति ।

**सामर्थ्यं नानुमानादेर्लिङ्गादिरहिते क्वचित् ॥ ११५ ॥**

---

अथ ज्ञानाकारवेदन एवार्थवेदनाध्यवसानान्नार्थहानिः, कथमन्यवेदनेऽन्यवेदनाध्यवसायः । अविद्ययेति चेत् । अहो महानुभावः सर्वज्ञः, यस्येयमेतावती महाविषया अविद्या । वरमेकदेशदर्शिन एवैषामविद्याऽपि तावदल्पीयसी । किञ्च, इदं सर्वं क्रमेणावसीयते युगपद् वा, न तावत् पूर्वः कल्पः । अनन्तानामुत्पादवतां पूर्वापरकोटिविरहिणां च क्रमेणानुभवितुमशक्यत्वात् । अत एव न यौगपद्यम्, अनन्तानामजातादिवृत्तप्रत्युत्पन्नानां यौगपद्यासम्भवात् । अपिच किमिदं सर्वं नाम यद्विद्वान् सर्वज्ञो भवति, एकेन केनचिदुपाधिनावच्छिन्नभेदनादि सर्वशब्दवाच्यतया प्रसिद्धम् । न चैवमजातादयोऽर्था इति कथं सर्वपदार्थः । आनन्त्यं सर्वतेति चेत् । नन्वियमियत्तानवधारणात्मिकैवेति कथं तद्विदः सर्ववित्ता । अतः सिद्धं न किञ्चित् कस्यचित् सर्वगोचरं प्रत्यक्षमिति । यदपि प्रकर्षवतां काष्ठाप्राप्तिरवगता यथा वियति परिमाणस्येति ज्ञानमपि क्वचित् परिनिष्ठां गतं सर्वविषयं भवतीति । तदयुक्तं, प्रकर्षं खलु काञ्चित् काष्ठामधिष्ठाय सङ्गिरामहे यद् विरमतीति । असम्भावनीयपरावस्था तु काष्ठा इति हेतुरनैकान्तिकः । न खलु कार्यद्रव्यं घटमणिकादि सातिशयपरिमाणं विदितमपीमां दशामनुभवति, यतः परमसम्भावनीय एव महिमा । एवं तेनैव निरवशेषब्रह्माण्डोदरपरिपूरणादनवकाशमितरत् । अथ गुणधर्मोऽयमित्युच्यते, तन्न । एवमपि पूर्वदोषानतिवृत्तेः । गुणो हि गरिमा । न तस्यैतावत्तमतिशयं पश्यामः, यतः परमपरं न सम्भवतीति । यदि खलु सर्वगुरुभिः सम्भूयैकं किञ्चित् कार्यमारभ्यते, एवमेतत् सम्भवेदपि, न चैतदस्ति । यदपि नभसि परिमाणं निदर्शितं, तदयुक्तम् । परिमाणं नामावच्छेदः । तद् यद्यप्यस्त्याकाशे ततस्तदपि नासम्भावनीयपरावस्थमिति साध्यविकलता । अथानन्तमेव नभोऽभ्युपगम्यते, कथं तर्हि तत्र परिमाणं निदर्श्यते, परिमाणाभाव एवास्यानन्त्यम् । अतो विरुद्धमेवेदं परिमितमनन्तं चेति सूक्तं भविष्यति प्रत्यक्षमसमर्थमिति । इह च पूर्वभाग इन्द्रियाणां सर्वविषयत्वेनातिशयो वारितः । उत्तरस्मिन्

---

१. '[illegible]' ग. पाठः २. 'मुत्पत्तिमतां'. ३. 'वायौ' ख. पाठः. ४. [illegible] ५. 'व व' क. पाठः. ६. 'इतर' ग. पाठः.

**सर्वज्ञकल्पनान्यैस्तु वेदे चापौरुषेयता ।**
**तुल्यता कल्पिता येन तेनेदं सम्प्रधार्यताम् ॥ ११६ ॥**
**सर्वज्ञो दृश्यते तावन्नेदानीमस्मदादिभिः ।**

---

प्रत्यक्षज्ञानस्येति विवेक इति । प्रत्यक्षागोचरे भविष्यदादौ सर्वस्मिंस्तव्द्याप्त-लिङ्गदर्शनासम्भवादनुमानमपि न सम्भवति । सादृश्यान्यथानुपपद्यमानार्थ-दर्शनासम्भवाच्च नोपमानार्थापत्ती । अभावोऽपि न सर्वस्य कस्यचिदेवावग-म्यते, दृश्यादर्शनात्मको ह्यभावः । नतु सर्वं कदाचन दृश्यम् । शब्देनापि विस्तरेण सर्वार्थावधारणमसम्भावनीयमेवेत्यभिप्रायेणाह — नानुमानाद-रिति ॥ ११५ ॥

अत्र परैरुक्तं — नन्वियमसम्भावना नित्यवेदाभ्युपगमेऽपि समाना । नहि सम्भवत्यकृत्रिमं नाम वाक्यं भवतीति सर्वागमानां कृतकत्वेनाव-गतेः । तद्यथेदमागमनित्यत्वमसम्भावनीयमाश्रित्याभ्युदयनिःश्रेयसार्थमारम्भो वेदवादिनाम्, एवमितरेषामप्यदृष्टपूर्वसर्ववित्प्रामाण्येनेति न विशेषः । अत आह — **सर्वज्ञेति** । अयमभिप्रायः — सत्यमिदमुक्तं परैः । किन्तु सम्प्र-धारणीयमिदमस्ति अनयोः कल्पनयोस्तुल्यत्वं न वेति । येन कारणेन परै-स्तुल्यत्वमापादितं तेन कारणेनेदं तुल्यत्वमस्ति नास्तीति सम्प्रधारणीयम-स्माभिरिति ॥ ११६ ॥

तामिदानीं सम्प्रधारणामवतारयति — **सर्वज्ञ** इति । अयमभि-प्रायः — साधकबाधकप्रमाणतुल्यत्वे हि तुल्यत्वं भवति । न चेह तदस्ति । सर्वज्ञो हि न तावदस्मदादिभिरुपलभ्यते । अत एव नास्मज्जातीयैः, स्वभा-वनियमात् । एतदेवाभिप्रेत्यादिशब्दः प्रयुक्तः । अन्येषामप्यस्मद्विधानामस-र्वविदां न सर्वविज्ञानं सम्भवतीत्यभिप्रायः । एतच्चोपरिष्टाद् विवरिष्यत एव । वेदानां च न तावत् कर्ताद्यत्वे दृश्यते, पूर्वकोटेरनवगमात् । नच सम्भाव्यते, अतीन्द्रियार्थत्वात् । वक्ष्यत्येतत् "लोके सन्नियमात्—" (१.१.२६) इति । न चानुमीयते, अभावविरोधात् । असन्निकृष्टार्थविषयं ह्यनुमानं, वेदेषु चादृष्टार्थनिर्मितेष्ववश्यमेव निर्माता स्मर्येत । अतोऽदर्श-नादस्मरणाच्चावधृताभावस्य न कर्तुरनुमानं सम्भवति । एषैव च नित्यता

**निराकरणवच्छक्या न चासीदिति कल्पना ॥११७॥**
**न चागमेन सर्वज्ञस्तदीयेऽन्योन्यसंश्रयात् ।**
**नरान्तरप्रणीतस्य प्रामाण्यं गम्यते कथम् ॥ ११८ ॥**
**न चाप्येवम्परो नित्यः शक्यो लब्धुमिहागमः ।**
**नित्यश्चेदर्थवादत्वं तत्परे स्यादनित्यता ॥ ११९ ॥**

---

वेदानां यः कर्तुरभावः । अतः प्रमाणवती नित्यत्वकल्पना वेदानाम् । सर्वज्ञकल्पना तु न तथेति साधकबाधकतुल्यत्वाभावात् कथं तुल्यतेति । ननु नादर्शनमात्रादभावः सिध्यति सत्स्वपि विप्रकृष्टेषु सम्भवादनैकान्तात् । अपिच व्यापकनिवृत्तेर्व्याप्यनिवृत्त्या व्याप्तत्वात् तया व्याप्यनिवृत्तिरवधार्येतापि । अर्थाः प्रमाणस्य व्यापकाः । नच प्रमाणमर्थानां व्यापकमहेतुत्वादतादात्म्याच्च । अतो न प्रमाणनिवृत्तिमात्रेणाभावः सर्वविदोऽवगन्तुं शक्यते । अत आह -निराकरणवदिति । अयमभिप्रायः — प्रमाणाधीना हि वस्तुव्यवस्थितयः । न केनचित् प्रमाणेन सर्वज्ञ इदानीं तावदवगम्यते । नच कालान्तरेऽभूदिति कल्पयितुं शक्यते यथा निराकर्तुमनुमानेन कालत्वादिदानीन्तनकालवदिति । कारणाभावस्य च कार्याभावेन नियतत्वात् सर्वज्ञानकारणाभावेन तद्गोचरज्ञानकार्याभावानुमानाद्, ज्ञानकारणाभावस्य चानन्तरमुक्तत्वात् । अतो न प्रमाणनिवृत्त्या सर्वज्ञे संशयोऽपि दर्शयितुं शक्यते । निराकरणहेतुबलीयस्त्वेनाभावावगमादिति ॥ ११७ ॥

स्यादेतत् — नागमगम्यस्याभावः सर्वविदोऽवगम्यते, तद्विरोधादेव, अत आह — नचेति । कस्मादागमेन नावगम्यते । अत आह — तदीय इति । आगमो हि तदीयो वा तस्मिन् प्रमाणं, नरान्तरप्रणीतो वा । न तावत् तदीयः, अन्योन्याश्रयापत्तेः । सिद्धे हि बुद्धस्य सर्ववित्त्वे तदागमः प्रमाणं, तत्प्रामाण्याच्च तत्सिद्धिरिति । नरान्तरप्रणीतस्तु प्रमाणत्वेनानभिमत एवेत्याह — नरान्तरेति ॥ ११८ ॥

स्यादेतत् — नित्यागमगम्य एव सर्वज्ञः, श्रूयते हि 'सर्ववित्' 'सर्वस्य कर्ते'ति, अत आह— नचेति । अयमभिप्रायः — तात्पर्ये हि शब्दः प्रमाणं, न चैवम्परो नित्यागमो लब्धुं शक्यत इति । किम्परस्तर्ह्येत

**आगमस्य च नित्यत्वे सिद्धे तत्कल्पना वृथा ।**
**यतस्तं प्रतिपद्यन्ते धर्ममेव ततो नराः ॥ १२० ॥**
**योऽपीन्द्रियार्थसम्बन्धविषये सत्यवादिताम् ।**
**दृष्ट्वा तद्वचनत्वेन श्रद्धेयार्थेऽपि कल्पयेत् ॥ १२१ ॥**
**तेनापि पारतन्त्र्येण साधिता स्यात् प्रमाणता ।**
**प्रामाण्यं चेत् स्वयं तस्य कापेक्षान्येन्द्रियादिषु ॥**

---

आह — नित्यश्चेदिति । अयमभिप्रायः — यावान् कश्चित् सिद्धानुवादो[2] वेदो दृश्यते, असौ विध्यन्तरार्थ इत्यर्थवादाधिकरणे वक्ष्यते । तदयमप्यात्मज्ञानविधिशेष एवेति न स्वरूपे प्रमाणमिति तात्पर्ये को दोषः, अत आह — तत्पर इति । नहि नित्यो वेदो नरविग्रहमनित्यं सर्वज्ञं प्रतिपादयितुमर्हति, नित्यानित्यसंयोगविरोधात् । तदसावेवम्परोऽनित्य एव स्यादिति ॥ ११९ ॥

अयं च नित्यागमगम्यत्वे दोष इत्याह — **आगमस्येति** । यद्यङ्गीकृतो नित्य आगमः, किं सर्वज्ञकल्पनयेति । वृथात्वे कारणमाह — यत इति । नित्य एवागमो धर्मे प्रमाणं भविष्यतीति किं सर्वज्ञकल्पनान्तराश्रयणेनेति । इदं तु नित्यागमगम्यतानिराकरणं वेदवादिनामेव भ्रान्तिमपनेतुं, न नास्तिको वेदवेद्यं सर्वज्ञमिच्छतीति ॥ १२० ॥

यस्तु वदति — किं नः सर्वज्ञग्रहेण । बुद्धागमसत्यता हि नः साध्या । सा चैवमपि सिध्यत्येव, इन्द्रियादिसम्बन्धविषये हि ज्ञानमात्रक्षणिकत्वादौ बुद्धः सत्यवादी दृष्टः । अतस्तेनैव दृष्टान्तेन श्रद्धेयार्थेऽतीन्द्रियार्थविषयेऽपि बुद्धवचसः सत्यत्वमनुमीयते । एवं चैत्यवन्दनादीनामपि धर्मत्वं सिध्यतीति, तदेतदुपन्यस्यति — योऽपीति ॥ १२१ ॥

एतदपि दूषयति — तेनेति[3] । इन्द्रियादिसम्बन्धविषये हि प्रमाणान्तरपारतन्त्र्येण सत्यता दृष्टेति व्याप्तिबलेनातीन्द्रियार्थेऽपि पारतन्त्र्येण प्रमाणता भवतीति । पारतन्त्र्ये कारणमाह — प्रामाण्यमिति । अयमभिप्रायः — इन्द्रियादिसम्बन्धे विषये सत्यतेति ब्रुवाणेनार्थादिदमुक्तं भवति इन्द्रियादितन्त्रं प्रामाण्यमिति । स्वतःप्रामाण्ये तदपेक्षाया वैयर्थ्यात् । एतदुक्तं

---

१. 'वत् क', २. 'दो ह' क. पाठः. ३. 'ति प्र' क. ख. पाठः.

यथैवात्रेन्द्रियादिभ्यः परिच्छेदात् प्रमाणता ।
श्रद्धेयेऽपि तथैव स्यान्न स्वातन्त्र्येण लभ्यते ॥१२३॥
यथा च तेषां सत्यत्व सिध्यत्येतेन हेतुना ।
तथान्यानवबुद्धार्थप्रामाण्याभावसाधनम् ॥ १२४ ॥
अश्रद्धेयार्थसत्यत्वं श्रद्धेये चाप्यसत्यता ।
पूर्वज्ञानानुवादित्वं दृष्टान्तवदिहेष्यताम् ॥ १२५ ॥

---

भवति — नात्र मानान्तरमतन्त्रीकृत्य बुद्धवचनमात्रस्य सत्यतावगता । प्रमाणान्तरापेक्षायाः सर्वत्राव्यभिचारात् । अतो न क्वचिदपि स्वातन्त्र्येण प्रमाणता सिध्यतीति ॥ १२२ ॥

पारतन्त्र्यमेव विवृणोति — यथैवेति । सोऽयं धर्मविशेषविरुद्धो हेतुरिति ॥ १२३ ॥

न केवलं धर्मविशेषविरुद्धः, विरुद्धाव्यभिचारी चायं हेतुरित्याह — यथा चेति । शक्यते हि वक्तुं बुद्धवचनमतीन्द्रियेऽन्यानवबुद्धेऽर्थे न प्रमाणं, बुद्धवाक्यत्वात् क्षणिकादिवाक्यवदेव । तानि ह्यतीन्द्रियेऽर्थेऽप्रमाणान्येव । अयं चैक एव हेतुर्विरुद्धमर्थद्वयं न व्यभिचरतीतीदमेवैकवचनान्तविरुद्धाव्यभिचारिपदोदाहरणम् । हेतुद्वयं तु नैकवचनान्तपदवाच्यमित्यनुमाने वर्णयिष्याम इति । नच वाच्यं सत्यत्वमपि तावदयं हेतुः साधयतीति सिद्धो नः पक्ष इति । नहि वः सत्यतामात्रं साध्यं, श्रद्धेयार्थसत्यतायाः साध्यत्वात् । अत एवोक्तं 'श्रद्धेयार्थेऽपि कल्पयेद्' इति ॥ १२४ ॥

तदयमश्रद्धेये सत्यतां श्रद्धेये चासत्यतां साधयन् नेष्टसाधनाय वः प्रभवति । अस्माकमेव तु श्रद्धेये सिसाधयिषितामसत्यतां बुद्धवचसः साधयन्नयं हेतुरनुगुण इत्यभिप्रायेणाह — अश्रद्धेयेति । विशेषविरुद्धतामेव पूर्वोक्तां विवृणोति — पूर्वेति । दृष्टान्तानुसारेण हि हेतुर्गमको भवति । तत्र वः पूर्वज्ञानानुवादिता दृष्टेति तद् व्यभिचारात् श्रद्धेयार्थस्यापि बुद्ध-

---

१. 'येऽनवबु' क. ख. पाठः. २. 'वत् । ता', ३. 'मेव वि', ४. 'दार्थोदा', ५. 'न वा' क. पाठः. ६. 'षि' ग. पाठः.

अपिचालौकिकार्थत्वे सति पुंवाक्यहेतुकम् ।
मिथ्यात्वं वेदवाक्यानां स्यादन्योन्यं सपक्षता ॥
धर्माधर्मातिरिक्तार्थे प्रामाण्यं च प्रसज्यते ।
सांख्यादिषु च जीवत्सु दृष्टान्तो दुर्लभोऽस्य च ॥
अलौकिकार्थवाचित्वं नृवाक्यत्वे सतीति च ।
परस्परमपेक्ष्यैव बौद्धादेः स्यान्मृषार्थता ॥ १२८ ॥
वदेदेवं च यो नाम वादी प्रथमसङ्गतः ।
तस्यापि हेतुः स्यादेष भवन्तं प्रत्यसंशयम् ॥ १२९ ॥

---

वचसः पूर्वज्ञानानुवादित्वमेवायं साधयेत् । स्वातन्त्र्यं तु प्रमाणताया विशेषं विरुन्ध्यादिति ॥ १२५ ॥

अपिच य एव कश्चिद् वेदबाह्यः पाषण्डोऽनेन हेतुना पौरुषेयागमानां सत्यत्वं सिसाधयिषति, तस्यैव सप्रतिसाधनोऽयमन्योन्यदृष्टान्तोपदर्शनेन हेतुर्भवतीत्याह — अपिचेति । बुद्धवचनमतीन्द्रियार्थं मिथ्या, अलौकिकार्थत्वे सति पुंवाक्यत्वाद् दिगम्बरागमवत् । सोऽपि तत एव मिथ्या, बुद्धागमवदित्यन्योन्यसपक्षतेति ॥ १२६ ॥

अविशेषितेनैव वा पुंवाक्यत्वेन हेतुना धर्माधर्मातिरिक्तेऽर्थे प्रामाण्यं प्रसज्यत इत्याह — धर्मेति । अत्र च धर्माधर्मयोः प्रामाण्याभाव एव साध्यः । नातिरिक्तार्थे प्रामाण्यं, तस्य सिद्धत्वादिति । यदपि क्षणिकादिवाक्यं दृष्टान्ततयोक्तं, तदपि सांख्यादिषु प्रतिपक्षिषु जीवत्सु साध्यविकलमित्याह — सांख्यादिष्विति । सर्वनित्यत्ववादिनो हि सांख्याः । ते यावन्न निर्जिताः, तावत् कथं क्षणभङ्गवाक्यं सत्यतयोपन्यस्यते । यथा चेदमसत्, तथा शब्दाधिकरणे वक्ष्याम इति ॥ १२७ ॥

अलौकिकार्थवादिता वा पुंवाक्यत्वविशेषिता सत्यत्वानुमानं प्रतिहन्ति परस्परागमदृष्टान्तेनैवेत्याह — अलौकिकेति । विशेषणविशेष्यभाव्यत्यययोऽतिरेक इति ॥ १२८ ॥

प्रतिहेतुप्रसङ्गेनेदानीं यदपि सर्वज्ञप्रसाधनार्थं परैरनुमानमुक्तं सर्व-

---

१. 'त्ययोरति' क. पाठः.

**बुद्धादीनामसार्वज्ञ्यमिति सत्यं वचो मम ।**
**मदुक्तत्वाद् यथैवाग्निरुष्णो भास्वर इत्यपि ॥ १३० ॥**
**प्रत्यक्षं च मदुक्तत्वं त्वया साध्या तदुक्तता ।**
**तेन हेतुर्मदीयः स्यात् सन्दिग्धासिद्धता तव ॥ १३१ ॥**
**प्रत्यक्षाद्यविसंवादि प्रमेयत्वादि यस्य च ।**
**सद्भाववारणे शक्तं को नु तं कल्पयिष्यति ॥ १३२ ॥**

---

ज्ञोऽस्मीति बुद्धेन यदुक्तं सत्यमेव तत् तदुक्तत्वाद् यथा ज्योतिरुष्णमापो द्रवा इति, तदपि प्रतिहेतुविरुद्धमिति सर्वज्ञदूषणमेवोपसङ्क्रम्याह — **वदे-दिति** । यो वादी पूर्वमसङ्गत एवागत्यैवम्भूतं वक्ष्यमाणं यद् वदति तस्याप्येष वक्ष्यमाण एव भवदुक्तहेतुसदृशो भवन्तं प्रति मुक्तसंशयं हेतुर्भवति । प्रथमसङ्गतिरनैकान्तिकाशङ्कानिराकरणार्था । चिरसङ्गतो हि कदाचिन्मिथ्या भाषते इति ॥ १२९ ॥

प्रतिहेतुमेव प्रयोगेण दर्शयति — **बुद्धादीनामिति** ॥ १३० ॥

कथं पुनरयं मुक्तसंशयः, अत आह — **प्रत्यक्षमिति** । बुद्धोऽसर्वज्ञ इति वचसो मदुक्तत्वं प्रत्यक्षसिद्धमसन्दिग्धमेव । दृष्टान्ते चाग्न्युष्णत्वादिवाक्ये तत् प्रत्यक्षसिद्धमेवेति सूक्तमसंशयमिति । सर्वज्ञोऽस्मीति वचनं बुद्धोक्तं न वेति न निश्चेतुं शक्यम् । न खल्वेतावदत्युद्धतानृतं प्रेक्षापूर्वकारी भाषत इति सम्भावयामः । सेयमस्य वचसो दृष्टान्तानां च क्षणिकादिवाक्यानां बुद्धोक्तता नासाधिता सिध्यतीति बौद्धेन साध्येत्याह — **त्वया साध्येति** । किमतो यद्येवमत आह — **तेनेति** । अयमभिप्रायः — नानयोर्हेत्वोस्तुल्यतया संशयहेतुत्वम् । किन्तु अस्मदीयो हेतुः स्वयं सिद्धः, प्रसिद्धव्याप्तिकश्च, दृष्टान्तश्च[1] न हेतुविकल इति सिद्धो नः पक्षः । तव तु सन्दिग्धासिद्धो हेतुः, दृष्टान्तश्च सन्दिह्यमानहेतुसद्भाव इत्यप्रसिद्धाङ्गकमनुमानं न साध्यसिद्धये प्रभवतीत्ययमावयोर्विशेषः सम्पद्यत इति ॥ १३१ ॥

किञ्च, अतिस्थवीयानयं सर्वज्ञवादः, येनात्यन्तप्रसिद्धैरपि प्रमेयत्वादिहेतुभिः शक्यते निराकर्तुमित्याह — **प्रत्यक्षेति** । प्रमेयत्वादयो हि

---

1. 'सिद्धमेव' क. पाठः.

**नचापि स्मृत्यविच्छेदात् सर्वज्ञः परिकल्प्यते ।**
**विगानाच्छिन्नमूलत्वात् कैश्चिदेव परिग्रहात् ॥१३३॥**
**सर्वज्ञोऽसाविति ह्येव तत्काले तु बुभुत्सुभिः ।**
**तज्ज्ञानज्ञेयविज्ञानरहितैर्गम्यते कथम् ॥ १३४ ॥**

---

प्रमाणान्तराविरुद्धा बुद्धे सिद्धाः शक्नुवन्ति तस्य सर्वज्ञतां वारयितुम् । नचात्र विपक्षे बाधकप्रमाणाभावादसिद्धा व्याप्तिरिति वाच्यम् । सर्वज्ञानकारणाभावेन सर्वज्ञासम्भवस्योक्तत्वादिति ॥ १३२ ॥

नन्वस्तीयं चिरप्रवृत्ता बुद्धः सर्वज्ञ इति दृढा स्मृतिः, तदस्या एव बुद्धेर्दृढिम्नः सर्वज्ञप्रमाणमनुमास्यामहे, अत आह — नचेति । किमिति नानुमीयते, अत आह — विगानादिति । अविगीता हि स्मृतिर्मूलमुपस्थापयति । सर्वज्ञस्मृतिं तु नास्तिका एव परस्परं विगायन्ति सर्वविच्छेदानाश्रयन्तः । वेदवादिनस्त्वत्यन्ताय सर्वज्ञं निराकुर्वन्तीति । ननु समानमिदं विगानं मन्वादिस्मृतिष्वपि, ता अपि नास्तिका विगायन्ति, अत आह — छिन्नेति । अयमभिप्रायः — स्मृतिर्हि पूर्वज्ञानकार्यतयावगता कारणभूतं पूर्वविज्ञानमनुमापयति । असन्निकृष्टार्थगोचरं ह्यनुमानं भवति । इह च सर्वज्ञानकारणाभावात् छिन्नं पूर्वविज्ञानं स्मृतिमूलतया असम्भावितमिति वैपरीत्यपरिच्छेदाद् नानुमानावकाशः । वेदसंयोगस्तु त्रैवर्णिकानां सम्भवतीति स शक्यो मन्वादिस्मृतिमूलतया कल्पयितुमिति । विगानं विवृणोति — कैश्चिदिति । इदं चान्वारुह्यवचनम् । यदि हि सर्वाविगानं भवेद्, एवमपि या काचित् कल्पना स्यात् । नचैतदस्ति, कैश्चिदेव महाजनैकदेशभूतैर्बुद्धादिभिः सर्वज्ञतायाः परिग्रहादिति ॥ १३३ ॥

छिन्नमूलतां विवृणोति — सर्वज्ञ इति । स्मृतिदार्ढिम्ना हि एकेन सर्वज्ञो ज्ञात इति कल्पनीयं, स एव तु सर्वज्ञं ज्ञातुं समर्थः यः सर्वविद् वेद्यं जानाति । यावद्ध्येतावदेव सर्वमिदं च बुद्धो जानातीति न ज्ञायते, न तावदसौ सर्वज्ञ इत्यवधारयितुं शक्यते । न च बुद्धादर्वाचीनः सर्व-

---

१. 'च्यम्, प्रगेयत्वस्य ? सर्व' क. पाठः. २. 'त इति'. ३. 'तं नि'. ४. 'चा' ग. पाठः. ५. 'वावच्छि'. ६. 'छेदेन ना' क. पाठः.

कल्पनीयाश्च सर्वज्ञा भवेयुर्बहवस्तव ।
य एव स्यादसर्वज्ञः स सर्वज्ञं न बुध्यते ॥ १३५ ॥
सर्वज्ञोऽनवबुद्धश्च येनैव स्यान्न तं प्रति ।
तद्वाक्यानां प्रमाणत्वं मूलाज्ञानेऽन्यवाक्यवत् ॥१३६॥
रागादिरहिते चास्मिन् निर्व्यापारे व्यवस्थिते ।
देशनान्यप्रणीतैव स्यादृते प्रत्यवेक्षणात् ॥ १३७ ॥

---

विदिति नास्य सर्वज्ञानकारणमस्ति । न चानवगतं स्मर्तुं शक्यते । अतोऽसम्भावितमूलैवञ्जातीया स्मृतिरप्रमाणमेवेति ॥ १३४ ॥

यदि तु बुद्धादन्योऽपि कश्चिदेकः सर्वज्ञः तेन च सर्वज्ञो बुद्ध इति ज्ञात्वा स्मृतं तत एषा स्मृतिपरम्परा प्रवृत्तेत्युच्यते, एवं सति तत्सर्वज्ञता विना सर्वज्ञे(न) नावगन्तुं शक्यते इति सर्वज्ञानन्त्यमित्याह — कल्पनीया इति । अत्र कारणमाह — य एवेति ॥ १३५ ॥

एवं तावत् सार्वज्ञ्यं दुर्ज्ञानमित्युक्तम् । तदनवगमे च सर्वज्ञागमप्रामाण्यमपि न सिध्यतीत्याह — सर्वज्ञ इति । सर्वज्ञप्रणीतता हि तदागमप्रामाण्यमूलं, तदनवगमे च न यादृशतादृशपुरुषवाक्यवत् सर्वज्ञागमप्रामाण्यमध्यवसातुं शक्यत इति ॥ १३६ ॥

दूषणान्तरमाह — रागादीति । अयमभिप्रायः — आगमप्रणयनं हि रागाद् वा कश्चिदनुग्रहीतुं द्वेषाद् वा निग्रहीतुं सम्भवति । बुद्धस्तु प्रक्षीणाखिलरागद्वेष इति नास्यागमप्रणयने किञ्चित् कारणमुपलभ्यत इत्यन्यप्रणीतैव धर्माऽतिदेशनेति वक्ष्यमाणेन सम्बन्धः । नन्वयं परमकारुणिकः तद्वश एव दुःखोत्तरान् प्राणिनो दृष्ट्वा दूरं दूयमानमानसो हिताहितप्राप्तिपरिहारोपायोपदेशान् प्रणयतीति किमनुपपन्नमत आह — निर्व्यापार इति । अयमभिप्रायः — प्रत्यक्षं हि तद् योगिनः सर्वविषयं ज्ञानमिष्यते । तच्च कल्पनापोढम् । अतो यदा ध्यानस्तिमितलोचनो जगदखिलमविकल्पेन विलोकयमानोऽवतिष्ठते, तदास्यास्मृतशब्दादिसम्बन्धस्य विवक्षाप्रयत्नताल्वादिव्यापारासम्भवान्न कथञ्चिदप्यैरनृतस्य देशनाप्रणयनं सम्भवतीति कारुणिकोऽप्युपेक्षितैवेरयः प्रणीतैव देशना भवेदिति । अपि च यावदिदं

---

१ 'धर्माभिदेश इ', २. 'प्युत्थितस्य' ग. पाठः.

सान्निध्यमात्रतस्तस्य पुंसश्चिन्तामणेरिव ।
निस्सरन्ति यथाकामं कुड्यादिभ्योऽपि देशनाः ॥
एवमाद्युच्यमानं तु श्रद्दधानस्य शोभते ।
कुड्यादिनिस्सृतत्वाच्च नाश्वासो देशनासु नः ॥१३९॥
किन्तु बुद्धप्रणीताः स्युः किमु कैश्चिद् दुरात्मभिः ।
अदृश्यैर्विप्रलम्भार्थं पिशाचादिभिरीरिताः ॥ १४० ॥
एवं यैः केवलं ज्ञानमिन्द्रियाद्यनपेक्षिणः ।

वृत्तम्, इदं वर्तिष्यत इति न प्रत्यवेक्षते, न तावदागमो निर्मातुं शक्यते। न चैतदप्यनुत्थितस्य सम्भवतीत्यभिप्रायेणाह — ऋत इति । तदिह कारणत्रयमप्यन्यप्रणीतत्वे देशनानामुक्तमित्यनुसन्धातव्यम् । स्यादेतत् । व्युत्थायोपदेक्ष्यतीति, तन्न । व्युत्थितस्य अभिलापिनी प्रतीतिर्भ्रान्तिरिति भ्रान्तभाषितमप्रमाणं भवेदिति ॥ १३७ ॥

स्यादेतत् — बुद्धानुभावादसत्येव तत्प्रयत्नविशेषे कुड्यादिभ्योऽपि देशना धर्मोपदेशा निर्गच्छन्तीति । तदिदं नाश्रद्दधाना वेदवादिनो बुध्यामहे । वयं हि वस्तुस्वभावमनतिक्रामन्तो यज्जातीयो यतः सिद्धः ततस्तत्सिद्धिमनुजानीमहे । ग्रन्थसन्दर्भश्च विवक्षाप्रयत्नवाय्वीरणताल्वादिसंयोगविभागपूर्वक एवावगत इति न ध्यानस्तिमितान्तःकरणयोगिसन्निधानादेव सिध्यतीति सम्भावयामः । तदेतदाह — सान्निध्येति सार्धेन । (श्रद्दधानस्य कुत इत्यर्थः ? ।) अपिच, आप्तप्रत्ययानुसारी शब्दान्निर्णय इति न कुड्यादिनिस्सृताभ्यो देशनाभ्य आश्वासो भवेदित्याह — कुड्यादीति ॥ १३९ ॥

किञ्च बुद्धप्रणीतत्वेऽपि नाश्वासः । एवं च संशेमहे — किं बुद्धानुभावान्निस्सृता इमा देशनाः, आहोस्वित् पिशाचादिभिर्दुरात्मभिरदृश्यैरीरिता इत्याह — किन्त्विति । अदृश्यातिवाहिकायोनिजदेहाः पिशाचा इति पुराणेषु गीयते । तन्मतेनेदमुक्तमिति । एवंच संशयानेभ्यो देशना न प्रमाणं भवेयुरिति भावः ॥ १४० ॥

अन्यदर्शनं — बोधस्वभावः पुरुषो भवान्तरीयकर्मार्जितदेहेन्द्रिया-

१. 'र्व एवागतः' क. पाठः. २. 'वानि' ग. पाठः.

**सूक्ष्मातीतादिविषयं जीवस्य परिकल्पितम् ॥ १४१ ॥**
**नर्ते तदागमात् सिध्येन्न च तेनागमो विना ।**
**दृष्टान्तोऽपि न तस्यान्यो नृषु कश्चित् प्रवर्त्तते ॥ १४२ ॥**
**नित्यागमावबोधोऽपि प्रत्याख्येयोऽनया दिशा ।**

---

दिवशः क्वचिदेव किञ्चिच्च जानाति । निरवशेषितशेषकर्माशयस्तु विगलितनिखिलकरणकलेवरादिप्रपञ्चः केवलीभूतो विश्वमेव सूक्ष्मातीतादिभेदभिन्नमपरोक्षमीक्षते । तच्च केवले जीवे जातं केवलज्ञानमाचक्षते । एवंवादिभिश्च मुक्तात्मनामेव सर्वगोचरज्ञानमाश्रितं, तदेतदुपन्यस्यति — **एवमिति** ॥ १४१ ॥

एतदपि दूषयति — **नर्ते** इति । अयमभिप्रायः — सुभाषितमिदं मुक्तो विश्वं जानातीति । सा खलु जीवानां तादृशी दशा 'स एष नेति नेती'ति सकलभेदप्रपञ्चविलयनेनैव तावदुपलभ्यते वेदान्तेष्विति तदतिरिक्तातीतादिज्ञातव्याभावात् कथं सर्वज्ञता । यदि त्ववधीर्य वेदान्तान् स्वागमप्रामाण्याश्रयणेन मुक्तानां तथाविधं ज्ञानमिष्यते, तन्नासत्यागमप्रामाण्ये सिध्यति । नचासर्वज्ञप्रणीत आगमः प्रमाणं सम्भवतीति सर्वज्ञसिद्धावागमप्रामाण्यं, तत्सिद्धौ च सर्वज्ञसिद्धिरितीतरेतराश्रयं भवतीति । यदि तु क्वचित् तथाविधेन ज्ञानेन व्याप्तं लिङ्गमुपलभ्येते, एवमनुमानेन ज्ञानसिद्धावितरेतराश्रयपरिहारो भवेत् । न तु तस्य ज्ञानस्य लोके कश्चिद् दृष्टान्तो भवतीत्याह — **दृष्टान्त** इति ॥ १४२ ॥

एवं तावद् यैः पुरुषातिशयमाश्रित्य तत्प्रत्ययेनागमप्रामाण्यमाश्रितं, तान् प्रत्युक्तम् । इदानीं ये वदन्ति — नित्य एवायमागमः कस्यचित् प्रथममार्षज्ञानेनावबुद्धो भवतीति, तान् प्रत्याह — **नित्यागम** इति । किं पुनरयं नित्यागमवाद एव निराक्रियते । अत्रापि शब्दैकप्रमाणकावेव धर्माधर्मौ । एतावांस्तु विशेषः । यदेकस्यैव कस्यचिदृषेरपगतसकलकल्मषस्याभ्रष्टभवान्तरीयसंस्कारस्यादावेव वेदाः प्रादुर्भवन्ति । ते च तेनापरेभ्यः प्रतिपाद्यन्ते तैरप्यन्येभ्य इत्येवं शिष्याचार्यपरम्परया आभूतसंप्लवं तिष्ठन्ति । एवमेव पुनः सृष्टावप्यार्षदर्शनेनैव वेदसंव्यवहारः प्रव-

---

१. 'कैवल्यज्ञा' ग. पाठः. २. 'भ्येत, ए' क. पाठः.

**नहि तत्रापि विस्रम्भो दृष्टोऽनेन कुतोऽथवा ॥ १४३ ॥**
**सर्वदा चापि पुरुषाः प्रायेणानृतवादिनः ।**
**यथाद्यत्वे न विस्रम्भस्तथातीतार्थकीर्तने ॥ १४४ ॥**
**स्वप्नादिज्ञानवच्चापि प्रत्ययोऽस्यागमार्थयोः ।**
**भवेदिति सशङ्कानां प्रामाण्यं गम्यते कथम् ॥**

ते इति न कश्चिद् विशेषः । तस्माद् वाच्यो निराकरणाभिप्रायः । स उच्यते — तत् खलु सृष्ट्यादावृषेर्ज्ञानं ग्रहणं स्मरणं वा । ग्रहणमपि प्रमाणमप्रमाणं वा । न तावदप्रमाणादर्थतथात्वनिश्चयः । प्रमाणं तु ना प्रत्यक्षं सम्भवतीति किं तन्निराकरणेन । यदि तु साक्षात्कारिप्रत्यक्षमेत- दृषीणामाश्रीयते, तथा सत्यनुच्चारितशब्दश्रवणादतीन्द्रियदर्शनमेवापतितम् । अत एवाहुः —

"अतीन्द्रियानसंवेद्यान् पश्यन्त्यार्षेण चक्षुषा ।
ये भावान् वचनं तेषां कोऽतिक्रामितुमर्हति ॥"

इति । अतो निराकार्य एवायं सिद्धान्तः । एवं हि तुल्यन्यायतया धर्मा- धर्मावपि कश्चिदपरोक्षयेत्, ततश्च चोदनैवेति प्रतिज्ञाहानिः । अत एवो- क्तम् — अनया दिशेति । सर्वज्ञनिराकरणदिशेत्यर्थः । एतेन तुल्यतामन- योर्दर्शयति अयमपि सिद्धान्तपरिपन्थीति । स्मरणं तु परस्तान्निराकरि- ष्यत इति । अपिचेदमार्षदर्शनं कृतकाशङ्कामप्यापादयतीति निराकार्यमि- त्याह — नहीति ॥ १४३ ॥

ननु तद्वचनादेव निश्चयो भविष्यति, अत आह — **सर्वदेति** । श्रूयते खलु 'अनृतवादिनी वागि'ति । जैमिनिरपि प्रायानृतवादितां वाचो वक्ष्यति — "प्रायात्" इत्यत्र । अतोऽद्यत्वेऽनृतवादिबाहुल्यात् कालान्तरे- ऽप्यविस्रम्भ इति ॥ १४४ ॥

आपिच, एतदकस्मात्प्रतिभानं स्वप्नवद् भ्रान्तिरित्यपि वक्तुं शक्यत इत्याह — **स्वप्नादीति** । अर्थग्रहणं तुल्यन्यायतयार्थप्रतिभासस्यापि शङ्क्य- मानत्वात् सशङ्कानां (कृते?) प्रामाण्यं न युज्यत इत्यर्थः ॥ १४५ ॥

---

१. 'भांपा', २. 'पि विश' क. पाठः. ३. 'सा' ग. पाठः.

**पुरुषातिशयश्चेष्टः सैव चागमनित्यता।**
**कल्पितं स्मरणं चास्य जन्मान्तरनिबन्धनम् ॥**

---

अयमपरोऽस्मिन् दर्शने दोष इत्याह — पुरुषेति । पुरुषस्य तावदतीन्द्रियदर्शनशक्तिरभ्युपगतैव यदनुच्चरितशब्दग्रहणमङ्गीकृतम् । सा चेदङ्गीकृता, किमागमनित्यताग्रहेण । एवं हि वरं यत् परैरुक्तं पुरुषप्रत्ययादेवागमप्रामाण्यमिति तदेवाश्रितमिति । एवं तावदनुच्चरितशब्ददर्शनं निराकृतम् । स्मरणमिदानीं निराकरोति — कल्पितमिति । अस्यातिशयवतः पुरुषस्य।यतनज्ञानेष्वदृष्टपूर्वं जन्मान्तरीयज्ञाननिबन्धनं वेदानां सृष्ट्यादौ स्मरणमिति कल्पनामात्रं, नतु प्रामाणिकम् । जन्मान्तरे निबन्धनं कारणमस्येत्यर्थः । कः पुनरत्र दोषः यज्जन्मान्तरानुभूता वेदाः स्मर्यन्त इति । ग्रहणं ह्यनुच्चरितशब्दगोचरं न सम्भवति, नतु स्मरणम् । अद्यत्वेऽपि हि तावच्चिरतरानुभूतानामान्तरालिकानेकान्तरायपरम्परातिरोहितानां भावानां नानाविधानेकगर्दवेदनाभिर्दूरं दूयमानमानसैरपि स्मरणं दृष्टम् । तद् भवान्तरीयस्मृतौ किमनुपपन्नम् । देहध्वंसे संस्कारानवस्थानमिति चेद् , न । अतदाधारत्वात् । तत्रैतत् स्यात् — अम्रियमाणेषु देहेषु किमाश्रयाः संस्कारा भवन्ति न वा भवन्ति । कथं भवान्तरे फलं भावयितुमुत्सहन्त इति । तन्न, अतदाधारत्वात् । नो खल्वपि भवान्तरीयपटुतरानुभवप्रभावितं भावनाबीजं शरीराधिकरणं, यदस्य नाशे नश्येत् । ज्ञानसमानाधिकरणत्वादात्मनश्च ज्ञानाधारत्वात् । आत्मापि परिगृहीतदेहान्तरोऽपि स एवावतिष्ठत इति नाश्रयानुपपत्तिः । अपिचेदानीमपि पूर्वजातिस्मरः कश्चिदुपलभ्यत एव, यो भवान्तरीयरहोवृत्तवृत्तान्तं सम्पादयति । देहनाशाच्च संस्कारनाशे तदनुपपत्तिः । जरामरणगर्भवासजन्मवेदनाश्च संस्कारोच्छेदहेतवः तस्यापि तुल्या एव । अतोऽवश्यमाश्रयणीयः कोऽपि प्राग्भवीयधर्मानुग्रहात् तस्य नाम भाजनमतिशयस्य योऽत्रामुत्र वा विदितमप्यशेषेण स्मरतीति । अपिचेतिहासपुराणवेदवादा अपि जातिस्मरणसद्भावे प्रमाणम् । भवति हि गीतासु वासुदेववचनं —

---

१. 'यार्थद', २. 'र्भ', ३. 'श्च परिज्ञा', ४. 'मप्यविशे' क. पाठः.

"बहूनि मे व्यतीतानि जन्मानि तव चार्जुन! ।
तान्यहं वेद सर्वाणि न त्वं वेत्सि परन्तप! ॥"

इति । पौराणिका अपि —

"प्रथमं सर्वशास्त्राणां पुराणं ब्रह्मणा स्मृतम् ।
अनन्तरं च वक्त्रेभ्यो वेदास्तस्य विनिस्सृताः ॥"

इति पठन्ति । स्मरणाभिप्रायमेवेदं वेदविनिस्सरणं पुराणेषु, तत्कृतकत्वानभ्युपगमात् । वेदवादाश्च भवन्ति देहान्तरप्रतिपत्तिकाले 'तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा च'[2] इति । मानवेऽपि विशिष्टकर्मफलतयैव जातिस्मरत्वं दर्शितम् । स्मर्यते हि —

"वेदाभ्यासेन संततं सत्येन तपसैव च ।
अद्रोहेण च भूतानां जातिं स्मरति पौर्विकीम् ॥"

इति । तत्रैतत् स्यात् । अन्यार्थत्वा[3]वधृतत्वेदाभ्यासादिसमभिव्याहारात् पर्णमय्यादिफलार्थवादवदर्थवाद एवायं न फलकल्पनायै प्रभवति । तथा हि — वेदाभ्यासस्तावद् धारणार्थ एव, प्रत्यक्षं हि गुण्यमानं न भ्रश्यतीति । योऽपिच 'अहरहः स्वाध्यायोऽध्येतव्यः' इति विशिष्टेतिकर्तव्यतायुक्तो ब्रह्मयज्ञविधिः, सोऽपि यावज्जीवदर्शपूर्णमासाग्निहोत्रादिविधिवदुपात्तदुरितक्षयाकरणनिमित्तप्रत्यवायपरिहारप्रयोजन एवेति नासमीहितफलान्तरसम्बन्धमनुभवति । सत्यमपि शब्दार्थ[4]भेदभिन्नं स्वर्गादिमहाफलार्थमवगतमेवेति न फलान्तरेण सम्बध्यते । तपांस्यपि नानाविधैनोनि-बर्ह[5]णार्थानि स्वर्गादिश्रेयोन्तरार्थानि[6] च चान्द्रायणादीन्यवधारितानीत्यनपेक्षाण्येवेति न जातिस्मरणफलकानि भवन्ति । अद्रोहोऽप्यहिंसा भूतानां तत्तत्कालभेदेन फलार्थ[7] एव विहितः । यदि व्रतं यदि निषेधः कस्य जातिस्मृतिः फलं भवेत् । तस्माद् वेदाभ्यासादीनामर्थवाद एव फलश्रुतिर्न फलकल्पनायां प्रमाणमिति । तन्न । प्रत्येकं हि वेदाभ्यासादीनां फलान्तरमवगतं न समुच्चितानाम् । इह तु क्रय इवारुणादीनां सत्यादीनामेकत्र फल उपादीयमानानां साहित्यं विवक्षितमिति न समुदितानां फलान्तर-

१. 'ॆ' क. पाठः. २. 'च' ग. पाठः. ३. 'त्वादव', ४. 'र्थवदभिन्नं च स्व' क. पाठः. ५. 'र्हरणा', ६. 'योर्थान्तराणि च', ७. 'देरर्थे' ग. पाठः.

सम्बन्धो नोपपद्यते । अत एव समुच्चयवचनमुपपन्नं भवति । स्यादेतत्— एकेन स्मर्यमाणा वेदाः कृतकाशङ्कां जनयेयुरिति । तन्न, अनेकेषामपि तथाविधातिशयभाजामृषीणां भृग्वङ्गिरःप्रभृतीनां परस्परसंवादाशङ्कानिवृत्तेः । नचैवं वेदार्थे प्रसङ्गः, तस्यातीन्द्रियस्य भवान्तरेऽप्यननुभूतस्य स्मृत्यनुपपत्तेः । स्यादेतत्—भवान्तरानुभूतस्मृतौ जन्मान्तरे कृतकर्माण इह फलं लभमाना अन्वयव्यतिरेकाभ्यामेव कर्मफलसम्बन्धं जानीयुः । अतश्चोदनैकप्रमाणता व्याहन्येतेति । तदयुक्तम् । अनादौ खलु संसारे विपरिवर्तमानानामनन्तानि कर्मिणां कर्माणि । तत्र जातिस्मरोऽपि नैतावद् विवेक्तुं शक्तोऽमुष्य नामेदं कर्मणः फलमिति । नचावश्यमनन्तरभवानुष्ठितकर्मफलोपभोग एव संसारिणां, नानाजन्मसञ्चितेषु शुभाशुभफलेष्वानन्त्यादनवधृतपरिमाणेषु दुरधिगमः कर्मफलसम्बन्धविवेकः । तस्मान्नागमस्मरणे कश्चिद् विरोधो दृश्यत इति किं तन्निराकरणेन । अत्रोच्यते—यदि नामेतिहासपुराणप्रामाण्याश्रयणेनायोनिजदेहा एव कृतादियुगभेदेषु[1] केचिदृषयः स्मरन्ति वेदानिति सङ्गिरन्ते । तदस्तु । नैवमपि नः काचित् सिद्धान्तहानिः । एकस्य कस्यचित् स्मरणमेवास्माभिर्निरस्यते, तद्धि कृत्रिमत्वमेवापादयतीति । अत एव वक्ष्यति—'एकस्य प्रतिभानमि'ति । इहापि चास्येत्येकवचनेनैकस्यैव स्मरणं निराकरोति । बहवोऽप्ययोनिजदेहाः स्मर्तार इति दुष्प्रतिपादमेव । नखल्वयोनिजं नाम नराणां शरीरं सम्भवति, स्वभावनियमाविसंवादात् । विसंवादे वा सकलदृष्टादृष्टव्यवहारोच्छेदप्रसङ्गात् । योनिजदेहास्तु[2] सातिशया अपि साङ्गांश्चतुरो वेदान् स्मरन्तीति । नैवं सम्भावयामः, जन्मजरामरणवेदनापरिभवो हि महान् संस्कारनाशनिदानमिति कथं महानयं ग्रन्थसन्दर्भो मात्रयाप्यन्यूनानतिरिक्तः केनचित् स्मर्येत । किञ्चिदेव भवान्तरीयकमपि केचित् स्मरन्तो दृश्यन्ते इति यथादर्शनमस्तु जातिस्मरः, कल्प्यतां वा मानवानुमितजातिस्मरश्रुत्यन्यथानुपपत्तिबलाद् विशिष्टो योनिजविग्रहपरिग्रहो भृग्वादीनामृषीणां स्वर्गकामश्रुत्यन्यथानुपपत्तिकल्पितासाधारणातिशयदेहेन्द्रियादिपरिग्रहवत् । शास्त्रस्था हि वयं यथाशास्त्रमाश्रयामहे[3] । नच शास्त्रसामर्थ्यादायातोऽतिशयोऽनुमानेन निराकर्तुं शक्यते आगमविरोधादेव । जन्मान्तरानुभूतं च न स्मर्यते इति

१. 'तद्युगादिभे' क. पाठः. २. 'शरीरास्तु', ३. 'द्रि' ग. पाठः.

**ग्राह्यत्वे चागमस्यैवं द्वेषोऽर्थग्रहणे वृथा ।**
**यो ह्यनुच्चरितं शब्दं गृह्णात्यर्थेऽस्य का कथा ॥ १४७ ॥**
**पुमांस्तावत् स्वतन्त्रः स्यादर्थग्रहणवादिनाम् ।**
**आगमप्रतिभाने तु पारतन्त्र्यं द्वयोरपि ॥ १४८ ॥**
**अनेकपुरुषस्थत्वादेकत्रैव च जन्मनि ।**
**ग्रहणस्मरणाद् वेदे न स्वातन्त्र्यं विहन्यते ॥ १४९ ॥**

---

त्वतीन्द्रियार्थाभिप्रायमेव तदस्तु । सर्वथा सिद्धमिदमेकस्यागमस्मृतिकल्पना न साधीयसीति ॥ १४६ ॥

पुनरपि ग्रहणपक्षमेवोपसङ्क्रम्य दूषणमाह — **ग्राह्यत्व** इति । नन्वागमस्यातीन्द्रियोऽर्थः नत्वागम इति कथं तुल्यत्वमत आह — **यो ह्यी**ति । अनुच्चरितो ह्यागमोऽतीन्द्रिय एवेति भावः ॥ १४७ ॥

ननु तुल्यत्वेऽपि तावदस्मदादिभिरागमग्रहणमाश्रितम् । को दोषः, अत आह — **पुमांस्तावदि**ति । अयमभिप्रायः — नात्र तुल्यत्वम् । अर्थप्रतिभाने हि पुरुषः स्वतन्त्रो भवति, तदनुसारित्वादर्थनिश्चयस्य । आगमप्रतिभाने तु पुरुषोऽर्थं प्रत्यागमपरतन्त्रः । आगमोऽपि स्वरूपस्थितये[1] तत्परतन्त्र इति सापेक्षत्वादुभयाप्रामाण्यमिति ॥ १४८ ॥

नन्विदमागमपारतन्त्र्यं तवापि समानम् । नहि पुरुषप्रत्ययादृते तस्य याथात्म्यं शक्यं श्रद्धातुम्, अत आह— **अनेक** इति । अयमभिप्रायः—एकपुरुषपारतन्त्र्यं दोषाय भवति, अनेकधा संशयोपजननात् । एवं हि तत्र संशयो भवति — किमयमनेनागमो दृष्टः कृतो वा, दृष्टोऽपि यथावस्थितोऽन्यथा वेति । एवं संशयानां न कश्चिदाश्वासयेयुः[3] । 'अनेकपुरुषाधारे तु वेदे न तावत् कृतकाशङ्का, नाप्यन्यथात्वमिति वक्ष्यति । अतोऽव्याहतस्वातन्त्र्यो वेदः प्रामाण्यं लभते इति । अपिच येयं भवान्तरेष्वनुभूतानां भवान्तरे[2] निरवशेषस्मृतिकल्पना, सापि वेदानां पारतन्त्र्यमापाद-

---

१. 'यति—ग्रा' ग. पाठः, २. 'ये पर' क. पाठः, ३. 'श्वासेयु.' ग. पाठः.

**अन्यथाकरणे चास्य बहुभिः स्यान्निवारणम् ।**
**एकस्य प्रतिभानं तु कृतकान्न विशिष्यते ॥ १५० ॥**
**अतश्च सम्प्रदाये च नैकः पुरुष इष्यते ।**
**बहवः परतन्त्राः स्युः सर्वे ह्यद्यत्ववन्नराः ॥ १५१ ॥**
**एवं च कल्पयन्त्यन्ये यावदागमसिद्धये ।**
**तावन्न कल्पयत्येतत् समत्वं जैमिनेः परैः ॥ १५२ ॥**

---

यत्येव । एवं हि तत्र शङ्क्यते — कथं खल्वयं महान् ग्रन्थसन्दर्भो निश्शेषसंस्कारच्छिदा मरणेनान्तरितोऽनेन स्मृतः । तदयमस्मान् विप्रलब्धुकाम एव स्वयं निर्मितमागमं स्मृतमपदिशति । एवं च शङ्कमाना न स्वातन्त्र्येणागमप्रामाण्यमध्यवस्येयुः । अस्माकं तु ग्रहणस्मरणयोरेकभवभावित्वान्नायं दोषो भवतीत्याह — एकत्रेति ॥ १४९ ॥

अथानेकपुरुषस्थत्वे को गुणः, अत आह— **अन्यथेति** । बहुषु हि सम्प्रदायप्रवर्तकेषु या तस्य वेदस्यान्यथाकरणाशङ्का सा निवर्तते । एकेन हि विनाशितं वेदमन्यो नैतदेवमिति निवार्यान्यथा दर्शयति । अतो बहुसंवादाद् वेदस्य यथावस्थितस्वरूपावधारणं भवतीति । एकस्य प्रतिभानं तु कृतकवेदकल्पनाया न विशिष्यते, उभयत्रा[१]प्यविश्वासतुल्यत्वादित्याह— एकस्येति ॥ १५० ॥

अतो न यथा वेदानामेकः कर्ता, एवं सम्प्रदायप्रवर्तकोऽपि[२] नैकः पुरुष इत्युपसंहरति — **अतश्चेति** । अद्यत्ववदेव तु पुरापि बहवः सब्रह्मचर्यादिपरतन्त्रा नरा आसन्नित्याह — बहव इति । एतच्च प्रयोगेण दर्शनीयमिति ॥ १५१ ॥

एवं तावत् पुरुषातिशयकल्पना नापौरुषेयकल्पनया तुल्येति सम्प्रधारितम् । अतो यत् परैरनयोः कल्पनयोस्तुल्यत्वमापादितं, तदेककल्पनीयहानोपादानाभ्यामेवेति सापहासमाह — **एवञ्चेति** ॥ १५२ ॥

---

१. 'मित्यप', २. 'त्रावि' ग. पाठः.

नहि दृष्टाधिकं किञ्चित् प्रामाण्ये तेन कल्प्यते ।
अप्रामाण्यनिमित्तेषु परस्यादृष्टकल्पना ॥ १५३ ॥
दृष्टप्रामाण्यबाधश्च नास्तिकस्य प्रसज्यते ।
उत्पन्ने सति विज्ञाने बलाद् बाधप्रकल्पना ॥१५४॥
साधिते पुरुषाभावे निर्दोषज्ञानजन्मनः ।
प्रत्यक्षान्नास्तिकैर्वाच्यो विशेषश्चोदनाधियः ॥१५५॥
उपदेशोऽन्यथा न स्यादतीन्द्रियनिबन्धनः ।

---

एतदेव स्पष्टयति— नहीति । अथवदेव सर्वदा वेदव्यवहारः प्रता-र्यत इति जैमिनेर्दर्शनम् । इदं चं दृष्टानुसारीति नालौकिकं किञ्चिज्जैमि-निना कल्पितं परैरिवादृष्टपूर्वः पुरुषातिशयैः । पौरुषेयानुमानदूषणं तु पूर्व-मुक्तमेवेति । वेदाप्रामाण्यवादिनामेवं तु दृष्टहानिरदृष्टकल्पना चेत्याह— अप्रामाण्येति । दोषो ह्यप्रामाण्ये निमित्तम् । स चापौरुषेये वेदेऽदृष्टः कल्पनीयः । त्रिविधाप्रामाण्यशून्यस्य ज्ञानस्य दृष्टं प्रामाण्यं हातव्यमिति । नन्वयं दृष्टबाधो भ्रान्तिष्वपि समानः । अथ तत्र बाधकसामर्थ्याद् विप-र्ययः, सोऽप्यत्रानुमानिको भवेदित्यत आह— उत्पन्न इति । अयमभि-प्रायः— 'उत्पन्नमिदं ज्ञानं सम्यक्त्वसन्देहविपर्ययविरहादि'त्युक्तं भाष्ये । अनुमानानामप्यागमविरोधः प्रतिहेतुविरोधश्चेत्युक्तमेव । अतो विनैव कार-णेन बलादर्थ बाधः कल्प्यते । भ्रान्तौ तु नैतदेवमिति स्फुटो विपर्यय इति ॥ १५४ ॥

यत्तु स्वपरप्रत्यक्षासंवादी कथं शब्दः प्रमाणमित्युक्तं, तदयुक्तम् । यदा ह्यपौरुषेया वेदा इत्युपपादयिष्यामः तदास्याश्चोदनाबुद्धेः प्रत्यक्षेण सह विशेषं नोपलभामहे । उभयोरप्यदुष्टकारणजत्वात् । अतः किमत्र प्रत्यक्षसंवादेनेत्याह— साधित इति । निर्दोषं च तज्ज्ञानजन्म चे-त्यर्थः ॥ १५५ ॥

---

१. 'च दृष्टं दृष्टा' क. पाठः. २. 'व दृ' ग. पाठः ३. 'ति । उ', ४. 'मेन वि' क. पाठः.

**तस्य कर्ता न चेद् दृष्टः सोऽर्थ इत्यर्थकल्पना ॥**

**यद्वानुमानमेवेदमुपदेशित्वमुच्यते।**

**दृष्टार्थपूर्वताव्याप्तं व्यतिरेकोऽस्य नन्विति ॥ १५७॥**

**अन्यथाप्युपपन्नत्वं व्यामोहादिति कथ्यते।**

**लिङ्गस्य व्यभिचारो वा बालवाक्ये निदर्शनात् ॥**

---

अत्रापरं भाष्यं—'नन्वविदुषामुपदेशो नावकल्पते' इत्यादि। तस्याभिप्रायमाह— **उपदेश** इति। अर्थापत्तिरियं भाष्यकारेणोक्ता। उपदेशो हि बुद्धमन्वादीनामुपलभ्यते। नचायमर्थमविदुषामुपदेश उपपद्यते। अतो दृष्ट उपदेशविषयोऽर्थो मन्वादिभिरिति कल्प्यते। मन्वादिग्रहणं प्ररोचनार्थं[1]। एवं हि जानाति—एष खलु मीमांसकोऽङ्गीकृतमन्वाद्यागमसत्यत्वः, तदहमेनं मन्वाद्युपदर्शनेनैव तावदङ्गीकारयामि यथातीन्द्रियाणामर्थानामस्ति तावद् द्रष्टेति। ततश्च स्वागमार्थदर्शनमपि बुद्धस्यानायासमुपपादयिष्यामीति ॥ १५६ ॥

अनुमानाभिप्रायं वेदं भाष्यमित्याह — यद्वेति। उपदेशित्वं हि दृष्टार्थपूर्वतया व्याप्तमवगतं वैद्योपदेशादौ। तदतीन्द्रियार्थगोचरमप्यवगतं तामनुमापयतीति। ननुच नात्र भाष्यकारेणोपदेशित्वं हेतुरुक्तः, किन्तु अविदुषामुपदेशानुपपत्तिः। अतः कथमनुमानाभिप्रायवर्णनम्, अत आह— **व्यतिरेक** इति। अयमभिप्रायः — व्यतिरेकप्रधानवादिमतेन भाष्यकारेणात्र व्यतिरेकमुखेन हेतोर्गमकत्वमुक्तम्। यो हि यन्न जानाति स तन्नोपदिशति, यथा चिकित्सको धर्माधर्मौ। नच तथा मन्वादयोऽतीन्द्रियानर्थान्नोपदिष्टवन्तः। अतोऽविद्वद्भ्यो व्यावृत्तमुपदेशित्वं विद्वत्तामनुमापयतीति ॥ १५७ ॥

एवमुभयथा परिचोदनाभिप्रायमुक्त्वा परिहारभाष्याभिप्रायमाह — **अन्यथेति**। अर्थापत्त्यभिप्रायेण परिचोदितः 'उपदेशो हि व्यामोहादपि भवती'त्यनेन भाष्येणान्यथोपपत्तिप्रदर्शनेन तद्भङ्गः कथ्यते। व्यामोहेनाप्युपदेशोपपत्तौ नातीन्द्रियज्ञानं कल्पयितुं शक्यत इति। दृश्यते चाद्यत्वेऽपि

---

१. 'थं च भा', २. 'य', ३. 'कोऽनङ्गी', ४. 'तवाद्यागम' क. पाठः.

**वेदाज्ज्ञात्वोपदिष्टं चेदित्येवं सिद्धसाधनम् ।**
**वेदादपीत्यनेनोक्तं मन्वादेश्चैतदिष्यते ॥ १५९ ॥**

व्यामुग्धानामन्यथाशास्त्रार्थोपदेशः प्रबन्धरचना च निबन्धॄणामिति । यदा पुनरनुमानाभिप्राया परिचोदना, तदानुमानदोषो लिङ्गस्य व्यभिचारोऽनेन कथ्यत इत्याह — लिङ्गस्येति । बालोऽज्ञः । तस्याप्युपदेशदर्शनेनानैकान्तिको हेतुरिति ॥ १५८ ॥

अपरमपि 'असति व्यामोहे वेदादपी'ति भाष्यं, तद् व्याचष्टे— **वेदादित्युक्तमन्तेन** । अयमभिप्रायः— अनुमानदूषणमेवेदम् । प्रथमं तावदनैकान्तिको हेतुरित्युक्तम् । इदानीं तु सिद्धसाधनतोच्यते । यदिदमुपदेशाद् ज्ञानानुमानमुक्तम्, अतः सिद्धं साध्यते । सत्यम् । वेदाद् विदितवतामतीन्द्रियार्थविषय उपदेशः । एवं हि वेद एवातीन्द्रियेऽर्थे प्रमाणं, न स्वमहिम्ना पुरुष इति । कथं पुनः सिद्धसाधनम् । नहि बुद्धादीनामतीन्द्रियार्थज्ञानं वेदात् सम्भवतीति नहि ते वेदाज्ज्ञापयितव्याः, तत्समीपेऽनध्ययनात् । अतो वेदस्वरूपमविदुषां न वेदाद् ज्ञात्वोपदेशः सम्भवति, अत आह— मन्वादेरिति । अयमभिप्रायः— सत्यं नेदं बुद्धाद्यभिप्रायेण सिद्धसाधनत्वमुच्यते, किन्तु 'उपदिष्टवन्तश्च मन्वादयः' इति ब्रुवाणेन मन्वादय उपदर्शिताः । तेषां च वेदादेव ज्ञात्वोपदेश इति स्मृत्यधिकरणे वक्ष्यते ।

यथा वक्ष्यति —

"भ्रान्तेरनुभवाच्चापि पुंवाक्याद् विप्रलम्भनात् ।
दृष्टानुगुण्यसाध्यत्वाच्चोदनैव लघीयसी ॥"

इति । वेदविरुद्धार्थाभिधायिनां तु वेदादुपदेश इत्यसम्भावनीय एव । यथा वक्ष्यति 'विरोधे त्वनपेक्ष्यं स्यात्' इति । एतत् सिद्धसाधनं मन्वादिसम्बन्धितयेष्यत इत्यर्थः । अपरमपि पौरुषेयापौरुषेययोर्विशेषकथनार्थं भाष्यम्— 'अपिच पौरुषेयाद् वचनादेवमयं पुरुषो वेदेति भवति प्रत्ययः नैवमर्थ इति । विप्लवते खल्वपि कुतश्चित् पुरुषकृताद् वचनात् प्रत्ययः । न तु वेदवचनस्य मिथ्यात्वे किञ्चन प्रमाणमस्ती'ति । अस्यार्थः— पूर्वं हि

१. 'ध्यतो' ग. पाठः. २. 'र्थे उ', ३. 'यज्ञा', ४. 'न बु' क. पाठः.

पुरुषवाक्योपमानेन 'नन्वतथाभूतमि'त्यादिना वेदवचसां मिथ्यात्वमुपपादितम् । तत्र मीमांसागोत्रानुसारिणा स्वतःप्रामाण्ये स्थित्वा 'विप्रतिषिद्धमि'त्यादिना सिद्धान्तितम् । पुनश्च प्रत्ययितग्रन्थेनांशे दृष्टान्तस्य साध्यवैकल्यम् अंशे च हेत्वन्तराधीनं वैतथ्यमित्यनुमानदूषणमुक्तम् । मध्ये च प्रासङ्गिकी कथा प्रवृत्ता । अधुना लोकवेदवाक्ययोः स नाम विशेषः कथ्यते येन निरपेक्षमेव वेदवाक्यं प्रमाणं, सापेक्षं पौरुषेयं किञ्चिचाप्रमाणमेव । एवञ्च यत् त्वतथाभूतप्रतिज्ञायामन्तर्णीतं प्रत्ययान्तरसापेक्षं सर्ववाक्यानां प्रामाण्यं, वार्त्तिककृता च 'प्रमाणान्तरदृष्टं ही'त्यादिना विवृतं, तत् तावत् परिहृतं भवति । वाक्यत्वस्य च मिथ्यात्वहेतोरन्तर्णीतस्याप्रयोजकत्वं मिथ्यात्वे साध्ये दर्शितं भवति । यद्यपि च 'तत् पुरुषबुद्धिप्रभवत्वमप्रमाणमि'त्यत्र पुरुषदोषायत्तमप्रामाण्यमित्युक्तं, तथापि प्रतिज्ञामात्रेण तदुक्तं न तूपपादितम् । अधुना तु भवत्याशङ्का — कथं पुनरिदमवगम्यते पुरुषाधीनमप्रामाण्यं न वाक्यस्वभावानुबन्धीति । तत्रेदमुच्यते—पुंवाक्यमपि किमपि वक्तृप्रमाणावधारणसमुत्सारिततदीयनिखिलदोषाशङ्कमप्यर्थे साक्षादनादधदपि निश्चयं तद्द्वारेण प्रमाणमेव । यथाह—'एवमयं वेद, नैवमर्थ' इति । वक्तृप्रमाणतिरोहितोऽर्थे निश्चयः न स्वतन्त्र इति यावत् । वाक्यस्वभावानुबन्धिनि त्वप्रामाण्ये न किञ्चित् पुंवचः प्रमाणं भवेत् । अतोऽवगच्छामः स्वभावतः प्रमाणमेव वाक्यं पुन्दोषादप्रमाणं भवतीति । तदिदमुक्तं 'विप्लवते खल्वि'ति । अनाप्तवाक्यादुपजातः प्रत्ययो विप्लवते । विविधं प्लवते, एवं नैवमिति संशयात्मक इति यावत् । विपर्येति वा । तदेवमौत्सर्गिकं प्रामाण्यं वाक्यानां दोषैरपोद्यत इति दर्शितं भवति । नचात्र वक्तृगुणाः प्रामाण्ये कारणं दोषनिराकरणमात्रे व्यापारात्, इतरथा 'अनवस्थानादि'त्युक्तम् । अतः स्वभावनिर्दोषाद् वेदवचसो जातं ज्ञानं कथमप्रमाणं भवतीति । एतच्चानागत एवास्मिन् वार्त्तिककृता सर्वमुद्ग्राहितं 'शब्दे दोषोद्भव' इत्यादिना । तदिदमुक्तं 'नतु वेदवचनस्ये'ति । तदयं संक्षेपार्थः — येयं प्रत्ययान्तरसापेक्षिता सा तदधीननिश्चयानां पुंवाक्यानां तथा नाम, अप्रमाणता च वक्तृप्रमाणतन्त्रत्वादर्थनिश्चयस्य तद्दोषादस्तु नाम । वेदवाक्येभ्यस्तु स्वतन्त्रपदार्थसामर्थ्यप्रभाविता वाक्यार्थबुद्धिर्न ज्ञानान्तरमपेक्षते, न चाप्रमाणमिति ॥ १५९ ॥

**अन्यथा संविदानोऽपि विवक्षत्यन्यथा यतः।**
**तस्मादेकान्ततो नास्ति पुंवाक्यात् तद्धियां गतिः ॥**
**भ्रान्तस्यान्यविवक्षायामन्यद् वाक्यं च दृश्यते ।**
**यथाविवक्षमप्येतत् तस्मान्नैव प्रवर्तते ॥ १६१ ॥**
**वक्तृधीराप्तवाक्येषु गम्यतेऽन्यत्र विप्लुतिः ।**

---

इममेवार्थमस्य भाष्यस्य व्याख्यास्यन्नाक्षेपं तावदाह—**अन्यथेति**। योऽयं वक्तृज्ञानपूर्वकः पुंवाक्येभ्योऽर्थनिश्चय उक्तः, सोऽयुक्तः । तज्ज्ञानावधारण एव प्रमाणाभावात् । न ह्यव्यभिचरितस्वार्थगोचरज्ञानं पुंवाक्यं, यतस्तदवगम्यते । अनाप्तो ह्यन्यथा विजानन्नन्यथा विवक्षति। विवक्षाधीना च वाक्यनिष्पत्तिः । अतो विवक्षावशेनान्यथैव वाक्यं निष्पद्यते, अन्यथा च ज्ञायत इति नैकान्ततो वाक्याज्ज्ञानानुमानमिति ॥ १६० ॥

आस्त तावद् वाक्याज्ज्ञानानुमानं, विवक्षामात्रमपि ततोऽवगन्तुं न शक्यत इत्याह — **भ्रान्तस्येति** । विवक्षा हि तावदत्यन्तं वाक्यनिर्माणे सन्निहिता । तस्यामप्यन्यथा सत्यां कदाचिद् भ्रान्तस्यान्यथा वाक्यरचना दृश्यते । अतो यथाविवक्षमपि वाक्यं न प्रवर्तत एव । कथमसत्यां विवक्षायां वाक्यरचनेति चेद् , न । विवक्षान्तरसंभवात् । कथमन्यविवक्षा अन्यनिर्माणे हेतुरिति चेत् को दोषः । विवक्षा हि प्रयत्नद्वारेण वाक्यनिष्पत्तौ हेतुः, नादृष्टेन रूपेण । स च विवक्षान्तरप्रयुक्तेनैव कृतः कुतश्चिद्वैगुण्यान्न सम्यक् परिनिष्पन्नः । ततोऽशक्तिजन्यमन्यदेव जातम् । यथा कश्चित् शुष्के पतिष्यामीति कर्दमे पतति । सूक्ष्मविवक्षास्तित्वं तु सूक्ष्मदृश एव प्रतिपद्यन्ते । विवक्षा हि वक्तुमिच्छा । सा चेदात्मगुणान्तरं, तर्हि सुखादिवन्मानसप्रत्यक्षवेद्यं कथमज्ञायमानमस्तीति शक्यते वक्तुम् । अथाभिलापात्मकज्ञानरूपा, तथापि कथं वाक्यान्तरप्रकाशेऽन्यविवक्षास्तीति शक्यते कल्पयितुमिति यत्किञ्चिदेतत् ॥ १६१ ॥

एवमाक्षिप्तं भाष्यं समादधाति —**वक्तृधीरिति** । अयमभिप्रायः — द्विविधो हि वक्ता आप्तोऽनाप्तश्च । तत्र य एवमवधारितो भवति

---

१. 'सद्भावात्' क. पाठः.

**तेनोत्सर्गापवादाभ्यां वचसः शक्तिरुच्यते ॥ १६२ ॥**

**पदार्थरचनायत्तो वाक्यार्थप्रत्ययोद्भवः ।**
**विवक्षापूर्वविज्ञानवशाच्च रचनाकृतिः ॥ १६३ ॥**

---

नायमन्यथाज्ञातमन्यथा वदति आप्त इति यावत्, तद्वाक्यादेवं वेदेति वक्तृधीरवगम्यते । अन्यत्र त्वनाप्तवाक्ये विप्लुतिरिति विप्लवत इत्यादिनोक्तम् । तत्रेदमुक्तं[1] भवति — यदा तावदाप्तवाक्यादनाशङ्कमेव ज्ञानं जातं व्यवहारश्च प्रवृत्तः न च विसंवादो दृष्टः, तदा कल्याणमेव । जाताशङ्कस्यापि वक्तुराप्तत्वमनुस्मृत्य तज्ज्ञानपुरस्सरमेवार्थे निश्चयो जायते । आप्तस्य च भ्रमो न तावदाशङ्क्यते । स हि सुनिपुणो न तावत् प्रायशो भ्राम्यति । नचासम्यग्विदिते तस्यैतावती चेष्टा भवति यदसौ परप्रतिपत्तये वाक्यं प्रणयति । तथापि वा संशयानस्य तत्परिप्रश्नादेव तत्प्रमाणनिश्चयो भवति । स एव निर्बध्यपृष्टो यदि त्रिचतुरज्ञानमात्मन उपदिशति, तावतैव स्वप्रमाणवदनाशङ्कव्यवहारासिद्धिः । विप्लवश्चानाप्तवाक्याद् विविधो व्याख्यात एवेति । एवं तावद् ज्ञानप्रत्ययविप्लवौ विषयव्यवस्थया व्याख्यातौ । इदानीं भाष्यतात्पर्यं दर्शयति — तेनेति । यत् तावद् वाक्यत्वमतथाभूतत्वे हेतुतयोक्तं तस्यानेनाप्रयोजकत्वमुच्यते । आप्तवाक्येषु हि गुणनिराकृतदोषेषूत्सर्गेण सत्यत्वं दृष्टम् । अत एव हि तज्ज्ञानानुसार्यर्थनिश्चयो भवति । इतरथा तस्यापि मिथ्यात्वं भवेत् । अनाप्तवाक्येषु तु तद्दोषादपवादादप्रामाण्यम् । एवंच स्वाभाविकसम्यक्परिच्छेदशक्तिरत्र वचसश्शब्दस्योच्यते । मिथ्यात्वं चौपाधिकं न वाक्यत्वेन प्रयुज्यते परप्रयुक्तव्याप्त्युपजीवि हि तत्[2], निषिद्धत्वप्रयुक्त इवाधर्मत्वे हिंसात्वमिति ॥ १६२ ॥

वक्तृधीराप्तवाक्येषु गम्यत इत्युक्तं, तत्र कारणमाह — **पदार्थेति** । श्रोतुर्हि वक्त्रा पदार्थेषु विरचितेषु वाक्यार्थप्रत्ययो जायते । वक्तुश्च रचनाकृतिर्विवक्षापूर्विका । सा चाप्तस्याविज्ञाते[3] न सम्भवतीति पूर्वज्ञानमपेक्षते । अतः प्रतिबन्धबलेनाप्तवाक्यात् पूर्वविज्ञानमवगम्यत इति ॥१६३॥

---

१. 'त्रैतदुक्तं', २. 'सू', ३. 'तंन न' ग. पाठः.

**विवक्षान्तरयुक्ता हि [illegible] रचनान्तरम् ।**
**आवापोद्वापयोगेन दृश्यतेऽर्थेषु मानवाः ॥ १६४ ॥**
**तेनार्थप्रत्ययोत्पादे श्रोतुर्जातेऽपि वाक्यतः ।**
**ज्ञातो नूनमनेनेति वक्तुर्ज्ञाने मतिर्भवेत् ॥ १६५ ॥**
**आप्तोक्तिकारिणं कश्चिदनुयुङ्क्ते नरं यदा ।**
**तदा च निर्दिशत्याप्तं स जानात्येतदित्यसौ ॥ १६६ ॥**
**तज्ज्ञानान्तरितत्वाच्च शब्दास्तावदुदासते ।**

---

विवक्षावशत्वमेव रचनाया दर्शयति— **विवक्षान्तरे**ति । पूर्वविवक्षाया यद् विवक्षान्तरागमेन रचनान्तरं दृश्यते पूर्वोत्तरपदोद्वापावापभेदेन, अतो विवक्षाधीना रचनेत्यवगम्यत इति ॥ १६४ ॥

एवञ्च यद् विवक्षाधीना रचना सा च ज्ञानपूर्विका, तेन कारणेन वाक्यादर्थप्रत्ययोत्पादे श्रोतुर्जातेऽपि नूनमनेनायमर्थो वक्त्रा ज्ञात इति वक्तृज्ञाने मतिर्भवतीत्याह — **तेने**ति । वक्तृप्रमाणपूर्वत्वाद् रचनाया न स्वतन्त्रोऽर्थज्ञानमात्रान्निश्चय इति भावः । तदिह 'तेनोत्सर्गापवादाभ्याम'त्यत्र स्वाभाविकी वचसश्शक्तिरिति भाष्यतात्पर्यमुक्तम् । 'पदार्थरचनायत्त' इत्यतः प्रभृति 'तेनार्थप्रत्यय' इत्येवमन्तेनाप्तवचसां प्रत्ययान्तरापेक्षितेति भाष्याभिप्रायो विवृत इत्यनुसन्धातव्यमिति ॥ १६५ ॥

इतश्चाप्तवाक्यं तज्ज्ञानपरतन्त्रमवगम्यत इत्याह — **आप्तोक्ति**रिति । यदाप्तोक्तमर्थमेकोऽनुतिष्ठति तं चापरोऽनुयुङ्क्ते किमत्र ते प्रमाणमिति, तदा असावाप्तोक्तिकारी तमाप्तमेव तत्र मूलतया दर्शयति य एवं वादी स एवाप्त एतज्जानाति नाहमिति । स्वातन्त्र्ये हि तज्ज्ञानप्रकाशनमनर्थकं भवेदिति ॥ १६६ ॥

किमिदानीमाप्तवाक्यमर्थे न प्रमाणमेव, नैवम् अपि तु आप्तवक्तृप्रमाणानवधारणाज्जाताशङ्कस्य वाक्यमुदास्ते । यदा हि वक्तृधियो हेतुभूतमदुष्टमिन्द्रियाद्यवधारितं भवति, तदा दोषाशङ्कानिराकरणात् प्रामाण्यमेव

---

१. 'क्यार्थं', २. 'तं नू', ३. 'वर्दति ग'. ४. 'णं नेत्रमांप आ' क. ग्रं:.

**प्रामाण्यस्थापनं तु स्व ......... हेतुसम्भवात् ॥१६७॥**

**अर्थे पूर्वप्रतीतेऽपि निश्चयो हि तदाश्रयः ।**

**तेनार्थज्ञानगम्यापि प्रामाण्ये सैव पूर्वभाक् ॥ १६८ ॥**

---

स्थाप्यते । तदिहावगतिहेतुतया शब्दानां प्रामाण्यमुपक्रान्तमप्रामाण्यशङ्कया शिथिलीकृतं वक्तृप्रमाणावधारणनिराकृतेषु दोषेषु दार्ढ्यं लभते, तदेतदाह — **तज्ज्ञानेति** । तज्ज्ञानान्तरितत्वात् वक्तृज्ञानान्तरितत्वात् । निश्चयजनने शब्दस्येत्यर्थः । तावच्छब्देनात्यन्ताप्रामाण्यं निराकरोति । कियतापि विलम्बनेन प्रामाण्यं प्रतितिष्ठतीति । नन्वेवं वक्तृप्रमाणानुसारिणि निश्चये सत्यनुवाद एव शब्दः प्रागनिश्चयादप्रमाणमिति कदा प्रमाणम् । उक्तमिदं स्वकाल एव तत् प्रमाणं, दोषाशङ्कानिराकरणमात्रे वक्तृज्ञानस्य व्यापार इति । श्रोत्रा हि प्रथममविदितपूर्व एवार्थोऽवगतः क्वचिद् व्यभिचारदर्शनेन जातायामाशङ्कायां तन्निराकरणेन तस्यैव प्रामाण्यं प्रतिष्ठाप्यते । अत एव स्थापनमित्युक्तमिति ॥ १६७ ॥

कथं पुनः प्रथमं शब्दा उदासते । स ह्यर्थः शब्देन प्राक् प्रत्यायितो न वा । यदि नेत्याह कथमेवं वेदेति वक्तृज्ञानमुन्नीयते । प्रकारार्थो ह्येवंशब्दः । नच निराकारं विज्ञानमनाश्रितार्थपरिष्वङ्गं स्वरूपेण प्रकारवद् भवेत् । नच श्रोतुर्बुद्धावनारूढोऽर्थो वक्तृज्ञानमेवम्भावेन विशिनष्टि । यदि तु पूर्वमप्यर्थप्रत्ययोऽवगम्यते, ततः पारतन्त्र्ये कारणं वाच्यम् । उत्पद्यमानेनैव हि तेन स्वविषयपरिच्छेदः कृत इति किमन्यदपेक्षते । निश्चयार्थं वक्तृप्रमाणापेक्षेति चेद्, न । अनिश्चयज्ञानासम्भवात् । निश्चय एव हि ज्ञानं, तच्चेदस्ति कथं निश्चयो नास्तीति शक्यते वक्तुम् । अतोऽनुपपन्नमिदमर्थज्ञानगम्यैव वक्तृधीस्तत्प्रामाण्ये कारणमिति । अत आह — **अर्थ इति** । यत् तावदुक्तम् अनवगतेऽर्थे नैवम्भावो भवतीति, तत्राभ्युपगमेनैवोत्तरम् । सत्यं पूर्वं प्रतीत एवार्थ इति । यत्तु प्रतीतेऽनिश्चयो न घटत इति । तन्न, जाताशङ्कस्य तदुपपत्तेः । यद्यपि न शब्दात् संशयः, तथापि व्यभिचारदर्शनात् संशयो जायत एव । यत्त्वनिश्चयात्मकं ज्ञानमेव नास्तीति ज्ञानोत्पत्तौ निश्चय एव जायत इत्युच्यते । तन्न । संशयस्यापि ज्ञानत्वात् । अतो

---

१. 'न्देः प्रा', २. 'ज्ञा' क. पाठः.

अतोऽत्र पुन्निमित्तत्वादुपपन्ना मृषार्थता ।
नतु स्यात् तत्स्वभावत्वं वेदे वक्तुरभावतः ॥ १६९ ॥
तद्बुद्ध्यन्तरयोर्नास्तीत्यर्थोऽर्थैश्च प्रतीयते ।
अतो न ज्ञानपूर्वत्वमपेक्ष्यं नायथार्थता ॥ १७० ॥
अप्रमाणत्वसिद्धौ वा दृष्टान्तो य उदाहृतः ।
बुद्धादिवचनं तस्य साध्यानासङ्गितोच्यते ॥ १७१ ॥
तेषामपि हि यत् कार्यं पूर्वत्र प्रतिपादितम् ।
तत्र सम्यक्त्वमर्थे तु व्यापारो नैव विद्यते ॥ १७२ ॥

---

जातेऽपि[1] ज्ञाने कुतश्चिन्निमित्तात् संशयोत्पत्तौ वक्तृप्रमाणाश्रयत्वान्निश्चयस्यार्थज्ञानसमधिगम्यापि सैव वक्तृधीः पूर्वज्ञानप्रामाण्ये पूर्वभाग् भवतीति[2] तया समुत्सारितायां दोषाशङ्कायां प्रामाण्यस्याध्यवसानादिति ॥ १६८ ॥

एवं तावत् पुरुषवाक्येषु ज्ञानान्तरापेक्षया प्रामाण्यं क्वचिच्चौपाधिकमप्रामाण्यमित्युक्तम् । वेदवाक्ये तु स्वाभाविकत्वादेव वचसः सम्यगर्थपरिच्छेदशक्तेर्न मृषार्थता सम्भवतीति न तु वेदवचनस्येत्यादिनोक्तं, तदेतदाह — अत इति । अस्तु नाम वक्तृदोषाशङ्कया पुंवचसामप्रामाण्यं, स्वभावनिर्दोषं तु वेदवचो न तत्स्वभावमनुभवितुमर्हतीति[3] ॥ १६९ ॥

वक्तृबुद्ध्यन्तरयोर्व्यवधानमपि वेदे नास्तीति पदार्थैरेव केवलैर्नित्यनिर्दोषैर्वाक्यार्थः प्रतीयत इत्याह — तद्बुद्धीति । अतः सिद्धं न वेदे प्रत्ययान्तरापेक्षा, न चायथार्थत्वमिति प्रकरणार्थमुपसंहरति — अत इति ॥ १७० ॥

अन्यथा भाष्याभिप्रायमाह — अप्रमाणत्वेति । वेदानामप्रमाणत्वसिद्धये यत्किञ्चन लौकिकं[4] वचनं दृष्टान्ततयोक्तं, तस्यानेन ग्रन्थेन दृष्टान्तस्य साध्यानासङ्गिता साध्यविकलतोच्यते इति ॥ १७१ ॥

कथं साध्यानासङ्गिता, अत आह — तेषामिति । अयमभिप्रायः— परमतेनेदं भाष्यकारेण परान् प्रत्युच्यते । तथाहि — यदा तावल्लोकाय-

---

१. 'पि विज्ञा', २. 'वति तया', ३. 'वतितु'. ४. 'कं द' क. पाठः.

**स्वव्यापारातिरिक्तेऽर्थे वेदस्यापि मृषार्थता ।**
**पूर्वपक्षार्थवत्त्वेन प्रसक्ता सिद्धसाध्यता ॥ १७३ ॥**
**अज्ञात्वैवमभिप्रायं कृतकाकृतकत्वयोः ।**
**सत्यमिथ्यात्वहेतूक्तिमात्रज्ञानात् परोऽब्रवीत् ॥**

---

तिकाभिप्रायः प्रयोगः — चोदना मृषा प्रत्यक्षाद्यगतार्थत्वाद् ईदृग्बुद्धादिवाक्यवदिति, तदा बौद्धाभिप्रायेणेदमुच्यते । साध्यानासङ्गी दृष्टान्त इति । तन्मते हि शब्दो नार्थे प्रमाणम् । तथाहि पदानि तावदर्थं स्मारयन्ति, न तु क्वचित् किञ्चिदुपनयन्त्यपनयन्ति वा । वाक्यमपि व्यभिचारदर्शनान्नार्थे प्रमाणम् । अतः कथं तत् साधनं भवेत् । वक्त्रभिप्राय एव तु प्रतिबन्धबलात् शब्दैर्बोध्यते । तथाहुः — 'न त्वेतेभ्योऽर्थसिद्धिस्तेषां तत्र प्रतिबन्धासिद्धेः वक्त्रभिप्रायं तु सूचयेयुरि'ति । अतो यद् बुद्धादिवचसां कार्यं प्रतिपाद्यमुक्तं, तत्र तेषां सम्यक्त्वमेवाव्यभिचारात् । अर्थे तु तेषां व्यापारो नेष्यत एव । अतो न किञ्चिद् वेदवाक्यानां मिथ्यात्वे कारणमस्तीति पूर्वत्र प्रतिपादितमिति ॥ १७२ ॥

'पदार्थरचनायत्त' इत्यादिना यत् प्रतिबन्धबलेन वाक्याद् वक्तृज्ञानानुमानमुक्तं तद् दर्शयतीति यदि च यत्र पुंवाक्यं व्याप्रियते वक्तृज्ञाने तदतिरिक्तेऽर्थ एव दृष्टान्ततयोच्यते, ततः सिद्धसाधनमित्याह— **स्वव्यापारे**ति । स्वविषयातिरेकेण वेदानामपि मिथ्यात्वमिष्यते । पूर्वपक्षार्थे मृषात्वाभ्युपगमादिति ॥ १७३ ॥

अत्रापरं भाष्यं —'ननु सामान्यतो दृष्टमनुमानं भविष्यति, पुरुषवचनं वितथमुपलभ्य वचनसामान्याद् वेदवचनं मिथ्येत्यनुमीयते' इति । तस्याभिप्रायमाह—**अज्ञात्वेति दृष्टभन्तेन** । वाक्यत्वं मिथ्यात्वे न प्रयोजकमिति योऽयमभिप्रायो भाष्यकारस्य, तमज्ञात्वाप्तानाप्तवाक्ययोः सम्यङ्मिथ्यात्वहेतुदोषसदसद्भावयोरुक्तिमात्रं भाष्यकारेण कृतमिति ज्ञानात् परः पूर्वपक्षवादी 'ननु सामान्यतो दृष्टमि'त्याद्यब्रवीत् । अतो नैवं चोदनीयं कथं हेतोरप्रयोजकत्व उक्ते पुनस्तेनैव हेतुना प्रत्यवस्थानमिति । अगृही-

---

१. 'र्थेन प्रतिबद्धम् अ' ग. पाठः. २. 'णमिति' क. पाठः.

**ननु सामान्यतो दृष्टं नान्यत्वादित्यदूषणम् ।**
**एतस्मादेव दृष्टान्तो न हि पक्षे सपक्षता ॥ १७५ ॥**
**तस्मादयमभिप्रायो भाष्यकारस्य वर्ण्यते ।**
**अभ्युपेत्यार्थविषयं वाक्यव्यापारमुच्यते ॥ १७६ ॥**
**यदि स्याद् व्यवधानेऽपि वाक्यार्थापेक्षयानृतम् ।**
**दृष्टान्तो नृवचोऽत्रापि हेतुः साधारणो भवेत् ॥**
**सत्येष्वपि हि दृष्टैव पौरुषेयेषु वाक्यता ।**

---

ताभिप्रायस्य परिचोदनात् । एवं हि मन्यते — भवतु यथातथा वा पुरुषवचसां मिथ्यात्वम्, एवमपि प्रतिबन्धसिद्धेर्हेतुर्गमक एवेति कृतकाकृतकवाक्ययोः सामान्यतोदृष्टमित्यन्वय इति । अत्र परिहारभाष्यं 'न, अन्यत्वादि'ति, तदाक्षिपति — नान्यत्वादिति । कथमदूषणमत आह — एतस्मादिति । वेदवाक्यमिथ्यात्वे साध्ये पुंवाक्यं दृष्टान्त उक्तः । तत्र किमयं दोषः यदन्यत्वं नाम, प्रत्युत गुण एवायम् । अन्यत्वादेव हि दृष्टान्तो भवति । अनन्यत्वे साध्यसमत्वापत्तेः । नहि पक्ष एव सपक्षो भवति । पक्षस्य साध्यत्वात्, सपक्षस्य सिद्धत्वात् । सिद्धसाध्ययोश्चैकत्वविरोधा[1]दिति ॥ १७५ ॥

तस्मादुपेक्ष्यैव तावद् ग्रन्थव्याख्यां भाष्यकाराभिप्रायमभिदध्महे इत्याह — **तस्मा**दिति । तमेवाभिप्रायं वर्णयति — अभ्युपेत्येति वाक्यतान्तेन । अयमर्थः — परमताभिप्रायेणापिचेत्यादि भाष्ये वक्तृज्ञान एव वाक्यं प्रमाणम्, अर्थे तु न तस्य व्यापार इत्युक्तम् । तदभ्युपगच्छामः । भवतु पुंवाक्यं बाह्य एवार्थे प्रमाणं न वक्तृज्ञाने । बाह्यार्थापेक्षयैव चाप्रामाण्यवादिनो दृष्टान्तोऽस्तु नाम । तथापि दूषणमुच्यते — व्यवधानेऽपीति । यद्यपि ज्ञानव्यवहितेऽर्थेऽप्रमाणमेव पुंवाक्यं, तथापि तद्विषयप्रामाण्याभ्युपगमेनैव ब्रूमः साधारणानैकान्तिको हेतुरिति । सत्येष्वप्याप्तवाक्येषु वाक्यत्वस्य हेतोर्दृष्टत्वादितीदमत्र सामान्यतोदृष्टानुमानदूषणं भाष्यकारस्य मनसि विपरिवर्तते । अनेनैवाभिप्रायेण भाष्यमपि गमयितव्यमिति भावः । नन्वती-

---

1. 'कत्र वि' क. पाठः.

**अतीन्द्रियेऽपि किञ्चिद्धि सत्यं दृष्टं यदृच्छया ॥**
**नान्यत्वादिति चानेन परोक्तादन्यतोच्यते ।**
**अन्यो ह्येष तदाभासो विपक्षं वान्यमब्रवीत् ॥**
**यद्वान्यस्माद्विसंवादान्मिथ्यात्वं तत्र न त्विह ।**

---

न्द्रियार्थत्वे सत्यपि वाक्यत्वादिति विशेषयिष्यामः । पौरुषेयवचनं सर्वमतीन्द्रियार्थमप्रमाणमिति नानैकान्तिकत्वमत आह — **अतीन्द्रियेति** । अतीन्द्रियेऽपि हि यदा कश्चिद् यदृच्छया अदृष्टपूर्वार्थे वाक्यं प्रणयति, यथेन्द्रोऽस्तीत्येको वदति, अन्यो नास्तीति । तत्र द्वयोरन्यतरेण नियोगतः सत्येन भवितव्यमित्येकस्य वाक्यस्य सत्यता । न हीन्द्रसदसद्भावयोरन्यतरदपि प्रमाणान्तरेणावधारितम् । अतोऽनाप्तवाक्यमपि क्वचिद् यदृच्छया प्रयुक्तमतीन्द्रियार्थविषयमेव सत्यं दृष्टमिति विशिष्टेऽपि हेतावनैकान्तिकत्वमेवेति ॥ १७८ ॥

एवं भाष्यकाराभिप्रायमुक्त्वा तत्रैव भाष्यं योजयति — **नान्यत्वादित्याभासोऽन्तेन** । अयमर्थः — यादृशं परैर्नैयायिकैः सामान्यतोदृष्टानुमानमुक्तं, ततोऽन्यदिदमनैकान्तिकहेतुकं तदाभासमुक्तम् । अतोऽस्मात् सामान्यतोदृष्टाभासात् साध्यं न सिध्यति इति । प्रमाणभूतात् सामान्यतोदृष्टादस्य तदाभासस्यान्यत्वादिति भाष्यार्थ इति व्याख्यानान्तरमाह — विपक्षमिति । अयमभिप्रायः — वाक्यत्वहेतुराप्तवाक्येषु सत्येष्वपि दृष्ट इति विपक्षवृत्तिर्न साध्यं साधयतीति तदेव दूषणं, योजनामात्रं तु भिद्यते । मिथ्यात्वे साध्ये विपक्षस्य सत्यत्वस्य ततोऽन्यत्वात् तद्धामित्वाच्च हेतोरिति भावः ॥ १७९ ॥

अन्यथा व्याचष्टे — **यद्वेति** । यत् तद् वाक्यत्वस्याप्रयोजकत्वम् 'अपिचे'त्यादि भाष्ये दर्शितं यदज्ञात्वा परेण सामान्यतोदृष्टानुमानमुक्तं, तदेव 'न अन्यत्वादि'ति भाष्यकारेणोद्घाटितम् । अन्यः खलु अप्रामाण्यस्य प्रयोजको हेतुर्विसंवादः, न वाक्यत्वम् । नचासौ वेदे सम्भवति, अपौरुषेयत्वात् । पुरुषाश्रयत्वाच्च शब्दे दोषाणाम् । अदुष्टकारणजनितस्य च ज्ञानस्य विसंवादासम्भवात् । नैतदेवमिति प्रत्ययविपर्यासो विसंवादः कथमदुष्टकारणजे भविष्यति । अन्यत्वान्मिथ्यात्वकारणस्येति भाष्यगमनि-

विषयस्यापि चान्यत्वात् साध्यानासङ्गितैव सा ॥
नह्यन्यस्येति नैकस्मिन् मृषार्थेऽन्यमृषार्थता ।
विवक्षया मृषार्थत्वे नच वाक्ये मृषार्थता ॥ १८१ ॥
श्यामत्वे पुंस्त्ववच्चैतत् साधारण्ये निदर्शनम् ।
परोक्तेर्वापि दुष्टत्वाद् विकल्पसमम्[1]मुच्यते ॥ १८२ ॥

केति व्याख्यानान्तरमाह — विषयस्येति । पूर्वं हि परमतेन साध्यानासङ्गी दृष्टान्त इत्युक्तम् । सैवेयं साध्यानासङ्गिता विषयान्यत्वादुच्यते । अन्यो हि पुंवाक्यस्य विषयो वक्त्रभिप्रायः । नच तत्र मिथ्यात्वमव्यभिचारात् । पूर्वं त्वर्थविषयव्यापारमुपेत्यान्यत्वमुक्तम् । अधुना पुनः परमत एव स्थित्वा साध्यानासङ्गितोच्यत इति ॥ १८० ॥

अपरमपि 'नह्यन्यस्य वैतथ्येऽन्यस्यापि वैतथ्यमि'ति भाष्यम् । तस्यार्थं दर्शयति — नहीति । नह्यन्यस्येत्यादिना भाष्येण नान्यस्यान्यथात्वेऽन्यस्य मृषार्थता भवतीत्युच्यत इति । एतदेव विवृणोति — विवक्षेति । विवक्षा हि वक्तुस्तत्रायथार्थगोचरत्वान्मृषार्था । न वाक्यं, तस्य तत्प्रतिपादनमात्रेण प्रामाण्यात् । तस्याश्च ततः प्रतिबन्धबलात् सिद्धेः । अतो न वाक्यं मृषार्थमिति सिद्धा साध्यानासङ्गितेति । प्रथमपक्षे[2]ऽपि चैवं 'नही'त्यादि भाष्यं व्याख्यातव्यम् । नान्यस्यानाप्तवाक्यस्य मृषार्थत्वेऽन्यस्याप्तवाक्यस्यापि तद् भवतीति । सत्ये विपक्षे पुंवाक्यत्वस्य भावादनैकान्तिको हेतुरिति । एवमेव द्वितीये तृतीये च विसंवादस्य वैतथ्ये साध्येऽन्यस्य वाक्यत्वस्य वैतथ्यं साध्यं न सम्भवतीति व्याख्येयम् । चतुर्थे तु वार्त्तिकस्था व्याख्येति ॥ १८१ ॥

अन्यच्च 'नहि देवदत्तस्य श्यामत्व' इत्यादि भाष्यं, तस्याभिप्रायमाह — श्यामत्व इति । यथा श्यामत्वे साध्ये पुंस्त्वमनैकान्तिकं गौरादिष्वभावाद्, एवं वाक्यत्वमपि सत्याप्तवाक्यस्य साधारणमिति साधारण्यप्रदर्शनार्थं वेदं निदर्शनमिति । अन्ये तु दुष्टसाधनप्रयोगे दुष्टमेवोत्तरं देयमिति मन्वाना विकल्पसमा नाम जातिरियं भाष्यकारेण नान्यत्वादित्युक्तमि-

१. 'ति सा', २. 'क्षे चैवं' क. पाठः.

**यद्वा प्रमाणमेवेदं सत्यत्वेऽन्यत्वमुच्यते ।**
**विरुद्धाव्यभिचारित्वं बाधो वाप्यनुमानतः ॥ १८३ ॥**
**चोदनाजनिता बुद्धिः प्रमाणं दोषवर्जितैः ।**
**कारणैर्जन्यमानत्वाल्लिङ्गाप्तोक्तयक्षबुद्धिवत् ॥ १८४ ॥**
**तथा नाप्ताप्रणीतोक्तिजन्यत्वाद् बाधवर्जनात् ।**
**देशकालादिभेदादौ चाप्तोक्तिप्रत्ययो यथा ॥ १८५ ॥**

---

त्याहुरित्याह — परोक्तेरिति । धर्मान्तरविकल्पनात् साध्यधर्मविकल्पापादनं विकल्पसमा । सा चैवं दर्शनीया—वाक्यमेव किञ्चित् पुरुषवाक्यादन्यद् दृष्टं यथा वेदवाक्यम् । किञ्चिदनन्यद् यथा तदेव । एवमन्यानन्यत्वयोरपि विकल्पनात् सत्यमिथ्यात्वयोरपि वाक्यत्वाविशेषे विकल्पो भविष्यतीति नावश्यं वाक्यत्वान्मिथ्यात्वं सिध्यतीति । इयं च वाच्यानुक्तीतरोक्तिजनिग्रहस्थानद्वयापत्तेरवाच्यैव परमतेनोपन्यस्तेति[2] वेदितव्यं विकल्पसममुत्तरमिति ॥ १८२ ॥

एवं तावन्नान्यत्वादिति दूषणोक्तिरियमित्युक्तम् । इदानीं साधनवचनमेवेदमिति व्याख्यानान्तरमाह — यद्वेति । परेण हि मिथ्यात्वे साधिते सिद्धान्ती-हेत्वन्तरेण सत्यत्वं साधयति । प्रमाणमनुमानम् । तदुपरिष्टाद् वक्ष्यत इति । कीदृशं पुनस्तत् प्रमाणमित्याह — विरुद्धेति । यदि तुल्यबलत्वं, विरुद्धाव्यभिचारी नाम संशयहेतुः । अथ सिद्धान्तहेतुर्बलीयान् , ततोऽनुमानबाधः । इह चानुमानबाध एव, सत्यत्वहेतो[3]र्बलीयस्त्वादन्यत्वादसत्यत्वहेतूनामिति भाष्यार्थ इति ॥ १८३ ॥

तदेव सत्यत्वे[4] प्रमाणमुपन्यस्यति — चोदनेति । इदं चैकान्तिकहेतुकमनुमानं सामान्यतोदृष्टादनैकान्तिकहेतुकाद् बलवत् । अनैकान्तिकता च केवलस्य सविशेषणस्य च हेतोरुक्तैव । अतोऽनेनैव बलवता मिथ्यात्वानुमानं बाध्यत इति ॥ १८४ ॥

अस्मिन्नेव साध्येऽपरमपि हेतुद्वयमाप्तोक्तिनिदर्शनेनैव दर्शयति — तथेति । देशकालादिभेदादौ बाधवर्जनादित्यन्वयः । अत्र च बाधवर्जना-

---

१. 'त्पाद' ग. पाठः २. 'ति परित्वे', ३. 'तुव', ४. 'सम्यक्त्वे प्र' क. पाठः.

**अकर्तृकत्वसिद्ध्या च हेतुत्वं साधयिष्यते ।**
**एवमाद्यवबुध्यायं नान्यत्वादित्यत्रोचत ॥ १८६ ॥**
**प्रत्यक्षस्त्विति दार्ढ्यं वा प्राथम्यं वापि लक्षयेत् ।**
**स्वरूपतः प्रमाणत्वं मिथ्यात्वं पररूपतः ॥ १८७ ॥**

---

दिति हेतोर्लिङ्गाक्षबुद्ध्योरपि दृष्टान्तता सम्भवत्येव । साधारण्येन त्वाप्तो-क्तिप्रत्ययो निदर्शित इति ॥ १८५ ॥

नन्विदमदुष्टकारणजनितत्वमनाप्तप्रणीतोक्तिजन्यत्वं चासिद्धं, सर्व-वाक्यानां कृतकत्वादत आह — **अकर्तृकत्वेति** । साधयिष्यते हि वेदा-नामकर्तृकत्वम्[1], अतो नासिद्धो हेतुरिति । एवमादिसत्यत्वानुमानाभिप्राये-णेदमन्यत्वमुक्तवान् भाष्यकृदित्याह — **एवमिति** । आदिशब्देन सम्बन्धा-क्षेपोक्ता हेतवोऽनुसन्धातव्याः ।

भाष्यव्याख्याविकल्पाश्च षोढाद्यग्रन्थवत् कृताः ।

इति ॥ १८६ ॥

अत्रापरं सामान्यतोदृष्टस्यागमबाधप्रदर्शनार्थं भाष्यम् 'अपिच पुरु-षवचनसाधर्म्याद् वेदवचनं मिथ्येत्यनुमानं, प्रत्यक्षस्तु वेदवचने प्रत्ययः' इति । तद् यदि वाक्यगोचरप्रत्ययाभिप्रायं, तदयुक्तम् । अनाप्तवाक्येऽपि समानत्वात् । तत्स्वरूपप्रत्ययोऽपि प्रत्यक्ष एव । नच तन्मिथ्या[2] । अर्थस्तु वेदवाक्यानामतीन्द्रिय इति प्रत्यक्षसूत्रे वक्ष्यते । अतो नार्थाभिप्रायमिदम् । अथ प्रत्ययस्वरूपाभिप्रायेण प्रत्यक्षतोच्यते, साप्ययुक्ता । शून्यवादे तस्या-प्यनुमेयताया वक्ष्यमाणत्वात् । अतो व्याख्येयम्, अत आह — **प्रत्यक्ष** इति । अयमभिप्रायः — मुख्यप्रत्यक्षत्वासम्भवाद् गौणः प्रत्यक्षशब्दः । दृढं हि प्रत्यक्षं प्रथमं च स्वतःप्रमाणं परतो विसंवादादप्रमाणम् । एतच्च-तुष्टयान्यतमगुणविवक्षया प्रत्यक्षशब्द आगमिक एव प्रत्यये प्रत्युक्तः । सोऽपि दृढः, संशयविपर्ययाभावात् । शीघ्रभावी च, मिथ्यात्वानुमानाद् दृष्टा-न्ताद्यपेक्षाविरहात् । उत्पन्नस्य चानुमानेन मिथ्यात्वसाधनात् । प्रामाण्या-प्रामाण्ययोः स्वपराश्रयत्वं सर्वप्रमाणानां साधितम्[3] । अतः प्रत्यक्षतुल्योऽयं प्रत्ययः कथमन्यथा भवति । तदेतद्विपरीतार्थप्रतिज्ञानमनेन[4] विरुध्यत इति ।

---

१. 'मकृत्रिमत्वं', २. 'तदमिथ्या' क. पाठः. ३. 'देवत', ४. 'ज्ञानेनेव वि' ग. पाठः.

**ज्ञानाभावश्च मिथ्यात्वं द्वयस्यासम्भवाद् यदि ।**
**प्रत्यक्षं तत् परेषां च सिद्धमस्यानुमानतः ॥ १८८ ॥**
**यथैव तव मिथ्यात्वं साधनं साधयेदिदम् ।**
**तथा च बाधकाधीनं मिथ्यात्वमपि साधयेत् ॥**

---

नचेह वेदप्रामाण्यमस्माकमसिद्धमिति प्रत्यवस्थातुं शक्यम् । नास्तिकानामपि तच्छ्रवणे असन्दिग्धाविपर्यस्तज्ञानजन्मनोऽविशेषान्नित्यागमजनितायाश्च संविदो दुष्टकारणजनितत्वासम्भवात् । पौरुषेयागमवादिभिस्त्वात्मात्मनैव बद्ध्वा समर्पित इति न ते परेषां मिथ्यात्वं साधयतामागमविरोधमुद्भावयितुमुत्सहन्ते । पुरुषाश्रयदोषाशङ्कया स्वागमानां दूषितत्वात् । सर्वं चेदं भाष्योक्तमेव वार्त्तिककृता प्रागेवोद्ग्राहितं 'चोदनार्थान्यथाभावमि'त्यादिनेत्यनुसन्धातव्यमिति ॥ १८७ ॥

मुख्य एव वा प्रत्यक्षशब्दो व्याख्येय इत्याह — **ज्ञानाभाव**श्चेति । एवं मिथ्यात्ववादी वक्तव्यः — त्रेधा खलु मिथ्यात्वम् । इह च 'न तावत् संशयविपर्ययौ स्त' इति भाष्य एवोक्तम् । तद् यदि ज्ञानाभाव एव मिथ्यात्वं साध्यते, तत्र ते प्रत्यक्षविरोधः । प्रत्यक्षमेव हि भवत्सिद्धान्ते ज्ञानम् । यदि काममस्यैव श्रोत्रियस्य तदनुमेयं तत्त्वं, प्रत्यक्षमेव वेदवाक्यश्रवणादुत्पन्नं ज्ञानं विलोकयमानः कथं तदभावात्मकं मिथ्यात्वमात्थ इति ॥ १८८ ॥

एवं तावदागमविरोधोऽनेन भाष्येणोक्त इति व्याख्यातम् । इदानीमस्यैव तात्पर्यान्तरं दर्शयति — यथैवेति । अयमर्थः — एतदनेन भाष्येणोच्यते पुंवाक्यसाधर्म्याद् भवान् मिथ्यात्वं साधयति । तद् यथैवैतन्मिथ्यात्वं दृष्टं, तथैव वेदवाक्येनापि मिथ्या भवितव्यम् । तच्च बाधकाधीनं मिथ्यात्वं दृष्टमिति वेदेऽपि तथैव भवेत् । नच तथा सम्भवतीति साधितमेव । अतः प्रत्यक्षो हि दृढो वेदवचने प्रत्ययः । नासौ क्वचिद् बाध्यते । अतो विशेषविरुद्धो हेतुरिति ॥ १८९ ॥

---

१. 'नदागमानां', २. 'दि परमस्यै', ग. पाठः. ३. 'यं तत् प्र', ४. 'क्षेऽपि द' .क. पाठः.

धर्म इत्युपसंहार्ये यच्छ्रेयस्करभाषणम् ।
तद्धर्मपदवाच्यार्थनिरूपणविवक्षया ॥ १९० ॥
श्रेयो हि पुरुषप्रीतिः सा द्रव्यगुणकर्मभिः ।
चोदनालक्षणैः साध्या तस्मात् तेष्वेव धर्मता ॥
अन्यत् साध्यमदृष्ट्वैव यागादीननुतिष्ठतः ।
धार्मिकत्वसमाख्यानं तद्योगादिति गम्यते ॥

---

एवं चोदनालक्षणत्वमुपपाद्य भाष्यकारेणोपसंहृतं 'तस्माच्चोदनालक्षणः श्रेयस्करः' इति । अत्र च यथासूत्रमेव निगन्तव्ये श्रेयस्करपदप्रयोगेऽभिप्रायमाह — धर्म इति । धर्मपदार्थमेव व्याख्यातुं श्रेयस्करशब्दः प्रयुक्तः । तत्प्रयोगे हि चोद्यपरिहारक्रमेण श्रेयस्करो धर्म इत्यावेदितं भवतीति ॥ १९० ॥

अत्र भाष्यकारेण 'एवं तर्हि श्रेयस्करो जिज्ञासितव्यः' इति परिचोदनापूर्वमुक्तं 'य एव श्रेयस्करः स एव धर्मशब्देनोच्यते' इति । तत्र कस्यानेन प्रकारेण धर्मतोक्तेति न ज्ञायते । अतस्तद्विवेकार्थमाह—श्रेय इति । श्रेयश्शब्दोऽयं पुरुषप्रीतौ प्रसिद्धः । तत्कारणानि च द्रव्यगुणकर्माणि चोदनासामर्थ्यादवगम्यन्ते । अतस्तेष्वेव श्रेयस्करतया धर्मता भाष्यकारेणोक्तेति ॥ १९१ ॥

अत्रापरं भाष्यं— 'यो हि यागमनुतिष्ठति तं धार्मिक इति समाचक्षते' इति । तस्यार्थः श्रेयस्करो धर्मः यत्कारणं चोदनावधारितश्रेयस्करत्वयागादिकर्तरि धार्मिकशब्दं लौकिका उपचरन्ति । तदेवमुपपद्येत यदि यागादिर्धर्मः. यो हि धर्मं चरति स धार्मिकः । अतो यागादेर्धर्मत्वम् । अत एव हि तत्कर्तरि धार्मिकपदप्रयोगो घटते, नान्यथेति । तदयुक्तम् । नावश्यमयं प्रयोगो यागादीनामेव धर्मतां गमयति, तद्गुणापूर्वादिधर्मत्वेनाप्यस्योपपत्तेः । यागादिकार्येव ह्यपूर्वाद्यपि करोति । तत् कुतोऽयं विवेकः यागचरणादयं धार्मिकः नापूर्वादिचरणादिति, अत आह— अन्यदिति । अयमभिप्रायः — सत्यं, यागाद्यनुनिष्पादिन्यपूर्वसिद्धिरिति नतु तद्यागादिप्राध्यमपूर्वं प्रयोक्तृभिर्निर्दिश्यते । शक्तिरूपत्वात् तस्य । शक्तेश्चाती-

न्द्रियत्वात् । अतस्तद्दर्शनेन तच्चरितरि धार्मिकपदप्रयोगो न घटते । तस्माद् यागादियोगादेव धार्मिकत्वसमाख्यानमि'ति निश्चीयते ।

किं पुनर्यागादीनां स्वरूपमेव धर्मः । यद्येवं पूर्वापरविरोधः । पूर्वेण तावदुक्तं 'ताद्रूप्येण च धर्मत्वमि'ति । अपरेण च

'फलसाधनरूपेण[1] तदानीं[2] येन नास्त्यसौ ।'

इति । तदपि च रूपं यागादीनामतीन्द्रियतया नापूर्ववत् प्रत्यक्षादिदृश्यम् यागादिस्वरूपाभिधाने त्वनन्ता एकस्य धर्मपदस्य शक्तयः कल्पनीया भवेयुः । कथं खल्वेकयैव शक्त्यायं नानाजातीयेषु द्रव्यगुणकर्मसु वर्तते । स्यादेतत्— सकलानुगतप्रीतिसाधनत्ववचनाददोष इति । न । तस्याप्यतीन्द्रियत्वादित्युक्तम् । विशेषणमात्राभिधानप्रसङ्गाच्च । प्रीतिसाधनं हि नानभिधाय प्रीतिं शक्यतेऽभिधातुमिति सैव[3] पूर्वतरमभिधेया भवेत् । एवञ्च तन्मात्रोपक्षयिण्यभिधाव्यापारे न तद्विशिष्टाभिधानसिद्धिः । गवादिशब्दवत् सामशब्दवच्च । यत्र ह्यखण्डेन शब्देन विशिष्टो बोध्यते तत्र विशेषणमेव शब्दस्य वाच्यमिति सिद्धम् । अत एव 'सामशब्दो गीतिमात्रवचनो न सक्तां गीतिमाहे'ति वक्ष्यति । वार्त्तिककारेणाप्यपूर्वविशिष्टं कर्म धर्म इति निराकुर्वतोक्तं —

"कर्मापूर्वविशिष्टं चेद् धर्म इत्यभिधीयते ।
विशेष्यं नाभिधां गच्छेत् क्षीणशक्तिर्विशेषणे ॥"

इति । तदिदं फलविशिष्टाभिधानेऽपि समानम् । स्यान्मतं विधेयो धर्मपदार्थ इति । तन्न । एवं सति विधेरत्यन्तप्रत्यासन्ना भावनैव विधेयतया धर्मशब्दवाच्यतामश्नुवीत । 'सा हि त्र्यंशा विधीयते' इति सिद्धान्तः । तद्वरमपूर्वमेव धर्मपदवाच्यं तदन्वयव्यतिरेकानुविधानाद् धर्मपदस्य । तथाहि फलकालेऽसत्यपि कर्मणि अपूर्वसत्तयैव धर्मवानयमित्युपचरन्तो दृश्यन्ते । सत्स्वपि यागादिषु वैगुण्यादलब्धापूर्वनिष्पत्तिषु न धर्मपदं प्रयुञ्जाना दृश्यन्ते । अतो वक्तव्यो धर्मपदार्थः ।

---

१. 'नीं नास्तीति' क. पाठः. २. 'न्नास्ना ए' ग. पाठः. ३. 'शेषाभि' ख. पाठः.

**पश्वादीनि च धर्मस्य फलानीति व्यवस्थितम् ।**
**चित्रागोदोहनादीनां तान्युक्तानि फलानि च ॥१९३॥**
**तस्मात् तेष्वेव धर्मत्वं धर्माणीति च दर्शनात् ।**

---

स उच्यते — धर्मशब्दोऽयं पाचकादिवत् सभाग एव धृतिसाधने वर्तते। धृतिश्च प्रीतिपर्यायः। अयं च यथोपदिष्टानुगतपृषोदरादिमध्ये पठितः प्रकृतिप्रत्ययविभागेनोहितव्यः। तादिह धृञा धृतिः, मनिन्प्रत्ययेन च तत्साधनमभिधीयते। नचैवमाहारविहारादौ प्रसङ्गः। पङ्कजादिवद् योगरूढ्यभ्युपगमात् चोदनालक्षणश्रेयस्करमात्राभिधानात्। नच योगनिरपेक्षा समुदायशक्तिः, येन विशेषणमात्रे प्रसङ्गो भवेत्। नच भावनायां प्रसङ्गः, तस्या अतत्साधनत्वाद्, यागादीनामेव श्रेयस्साधनत्वस्य चोदनाप्रमाणकत्वात्। केवलरूढ्यभ्युपगमेनैवोपाधिद्वयस्याभिधानमेष्टव्यम्। प्रीतिसाधनत्वस्य विहितत्वस्य च प्रीतिसाधने विहिते च धर्मपदोपचारात्। प्रायिकं चैवाखण्डस्य विशेषणमात्राभिधानम्। असत्यां तु गतौ सर्वाभिधानमेव। तुल्यवच्चेह धर्मपदात् प्रीतिस्तत्साधनं च विहितमवगम्यते इति किं न शब्देनोच्यते। यदेतदपि रूपमदृश्यमित्युक्तम्। तन्न, वेदादवगमात्। अभ्युदयसाधनं याग इत्येतावदेव विदितवन्तोऽपूर्वमगणयित्वैव यागादिकर्तृषु धार्मिकशब्दमुपचरन्तो दृश्यन्ते। अतस्ताद्रूप्यमात्रेणैव ते धर्मा इति निश्चीयन्ते। अतः सिद्धमभ्युदयसाधनं विहितं धर्मपदार्थ इति। यत्तूक्तं विगुणे प्रयोगाभावान्न यागादिर्धर्म इति। तन्न। तथाविधस्याभ्युदयसाधनत्वाभावात् तस्य चाधर्मत्वात् कथं तत्र धर्मशब्दः प्रयुज्यते। फलकाले तु धर्मपदप्रयोगोऽभ्युदयसाधनाभिप्राय एव। अस्ति हि तत् तदानीमपि। शक्तिरूपेणाध्रियमाणमपि स्वरूपेण। यथा चापूर्वं न धर्मपदवाच्यं तथा वक्ष्यत एवेति॥ १९२॥

एवं तावल्लौकिकप्रयोगानुसारेण यागादयो धर्मा इत्युक्तम्। अपि च येयं पश्वादिषु धर्मफलत्वप्रसिद्धिः तयापि यागादीनामेव धर्मत्वमवगम्यत इत्याह — **पश्वादीनी**ति। अयमर्थः — पश्वादीनि तावद् धर्मफलतया प्रसिद्धानि। अतो यस्यैव तानि[3] फलानि स एव धर्म इति भवति मतिः। चित्रादिफलतया चैतानि शास्त्रादवगतानीति चित्रादयो धर्मा इति उपसंहरति — **तस्मा**दिति। न केवलं लोके। वेदेऽपि यागादिष्वेव धर्मपदप्रसि-

---

१. 'प्रीतिः' ग. पाठः. २. 'कपदप्र' ख. पाठः. ३. 'नि स' क. पाठः.

**लिङ्गसङ्ख्याविनिर्मुक्तो धर्मशब्दो निदर्शनम् ॥**
**अन्तःकरणवृत्तौ वा वासनायां च चेतसः ।**
**पुद्गलेषु च पुण्येषु नृगुणेऽपूर्वजन्मनि ॥ १९५ ॥**

---

द्भिरिति दर्शयता भाष्यकारेण दर्शितं 'यज्ञेन यज्ञमयजन्त देवाः । तानि धर्माणी'ति । तद् दर्शयति — धर्माणीति । अस्यामपि श्रुतौ यज्ञसमानाधिकरणो धर्मशब्द इति तद्वचनो निश्चीयत इति । कथं पुनर्विलिङ्गो विसङ्ख्यश्च धर्मशब्दः यज्ञसमानाधिकरणतया निर्दिश्यते । तत्सामानाधिकरण्ये हि स धर्म इति भवेत् । एकस्यैव यज्ञस्य प्रकृतत्वात्, पुलिङ्गत्वाच्च तस्य, अत आह — **लिङ्गेति** । समुज्झितलिङ्गसङ्ख्याविशेषो धर्मशब्द एवात्र भाष्यकृता दर्शितः । तद्वृत्तस्य प्रकृतग्राहित्वात्, अन्यस्य चाप्रकरणान्निश्चीयते यज्ञसमानाधिकरणो धर्मशब्द इति । लिङ्गसंख्ययोश्च छान्दसो व्यत्यय इति भावः । आद्यश्चात्र यज्ञशब्दो यज्ञसाधनलक्षणार्थः । इतरः श्रुत्यर्थ इति ॥ १९४ ॥

एवं तावद् भाष्यकारानुसारेण धर्मपदार्थो व्याख्यातः । मतान्तराणीदानीमुपन्यस्य निरस्यति — **अन्तःकरणेति न दृष्टोन्तेन** । साङ्ख्या ह्यन्तःकरणस्य मनसो वृत्तिविशेषं धर्ममाश्रिताः । शाक्यास्तु चित्तस्यैव चित्तान्तरेण भावितां शुभां वासनाम् । आर्हतास्तु कार्यारम्भकान् सूक्ष्मान् मूर्तिमतः पुद्गलान् धर्ममाहुः । पुद्गलशब्दस्त्वार्हतैस्तेष्वेव परिभाषितः । वैशेषिकास्त्वात्मनो विशेषगुणा धर्मा इति प्रतिपन्नाः । [1]मीमांसकैकदेशिनस्त्वपूर्वजन्मन्येव धर्मशब्दमुपचरन्ति । वर्णितश्च तेषामभिप्रायः । अपूर्वजन्मनीति चापूर्वशब्दनिर्वचनम् । न पूर्वं जन्मास्येत्यर्थः । तद्धि न कर्मणः पूर्वं जायत एव, कृते कर्मणि तन्निष्पत्तेः । एतेषु सर्वेषु च लोके धर्मशब्दप्रयोगो न दृष्टः । लौकिकश्च प्रयोगः शब्दादर्थावधारणे मूलम् । अतो न ते धर्माः । कथं पुनरन्तःकरणवृत्तेर्धर्मत्वं निराक्रियते । मीमांसकैरपि तद्धर्मत्वमिष्यत एव । यागाद्यनीक्षणादिसङ्कल्पानां मानसानामेव धर्मत्वा-

---

१. 'ण शु' क. पाठः.

**प्रयोगो धर्मशब्दस्य न दृष्टो नच साधनम् ।**
**पुरुषार्थस्य ते ज्ञातुं शक्यन्ते चोदनादिभिः ॥ १९६ ॥**

---

भ्युपगमात् । नैवम् । न मानसाः सङ्कल्पाः, आत्मकर्तृकत्वादुपनिषत्सु तथा दर्शनात् । श्रूयते हि— 'य आत्मा अपहतपाप्मा विरजो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः' इति । तथा 'स यदि पितृलोककामो भवति सङ्कल्पादेवास्य पितरः समुत्तिष्ठन्ती'ति । कृद्योगलक्षणा कर्तरि षष्ठी आत्मकर्तृकतां सङ्कल्पस्य दर्शयतीति न मनोवृत्तेर्धर्मत्वम् । चित्तानां च वास्यवासकभावानुपपत्तिः क्षणिकायुगपद्भुवां विज्ञानवादेऽभिधास्यत एव । तदुपेक्ष्यैव तावत् प्रयोगाभावान्न चित्तवासना धर्म इत्युक्तम् । पुण्याः पुद्गला इति यद्यणवः, न तेषु धर्मशब्दप्रयोगो लोके दृष्टः । अथान्ये ते, तर्हि प्रमाणाभावात् कुतः सेत्स्यन्ति । कुतस्तरां च तेषु धर्मशब्दप्रयोगोऽलब्धसद्भावेषु । पुंगुणस्तु नित्यो वा वैभवादिवत्, कार्यो वा सुखादिवत् । नित्यत्वे अनुष्ठानवैयर्थ्यम् । कार्यं तु नापूर्वाद्यन्यतममात्मसमवायिनं गुणभेदमुपलभामहे । अपूर्वं तु यथा न धर्मस्तथोक्तमेव । 'अप्रयोगादि'ति वक्ष्यति च । यदपि च कर्तृफलदाय्यात्मगुणः संयोगजो दृष्टः कार्यविरोधीति धर्मस्य लक्षणमुक्तं, तदयुक्तम् । अधर्मसाधारण्यात्, स्मृतिहेतुसंस्कारसाधारण्याच्च । तयोरप्येवंलक्षणकत्वेन धर्मत्वप्रसङ्गात् । कर्तृफलदायीति चाव्यापकः । श्राद्धे त्वकर्तॄणां पित्रादीनां तृप्तिफलश्रुतेः । वैश्वानर्यांश्च पितृकर्तृकाया एव पुत्रगामि फलमिति वः सिद्धान्तः । 'वैश्वानरं द्वादशकपालं निर्वपेत् पुत्रे जाते' इति हि विधाय आम्नायते 'यस्मिन् जात एतामिष्टिं निर्वपति पूत एव स तेजस्व्यन्नाद इन्द्रियावी पशुमान् भवती'ति । 'शास्त्रफलं प्रयोक्तरि' (३. ७. १८) इत्युत्सर्गतः प्राप्तपितृगामिता पुत्रगामिफलश्रुत्यापोद्यते । अतः सिद्धं नान्तःकरणवृत्त्यादयो धर्मा इति । ननु श्रेयस्साधने तावद् धर्मपदप्रयोगो भवद्भिरपीष्यते । एते च श्रेयस्साधना इति कथं तेषु धर्मशब्दप्रयोगो न दृष्ट इत्युच्यते । अत आह— नचेति । न तावदेषां फलसाधनता प्रत्यक्षादिगम्या, अतीन्द्रियत्वात् । नच चोदनागम्या, यागादीनामेव तया फलसाधनतावगतेरिति ॥ १९६ ॥

**नच वस्त्वन्तरं शक्यमपूर्वं स्वर्गयागयोः ।**
**ज्ञातुं साधनभूतं वा साध्यं वा नाप्यतोऽन्यथा ॥**
**श्रुतसाधनसाध्यत्वत्यागेनाश्रुतकल्पना ।**
**प्रसज्येतास्य ताद्रूप्ये व्यतिरेके त्वरूपता ॥ १९८ ॥**

---

आह — अस्त्वन्तःकरणवृत्त्यादयो न श्रेयस्साधनतयावगम्यन्त इति न धर्मा इति । अपूर्वं तु प्रीतिसाधनमेव, अतिक्रान्ते कर्मणि तत एव फलसिद्धेः । यागसाधनवादिनोऽपि हि अपूर्वं कृत्वेति व्याचक्षाणा अपूर्वसिद्धिमन्तर्भावयन्ति । परैरप्युक्तम् : 'आरम्भात् स्वर्गः कर्मणा चारम्भः' इति । आरम्भ इत्यपूर्वमेव समाचक्षते । स ह्यारभ्यते । अतोऽपूर्वं धर्म इत्येव न्याय्यं मन्यन्ते, अत आह — नचेति । अयमभिप्रायः — किमिदमपूर्वं नाम । यदि तावत् कर्मशक्तिः फलशक्तिर्वा, नासौ साधनं साध्यं वा । शक्तेरकारकत्वात्, पुरुषाभिलषितफलानुषङ्गिकतया सिद्धत्वाच्च । यदि वस्त्वन्तरमेवापूर्वमुच्यते, तदप्ययुक्तम् । तस्य साध्यसाधनयोरन्यतररूपाननुप्रवेशितया प्रत्येतुमशक्तेः । नहि तत् स्वर्गस्य साधनं यागस्य च साध्यं शब्दादवगच्छामः[१]। नान्यतः प्रमाणात्, तदवेद्यत्वाभ्युपगमात् । अत एव न शब्दात्, प्रमाणान्तरागोचरे व्युत्पत्त्यभावात् । अपदार्थस्य चावाक्यविषयत्वात् । अतः साध्यसाधनभावादन्यथापि प्रमाणान्तरेण न वस्त्वन्तरभूतमपूर्वं शक्यावगमम् । एतद्रूपद्वयरहितस्य तस्य रूपान्तरेण दर्शयितुमशक्यत्वादिति ॥ १९७ ॥

अपिच यद्यपूर्वं यागस्य साध्यं स्वर्गस्य च साधनमिष्यते, ततः श्रुतहानिरश्रुतकल्पना चेत्याह — श्रुतसाधनेति । ताद्रूप्यं तेन भावना च वाक्यार्थः । सा च साध्यसाधनापेक्षिणी यथा स्वर्गयागावेव गृह्णाति तथा भावार्थाधिकरणे वक्ष्यते । इहापि च भावनापञ्जरप्रकरणे । अतस्तत् तावद्वेद्यमश्रुतं च । अतीन्द्रियस्यावस्तुनो गगनकुसुमादिसन्निभस्य साध्यसाधनत्वं कल्पनीयमित्यश्रुतकल्पनेति । अन्यतररूपानभ्युपगमे निस्स्वभावस्याभाव एव भवेदित्यभिप्रायेणाह — व्यतिरेके त्वरूपतेति ॥ १९८ ॥

---

१. 'प्रकारान्त' क. पाठः. २. 'स्म ह' ग. पाठः.

तस्मात् फले प्रवृत्तस्य यागादेः शक्तिमात्रकम् ।
उत्पत्तौ वापि पश्वादेरपूर्वं न ततः पृथक् ॥ १९९ ॥
शक्तयः सर्वभावानां भावशब्दैर्विशेषिताः ।
नोपाख्यायन्त इत्येवं नापूर्वे धर्मशब्दता ॥ २०० ॥
पुरस्ताच्चोदनाशब्दो विधावेव व्यवस्थितः ।
नच तल्लक्षणा हिंसा प्रत्युदाहरणं कथम् ॥ २०१ ॥

---

इदं च प्रौढिप्रदर्शनार्थमुक्तम् । नन्वेतद्रूपद्वयरहितस्य धर्मशब्दवाच्यतोपपद्यत इति । अतो न तत्त्वान्तरमपूर्वम् । किन्तु फलं कर्तुमभिप्रवृत्तस्य यागादेरेवं शक्तिमात्रं, पश्वादेर्वोत्पत्तावभिप्रवृत्तस्य शक्तिमात्रमेव सूक्ष्मावस्था अपूर्वम् । न तत्त्वान्तरम् । नच कर्मशक्तिरेव फलसाधनं, कर्मावान्तरव्यापारत्वात् । नचावान्तरव्यापारव्यवधिरकारणतामापादयति, काष्ठादीनां ज्वलनादिव्यापारव्यवधाने तत्प्रसङ्गात् । अतः कर्मैव शक्तं फलसाधनं न शक्तिरिति शास्त्रादवगम्यमाने कथं शक्तेर्धर्मपदवाच्यतेत्यभिप्रायेणाह — **तस्मादिति** ॥ १९९ ॥

इतश्च फलसाधनशक्तिर्न धर्म इत्याह — **शक्तय इति** । अस्यार्थः भावशक्तयः खलु साधारणशब्दैरेव योग्यताशक्तिसामर्थ्यादिभिर्दृष्टाभिधानाः न विशेषतो भावशब्दैरुपाख्यायन्ते । धर्मशब्दस्तु विशेषतो भावशब्दः । अन्यत्रैवञ्जातीयकेऽप्रयोगात् । नहि लौकिकानां द्रव्यादीनां शक्तयो धर्मपदेनोपाख्यायन्ते । अतो न यागादीनां शक्तयो धर्मपदेनोपाख्यायन्त इति सिद्धमिति ॥ २०० ॥

अत्रापरमर्थपदव्याख्यानार्थं भाष्यम् — 'उभयमिह चोदनया लक्ष्यते अर्थोऽनर्थश्च । कोऽर्थः. यो निःश्रेयसाय ज्योतिष्टोमादिः । कोऽनर्थः. यः प्रत्यवायाय श्येनो वज्र इषुरित्येवमादिः । तत्रानर्थो धर्म उक्तो मा भूदित्येवमर्थमर्थग्रहणमि[1]ति । अस्य किलायमर्थः यदि चोदनालक्षणो धर्म इत्येतावदुच्येत, अतोऽनर्थस्य चोदनालक्षणस्य श्येनादेर्धर्मता भवेत् । अनर्थश्चासौ प्रत्यवायकरत्वेन । अतस्तन्निवृत्त्यर्थोऽर्थशब्द इति । तदेतदाक्षिपति — **पुरस्तादिति** । अस्यार्थः—एकाङ्गविकलं हि प्रत्युदाहरणं भवति ।

---

१. 'ति । तद् य' ग. पाठः.

**चोदनालक्षणो यश्च श्येनादिरिह गम्यते ।**
**निषेधाभावतस्तस्य कथं ब्रूयादनर्थताम् ॥ २०२ ॥**
**यद्यपि स्याद् विधिस्पृष्टे निषेधो नैव तादृशः ।**
**विज्ञायते ह्यनर्थत्वं षोडशिग्रहणादिवत् ॥ २०३ ॥**

---

न व्यङ्गविकलम् । तद् यदेव चोदनालक्षणपदेन न व्यावर्तयितुमिष्टं, तदर्थ-ग्रहणेन व्यावर्तनीयम् । अनर्थश्च चोदनालक्षणपदेन व्यावर्तितः । विधायकस्य वाक्यस्य चोदनात्वात् । तेन चानर्थहेतोः हिंसाया अलक्ष्यमाणत्वात् । प्राणवियोगफलो हि व्यापारो हिंसा । सा च 'न हिंस्यादि'ति श्रुत्या निषिद्धत्यनर्थः । स च निषेधलक्षितः नतु चोदनालक्षित इति चोदनालक्षणपदेनैव नह्यावृत्तिसिद्धिरनर्थकमर्थपदमिति । पुरस्तादिति । 'चोदनेति क्रियायाः प्रवर्तकं वचनमि'त्यत्रेत्यर्थः ॥ २०१ ॥

स्यादेतत्—श्येनादयोऽत्र भाष्यकारेण प्रत्युदाहृताः, ते च चोदनालक्षणा एवेति । तदयुक्तम् । यदि नाम श्येनादयश्चोदनालक्षणाः; न त्वर्थपदेन व्यावर्तयितुं शक्यन्ते । निषेधप्रमाणकत्वादनर्थत्वस्य । तेषां च विधिविषयाणां निषेधागोचरत्वादित्यभिप्रायेणाह चोदनेति । तदिह योऽनर्थो हिंसा नासौ चोदनालक्षणा, निषेधलक्षणत्वात् । ये च चोदनालक्षणाः श्येनादयः, न तेऽनर्था इत्युभयतःपाशा रज्जुरिति ॥ २०२ ॥

स्यादेतत् यदि नाम निषेधप्रमाणकमनर्थत्वं न । एवमपि श्येनादौ न सम्भवति, विधिविषयाणामपि निषेधविषयत्वसम्भवादतिरात्र इव षोडशिनः । अत आह—यद्यपीति । अयमभिप्रायः न तावद् विध्यवरुद्धे विषये निषेधः सम्भवति । यद्यपि क्वचिद् भवति, तथापि न तादृशान्निषेधादनर्थत्वं विज्ञायते । केवलो हि निषेधोऽनर्थत्वमापादयति, न विधिसहितः यथोदाहृत एव षोडशिनि । नह्यसावनर्थः, अनुष्ठानविकल्पमात्रार्थत्वान्निषेधस्य, उभयथापि क्रतुफलसम्पदोऽविशेषात्[1] । अतो यदि नाम श्येनो निषिध्येत नैवमप्यभिचारविधिना विहितोऽनर्थत्वं प्रतिपद्यते । केवलनिषेधगोचरा एव कलञ्जभक्षणादयोऽनर्थाः, प्रत्यवायहेतुत्वात् ।

---

1. 'न् र्यादि' क. पाठः.

किं पुनस्तेषां प्रत्यवायहेतुत्वे प्रमाणम् । यदि निषेधः, तदयुक्तम् । नञर्थपर्यवसाय्येव हि निषेधविधिर्न निषेध्यस्यानर्थतामापादयितुं क्षमः । तावतैव निषेधविध्यर्थसिद्धेः । निषिध्यमानक्रियाकर्तुरेव निषेधविधिष्वधिकारः । तस्यां च रागादिना प्रवृत्तः पुमानधिकारी लब्ध एवेति नाधिकार्यन्तरापेक्षा । एवञ्च न तद्विशेषणेऽपि । अधिकारी हि नानवच्छिन्नो विशेषणेन बोद्धुं शक्यत इति तद्विशेषणापेक्षा । तत्र स्वर्गपुत्रादिश्रुतिषु कामाधिकारेषु काम्यपर्यन्तता सिद्धा । जीवनभेदनादिश्रुतिषु निमित्ताधिकारेषु निमित्तपर्यन्ततेति मीमांसाकृतधियो धीरा विभजन्ते । निषेधाधिकारेषु न तावत् प्रत्यवायपरिहारः साध्यतया श्रुतः । नच पिण्डपितृयज्ञवत् कल्पयितुं शक्यते । अधिकारिलाभात् । उक्तं हि निषिध्यमानक्रियाकर्तुरेवाधिकारः इति । किं पुनस्तत्र विशेषणम् । भक्षयतिरेव । नन्वसौ विषयविशेषणम् । सत्यम्, विषयस्यैव विशेषणं गले पातिकया भक्षयतिरधिकारिविशेषणमाख्यायते । यत्र खलु नञर्थे पुरुषो नियुज्यते स विषयः । न चासौ भक्षयतिनानवच्छिन्नो बोद्धुं शक्यत इति तद्विशेषणतयैव पर्युपयुक्तस्य भक्षयतेर्बलादधिकारिविशेषणता सम्पत्स्यते । एषा हि तत्र वचनव्यक्तिः यो भक्षयेत् स नेति । एवञ्च सम्पन्नमुभयं यश्च विषयो नञर्थः यश्च भक्षयति प्रवृत्तोऽधिकारीति नाधिकार्यन्तरापेक्षायां प्रमाणमस्ति । नच किञ्चिदधिकारे हेतुतया सम्बद्धं साध्यतया सम्बध्यते । नियोगसिद्धिनान्तरीयकत्वात् फलसिद्धेः । इतरथा साध्यद्वयापत्तेः । एवं सर्वत्र । किमिदानीं प्रत्यवायकराणि । निषिद्धानि महापातकोपपातकादीनि तथा नाम । ननु श्रुतिपरतन्त्राणामशब्दार्थकल्पना मीमांसकानाम् । किमिति तर्हि निषिद्धं न क्रियते, विहितं वा किमिति क्रियते । विहितत्वादिति चेत्, समानमिदं निषिद्धायां क्रियायाम् । तदपि निषिद्धत्वादेव न क्रियते । नहि विधिनिषेधाभ्यामन्यदस्ति नाम हेत्वन्तरं वैदिकेषु प्रवृत्तिनिवृत्त्योः । तस्मान्न किञ्चिन्निषिद्धानां प्रत्यवायकरत्वे प्रमाणं पश्यामः । कस्तर्हि दुःखहेतुः । किं नो विदितेन कारणेन । अस्ति तावद् दुःखहेतुः तदेव हि नस्तत्र प्रमाणम् ।

अत्राभिधीयते — निषेधश्रुतावर्थापत्तिरेव निषिद्धानां प्रत्यवायकरत्वे प्रमाणं विधिश्रुताविव विहितानामभ्युदयहेतुत्वे । तथा व्युत्पत्तेः । यथा

खल्वयं प्रवर्तितोऽप्यनपेक्षितयोगक्षेमो न प्रवर्तते, एवं वारितोऽपि न ताव-च्चिकीर्षितान्निवर्तते यावद् दुःखहेतुरयमिति न प्रतिपद्यते । एष ह्या सम्भवाद् दुःखहेतुमेव त्रिविधमहासीदिति निषेधश्रावी दुःखहेतुरयं निषेधविषय इति प्रतिपद्यते । यत्त्वधिकारिलाभे न कल्पनाबीजमिति । तन्न । हिताहितप्रा-प्तिपरिहारार्थिन एव सर्वत्राधिकारात् । नित्याधिकारेष्वप्युपात्तदुरितक्षयाकर-णनिमित्तप्रत्यवायपरिहारार्थिन एव सर्वत्राधिकारसमर्थनात् । या तु विष-यविशेषणता निषेधगोचराणां क्रियाणामुक्ता, साप्ययुक्ता । भावार्थविषय-त्वाद् विधेः । नञर्थस्याभावार्थीभूतस्याविधिविषयत्वात् । अत्यन्तानुपाख्ये-यनञर्थवादिनां च सुतरामविधिविषयत्वं तदर्थस्य । अतो नात्र विध्यर्थः स-म्पाद्यतयावगम्यते । किन्त्वनागतानुतिष्ठासतभावविरोधफल एवात्र नञ् । एषा चात्र वचनव्यक्तिः यद्धन्यात् तन्नेति । वक्ष्यति च — 'भाववारिका नञो वृत्तिरि'ति । अतो येषामेव नात्यन्तमवस्त्वात्मा नञर्थः, तेषामेव तावत् तदर्थोऽभिधीयत इति युक्तमभिधातुमिति । अपिच यदेतद्विषयविशेषण-तयोपयुक्तस्य पुनरधिकारिविशेषणत्वकल्पनं, तदपि न चतुरस्रमिव मन्या-महे । विषयविशेषणं हि सर्वमपूर्ववत् साध्यतयाग्नीषोमीयसौर्यादिषु सम-धिगच्छन्तो दृश्यन्ते एवं यागं कुर्यादिति । अधिकारिविशेषणं तु सिद्धं यत् स्वर्गकामजीवनभेदनादिमानिति । तत् कथमेक एव भक्षयतिः सिद्धसा-ध्यभावमनुभवतीति सम्भावयामः । निर्दोषाश्च निषेधाधिकारा इति लोक-शास्त्रविरुद्धमभिधीयमानं नास्तिक्यमेवापादयति । दुःखोत्पत्तौ किं नो वि-दितेन कारणेनेति निस्सरणोपायमात्रम् । नैवंविधेनोत्तरेण शिष्याणां भ्रा-न्तिराधातुमुचिता । न तावदहेतुकानि दुःखानि, अभूत्वा भवनात् । न विहितहेतुकानि । तेषां श्रुताश्रुतानेकविधाभ्युदयहेतुत्वात् । नचाविहिताप्रति-षिद्धहेतुकानि, तेषामपि वर्जनीयत्वापत्तेः । को हि प्रेक्षावान् दुःखहेतुं न परि-हरति । पारिशेष्यान्निषिद्धानामेव दुःखहेतुत्वमास्थेयम् । कथं तदप्रमाणम-भिधीयते । पारिशेष्यं प्रमाणमस्तु न शास्त्रमिति चेत् । एवञ्जातीयकेष्व-नुमानस्याप्रवृत्तेः । अश्रुतफलानां च विहितानामपि नित्यानां हेतुत्वसम्भ-वान्न पारिशेष्यलाभः । तस्मात् शब्दप्रमाणमेव निषिद्धानां प्रत्यवायकरत्वं यथास्माभिरुक्तम् ।

---

१. 'श्वि', २. 'स्मारणमात्रम्', ३. 'विहितानि'. ४. 'गे' ख. पाठः. ५. 'त्र' ग. पाठः.

यस्तु वदति—ब्राह्मणहननादिषु निषेधाधिकारेषु ह्यर्थवादोपात्ता यातनाविशेषाः 'तं शतेन यातयादि'त्यादयः साध्यतया श्रूयन्ते । तैश्च मिलितैव निषिध्यमानक्रियाधिकारिणं विशिनष्टि । अतः संवलिताधिकार एवायं, शतादियातनापरिहारकामो हननाभिप्रवृत्तो न कुर्यादिति । दृष्टं चार्थवादोपात्तमधिकारिविशेषणं रात्रिसत्रे । तदिहाधिकारिहेत्वपेक्षायामगृह्यमाणे विशेषे तदपि हेतुतया स्वीक्रियत इति । तदयुक्तम् । अगृह्यमाणे विशेष एवं नाम । नचेह तदग्रहणम् । स्वपदवाक्यान्तरोपात्तयोर्महाविशेषात् । रात्रिसत्रे हि फलान्तराश्रवणादर्थवादोपात्तप्रतिष्ठाब्रह्मवर्चसादीनां चागृह्यमाणविशेषाणां च युगपदुपस्थानात् सर्वार्थवादोपात्तफलार्थिन एवाधिकार इति युक्तं कल्पयितुम् । एवं जातेष्टावपि समस्तार्थवादोपात्तपूतादिविशेषाणामगृह्यमाणविशेषत्वात् पुत्रजन्मनश्चाधिकारिविशेषणानुरूपेणाश्रयणाद् युगपदेव सर्वविशेषणविशिष्टोऽधिकारीति कथ्यते । इह तु 'न कलञ्जं भक्षयेदि'ति समानपदोपात्तो भक्षयतिरधिकारिविशेषणतयावगत इति नाधिकारिहेत्वन्तरापेक्षा । एवं ब्राह्मणहननादिप्रतिषेधेष्वपीति न क्वचिदार्थवादिकफलविशेषणापेक्षा । यदि तूच्यते नञर्थविशेषणतयैव धात्वर्थोऽवगतो यावदधिकारिविशेषणतया कल्प्यते, तावदर्थवादोपात्तविशेषणान्युपस्थितानीति विशेषाग्रहणमिति । न, एवमपि विपरीतविशेषणापत्तेः । धात्वर्थो हि यदा विषयविशेषणतयावगतः पुरुषगुणतयावकल्प्यते । अर्थवादोपात्तानि त्वनन्यत्रोपयुक्तानीति तद्विशिष्टाधिकारिकल्पनैव न्याय्येति न संवलिताधिकारसिद्धिः । एवञ्च विषयविशेषणस्यैव भक्षयतेर्गलेपातिकयाधिकारिविशेषणत्वमित्युपेक्षितव्यम् । यदपि 'शतेन यातयादि'त्यादिविध्युपनिबन्धनं साध्यत्वमाचक्षते, तदप्ययुक्तम् । अविधिविषयत्वात् फलानां साध्यभावस्य । वक्ष्यते च 'तस्य लिप्सार्थलक्षणे'ति । काम्यतयैव फलानि श्रुतिभिरुपनीयन्ते, किमत्र विधिश्रुत्या । अत एव रात्रिसत्रे प्रतिष्ठाकाम इति विपरिणामाश्रयणं प्रतिष्ठादीनां साध्यतासिद्ध्यर्थं, नतु प्रतितिष्ठेयुरिति विध्याश्रयणमिति यत्किञ्चिदेतत् । अतः सिद्धं निषेधप्रमाणकमनर्थत्वमिति ॥ २०३ ॥

१. 'नम । ए', २. 'क्ष । उन । य'. ३. 'पञ्चम'. ४. 'यावदिष', ५. 'वकल्प्य' ग. पाठः

**चोदनालक्षणं चोक्त्वा निषिद्धत्वाद् विरुध्यते ।**
**श्येनादावुपदिष्टे च हिंसा हीति न युज्यते ॥ २०४ ॥**
**हिंसा हि फलमेतेषां भिन्ना तेभ्यः स्वरूपतः ।**
**सा हि प्राणवियोगात्मा श्येनस्तत्रासिवत् पृथक् ॥**
**उपदेशाभिधानं च नाविधेयेऽवकल्पते ।**

---

एवं श्येनादिस्वरूपाभिप्रायेण तत्फलाभिप्रायेण वा न प्रत्युदाहरणग्रन्थो घटत इत्युक्तम् । पूर्वापरविरोधादप्ययमग्रन्थ इत्याह—**चोदनेति** । 'उभयमिह चोदनया लक्ष्यते' इति श्येनादीनां चोदनालक्षणत्वमुक्तम् । पुनश्च 'कथं पुनरसावनर्थः । हिंसा हि सा । सा च प्रतिषिद्धे'ति यन्निषिद्धत्वमुच्यते, तत् तेन चोदनालक्षणत्वप्रतिज्ञानेन विरुध्यते । विधायकं हि वाक्यं चोदना । अतः कथं तल्लक्षितस्य विधेयस्य निषिद्धत्वं पुनरभिधीयते इति । अपरमपि 'हिंसा हि सा । सा च प्रतिषिद्धे'ति भाष्यं, तद् दूषयति — श्येनादाविति । योऽयमुपदिष्टश्चोदनालक्षणः श्येनादिरसौ हिंसेति समभिव्याहारो न युज्यत इति ॥ २०४ ॥

कथं न युज्यते, अत आह— **हिंसा हीति** । न श्येनादयो हिंसा । फलं हि तेषां हिंसा । सा च स्वरूपेण भिन्ना । ननु त एव हिंसेति स्वरूपभेदमेव दर्शयति—सा हीति । अभिचारो हिंसा मारणमिति पर्याया इति प्राणवियोजनात्मिकैव हिंसा । ननु तथा श्येनादिः, तस्यासिवद्धिंसायाः पृथक्त्वात् । यथा ह्यसिना शत्रौ व्यापाद्यमाने छेदनमेवासिजन्यं, हिंसा नासिः, एवं श्येनादिजन्यमायुर्भाग्यच्छेदनमेव हिंसा न श्येन इति न तस्मिन् हिंसाभिधानमुपपन्नमिति ॥ २०५ ॥

अपरमपि 'कथं पुनरसावनर्थः कर्तव्यतयोपदिश्यते' इति प्रश्नपूर्वकमुक्तं 'नैव श्येनादयः कर्तव्या विज्ञायन्ते, यो हि हिंसितुमिच्छेत् तस्यायमभ्युपाय इति हि तेषामुपदेशः' इति । तदपि नोपपन्नमित्याह— **उपदेशेति** । यदा हि नैव श्येनादयः कर्तव्यतया विज्ञायन्त इति तेषां विधेयत्वमपह्नुतं, तदा कथमविधेयेष्वेवोपदेशाभिधानं तेषामुपदेश इति । विध्युपदेशशब्दयोः पर्यायत्वादिति भावः ।

---

१. 'ह्' ग. पाठः,

## श्येनादेरविधाने च कस्यान्यस्य विधेयता ॥ २०६ ॥

स्यादेतत् — अविधेयेष्वेव चोदनालक्षणत्वमात्रेणोपदेशवाचोयुक्तिः । कथमविधेयानां चोदनालक्षणत्वमिति चेत् । क्रमवदिति ब्रूमः । यथा खलु 'अध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयती'ति न तावत् क्रमो विधीयते । यागादिवद् अभावार्थीभूतस्याविधिविषयत्वात् । नच दध्यादिद्रव्यवत् । अकारकत्वात् । अकारकत्वं चामूर्तत्वात् । नचारुणादिगुणवद् द्रव्यावच्छेदेन कारकत्वम्, एकैकपदार्थावच्छेदकत्वेनानुपलक्ष्यमाणत्वादनेकाश्रयत्वात् । न च संख्यादिवद् विधानम्, अपृथक्पदाभिधेयत्वात् । पृथक्पदाभिधेया हि संख्या 'तां चतुर्भिरादत्त' इति सा विधीयेतापि । नचैवं क्रमः, प्रचयादवगम्यत्वात् । अतः कथं विधिविषयो भवेत् । तथा 'वेदं कृत्वा वेदिं कुर्या'दिति पदार्थ एव कर्तव्यबुद्ध्या गृह्यते न तु क्रमः । कथं वा अतद्गोचरो विधीयेत । अतोऽविधेय एव क्रमः । अथ च नाचोदनालक्षणः । विध्यनुमतत्वात् । अनुमन्यते हि विधिरानुपूर्व्यमग्न्याधानादिब्राह्मणतर्पणावसानं पदार्थजातमेकत्र कर्तर्युपसंहरन् । न ह्येकः कर्ता युगपदखिलमुपपादयितुमलं विधिवितानम् । अतो विध्यभ्यनुज्ञामात्रेण विधानविनियोगशून्योऽपि क्रमः शास्त्रार्थ एव । एवं श्येनादयोऽपि नियोगविषयतयावगताश्चोदनालक्षणाः, न तु विधीयन्ते । यद्धि नियोगसामर्थ्यादेवोपादीयते तद् विधेयमिति तन्त्रे व्यवहारः । कथं तर्हि विषयभावः । यस्मिन्नर्थे स्थित्वा पुरुषो नियुज्यते नियुक्तोऽस्मीत्यधिकारं बुध्यते स तु विषयः, न तु विषये नियोगो नियुङ्क्ते । आत्मन्येव नियोगात् । वक्ष्यति चापूर्वाधिकरणे — 'आरम्भे हि पुरुषो नियुज्यते न कर्मणी'ति । अतः सिद्धमविधेया अपि चोदनालक्षणाः श्येनादय इति । एवं च 'उभयमिह चोदनया लक्ष्यते' इति श्येनादिस्वरूपाभिप्रायमेव, श्येनस्य विधिविषयत्वेन चोदनालक्षणत्वात् । अविधेयत्वाच्च निषेधविषयत्वोपपत्तिः । अतो निषिद्धत्वाभिधानमपि युक्तमेव । फलार्थिता हि श्येनानुष्ठाने निमित्तं, न विधिः । तदभिप्रायेण च तस्य लिप्सार्थलक्षणेति । अङ्गहिंसा त्वफलसाधनत्वादसत्यां फलप्रयुक्तौ विधिनैवानुष्ठाप्यते इति नास्पदं निषेधस्य । इति-

१. 'लम् । अतो', २. 'यविभागः य' ग. पाठः.

कर्तव्यता हि सा । सा विधिनैवाङ्गीकृता कथं निषेधविषयो भवेत् । 'हिंसा-हीत्यपि श्येनादिस्वरूपाभिप्रायमेव । प्राणवियोगफलो हि व्यापारो हिंसा, तथाच श्येनादिः अतः सोऽपि हिंसैव । नच खड्गादौ प्रसङ्गः, अव्यापाररूपत्वात् । नच श्येनसमनन्तरं निधनं नोपलभ्यत इति श्येनो न हिंसा, तावतापि तत्फलत्वानपायात् । नहि खड्गादिहते व्रणपरिपाकादिना चिराद् विपद्यमाने खड्गाभिघातो हिंसेति न बुध्यते । अत एव खादकादयोऽपि घातका इति मानवाः स्मरन्ति । अतो हिंसा श्येनो निषिद्धश्चानर्थश्च चोदनालक्षणत्वेन धर्मो मा भूदित्यर्थग्रहणेन व्यावर्तित इति सर्वं समञ्जसमेवेति । अत आह — श्येनादेरिति । अस्याभिप्रायः — यत् तावदविधेया अपि क्रमवच्चोदनालक्षणाः श्येनादय इति । तदयुक्तं, दृष्टान्तासिद्धेः । न हि नः क्रमो न विधीयते । यत्रैव हि विधेरन्यतः पुरुषो न प्रवर्तते तद्विधेयम् । अप्रवृत्तप्रवर्तकत्वाद् विधेः । नच फलादन्यत्र पुरुषो रागादिना प्रवर्तते । न ह्यस्य क्रमानुष्ठाने रागादयः प्रवर्तकाः । विधिरेव तु निश्शेषशेषशेषिविषये प्रयोगे एकं कर्तारमायोजयन् नानाक्षिप्तानुपूर्व्यविशेषपरिग्रह आत्मानं लभत इति षोढाविभक्तपाश्चमिकप्रमाणसहायस्तं तमानुपूर्व्यविशेषं शास्त्रार्थतया नियच्छति ॥

किमिदानीं प्रयोगविधिप्रमाणक एव क्रमः । नन्वसौ युगपदुपसंहरति । तत्र च क्रमविरोधः । न । क्रमानुगुणयौगपद्यपरिग्रहात् । न खल्वीश्वरोऽपि साङ्गं प्रधानमेकत्र क्षण उपसंहर्तुं क्षमः । अत एकोपक्रमावसानत्वमेव शेषशेषिणां प्रयोगविधिप्रमाणकं नैकक्षणभावित्वम् । अवधृतस्वरूपाणां प्रयोगो रच्यते । सक्रमकाश्च पदार्था अवधृता इति तदविरोधिन्येव यौगपद्यकल्पना । यत्तु असति विनियोगे नाङ्गत्वमिति । तन्न । तार्तीयैरेव श्रुत्यादिभिः किञ्चिद्विलक्षणैर्विनियोगात् । अपिच अविनियुक्तमपि पश्वेकत्वमङ्गमिच्छतां किमपराद्धं क्रमेण, यदसावनङ्गमित्याश्रितम् । औपादानिकं तस्याङ्गत्वमिति चेत्, यदि नियोगाक्षेप उपादानं, नासाविह दण्डवारितः । अत्रापि हि क्रमं प्रति विध्याक्षेपो वर्णित एव । अभिधेया संख्या सोपादानतः शेषो भवतीति युक्तम् । न त्वेवं क्रम इति चेत्, किमत्राभिधानेन ।

१. 'हिंसा वि', २. 'ते' ग. पाठः. ३. 'तदविरो' ख. पाठः.

यदेव किञ्चित् कथञ्चिदवगतं तदेव विध्यनन्यथासिद्ध्या तेनाक्षिप्यते। विरोधपरिहारश्चोक्तः । अपिच 'वषट्कर्तुः प्रथमभक्षः' इत्यादावनन्यपराभिधानावगतत्वाद्विधेर्नाविधेयता सिध्यति । तत्रैव हि विधीयते नान्यत्रेति चेत् । तदर्धजरतीयम् । यत्तु कर्तव्यताबुद्धिविषयो नेति । तन्न । 'वेदं कृत्वा वेदिं कुर्यादि'ति सक्रमपदार्थकर्तव्यतावगमात् । निष्क्रमकर्तव्यता नावसीयत इति चेत् पदार्था वा किं तद्रहिताः कर्तव्यताधियो गोचरीक्रियन्ते यद्विधेयतयेष्यन्ते । सर्वथा नः सक्रमकपदार्थविषयैवानुष्ठानसंवित् । पदार्थावच्छेदादेवारुणादिवन्नाकारकत्वम् । यत्त्वेकैकपदार्थावच्छेदकतया नावगम्यत इति । नैतावता अकारकत्वं शक्यते वक्तुम् । स्वभावो ह्ययं क्रमस्य यन्नानाश्रयत्वं द्वित्वादिवत् । न हि द्वित्वादयः संख्या एकैकत्र न समवयन्तीति नावच्छेदिका भवन्ति । अकारकं वा । अतः सिद्धं तावत् क्रमो विधीयत इति । एवंच न तन्निदर्शनेनाविधेयानामेव चोदनालक्षणत्वं श्येनादीनाम् । अपि च यदि श्येनादयो न विधीयन्ते, किमन्यद् विधेयमिति न विद्मः । नन्वङ्गानि विधीयन्त इत्युक्तम् । रागादिभिस्तेषु नराणामप्रवृत्तिविषयत्वात् । किं पुनस्तेषु रागादयो न प्रवर्तकाः । अप्रीत्यात्मकत्वादिति चेत् । समानमिदं साधनेषु । तान्यपि बह्वायाससाध्यानि दुःखात्मकान्येवेति न नरं रञ्जयन्तितराम् । यदि तु प्रीतिसाधनत्वात् तेषु रागादयः प्रवर्तका इत्युच्यन्ते, अङ्गेष्वपि प्रसङ्गः । अननुगृहीतस्य साधनत्वानुपपत्तेः । अङ्गजन्यत्वाच्चानुग्रहस्य । एवंचाङ्गप्रधानद्वयस्याविधेयत्वादविषयो विधिरापद्यते । अपिच विधिविषयाः श्येनादयो न विधीयन्त इति दुरधिगमम् । विधिविषयमेव विधेयविदो विधेयं मन्यन्ते । अविधेयस्य विधिविषयभावानुपपत्तेः । नन्वेतावदेव विधिविषयत्वं यत् तत्र विधिरवगम्यते । न पुनस्तस्य कर्तव्यता। यथाहुः—'कर्तव्यताविषयो हि नियोगो न तत्कर्तव्यतामाहे'ति । का पुनः कर्तव्यता । यागादयः । एषैव हि नियोगस्य कर्तव्यता यद्यागानुष्ठानम् । तत्प्रकाराश्चेतिकर्तव्यताः प्रयाजादयः । यद्येवं केन रूपेण यागादिषु विधिरवगम्यते । यदि यागं कुर्यादिति, नन्वियमेवासौ कर्तव्यतेति कथं न यागा-

१. 'अत्रापि' ग. पाठः. २. 'त्वाद् नावि', ३. तावि', ४. 'यो' क. पाठः. ५. 'ति तन्न नै' ग. पाठः. ६. 'वाद्वयस्य विधिविषयत्वात् यत्' क. पाठः. ७. 'स्य कर्तव्यताविषयो' ग. पाठः.

**सर्वत्रावस्थितो न्यायो भावनांशद्वये विधिः ।**
**स बाध्यते ह ये चामी ज्योतिष्टोमादयो मताः ॥**
**धर्मत्वेन न तेऽपि स्युर्हिंसासाधनका हि ते ।**
**नचाविधीयमानस्य फलवत्साधनाङ्गता ॥ २०८ ॥**

---

दीनां कर्तव्यतामाहेत्युच्यते । नन्वात्मन्येव प्रवर्तयतीत्युक्तम् । सत्यम् । न तु यागातिरेकि किञ्चित् कार्यं कार्यतयावगम्यते इति विधिविवरणे वक्ष्यामः । अतो विधेयाः श्येनादयः प्रियम्, अस्य भ्रातृव्यवधस्य साधनानीति नानर्थतया प्रत्युदाहरणमर्हन्तीति । यदपि तेष्वेव हिंसाशब्दो मुख्य इत्युक्तं, तदयुक्तम् । अभिचारपर्यायो हि हिंसाशब्दः । सा च हिंसा फलं श्येनस्य 'अभिचरन् यजेते'ति हि श्रूयते । नतु श्येनादय एवाभिचाराः । खादकादिषु घातकादिपदप्रयोगो गौणः । नचेह गौणहिंसापदाश्रयणे किञ्चित् कारणम् । श्येनशब्दे तु फललक्षणाकारणं वक्ष्यामः । तस्मात् सूक्तमविधेये श्येनादौ न किञ्चिद् विधेयमिति ॥ २०६ ॥

एवं तावदुपपत्तितः श्येनादीनां विधेयत्वमुक्तम् । इदानीमेतत्परित्यागे सिद्धान्तहानिरपीत्याह — सर्वत्रेति श्लोकेन । जानात्येवासौ मयैतत् कर्तव्यमिति, उपायं तु न वेदेत्यादौ सर्वत्र भाष्यकारानुसारेणैवांशद्वयगामी विधिरवगम्यते । तदिह श्येनाद्यविधेयपक्षे बाध्यत इति । अयं चापरः श्येनादीनामविधेयत्वे दोष इत्याह — ये चेति स्युरन्तेन । ननु यथा ज्योतिष्टोमादयो न विधीयन्ते एवं न निषिध्यन्ते तेऽपीति । कस्माद् धर्मता न भवत्यत आह — हिंसेति । यद्यपि ज्योतिष्टोमादयो न स्वरूपेण हिंसा, तथाप्यग्नीषोमीयादिपशुहिंसा तेषां साधनम् । सा चांशद्वयगामिन्यपि निषिद्धत्युक्तम् । अतो निषिद्धाङ्गत्वेन प्रत्यवायहेतुत्वादधर्मता ज्योतिष्टोमादीनामिति । अपिचांशद्वयाविधाने तदुत्खातिरेवेत्याह — नचेति । विधेरयं महिमा यत्स्वभावसाध्यो यागः फलाङ्गः, तथा वक्ष्यति जैमिनिः 'कर्माण्यपि फलार्थत्वात्' (३-१-४) इति । तथेतिकर्तव्यतापि यत् फलसाधनाङ्गमसावपि विधिमहिम्नैव । सा विहिता सती पुरुषार्थात्मकसाध्यसम्बन्धमीहमाना फलवत्करणाङ्गभावमनुभवतीति 'फलवत्सन्निधावफलं तदङ्गमि'ति

---

१. 'ब्देन तु' ग. पाठः. २. 'नु ये ज्यो', ३. 'त' क. पाठः.

**साधनत्वेन विहितं न चाविहितमुच्यते ।**
**साध्यत्वेन विधानं तु नैवेष्टं लोकवेदयोः ॥ २०९ ॥**
**तेनैवमर्थशब्दस्य प्रयोजनमिहोच्यते ।**
**प्रवृत्तौ वा निवृत्तौ वा या शब्दश्रवणेन धीः ॥ २१० ॥**
**सा चोदनेति सामान्यं लक्षणं हृदये स्थितम् ।**
**प्रवर्तकगृहीतैस्तु स्यादुदाहरणार्थता ॥ २११ ॥**
**तात्पर्ये ह्यर्थशब्दस्य नेयं व्याख्योपपद्यते ।**

वक्ष्यते । अविधीयमानस्य यागस्याग्नेयादेः प्रधानस्याङ्गस्य वा प्रयाजादेर्यथाक्रमं न फलाङ्गता तत्साधनाङ्गता वापि सिध्यतीति ॥ २०८ ॥

स्यादेतत् — साधनत्वेन विहिता अपि न साध्यतया विधीयन्त इत्यविधेया इत्युच्यन्ते । अत एवाह — 'नैव श्येनादयः कर्तव्या विज्ञायन्ते' इति । नैव साध्यतया विधीयन्त इति यावदित्यत आह — **साधनत्वेनेति** । विधानं ह्यनर्थत्वपरिपन्थि तद् यथातथा वा विहितस्य न सम्भवति । अतः किमवान्तरभेदाश्रयणेनेति । अन्वारुह्य चेदमस्माभिरुच्यते । न तु साध्यतया विधानं सम्भवति, स्वयमेव साध्ये पुरुषाणां प्रवृत्तेः । तदेतदाह — साध्यत्वेनेति । सर्वं यागदानजपोपवासादीष्टसाधनतयैव विधीयत इति भावः ॥ २०९ ॥

अतो न श्येनादिनिवृत्तिरर्थशब्दस्य प्रयोजनमित्यन्यथा वर्णनीयमित्याह — **तेनेति** । प्रयोजनवर्णनां प्रतिज्ञाय तदुपोद्घातमेव तावद् भाष्यकाराभिप्रायमाह — **प्रवृत्तौ वेति** । प्रवर्तिका निवर्तिका चोभय्यपि चोदनेति भाष्यकारस्य हृदये लक्षणं व्यवस्थितं चोदनायाः । अतो निषेधचोदनालक्षणानां धर्मत्वं निवर्तयितुमर्थशब्द इत्यभिप्राय इति । कथं तर्हि प्रवर्तकं वाक्यं चोदनेति भाष्यमत आह — **प्रवर्तक इति** । प्रवर्तकग्रहणं प्रदर्शनार्थमित्यर्थ इति ॥ २११ ॥

उदाहरणार्थत्वे कारणमाह — **तात्पर्ये हीति** । पूर्वापरसङ्गतो हि ग्रन्थो व्याख्येयः । यद्यपि[1] प्रवर्तकैकपर एव पूर्वग्रन्थो भवेत्, अर्थशब्द-

१. 'यमपि' ग. पाठः.

**अर्थग्रहणलभ्यं वा तत्प्रवर्तकभाषणम् ॥ २१२ ॥**
**धर्मे प्रमाणभूतायास्तद्वा लक्षणमुक्तवान् ।**
**एवं सति विधिभ्यः स्याद् विधेयार्थावधारणम् ॥**
**निषेधेभ्यो निषेध्यानामनर्थत्वेन निर्णयः ।**
**तेनार्थग्रहणेनोक्ता विधेयस्येह धर्मता ॥ २१४ ॥**
**निषेध्यानामनर्थत्वमर्थसिद्धं न सूत्रितम् ।**
**तस्मादुभयमित्यत्र विधेयप्रतिषेध्ययोः ॥ २१५ ॥**

---

स्येयं व्याख्या चोदनालक्षणानर्थनिवृत्त्यर्थोऽर्थशब्द इत्येवमात्मिका नोपपद्यते । अनर्थानां प्रवर्तकवाक्यलक्षितानामचोदनालक्षणत्वापत्तेरिति भावः । अर्थशब्देसहितस्य वा चोदनापदस्यार्थो व्याख्यातः । अर्थो हि प्रवर्तकवाक्यलक्षण एवेत्यभिप्रायेणाह — अर्थग्रहणेति ॥ २१२ ॥

अथवा धर्मप्रमाणमत्र सूत्रकारेण सूत्रितं धर्मस्य प्रवर्तकमेव वाक्यं प्रमाणमिति । तच्चोदनालक्षणमेव भाष्यकारेण वर्णितमित्याह — धर्मेति । यदा चोभय्यपि चोदनेति स्थितं तदा विधिचोदनाभ्यस्तावद् विधेयानां ज्योतिष्टोमादीनामर्थत्वेनावधारणं भवति । निषेधचोदनाभ्यश्च निषेध्यानां ब्रह्महत्यादीनामनर्थत्वेन निर्णयः । उभयोरुभाभ्यामर्थानर्थत्वे लक्षिते इति यावत् । तदेतदाह—एवं सतीति । येन च विधिप्रमाणकमर्थत्वं, तेन तल्लक्षितानां ज्योतिष्टोमादीनामत्रार्थग्रहणेन धर्मत्वमुक्तमित्याह —तेनेति॥२१४॥

विधेयार्थधर्मत्वे चोक्ते विपरीतानामधर्मत्वमर्थसिद्धत्वान्न सूत्रकारेण सूत्रितमित्याह — निषेध्यानामिति । एवमुद्ग्रन्थमेव भाष्यकाराभिप्रायमुक्त्वा तदनुसारेणोभयमित्यादि भाष्यं योजयति — तस्मादिति । यस्मादेवं भाष्यकाराभिप्रायः, तस्माद् 'उभयमिहे'त्यादिग्रन्थे विधेयप्रतिषेध्ययोर्यथाक्रमं यागादिब्रह्महत्यादिवर्गयोर्निदर्शनं कार्यमित्यर्थः । यदि ब्रह्महत्यादिवर्गस्यानर्थतया निदर्शनं कथं तर्हि श्येनाद्युपन्यासः । ते हि विधेयाः । तत एव चेष्टसाधनाः । महत् खल्विदमिष्टं यः शत्रुवधः । नहि तादृशी

---

१. 'नामप्र', २. 'न्देस्याहि', ३. 'स्येयः' अ' क. पाठः.

**यागादिब्रह्महत्यादिवर्गयोः स्यान्निदर्शनम् ।**
**श्येनादीनां विधेयत्वादिष्टस्यापि च साधनात् ॥**
**उपचारादनर्थत्वं फलद्वारेण वर्ण्यते ।**
**प्रतिषिद्धा हि सेत्यत्र स्फुटमेतत् करिष्यते ॥ २१७ ॥**
**हिंसा हीति च यच्चापि ब्रूते नाभिचरेदिति ।**
**श्येनादीनां स्वरूपे तु नोत्तरग्रन्थसङ्गतिः ॥ २१८ ॥**
**विहितत्वान्निषेधस्य प्रवृत्तिस्तेषु दुर्लभा ।**

---

स्वर्गेऽपि नराणां तृप्तिः सम्भवति यादृशी शत्रुवधे । अतः कथं तेऽनर्थतयोदाहियन्ते, अत आह — श्येनादीनामिति । अयमभिप्रायः — यथावगतमायुष्मतां न स्वरूपेण श्येनादयोऽनर्था इति । भाष्यकारेणापि न तत्स्वरूपमनर्थतयोदाहृतम् । किन्तु यत् तेषां फलं हिंसात्मकमायुर्भाग्यविच्छेदः, सोऽपि विहितो निषिद्धश्च । स्वयं विहितत्वादर्थात्मकोऽप्यनर्थानुबन्धीति तदिदमनर्थत्वं श्येन उपचरितं, कारणे कार्योपचारात् । श्येनशब्द एव वा तत्फल उपचरितः कार्ये कारणोपचारादिति भावः । किं पुनरुपचाराश्रयणे कारणमत आह — प्रतिषिद्धेति । भाष्यकारानुसारेणैव ह्युपचाराश्रयणम् । एवंहि भाष्यकारो वदति — 'प्रतिषिद्धा हि सेति । नहि श्येनादिस्वरूपाभिप्रायं प्रतिषिद्धा हीतीदनुपपद्यते । ततस्तत्फलाभिप्राय एव श्येनाद्युपन्यास इति भाष्यकृता स्फुटीकृतामिति ॥ २१७ ॥

इदं चापरं लिङ्गदर्शनमित्याह — **हिंसा हीति** । 'कथं पुनरसावनर्थः' इत्युक्त्वा यदुक्तं 'हिंसा हि सेति, ततोऽवगम्यते न श्येनादि स्वरूपमात्रमनर्थतया विवक्षितमिति । वर्णितमिदमाक्षेपकाले न स्वरूपेण श्येनो हिंसेति । अतो हिंसा हीत्यत्र भाष्यकारेणैतत् स्फुटीकृतम् । तथा 'श्येनेनाभिचरन् यजेतेति हि समामनन्ति नाभिचरितव्यमित्यन्ते वक्ष्यते । अत्राप्यभिचारस्यैव श्येनफलस्य निषेधं दर्शयन्ननर्थतां स्फुटीकरिष्यतीति । श्येनादिस्वरूपाभिप्राये तु ग्रन्थे सर्वोऽयमुत्तरग्रन्थो न सङ्गच्छत इत्याह— श्येनादीनामिति ॥ २१८ ॥

तत्र प्रतिषिद्धा हीत्येतत् तावदनुपपन्नमित्याह — **विहितत्वादिति** । विहिता हिंसासाधनतया श्येनादयः । न तेषु प्रतिषेधोऽवकाशं

यदा तु चोदनाशब्दो विधावेव व्यवस्थितः ॥
तदोभयादिको ग्रन्थः साध्यसाधनसंश्रितः ।
साध्यसाधनसम्बन्धे विधिना प्रतिपादिते ॥ २२० ॥
लक्ष्यमाणत्वमुभयोर्द्विविधं च फलं क्रतोः ।
स्वर्गादि प्राप्यते तत्र प्रतिषेधानतिक्रमात् ॥२२१॥

---

लभत इत्याक्षेपे वर्णितमेवैतत् प्रदर्शनार्थमुक्तम् । अन्येऽप्याक्षेपोक्ता एवानुपपत्तिप्रकारा अनुसन्धेया इति । एवं तावद् विधिनिषेधात्मिका चोदनेत्याश्रित्योभयमित्यादिग्रन्थो व्याख्यातः । इदानीं प्रवर्तिका चोदनेत्यत्रापि पक्षे शक्यत एव भाष्यं व्याख्यातुमित्याह— यदेति । उभयं विधायिकया चोदनया लक्ष्यते साध्यं साधनं चेत्यर्थः । कथं पुनः साध्यसाधनात्मकमुभयं चोदनया लक्ष्यते । नहि साध्यं विधीयते, स्वयमेव हि तत्र पुरुषाः प्रवर्तन्ते, अत आह—साध्येति उभयोरन्तेन। अयमभिप्रायः—सत्यम् । साध्यसाधनाङ्गगोचरमेव विधेः प्रवर्तनम् । तथापि विधिप्रमाणकमेव स्वर्गयागादीनां साध्यसाधनसम्बन्ध इति औत्पत्तिकसूत्रे (१. १. ५) वक्ष्यते । यथा यागादीनां साधनभावश्चोदनालक्षणः, एवं स्वर्गादीनां यागादिसाध्यत्वावगतिरपीति तेन रूपेण तेऽपि चोदनालक्षणा भवन्त्येव, यद्यपि तेषु स्वयं प्रवृत्तः पुरुषो न चोदनया प्रवर्त्यत इति । यदि साध्यसाधनाभिप्रायमुभयत्वं, तर्हि 'अर्थोऽनर्थ' इति केन सम्बध्यते, अत आह—द्विविधमिति । अयमर्थः—फलसाधनात्मकमुभयं चोदनालक्षणमित्युक्तम् । तत्रेदमुच्यते फलमर्थानर्थात्मकत्वेन द्विविधं क्रतूनामिति ॥ २२०३ ॥

फलद्वैविध्ये कारणमाह — स्वर्गादीनि हिंसान्तेन । तत्रोभयात्मके फले स्वर्गादिफलं तावत् ज्योतिष्टोमादीनामनतिक्रान्तप्रतिषेधेनैवावाप्यते । तन्न निषिद्धमिति यावत् । श्येनादिफलं तु हिंसाद्यतिक्रान्तप्रतिषेधेनावाप्यते । अतस्तत्सदसद्भावकारितः फलार्थानर्थविवेकः । अस्मिंश्च व्याख्याने 'कोऽर्थः' इत्यादि भाष्यमेवं व्याख्येयम् अर्थात्मकफलस्यापि यत् साधनं सोऽप्यर्थ इति । अन्तर्गीयैतत् प्रदर्शितं 'कोऽर्थः यो निःश्रेयसाय ज्योतिष्टोमादि' रिति । एतदुक्तं भवति — अर्थात्मकफलस्य साधनस्य ज्योतिष्टोमादेर्धर्मत्वं वक्तुमर्थपदं प्रयुक्तमिति । तदुक्तं —

**अतिक्रमेण हिंसादि शास्त्रान्तरनिरीक्षया ।**
**फलांशे भावनायाश्च प्रत्ययो न विधायकः ॥ २२२ ॥**
**वक्ष्यते जैमिनिश्चाह तस्य लिप्सार्थलक्षणा ।**
**तेन सामान्यतः प्राप्तो विधिना न निवारितः ॥ २२३ ॥**

---

"तस्यापि साधनं यत् तदर्थं एवाभिधीयते ।
वक्तुं तस्यैव धर्मत्वमुक्तमर्थविशेषणम् ॥"

इति । कोऽनर्थ इति तु श्येनादिफलपरो लक्षणया श्येनादिपदप्रयोगः, तस्य चार्थादधर्मत्वमुक्तमिति वेदितव्यमिति । ननु श्येनादिविधिसामर्थ्यादेव श्येनादिफलमासाद्यमानं कथं प्रतिषेधातिक्रमेणावाप्यत इत्युच्यते, अत आह — शास्त्रान्तरेति । अयमभिप्रायः — सत्यं श्येनचोदनालक्षणं तत्फलं, तदुद्दिश्य तद्विधानात् । क्वचित् किञ्चिद् विधीयत इति विधेः स्वरूपं, तत्र विधेयमिवोद्देश्यमपि विधिर्विगाहत एव । यत्तु 'न हिंस्यादि'ति शास्त्रान्तरं, तन्निरीक्षणेन श्येनादिफलस्य हिंसायाः प्रतिषिद्धत्वमवगम्यत इति ॥ २२१ ॥

ननु विधिस्पृष्टे प्रतिषेधोऽनवकाशः । सत्यपि वा प्रतिषेधे नैवंविधस्यानर्थत्वमित्युक्तम् । तद् यदि चोदनालक्षणा हिंसा, कथं निषिद्धत्वादनर्थः । चोदनालक्षणत्वेऽप्यविधेयत्वमिति तु भवद्भिरेव निराकृतम् । अत एव क्रमो विधेय इत्याश्रितम्, अत आह — **फलांश इति वक्ष्यतेऽन्तेन** । अयमभिप्रायः — उक्तमिदमस्माभिः किञ्चिद् विधातुं फलमुद्दिश्यत इत्येतावती चोदनालक्षणता । नतु फलमेव विधीयते, भावनायाः फलांशे प्रत्ययाविधायकत्वस्य वक्ष्यमाणत्वात् । वक्ष्यति हि — 'जानात्येवासौ मयैतत् कर्तव्यमिति उपायं तु न वेदे'ति । अतः स्वयमेव कर्तव्येषु पुरुषाणां प्रवृत्तेर्न तद्विषयप्रवृत्तिज्ञापनं विधेः फलम् । साधनोपाययोस्त्वप्रवृत्तः पुरुषः प्रवर्त्यत इति तयोर्विधेयत्वम् । क्रमे तु न तावत् किञ्चिद् विधीयते । सोऽपि चेन्न विधीयेत, कथं चोदनालक्षणो भविष्यति । जैमिनेरप्येतदेवाभिमतमित्याह — जैमिनिरिति । लिप्सया प्रवृत्तिं लक्षयति, तया प्रवृत्तेः । अर्थशब्दः प्रयोजनवाची फले प्रवृत्तिः प्रयोजनलक्षणा न वैधीति दर्शितं भवतीति ॥ २२२ ॥

फलांशोपनिपातिन्या हिंसायाः प्रतिषेधकः ।
अनर्थप्राप्तिहेतुत्वं बोध्यते तत्र यद्यपि ॥ २२४ ॥
श्येनस्वरूपं नानर्थस्तत्फलस्य त्वनर्थता ।
परस्तूभयमित्यादेः फलस्यापि विधेयताम् ॥ २२५ ॥
भावनान्तर्गतत्वाद्वा मत्वानर्थत्वमाक्षिपत् ।
नैवेत्येतावता चास्य विधेयत्वनिराक्रिया ॥ २२६ ॥
किं विधेयमिदानीं स्यादाह श्येनादयस्त्विति ।

यतश्चायं सूत्रभाष्यानुगतः सिद्धान्तः यत् फलं न विधीयत इति, तेन कारणेन 'न हिंस्यादि'ति प्रतिषेधः श्येनफलोपनिपातिन्यां हिंसायां सामान्यतोऽवतरन् विधिना न निवारित इति तस्यानर्थतामापादयतीत्यभिप्रायेणाह — तेनेति ॥ २२३[1] ॥

एवंच निषेधेन श्येनफलस्यानर्थप्राप्तिहेतुत्वे बोध्यमानेऽपि न श्येनः स्वरूपेणानर्थः, तत्फलमेव तु हिंसानर्थ इत्याह — अनर्थेति ॥ २२४[1] ॥

अत्रापरं परिचोदनाभाष्यं 'कथं पुनरि'त्यादि । तस्याभिप्रायमाह — परास्त्विति । अयमभिप्रायः — योऽयं साधनफलयोर्विधेयाविधेयभेदो दर्शितस्तमविद्वान् 'उभयमि'त्यादिभाष्ये श्येनादेश्चोदनालक्षणत्वाभिधानात्[1] फलस्यापि विधेयतां मन्वानः, अथवा त्र्यंशभावनाविधानेन फले जातविधेयाभिमानः श्येनफलस्यानर्थत्वमाक्षिप्तवान् । अयं च भाष्यार्थः — कथं यः कर्तव्यतयोपदिश्यते सोऽनर्थः । यद्यपि ग्रन्थात् कर्तव्यतोपदेशपर्यनुयोगोऽवगम्यते, तथाप्यपौरुषेये उपदेशपर्यनुयोगासम्भवादुपदिश्यमानस्य कथमनर्थत्वमित्येव पर्यनुयोगार्थः । अतएवोक्तम् — अनर्थत्वमाक्षिपदिति ॥ २२५[2] ॥

अत्र परिहारभाष्यं — 'नैव श्येनादयः कर्तव्यतया विज्ञायन्ते' इति । तच्छ्येनादिकर्तव्यतानिषेधपरमिवोपलभ्यते । तच्चायुक्तम् । श्येनादिविधानस्य पूर्वोक्तत्वात् । अतो भित्त्वा योजयति — नैवेति । अस्य श्येनफलस्य हिंसाया नैवेत्येतावतैव विधेयत्वं निराकार्यमित्यर्थः । किं तर्हि विधेय-

---

१. 'णाभि' ग. पाठः २. 'नस्या' क. पाठः.

**प्रश्नापाकरणे चात्र तव्यो विधिविवक्षया ॥ २२७ ॥**

**प्रयुक्तो ननु साध्येऽर्थे द्वयेऽप्यनुपयोगतः ।**

**अनर्थस्यापि साध्यत्वमविधेयस्य हीष्यते ॥ २२८ ॥**

**साध्यत्वरहिते चेष्टा विधेये नित्यमर्थता ।**

**शतुश्च लक्षणार्थत्वं तेषां चाप्युपदेशनम् ॥ २२९ ॥**

**ब्रुवन् स्फुटीकरोतीष्टमुपदेशो हि नान्यथा ।**

---

मिति तूपस्कृत्योत्तरग्रन्थयोजनेत्याह — किमिति । श्येनादयो यागाः कर्तव्याः, न तत्फलं हिंसेति ॥ २२६½ ॥

अत्र च नैवेति भिन्ने कथं पुनरनर्थ इत्यस्य प्रश्नस्यापाकरणेऽनुषक्तकर्तव्यतापदे फलस्य कर्तव्यतायां प्रतिषिध्यमानायां साध्यताप्रतिषेधभ्रममपनेतुमाह — **प्रश्नापाकरण इत्यर्धेनेन** । नात्र फलस्य साध्यता प्रतिषिध्यते, तन्निषेधे श्येनभावनापरिसमाप्तेः । किन्तु विधेयतैव फलस्य प्रतिषिध्यत इति । अनुपयुक्ते च पूर्वोत्तरपक्षयोः स्थापनबाधने साध्यत्वस्येत्याह — द्वयेऽपीति । यदि कथं पुनरिति पूर्वपक्षवादिना साध्यत्वानुपपत्तिरुक्ता भवेत्, एवमुत्तरवादी नैवेति तन्निराकुर्यात् । नतु साध्यत्वस्य पूर्वपक्षे कश्चिदुपयोगः । नच तन्निरासस्य सिद्धान्ते इति ॥ २२७½ ॥

अत्रोभयत्रानुपयोगतुल्यतामेव दर्शयति — **अनर्थस्यापीति** । नतावत् पूर्वपक्षवादिनः साध्यताप्रतिपादनमुपयुक्तम् । अर्थत्वं हि तस्यापादनीयम् । अतो यदेव तदनुगुणं तदेव वक्तव्यम् । नच साध्यतामात्रानुबन्ध्यर्थत्वम्, अनर्थस्याप्यविधेयस्य सुरापानादेः साध्यतावगमात् । नच साध्यतानिराकरणं सिद्धान्त उपयुज्यते । अर्थत्वं हि तस्य फलस्य निराकरणीयम् । तदनुगुणं च विधेयतानिराकरणमेव सिद्धान्तिना कार्यम् । किं साध्यतानिराकरणेन, असाध्यस्यापि विधेयस्य गोदोहनादेरर्थत्वादिति ॥ २२८½ ॥

यच्चेदं श्येनादिफलाभिप्रायमविधेयत्वं न स्वरूपाभिप्रायमित्यस्माभिरुच्यते, तद् भाष्यकारेण स्फुटीकृतमित्याह — **शतुरिति** । 'यो हि हिंसितुमिच्छेत् तस्यायमभ्युपाय इति हि तेषामुपदेशः । श्येनेनाभिचरन् यजे-

---

१. 'न्तहानिरिति' क. पाठः.

**विधित्वमादिशब्दात् स्यादितिकर्तव्यतास्वपि ॥**
**तस्मात् फलांशे या हिंसा वैदिकी सा निषिध्यते ।**
**अंशद्वये तु या नास्य तन्निषेधाभिधायिनाम् ॥**

---

तेति हि समामनन्ति नाभिचरितव्यमि'ति वदन् भाष्यकारो लक्षणे शत्रुत्पत्तिं दर्शयति, यो हि हिंसितुमिच्छेदित्यभिचारप्रवृत्तपुरुषानुवादात् । तच्चेदम् अभिचरन् नाभिचरितव्यमिति व्यक्तीकृतम् । लक्षणं च यद्वृत्तयुक्तं सिद्धवदेवावगम्यते न विधेयतया । अतो न तावद्धिंसा विधीयते । तेषामुपदेशः इति च स्पष्टमेव श्येनादीनां विधानमुक्तम् । अन्यथा अविधेयस्योपदेशानुपपत्तेः, विध्युपदेशशब्दयोः पर्यायत्वादिति भावः । श्येनादय इत्यादिशब्दस्य प्रयोजनमाह — विधित्वमिति । साधनानि तावद् विधीयन्ते । इतिकर्तव्यतापि हिंसात्मिका दैक्षपश्वादि(का ? गा) विधीयते । एतेन फलांशस्यैव हिंसा न विधीयत इति दर्शितं भवति । विधित्वं विधिशक्तिरित्यर्थः ॥ २३० ॥

अतोऽङ्गहिंसा विहितैव, अतः फलांशस्यैवावैदिकी हिंसा 'न हिंस्यादि'ति निषिध्यते । अतश्चानर्थ इत्यभिप्रायेणाह— तस्मादिति । *सर्वस्वारफलस्येदानीं का वार्ता । मरणं तस्य फलं, न हिंसा । तच्चानिषिद्धमिति चेद् न । असति भाग्यच्छेदे तदनुपपत्तेः । अतः फलांशोपनिपातिनी सर्वस्वारहिंसानर्थो भवेत् । उच्यते — पूर्वापरीभूते हि यज्ञे तार्तीयसवनीयार्भवस्तोत्रकाले सर्वस्वदक्षिणापरिवृतो विपद्यते दीक्षितः । अतो विधिकोष्ठप्रविष्टैवासौ हिंसा । 'अन्यत्र तीर्थेभ्यः' इति च तीर्थबहिर्भूतैव हिंसा निषिद्धा । इयं तु तीर्थमध्यगता विधिस्पृष्टैवेति नानर्थः । श्येनफलं तु चिरातिपन्ने श्येने तज्जन्यापूर्वविच्छिन्नभाग्येषु शत्रुषु विपद्यमानेषु जायते । अतस्तीर्थबहिर्भावादर्थो न भवति । तेन क्रतुबहिर्भूता फलांशहिंसावैदिकी निषिध्यते । नान्तःक्रत्विति विवेकः इति । किं पुनः कारणं साधनोपायभूता न निषिध्यते । सामान्येन 'न हिंस्यादि'ति शास्त्रं प्रवृत्तम् । अतोऽङ्गसाधनहिंसयोरपि प्रतिषेधो भवेत्, अत आह —अंशद्वय इति । साधनोपायांशद्वय-

१ 'न्ते', २. 'चापि नि', ३. 'तत्र ।' ग पाठः

* सर्वस्वारो नाम मरणकामकर्तव्यो यागविशेषः (१०. २. अधि. २३) ।

**अविशेषेण यच्छास्त्रं शिरोवदिति चोत्तरम् ।**
**निषेधेनानवच्छिन्धे विषये न ह्यनर्थता ॥ २३२ ॥**

गामिनी हिंसा प्रतिषिध्यते इति ब्रुवाणस्य 'अविशेषेण यच्छास्त्रं तत् सन्दिग्धमन्याय्यत्वाद् विकल्पस्याराद् विशेषशिष्टं स्यात्'(१०. ८. १६) इति सूत्रमुत्तरम् । 'शिरोवदि'ति च सूत्रान्तरैकदेशः । अत्र ह्युभयत्रापि सामान्यशास्त्रस्य विशेषशास्त्रेण बाधो दर्शितः । पूर्वत्र तावद्यथा । ज्योतिष्टोमे श्रूयते—'वर्त्मनि जुहोती'ति । अस्ति चानारभ्यविधिः 'यदाहवनीये जुह्वती'ति । अत्र संशयः—किं ज्योतिष्टोमिके होमे वर्त्माहवनीययोर्विकल्पः, उत बाध्यबाधकभाव इति । तत्र विकल्प इति प्राप्तम् । तथाहि —न तावदेकार्थयोः समुच्चयः सम्भवति । नच पाक्षिकानुग्रहसम्भवे आत्यन्तिको बाधः । आहवनीयो हि सामान्यशास्त्रेण वर्त्महोममप्यास्कन्दतीति न तस्यात्यन्तबाधो न्याय्यः । अतो विकल्प इति प्राप्ते उक्तं—यदेतदविशेषेणाहवनीयशास्त्रं तदाराद् विशेषशिष्टं स्यादिति । दूरे विशेषशिष्टस्येत्यर्थः । विशेषशिष्टं वर्त्महोमं नास्कन्दतीति यावत् । कुतः । अन्याय्यत्वाद् विकल्पस्य । कथमन्याय्यता । लक्षणया हि सामान्यशास्त्रं विशेषशास्त्रेषु प्रवर्तते । तत् तेषु सन्दिग्धम् अयं वा विशेषोऽस्य विषय इति, विशेषशास्त्रं तु निश्चितविषयम् । अतो वैषम्यान्न विकल्पः । अतएव 'सामान्यवचनः शब्दो दुर्बलः' इति वक्ष्यति । तस्मात् सिद्धमाहवनीयो बाध्यत इति । तथा क्वचित् 'पुरुषशीर्षमुपदधाती'ति विशेषवचनसामर्थ्यात् शवशरीरस्पर्शनं स्मृतिप्रतिषिद्धमपि क्रियत एव, सामान्यनिषेधदौर्बल्यादिति शिरोवदित्युक्तमिति । इदं त्विह वाच्यम् । केयं साधनांशगामिनी हिंसेति । यदि श्येनादयः न, तेषामहिंसात्वेनोक्तत्वात् । सत्यम् । प्रधानपशुहिंसैव तत्रोदाहरणम् । यथा 'वायव्यं श्वेतमालभेते'ति । इदं च श्येनोदाहरणमसत्सु भार्यापहारादिमन्युहेतुषु अनर्थतया दर्शयितव्यम् । आततायिवधे दोषाभावस्मरणात् । 'षट्स्वभिचरन् न पतेदि'ति बौधायनाः पठन्ति । अन्यत्राप्युक्तं —

"नाततायिवधे दोषो हन्तुर्भवति कश्चन ।
प्रकाशं वाप्रकाशं वा मन्युस्तं मन्युमृच्छति ॥"

१. 'होती' क. पाठः. २. 'शिर', ३. 'वक्तव्यम्' ग. पाठः.

**प्रत्यक्षादेरशक्यत्वात् कल्प्यते निष्प्रमाणता ।**
**नहि हिंसाद्यनुष्ठाने तदानीं दोषदर्शनम् ॥ २३३ ॥**
**बाह्येऽपि विचिकित्सा तु शास्त्रादेवोपजायते ।**
**हिंस्यमानस्य दुःखित्वं दृश्यते यच्च तावता ॥ २३४ ॥**
**कर्तुर्दुखानुमानं स्यात् तदानीं तद्विपर्ययः ।**

इति । नन्वसत्यपि निषेधे किमशद्धयगामिनी हिंसानर्थां न भवतीत्यत आह-- निषेधेनेति ॥ २३२ ॥

अत्र कारणमाह — **प्रत्यक्षादेरिति** । नानार्थत्वे प्रत्यक्षादीनि क्रमन्ते । नचाप्रमाणकोऽर्थः कल्पयितुं शक्यत इति । प्रत्यक्षाद्यशक्तिमेव दर्शयति — नहीति । नहि त्रिवृत्पानविरेकयोरिव साध्यसाधनभावो हिंसाप्रत्यवाययोः प्रत्यक्षः, तदानीं प्रत्यवायादर्शनादिति ॥ २३३ ॥

नन्वसत्यपि दोषदर्शने बाह्यहिंसानामनर्थत्वदर्शनाचोदितावपि विचिकित्सा जायत एव, अत आह — बाह्येऽपीति । अयमभिप्रायः नात्र विचिकित्सायां किञ्चित् कारणम् । शास्त्रादेव बाह्येऽपि विचिकित्सा । अङ्गहिंसापि शास्त्रविहितैवेति निर्विचिकित्समनुष्ठातव्येति । ननु प्रत्यक्षमेव हिंस्यमानस्य दुःखितत्वमुपलभ्यते । अतः कर्तुरपि ततो दुःखित्वमनुमास्यामहे । क्रियानुरूपं हि कर्तॄणां फलमिति महाजनप्रसिद्धम् । यथा चाहुः —

"तथाच नारीष्वपि सिद्धमेतत्
करोति यो यल्लभतेऽप्यसौ तत् ।
यत् कर्मबीजं वपते मनुष्य-
स्तस्यानुरूपाणि फलानि भुङ्क्ते ॥"

इति । अतः क्रियानुरूप्येणैव हिंसानर्थकरीत्यनुमास्यते, अत आह — हिंस्यमानस्येति स्यादन्तेन । अयमभिप्रायः — यदेतद् हिंस्यमानस्य दुःखित्वदर्शनं, तेन कर्तुः दुःखित्वानुमानमयुक्तम् । व्याप्तलिङ्गदर्शनाभावात् । नहि हिंस्यमानस्य दुःखिता कर्तुर्भविष्यता दुःखेन व्याप्तावगतेति । प्रत्यक्षदर्शनानुसारेण तु विपर्यय एव तावदनुमातुं शक्यते, तदानीं हि कर्तुः

**विषयेऽस्याः फलं यादृक् प्रेत्य कर्तुस्तथाविधम् ॥**
**हिंसा क्रियाविशेषत्वात् सूते शास्त्रोक्तदानवत् ।**
**य एवमाह तस्यापि गुरुस्त्रीगमनादिभिः ॥ २३६ ॥**
**सुरापानादिभिश्चापि विपक्षैर्व्यभिचारिता ।**
**विरुद्धता च यादृग्धि दानैस्तादृक् फलं भवेत् ॥**
**विधिगम्यफलावाप्तिरदुःखात्मकता तथा ।**

---

स्फुटं सुखमेवोपलभ्यते । अतः कालान्तरेऽपि हिंसा सुखकरी, हिंसात्वाद् अद्यवदिति शक्यते प्रयोगो वक्तुमित्यभिप्रायेणाह — तदानीमिति ॥ २३४½ ॥

अत्र कश्चिदनुमानकुशल आह — क्रियाविशेषाः खलु विषयानुरूपफलदायिनो दृष्टाः । यथा दानादयः शास्त्रोक्ताः । दानं हि सम्प्रदानापरनामानं विषयं सुखयतीति प्रत्यक्षमवगतम् । तच्च कालान्तरे दातुः परां प्रीतिमाधास्यतीति शास्त्रादवगम्यते । हिंसापि च क्रियाविशेषः । अतो यादृगस्या विषये हिंस्ये कर्मणि फलं दुःखात्मकं, तादृगेव कर्तुरनुमीयत इति, तदेतदुपन्यस्यति — विषय इति ॥ २३५½ ॥

अत्र दूषणमाह — य एवमिति । एवंवादिनो हेतुरनैकान्तिकः । क्रियाविशेषाणामपि गुर्वङ्गनागमनादीनां विषयानुरूपफलदायित्वाभावात् । दुःखफलत्वात् तेषाम् । विषये च गुर्वङ्गनादौ तदात्वे प्रीतिदर्शनात् । सुरापानस्यापि यदि पेया सुरैव विषयः, न तस्य दुःखमदुःखं वेति विषयानुरूपफलदायित्वमेवमादीनामासिद्धमिति विपक्षैरेभिर्व्यभिचारिता हेतोरिति ॥ २३६½ ॥

विरुद्धश्चायं हेतुरित्याह—विरुद्धेति । कथं विरुद्धता, अत आह—यादृगिति । दृष्टान्तानुसारेण हि हेतुर्गमको भवति । दानं चात्र दृष्टान्तः । अतो यादृशं दाने फलमवगतं, हिंसायामपि तादृगेव फलं भवेदिति । तादृक्त्वमेव फलस्य दर्शयति— विधिगम्येति । दाने हि विधिगम्यफलावाप्तिरवगता । तदिदं व्याप्तिबलेन हिंसायामपि प्राप्नोतीति । विधिबलेन त्वर्थफलत्वमेव हिंसाया अवगम्यते । अतो नानर्थत्वं सिध्यतीति सिसाधयिषितानर्थफलत्वविपरीतार्थफलत्वसाधनाद् विरुद्धोऽयं हेतुरित्यभिप्राये-

---

१. 'वक्तुर' क. पाठः

**नच या सम्प्रदानस्य प्रीतिस्तादृक् फलं भवेत् ॥**
**दातुस्तेन हि दृष्टान्तः साध्यहीनः प्रतीयते ।**
**सम्प्रदानं च दाने ते विषयः कर्म हिंसने ॥ २३९ ॥**
**वैषम्यं सम्प्रदाने तु पक्षे त्वेतद्विरुद्धता ।**
**प्रीयते सम्प्रदानं हि देवतेति स्थितं तव ॥ २४० ॥**

णाह—अदुःखेति । तथेति । विधिगम्यफलावाप्तौ सत्यामदुःखात्मतेत्यर्थः । नहि दुःखात्मके फले विधिः प्रमाणं भवतीति ॥ २३७ ॥

एवं तावद्धेतुदोषावुक्तौ । इदानीं दृष्टान्तदोषं दर्शयति—नचेति । विषयानुरूपफलदायिता ह्यत्र साध्यते । दाने च सम्प्रदानं विषयः । नच दानं दातरि तदनुरूपं फलमभिनिष्पादयति, ततो विशिष्टतमस्य महतोऽभ्युदयस्य दातरि निष्पत्तेः । अल्पा हि प्रीतिर्गां गृहीतवतो भवति । दातुस्तु तां पात्रसात्कृतवतः 'सवत्सरोमसम्मितानि तानि वत्सराणि स्वर्गो भवती'ति शास्त्रानुसारेणावगम्यते । क्वचित्तु 'समद्विगुणसाहस्रानन्तानि फलान्यब्राह्मणब्राह्मणश्रोत्रियवेदपारगेभ्यः' इति साध्यहीनो दृष्टान्त इति । अपिचैकार्थेनैव साध्यपदेन पक्षसपक्षयोर्व्याप्तिः कथ्यते । इह च दृष्टान्ते दाने सम्प्रदानं विषयशब्दस्यार्थः । हिंसने तु हिंस्यमानं कर्म । नचैतद् युक्तमित्यभिप्रायेणाह — सम्प्रदानमिति वैषम्यमन्तेन । यदि तु वैषम्यपरिहारार्थं पक्षेऽपि सम्प्रदानमेव विषयशब्दस्यार्थो भवेत्, ततः सिसाधयिषितानर्थविपरीतप्रतिज्ञानाद् विरुद्धः पक्षो भवेदित्याह— सम्प्रदाने इति । विरुद्धतामेव स्फुटयति —प्रीयत इति । अग्नीषोमदेवतासम्प्रदानको हि पशुयागः । तत्र चाग्नीषोमौ देवतां प्रीयेते इति विषयानुरूपफलप्रतिज्ञाने हिंसाकर्तुरपि प्रीतिकरी हिंसेति प्रतिज्ञातं भवेत् । एवञ्च नानर्थकरत्वं सिध्यति, प्रीतिफलस्यानर्थत्वासम्भवात् । अतो विरुद्धः पक्षो भवेदिति । किं पुनरिदं देवताधिकरणविपरीतविग्रहवत्त्वमिहाभिप्रेत्य देवतां प्रीयते इत्युच्यते । यद्यपि अनिराकरणात्मकं सम्प्रदानं देवता स्यात्, तथापि नासौ प्रीयते । श्रुति-

१. 'ते', २. 'ये', ३. 'ताः', ४. 'न्त' ग. पाठः.

दृष्टान्ते कर्म दानं चेत् तस्य कीदृक् फलं भवेत् ।
जपहोमादिदृष्टान्तात् परपीडादिवर्जनात् ॥ २४१ ॥
चोदितत्वस्य हेतुत्वाद् विरुद्धाव्यभिचारिता ।
विहितप्रतिषिद्धत्वे मुक्त्वान्यन्न च कारणम् ॥२४२॥
धर्माधर्मावबोधस्य तेनायुक्तानुमावगीः ।
अनुग्रहाच्चाधर्मत्वं पीडातश्चाप्यधर्मता ॥ २४३ ॥

---

समवायित्वात् कर्मसु । अत आह — इति स्थितं तवेति । सत्यं, नायं सिद्धान्तः । तव तु साङ्ख्यस्य स्थितमिदं यद्[1] देवता प्रीयत इति । अतस्ते पक्षो विरुद्ध इति ॥ २४० ॥

पूर्वं तावदुभयत्र सम्प्रदाने विषयशब्दार्थे दोष उक्तः । कर्मवचनत्वे दोषमाह — दृष्टान्त इति । यदि हि दाने कर्मैव विषयो भवेत्, ततस्तस्य दीयमानस्य गवादेर्न किञ्चित् फलमिति न तदनुरूपफलसाधनं युक्तमित्यभिप्रायः । विरुद्धाव्यभिचारी चायं हेतुरित्याह — जपहोमादीति[2] । जपादयो हि क्रियाविशेषा न परेषां पीडानुग्रहयोर्वर्तन्ते । चोदितत्वमात्रेणैव तु तेऽर्थतयावगताः । अतस्तद्दृष्टान्तेनैव चोदिता हिंसा अर्थ इति शक्यते साधयितुम् । अतो विरुद्धाव्यभिचारिता । नचात्र विषयानुरूपमेतत् फलमिति शक्यते वक्तुम् । विषये फलादर्शनात् । जपस्य यदि तावज्जप्यमानं विषयः, किं तस्य फलम् । अन्यस्य तु न कस्यचित् पीडानुग्रहौ दृश्येते । अतएवोक्तं परपीडादिवर्जनादिति । एवंविधं दृष्टान्तमासाद्य चोदितत्वस्य हेतुत्वं सम्भवतीति विरुद्धाव्यभिचारी हेतुर्भवति । भवति च प्रयोगः — दैक्षपशुहिंसा अर्थः, विहितत्वाज्जपादिवदिति ॥ २४१½ ॥

अपिच विधिनिषेधप्रमाणकयोर्धर्माधर्मयोरनुमानोपन्यासोऽतिदूरमपभ्रष्ट इत्याह — विहितेति ॥ २४२½ ॥

अपिच विषयानुरूपफलवादिना पीडानुग्रहनिबन्धनं धर्माधर्मत्वमाश्रितम् । एवञ्च जपे शीधुपाने चान्यतराभावादुभयानुग्रहता न स्यादित्याह — अनुग्रहादिति ॥ २४३½ ॥

---

१. 'इयं दे' क. पाठः. २. 'णं तु' ग. पाठः.

**वदतो जपशीध्वादिपानादौ नोभयं भवेत् ।**
**क्रोशता हृदयेनापि गुरुदाराभिगामिनाम् ॥ २४४ ॥**
**भूयान् धर्मः प्रसज्येत भूयसी ह्युपकारिता ।**
**अनुमानप्रधानस्य प्रतिषेधानपेक्षिणः ॥ २४५ ॥**
**हृदयक्रोशनं कस्माद् दृष्टां पीडामपश्यतः ।**
**पीडातश्चाप्यधर्मत्वं तथा पीडामधर्मतः ॥ २४६ ॥**

---

गुरुदारगामिनां च परानुग्रहादेव महान् धर्मो भवेदित्याह—**क्रोशतेति**। गुरुदाराभिगामिनो हि ससाध्वसस्य हृदयं शब्दायत इवेति क्रोशतेत्युक्तम् । यदि ब्रूयाद् गुर्वङ्गनागामिनो हि ब्राह्मणमिव घ्नतो हृदयक्रोशनमुपलभ्यते । हिंसा च विषयानुरूपफलदायितयानर्थ इति स्थितम् । अतोऽनर्थफलकर्मानुष्ठायिनामेव हृदयक्रोशनोपगम्यत इति गुरुदाराभिगामिनोऽप्यधर्मोत्पत्तिरवगम्यत इति । तत्रेदमुत्तरं क्रोशता हृदयेनापीति । एवं हि मन्यते—विषयानुरूपं चेत् कर्मणां फलम्, एवं सति क्रोशतापि हृदयेन गुर्वङ्गनागामी विषयस्याङ्गनाया महान्तमुपकारं जनयतीति धार्मिको भवेत् । हृदयक्रोशनादस्याधर्मोऽप्यनुमीयत इति चेद्, न तर्हि विषयानुरूपं (फलं) क्रियाणामिति व्याप्त्यसिद्धिः । अतश्चानैकान्तिको हेतुः । विरुद्धार्थहेतुद्वयसमावेशे[3] च धर्माधर्मत्वसंशयो भवेत् । अतो न पीडानुग्रहनिबन्धनं धर्माधर्मत्वमिति ॥ २४४½ ॥

अपिच अनुमानप्रधानस्यास्य वादिनोऽनपेक्षितनिषेधशास्त्रस्य हृदयक्रोशनेऽपि न कारणमुपलभामहे । अधर्मानुष्ठानबुद्ध्या हि तद् भवति । आनुमानिकधर्माधर्मवादिनश्च नाधर्मबुद्धौ किञ्चिन्निबन्धनमस्ति । शास्त्रानुसारेण हि तन्निश्चयः । उच्छास्त्रं प्रवर्तमानस्याधर्ममाचरामीति हृत्कम्पो न जायते। इतरथा तु परोपकारित्वादस्य हृदयस्य प्रसाद एव जायत इत्याह—**अनुमानेति** ॥ २४५½ ॥

ननु यदेव स्वस्मिन् परस्मिन् वानुष्ठीयमानं पीडामावहति, स एवाधर्मः । अत एवात्महिंसाप्यधर्मः । तदिह यद्यपि परोपकारो दृश्यते, स्वस्य

---

१. 'राभिगा', २. 'शनादवग', ३. 'शाच ध' ग. पाठः.

**अन्योन्याश्रयमाप्नोति विना शास्त्रेण साधयन् ।**
**एवमादावशास्त्रज्ञो म्लेच्छो नोद्विजते क्वचित् ॥**
**तस्य नाधर्मयोगः स्यात् पूर्वोक्ता यदि कल्पना ।**
**तस्मादनुग्रहं पीडां तदभावमपास्य च ॥ २४८ ॥**
**धर्माधर्मार्थिभिर्नित्यं मृग्यौ विधिनिषेधकौ ।**
**क्वचिदस्या निषिद्धत्वाच्छक्तिः शास्त्रेण बोधिता ॥**
**प्रत्यवायनिमित्तत्वे विधिना नापगच्छति ।**
**शास्त्रेण न हि शक्तीनामावापोद्वापनक्रियाः ॥ २५० ॥**
**विद्यमाना हि कथ्यन्ते शक्तयो द्रव्यकर्मणाम् ।**
**तदेव चेदं कर्मेति शास्त्रमेवानुधावता ॥ २५१ ॥**
**हिंसादीनामधर्मत्वं कथ्यते नानुमानतः ।**

---

तु हृदयक्रोशात् पीडोपलभ्यत इत्यधर्मत्वम् । एवञ्चाधर्मत्वे पीडोपपत्तिरित्यत आह — **पीडात** इति । अनपेक्षितशास्त्रस्य प्रागधर्मज्ञानोत्पत्तिनिमित्ताभावात् किंकृता पीडेति वक्तव्यम् । अधर्मत्वबुद्धिकृतेति चेत्, तदेव किन्निमित्तम् । सैव पीडा अधर्मत्वे निमित्तमिति चेत्, तदिह पीडाधर्मत्वयोरेकतरस्यापि मूलान्तरासम्भवाद् दुरुत्तरमितरेतराश्रयमशास्त्रपुरतन्त्रस्यापद्यत इति ॥ २४६½ ॥

अपिच[1] यदि सत्यपि परोपकारे कर्तुरुद्वेगदर्शनाद् गुर्वङ्गनागमनमधर्मः, तर्हि यस्यातो म्लेच्छादेरुद्वेगो न जायते तस्याधर्मोत्पत्तिर्न स्यादित्याह — **एवमादाविति** । शास्त्रज्ञस्यैव शास्त्रानुसार्युद्वेगो जायते । तदनभिज्ञस्य तदभावादप्रमाणकोऽधर्मयोग इति ॥ २४७½ ॥

अतो विमुच्यानुग्रहपीडे तदभावं च धर्माधर्मज्ञानार्थिभिर्विधिनिषेधावेवानुसर्तव्यावित्युपसंहरति — **तस्मादिति** । अयमर्थः — नानुग्रहो धर्मत्वे कारणं पीडा वा अधर्मत्वे, अनुग्रहाभावो वाऽपीडाभावमात्रं वा धर्माधर्मत्व इति ॥ २४८½ ॥

अत्र वदन्ति — नानुमानेन हिंसादीनामधर्मत्वं साध्यते । किन्तु शास्त्रानुसारेणैव । निषेधशास्त्रेण हिंसायाः प्रत्यवायशक्तिरवगता । सर्वा च

---

१. 'च स' क. पाठः.

**एवं ये निपुणं प्राहुस्तैरप्येतत् परीक्ष्यताम् ॥ २५२ ॥**
**सुरापानादिभिः शूद्रः किं याति नरकं कृतैः ।**
**वैश्यस्तोमेन वा किं स्याद् विप्रराजन्ययोः फलम् ॥**
**पञ्चम्यामिष्टिकरणान्मध्याह्ने चाग्निहोत्रतः ।**
**तस्माद् यद् यादृशं कर्म यत्फलोत्पत्तिशक्तिकम् ॥**
**शास्त्रेण गम्यते तस्य तादृशस्यैव तत् फलम् ।**
**हिंसा चांशद्वयादन्या या तस्याः प्रतिषेधजम् ॥**
**प्रत्यवायार्थताज्ञानं विधिनान्यत्र वार्यते ।**

---

तीर्थातीर्थगता हिंसैव । अतः कथं हिंसा सती काचित् प्रत्यवायं न जनयिष्यति । नहि दैक्षपशुहिंसाविधानं वस्तुनः शक्तिमुत्सारयितुमुत्सहते विद्यमानद्रव्यगुणादिशक्तिमात्रोपदेशित्वात् शास्त्राणाम् । नैषां शक्त्यावापोद्वापयोर्व्यापारः । अतस्तदेवेदं 'न हिंस्यादि'ति शास्त्रोपदर्शितप्रत्यवायहेतुत्वं दैक्षपशुहिंसाक(र्मे ? र्मणी)ति शास्त्रानुधावनेनैव हिंसादीनामधर्मत्वं कल्प्यत इति । तदेतदुपन्यस्यति — **क्वचिदिति** त्रयेण । क्वचिद् बाह्यहिंसायां निषिद्धत्वात् प्रत्यवायहेतुत्वे हिंसायाः शक्तिर्बोधिता न विधानादपगच्छतीति सम्बन्ध इति ॥ २५१½ ॥

एवमुपन्यस्य निरस्यति—**एवमिति** द्वयेन । एवंवादिनो हि 'न सुरां पिबेदि'ति निषेधशास्त्रात् सुरापानस्य प्रत्यवायशक्तिरवगतेति शूद्रोऽपि तां पिबन् प्रत्यवेयात् । तथा वैश्यस्तोमेन वैश्यस्य यजमानस्य विधिनाभ्युदयसिद्धिर्दर्शितेति वैश्यस्तोमशक्त्यनुसारेण विप्रराजन्ययोरपि तत्फलं भवेत् । नचैतदिष्यते । तथा कालभेदेन शक्तिभेदो दृष्टः । इष्ट्योर्दर्शपूर्णमासयोः पर्वणि शक्तेः पञ्चम्यां चाशक्तेः । अग्निहोत्रस्य सायंप्रातरनुष्ठितस्य फलसाधनत्वान्मध्याह्ने च तदभावात् । अतो यथाशास्त्रमेव शक्तिसद्भावोऽभ्युपेयत इति ॥ २५३½ ॥

तस्मात् शास्त्रानुसारेणैव कर्मणां फलशक्तिरास्थेयेत्युपसंहरति — **तस्मादिति** ॥ २५४½ ॥

एवं साधनोपायांशद्वयातिरिक्तायां हिंसायां 'न हिंस्यादि'ति प्रति-

१. 'व्यादि' क. पाठः. २. 'भावात' ग. पाठः.

ज्ञानमेव च शक्तीनां नावापोद्वापनक्रियाः ॥ २५६ ॥
ज्ञायन्ते शास्त्रतस्तास्तु क्रियाभेदव्यवस्थिताः ।
व्यवस्थाः शक्तिभेदानां दृष्टार्थेष्वपि कर्मसु ॥२५७॥
अभिन्नत्वेऽपि दृश्यन्ते भुजेः स्वस्थातुरेष्वपि ।
रूपाभेदेऽपि हिंसादेर्भेदोऽङ्गानङ्गकारितः ॥ २५८ ॥
तथाप्येकफलत्वं चेत् क्रियात्वात् सर्वसङ्करः ।
यजित्वाद्यविशेषाच्च चित्रादिफलतुल्यता ॥ २५९ ॥

षेधाज्जातं प्रत्यवायहेतुत्वज्ञानम् 'अन्यत्र तीर्थेषु' 'यो दीक्षितः' 'यदग्नीषोमीयं पशुमालभेते'त्यादिविधिना वार्यत इत्याह — हिंसेति ॥ २५५ ॥

यत्तूक्तं न वस्तुशक्त्यावापोद्वापयोः शास्त्रस्य व्यापार इति, तदिष्यत एव । केवलं शास्त्रानुसारेणैव तत्तत्क्रियाभेदव्यवस्थिता एव शक्तयोऽवगम्यन्ते । अतो नातिप्रसङ्ग इत्यभिप्रायेणाह — ज्ञानमिति ॥ २५६ ॥

कथमेकस्य कर्मणः शक्तिभावाभावाविति चेत् । लौकिकानि कर्माणि विदाङ्कुर्वन्तु भवन्तः । यथा तावदेकमेव भोजनं स्वस्थातुरकर्तृकं भिन्नशक्तिकं दृष्टम् । स्वस्थेन हि तत् क्रियमाणं रसलोहितमांसपरिणामपरम्परया शरीरं वर्धयति । आतुरेण तु क्रियमाणमसम्यग्धातुपरिणामात् कृशीकरोति । एवमदृष्टार्थेष्वपि कर्मसु भविष्यतीत्यभिप्रायेणाह — व्यवस्था इति ॥ २५७[1] ॥

यथा भोजनत्वाभेदेऽपि स्वस्थातुरकर्तृभेदनिबन्धनं व्यक्तिभेदमाश्रित्य तत्र शक्तिभेदः समाधीयते, एवमिहापि हिंसात्वेनाभेदेऽपि रूपस्येयमङ्गहिंसा इयं बाह्यहिंसेति व्यक्तिभेदावगतेरुपपन्नः शक्तिभेद इत्यभिप्रायेणाह — रूपाभेद इति ॥ २५८ ॥

यदि त्ववान्तरभेदमनङ्गीकृत्य रूपाभेदमात्रेणैकफलत्वमिष्यते, एवं सति सर्वलौकिकवैदिकक्रियाणां क्रियात्वादेकफलत्वं स्यात् । तत्रेदं स्वर्गफलमिदं पुत्रफलमित्याद्यसङ्करो न सिध्यतीत्यभिप्रायेणाह — तथापीति । आस्तां तावन्महासामान्येनैकत्वात् फलसङ्करो भवतीति । यजित्वाद्यवान्तर-

१. 'व्यवस्थाभे' ख. पाठः.

**भेदात् तत्र व्यवस्था चेदिहाप्येवं भविष्यति ।**
**विधीनां वापि सर्वेषां साक्षाद् व्यवहितोऽपि वा ॥**
**पुरुषार्थः फलं तेन नानर्थोऽतः प्रतीयते ।**
**नचैषु श्रूयतेऽनर्थो निषेधान्नच कल्प्यते ॥ २६१ ॥**
**नच प्रकरणस्थत्वात् पुरुषार्थः फलं भवेत् ।**
**कर्मोपकारः कल्प्यस्तु दृष्टोऽदृष्टोऽथवा पुनः ॥२६२॥**

सामान्याभेदादपि चित्रादीनां कर्मणां फलतुल्यता भवेदित्याह — यजित्वेति ॥ २५९ ॥

यदि तु तत्र व्यवस्थावान्तरभेदाश्रयाभिधीयते, सेहापि समानेत्याह — **भेदा**दिति । ननु विहिता नामाङ्गहिंसा । तथापि किं नानर्थः । न विधिनानर्थफलेन न भवितव्यमिति राजाज्ञा । अत आह — विधीनामिति । अयमभिप्रायः — नेयं राजाज्ञा । शब्दशक्तिरेव । विधिर्हि कर्तव्यताबुद्धेर्हेतुः । इष्टाभ्युपायं च कर्तव्यतया लोको बुध्यते । अतोऽवश्यमेवं साक्षाद् व्यवहितोऽपि वा विधेयानां पुरुषार्थः फलमित्यवसीयते । साक्षात् प्रधानानां, व्यवहितोऽङ्गानाम् । तस्मान्नातो विधेरनर्थफलत्वमवसीयते । विधिबलादवगम्यमानं विधीनां फलमित्याहेति । अपिच, अनर्थकर्यङ्गहिंसेति नेदं सान्दृष्टिकम् । नचानर्थसमभिव्याहारोऽस्याः श्रूयते । अतः कथमनर्थसाधनमित्याह — नचैष्विति । नन्वश्रूयमाणोऽपि कलञ्जभक्षणादिवत् कल्पयिष्यते, अत आह — निषेधादिति । तत्र निषेधः कल्पनायां कारणं, नासाविह सम्भवति । अभावादेव विधानदर्शनादिति ॥ २६१ ॥

अपिचाङ्गहिंसानां पुरुषार्थत्वे सिद्धे कदाचिदनर्थोऽपि फलतया कल्प्यते । नच तासां पुरुषार्थः फलम् । प्रकरणे पाठात् । प्रकरणविधिविनियोगेन क्रत्वर्थत्वादित्यभिप्रायेणाह — **नचे**ति । किं नाम तत्कल्प्यमत आह — कर्मोपकार इति । यत् खलु प्रकरणस्थं, ततः प्रधानकर्मोपकार एव कल्प्यते दृष्टोऽदृष्टो वा । यथावघातस्य व्रीहीणां वितुषीभावो विध्यपेक्षितो दृष्टः । अदृष्टो वा यथा प्रयाजादिजन्य इति ॥ २६२ ॥

१. 'तो वा' क. पाठः. २. 'मातः क' ग. पाठः.

**कल्पनावसरस्तत्र नानर्थस्यानपेक्षणात् ।**
**क्रत्वर्थश्चापि संस्कारः पशोर्नारादुपाक्रिया ॥ २६३ ॥**
**दृष्टैव त्ववदानानां निष्पत्तिः क्रत्वपेक्षिता ।**
**अभिचारेऽप्युपायस्था हिंसा नाधर्म उच्यते ॥ २६४ ॥**
**तस्मादनङ्गभूतायां हिंसायामेतदुच्यते ।**
**उद्देशाच्च फलत्वेन श्येनादौ न विधीयते ॥ २६५ ॥**

---

अतो नात्रानर्थकल्पनावसरोऽस्तीत्याह — **कल्पनेति** । नाङ्गहिंसासु फलमपेक्षितं, क्रतूपकारेण निराकाङ्क्षत्वादिति भावः । क्रत्वर्थेऽपि चायं विशेषः यदयं पशुसंस्कार एव, नतु प्रयाजादिवदारादुपकारोऽङ्गहिंसा, तत्पुरस्सरं विशसनादिसंस्कारानुष्ठानात् । अतएव संज्ञपने पशुर्व्रीहिवत् प्रधानतया श्रुतः 'पशुं संज्ञपयती'ति । तदेतदाह — **क्रत्वर्थ इति** । सन्निपत्योपकारप्रदर्शनेन क्रत्वर्थतैव बलीयसीति दर्शितं भवति । आरादुपकारकत्वे यावान् क्लेशो भवेद् नच तावानप्यस्तीति ॥ २६३ ॥

संस्कारत्वेऽपि चास्यायं विशेषः यदयं दृष्टार्थ एवावघातादिवत् । न तु प्रोक्षणादिवददृष्टार्थः, क्रत्वपेक्षितैकादशावदाननिष्पत्तेः । दैक्षे हि पशौ 'हृदयस्याग्रेऽवद्यति । अथ जिह्वायाः । अथ वक्षसः' इत्यादिभिरेकादशावदानसाध्यो याग उक्तः । नचासति हिंसासंस्कारे पशोरेकादशावदाननिष्पत्तिः सम्भवति । अतो दृष्टार्थत्वादङ्गहिंसाया नानर्थकल्पनावसरोऽस्तीत्यभिप्रायेणाह — **दृष्टेति** । एवं तावज्ज्योतिष्टोमोपायांशस्था हिंसा नाधर्म इत्युक्तम् । ये चाभिचारयज्ञाः श्येनादयः, तत्राप्येकाहानां ज्योतिष्टोमप्रकृतित्वाच्चोदकप्राप्ताङ्गहिंसा नाधर्म इत्याह — **अभिचार इति** ॥ २६४ ॥

अतोऽनङ्गभूतायामेव फलांशस्थायां हिंसायामेतदनर्थत्वमित्युपसंहरति — **तस्मादिति** । ननुच फलांशस्थापि हिंसा श्येनाद्युद्देशेन विधीयमाना कथमनर्थः अत आह — **उद्देशादिति** । अयमभिप्रायः — नात्र श्येनोद्देशेन फलं विधीयते, फलत्वेन हिंसाया एवोद्देशात् । फलं ह्युद्दिश्य साधनं विधीयते, नतु विपर्ययः । ननूद्देश्ययोरपि देशकालयोर्विधानमि-

---

१. 'नेनैव क', २. 'च' क. पाठः. ३. 'नत्वात् क' क. ग. पाठः.

**भावनाविधिरप्येष फलांशाद्ध विनिवर्तते ।**
**अतः स्वतो न धर्मत्वं श्येनादेर्नाप्यधर्मता ॥ २६६ ॥**

**फलानर्थानुबन्धित्वात् तद्द्वारेणोपचर्यते ।**
**निराकाङ्क्षस्य चैकेन श्येनस्य न फलद्वयम् ॥**

**तस्मात् क्रियान्तरादेर्वा हिंसातो नार्थ उच्यते ।**
**फलतोऽपि च यत् कर्म नानर्थेनानुबध्यते ॥ २६८ ॥**

**केवलप्रीतिहेतुत्वात् तद्धर्मत्वेन हीष्यते ।**

ध्यत एव । सत्यम् । अन्यतस्तयोरप्राप्तेः । फले तु रागतः प्रवृत्तः पुरुषो न विधिना प्रवर्त्यत इत्युक्तमेवेति ॥ २६५ ॥

कथं पुनस्त्र्यंशभावनाविधाने विधेयाविधेयभेदः शक्यते वक्तुम्[1] । अतएव भावनान्तर्गतत्वादनर्थत्वाक्षेपो निदर्शितः[2] । तत्रोत्तरमाह — **भावनेति** । अयमभिप्रायः—विधिर्हि हंस इवोदकात् क्षीरं विविच्य प्राप्तपरिहारेणाप्राप्तं गृह्णाति । तथाच वक्ष्यति —'तद्गुणास्तु विधीयेरन्नविभागाद् विधानार्थे नचेदन्येन शिष्टाः' (१. ४. ९) इति । अतो विशिष्टभावनाविधावपि साधनेतिकर्तव्यतामात्रपरत्वात् फलांशान्निवर्तत इति । अतः सिद्धं न स्वरूपेण श्येनो धर्मः । नाप्यधर्मः । फलस्यैव त्वनर्थानुबन्धित्वात् तद्द्वारेणानर्थ इत्युपचर्यत इत्युपसंहरति — अत इति ॥ २६६[1] ॥

ननु च विधीनां पुरुषार्थफलत्वात् श्येनस्य च विधिविषयत्वात् तद्बलेनार्थात्मकमेव फलान्तरं विश्वजिदादिवत् किं न कल्प्यते । अतः स्वरूपेण धर्मो भविष्यतीत्याह—**निराकाङ्क्षस्येति** । अयमर्थः— भ्रातृव्यवधेनैकेन स्वर्गादपि प्रियतरेण निराकाङ्क्षस्य श्येनस्य न फलान्तरकल्पना सम्भवति । भावनाकाङ्क्षा हि तत्कल्पनाबीजम् । एका च भावनैकेनैव भाव्येन निराकाङ्क्षेति न भाव्यान्तरसम्बन्धं लभते । तथाच वक्ष्यति — 'एकं वा चोदनैकत्वात्' (४. ३. १४) इति । अतः सिद्धम-

---

१. 'कर्तुम्' ग. पाठः. २. 'दर्थाक्षेपो दर्शि'; ३. 'नेऽर्थे' क. पाठः.

**ननु चेष्टाभ्युपायत्वाच्छ्येनादेर्धर्मता भवेत् ॥ २६९ ॥**
**फलं तावदधर्मोऽस्य श्येनादेः सम्प्रधार्यते ।**
**यदि येनेष्टसिद्धिः स्यादनिष्टाननुबन्धिनी ॥ २७० ॥**
**तस्य धर्मत्वमुच्येत ततः श्येनादिवर्जनम् ।**
**यदा तु चोदनागम्यः कार्याकार्यानपेक्षया ॥ २७१ ॥**
**धर्मः प्रीतिनिमित्तं स्यात् तदा श्येनेऽपि धर्मता ।**

नर्थफलस्य तद्द्वारेणानर्थत्वमित्याह — तस्मादिति । किं पुनः कारणं, फलानर्थानुबन्धित्वात् श्येनो न धर्म इत्यत आह — फलत इति । ईदृशे कर्मणि लोके धर्मशब्दः प्रसिद्ध इति ॥ २६८[1] ॥

अत्र चोदयति — ननु चेति । अयमभिप्रायः — किं पुनः कारणं स्वतो न धर्मत्वं श्येनादेः, नाप्यधर्मतेति । इष्टाभ्युपायो हि चोदनालक्षणो धर्मः । तथा श्येनः फलस्यानर्थानुबन्धित्वेऽपि । अतो धर्म इत्येवायं वक्तव्य इति । अत्रोभयरूपरहितः श्येन इत्यभिप्रेत्य सम्प्रधारणमवतारयति — फलमिति । स्थितं तावत् श्येनफलं हिंसा । हिंसा च न धर्म इति । श्येनादिस्वरूपमिदानीं लोकप्रसिद्ध्यनुसारेणावधारयामः धर्मोऽधर्मो वेति ॥ २६९½ ॥

तत्रान्यतरनिर्धारणाय पक्षद्वयमुपन्यस्यति — यदीति द्वयेन । लोकप्रसिद्धिर्हि नः सर्वशब्दार्थावधारणे मूलम् । तदसावेव निरूपणीया । तत्र यद्यनिष्टानुबन्धरहितेष्टाभ्युपायश्चोदनालक्षणो धर्म इति लोकेनोच्यते, ततः श्येनादीनामधर्मत्वेन वर्जनं, परम्परयानर्थानुबन्धित्वात् । यदि त्वनादृत्य परम्परयानर्थानुबन्धित्वमाहत्य प्रीतिफलं लौकिका धर्मशब्देनोपचरन्ति चोदनासमधिगम्यं, तथा सति श्येनोऽपि तादृशत्वाद् धर्मो भवेत् । कार्याकार्यानपेक्षयेति । यदेव हि प्रीतिमात्रानुबन्धि तत् कार्यमिति विवेकिनो बुध्यन्ते, विपरीतमकार्यमिति भावः । प्रसिद्धिविभागकथनेनैव चात्र निर्धारणमुक्तम् । यथाप्रसिद्धि तावद् धर्मशब्दोऽभ्युपगन्तव्य इति स्थितम् । प्रसिद्धिश्चानिष्टाननुबन्धीष्टसाधनविषयैव धर्मशब्दस्येति श्येनादिवर्जनमेवावसीयत इति ॥ २७१½ ॥

---

१. 'ति भावः ॥' क. पाठः.

**यदि त्वप्रीतिहेतुर्यः साक्षाद् व्यवहितोऽपि वा ॥**
**सोऽधर्मश्चोदनार्थः स्यात् तदा श्येनेऽप्यधर्मता ।**
**यस्तु हिंसात्वसाधर्म्याद् बाह्यवच्चोदितास्वपि ॥**
**वदेदनर्थहेतुत्वं तस्याप्यागमबाधनम् ।**
**तमनादृत्य यो ब्रूयाद् यागादेरप्यसौ वदेत् ॥ २७४ ॥**
**स्वर्गादिसाधनाशङ्कित क्रियात्वाद् भोजनादिवत् ।**
**गीतामन्त्रार्थवादैर्या कल्प्यतेऽनर्थहेतुता ॥ २७५ ॥**

नन्वेवमधर्म एवानिष्टानुबन्धित्वात् श्येनः फलद्वारेण, अत आह — **यदीति**। अयमभिप्रायः — अधर्मपदप्रयोगोऽपि लौकिकानां सम्प्रधारणीयः किंविषय इति । तद् यदि चोदनार्थोऽपि साक्षाद् व्यवधानेन वाप्रीतिहेतुरधर्म इति प्रसिद्धः, ततः श्येनोऽप्यधर्मः । अथ वेदविहिते नाधर्मशब्दमप्रीतिकरेऽपि परम्परया लोकः प्रयुङ्क्ते, ततो नाधर्मः । नच वेदविहितगोचरोऽधर्मशब्दप्रयोगो लौकिकानां दृष्ट इति नाधर्मः स्वरूपेण श्येनादय इति भावः ॥ २७२½ ॥

यस्तु वदति—विहिता नांमांशद्वयगामिनी हिंसा । तथापि प्रतिबद्धलिङ्गदर्शनेन तस्यानर्थहेतुत्वमनुमास्यामहे । तथाहि हिंसात्वमनर्थत्वेन प्रतिबद्धं बाह्यहिंसास्ववगतं, तद्धि विहितास्वपि दृश्यमानमनर्थत्वमनुमापयतीति । तदेतदुपन्यस्य दूषयति — **यस्त्विति**। अयं चागमबाधोऽनुमाने प्रपञ्चयिष्यत इति ॥ २७३½ ॥

आगमानादरे त्वनवस्था भवतीत्याह — **तमिति** ॥ २७४½ ॥

नन्वागमानुसारेण क्रतुगतानामपि हिंसानामधर्मत्वमवगम्यते । तथाहि—सन्ति हि केचन मन्त्रार्थवादेतिहासादयः ये क्रतुवर्तिनीमपि हिंसां निन्दन्ति । यथा जपस्तुतौ

"विधियज्ञाज्जपयज्ञो विशिष्टो दशभिर्गुणैः"

इति हिंसाङ्गत्वेनैव विधियज्ञनिन्दा स्मर्यते । अत आह — **गीतेति** । **अस्यार्थः** — प्रत्यक्षोऽत्र श्रुतिबाधः । क्रतौ विधानदर्शनात् 'अन्यत्र तीर्थेभ्यः' इति च श्रुतेः ।

---

१. 'दाः ये', २. 'त', ३. 'साकरत्वे' ग. पाठः. ४. 'स्मृ' क. पाठ

**प्रत्यक्षश्रुतिबाधत्वात् सान्यार्थत्वेन नीयते ।**
**शिष्यान् प्रत्यविशिष्टत्वात् सूत्रवैदिकवाक्ययोः ॥**
**अशक्तेश्चोभयोः साम्यान्न सूत्रेष्वित्यनुत्तरम् ।**
**प्रागुक्तपरिसङ्ख्यायाः फलमेतत् प्रकाश्यते ॥**
**सूत्रेषु ह्यनया युक्त्या गतिरेषापि युज्यते ।**

"यज्ञार्थं पशवः सृष्टाः स्वयमेव स्वयम्भुवा ।
यज्ञो हि भूत्यै लोकस्य तस्माद् यज्ञे वधोऽवधः ॥"

इति च । अन्यपरतयार्थवादो व्याख्येयः । यथा वक्ष्यति — 'नहि निन्दा निन्द्यं निन्दितुं, किं तर्हि निन्दितादितरं प्रशंसितुमि'ति ॥ २७५[१] ॥

अत्रापरं भाष्यं — 'नन्वशक्तमिदं सूत्रमिमावर्थावभिवदितुं चोदनालक्षणो धर्मः नेन्द्रियादिलक्षणः, अर्थश्च धर्मो नानर्थ इति । भिद्येत हि तदा वाक्यम्' इति । एवं वाक्यभेदपरिचोदनां कृत्वा परिहारभाष्यम् — 'उच्यते । यत्र वाक्यादेवार्थोऽवगम्यते तत्रैवम् । तत् तु वैदिकेषु न सूत्रेषु । अन्यतोऽवगतेऽर्थे सूत्रमेवमर्थमित्यवगन्तव्यमि'ति । तदाक्षिपति — **शिष्यानिति** । अस्यार्थः — अन्यतोविदितवेदार्थेभ्यो जिज्ञासुभ्यः सूत्राणि जैमिनिना न प्रणीतानि । अतस्तानि तेषां वेदवाक्यतुल्यानि उभयं च वेदसूत्रात्मकं वाक्यभेदादिदोषादसमर्थम् । नचाशक्तमर्थप्रत्यायने प्रमाणम् । अतो न वेदसूत्रयोः कश्चिद् विशेष इति न सूत्रेष्विति भाष्योक्तमनुत्तरमिति ॥ २७६ ॥

अत्र परिहारमाह — **प्रागुक्तेति** । अस्यार्थः — सत्यम् । वाक्यभेदादिना सूत्राणामप्यशक्तिः शिष्यांश्च प्रत्यविशेषः । किन्तु या पूर्वं सति सम्भव इति परिसंख्योक्ता, तस्याः फलमेतद् भाष्यकारेण प्रतिपाद्यते । एवं हि न्यायाभासभ्रान्ताः शिष्या भाष्यकारेण शिक्षिताः यद् विवक्षितासम्भवे वाक्यभेदादिभिरपि सूत्राणि गमयितव्यानीति । तदिहैव तावच्चोदनासूत्रे प्रदर्श्यते यद् वाक्यभेदेनापि चोदनासूत्रार्थो बोध्यत इति । अनयेति । भाष्योक्तया प्रमाणान्तरप्रतिपन्नार्थविषयतया युक्त्येत्यर्थः । एषेत्यपि च भाष्योक्तैव वाक्यभेदगतिः प्रत्यवमृश्यते । यथाह — 'भिन्नयोरेव वाक्ययो-

१. 'ति । अ' क. पाठः.

**तस्मादावर्तते सूत्रं तन्त्रं वा शक्तिभेदतः ॥ २७८ ॥**

**एकदेशानुमानाद् वा द्वे सूत्रे परिकल्पिते ।**

**इतरेतरसामीप्यादेतावेव परस्परम् ॥ २७९ ॥**

---

रिमावेकदेशाविति' । तदनेन शिष्यान् प्रत्यविशेषेऽपि व्याख्यातृणामेव व्याख्याप्रकारो भाष्यकारेणोक्त इति दर्शितम् । व्याख्याकारा हि चिरपरिचितन्यायसामस्त्यस्मरणक्षमा न्यायबलेन वाक्यभेदादिभिरपि सूत्राणि व्याचक्षत इति ॥ २७७½ ॥

यतश्च प्रमाणान्तरानुसारेण वाक्यभेदादिभिरपि सूत्रेष्ववगतिः सम्भवति, तस्मादावृत्त्या वा तन्त्रेण वेदं सूत्रं व्याख्येयमित्याह — **तस्मादिति** । आवृत्तौ तावत् सकलमेव सूत्रं द्विः पठितव्यम् । तत्रैकस्य चोदनालक्षणो धर्म इत्यत्र तात्पर्यम् । अपरस्य चार्थो धर्म इत्यत्र । अन्यपरत्वेऽन्यतरसम्बन्धोऽनुवादः । सूत्रभेदेन चोभयविधानात् तत्सिद्धेरुभयानुवादोपपत्तिः । तन्त्रं चोदनालक्षणादीनां त्रयाणामन्यतमम् । तदुपरिष्टाद् वक्ष्यते । तस्मिन् पक्षे न वाक्यभेदः । तथाहि—त्रिपदमिदं सूत्रम् । पदत्रयस्यापि चेतरेतरसम्बद्धोऽर्थो वाक्यार्थः । तद् यदेव त्रयाणामुभयसन्धानार्थमावर्त्यते तदेव वाक्यं भिनत्ति । तन्त्रेण तूभयसम्बन्धे न वाक्यभेदः । सकृद्वचनात् । सकृदुक्तस्यैव योग्यतयोभयसम्बन्धे शक्तिभेदात् । तदिह धर्मपदं वा तन्त्रोच्चरितमुभाभ्यां सम्बध्यते । सिध्यति चोभयं चोदनालक्षणो धर्मोऽर्थो धर्म इति च । मध्यपदं वाद्यन्ताभ्याम् । एवमपि चेष्टं सिध्यति अर्थो धर्मः स चोदनालक्षण इति । आद्यमेव वोत्तराभ्याम् । चोदनालक्षणोऽर्थः स एव च धर्म इति । इदमेकमेव वाक्यं त्रयाणामन्यतमस्य तन्त्रेणोभयसम्बन्धाद् द्व्यर्थमित्यवगन्तव्यम् । आह च —

> "चोदनालक्षणादीनां तन्त्रेणैकस्य सङ्गतौ ।
> द्वाभ्यां सहार्थवाचित्वाद् द्व्यर्थमेकं भविष्यति ॥"

इति ॥ २७८ ॥

भाष्यकारेण 'भिन्नयोरेव वाक्ययोरिमावेकदेशावि'ति वदता सूत्रद्वय-

---

१. 'सम्बन्धार्थ', २. 'तेः' ग. पाठः.

कल्प्येते वाक्यशेषाय नान्यावयवकल्पना ।
विशिष्टार्थानुवादित्वादथवेत्यपि भाषिते ॥ २८० ॥

वाक्यभेदः स एवेति संज्ञातन्त्रत्वमुत्तरम् ।
अर्थं वा प्रत्युपादानात् संज्ञालक्षणशब्दयोः ॥२८१॥
तन्त्रे लक्षणशब्दो वा वाच्यो धर्मार्थशब्दयोः ।

मेवेदं दर्शितम् । तदुपन्यस्यति—**एकदेशेति** । अर्थो धर्म इत्येकं सूत्रम्, अपरं चोदनालक्षण इति । तेन चोदनालक्षणावयवेनानुमितेनानन्तरसूत्रस्थेन धर्मपदेनैकं निष्पद्यते चोदनालक्षणो धर्म इति । तदिदमुक्तम्—एकदेशानुमानादिति । नन्वर्थो धर्म इति चोदनालक्षणाचोदनालक्षणयोरन्यतरस्यानुपादानात् तदपेक्षायामचोदनालक्षणोऽप्युपतिष्ठमानः केन वार्यते । एवं चोदनालक्षणो धर्म इत्यत्राप्यनर्थप्रसङ्गो दर्शयितव्यः । अत आह —इतरेतरेति । एतावेव चोदनालक्षणार्थशब्दावितरेतरसामीप्यात् परस्परं सूत्रद्वयेऽपि विशेषणत्वेन वाक्यशेषतया कल्प्येते । अतो नाचोदनालक्षणानर्थावयवकल्पनेति । अनुवादत्वेन चात्र चोदनालक्षणार्थावयवसम्बन्धो भिन्नयोः सूत्रयोर्दर्शयितव्यः, यदर्थो धर्म इत्येकसूत्रेणोक्तं तच्चोदनालक्षण इति, यच्चोदनालक्षणो धर्म इत्यत्रोक्तं तदर्थ इति ॥ २७९ ॥

अपरमपि 'अथवा अर्थस्य सतश्चोदनालक्षणस्य धर्मत्वमित्येकार्थमेवे'ति भाष्यम् । तदाक्षिपति—**विशिष्टेत्येवान्तेन** । अर्थविशेषणविशिष्टचोदनालक्षणानुवादेन धर्मविधानं दर्शितम् । एवमपि विशेषणविशेष्योभयपरत्वेन वाक्यं भिद्यत एव, यथैकत्वविशिष्टग्रहानुवादेन सम्मार्गविधौ । अतः केन विशेषणार्थवेति परिहारान्तरमुक्तमिति । यतश्चायमपरिहारः, तस्मात् पूर्वोक्तमेव पदत्रयतन्त्रत्वं वाक्यभेदपरिचोदनायामुत्तरमित्याह —इतीत्यर्थशब्दयोरन्तेन । एतच्च तन्त्रत्रयं व्याख्यातमेव । संज्ञाशब्देन धर्मपदमुच्यते । तद्धि चोदनालक्षणस्यार्थस्यालौकिकी संज्ञा भूवादीनामिव

---

१. 'रान्नु', २. 'वेतैन' ग. पाठः. ३. 'ण परि', ४. 'ते । सा हि चो' क. पाठः.

**धर्मे सामान्यतः सिद्धे प्रमाणं कथ्यते यदा ॥२८२॥**
**वृत्तमेव तदार्थत्वे किमर्थं पुनरुच्यते ।**
**चोदनालक्षणत्वस्य धर्मं प्रति विधेयता ॥ २८३ ॥**

धातुशब्दः । पूर्वाचार्याणां मतेन चैतदुक्तम् । यद्यवश्यं वाक्यभेदः परिहर्तव्यः, ततस्तन्त्रेण द्व्यर्थमेकं वाक्यं व्याख्येयम् । नच प्रकारान्तरेण वाक्यभेदपरिचोदना परिहर्तुं शक्यत इति ॥ २८१ ॥

अत्र चोदयति— धर्म इति । अयमभिप्रायः — द्वे किलात्र वचनव्यक्ती । चोदनालक्षणानुवादेन धर्मविधानं विपरीतं वा । तत्राद्ये तावत् पक्षे चोदनालक्षणत्वस्यार्थत्वव्यभिचाराद् युक्तमेव विशेषणम् । यदा तु सामान्यतः सिद्धधर्मानुवादेन प्रमाणमनेन कथ्यते, तदा अर्थत्वं प्राप्तमेव, अर्थस्यैव श्रेयस्साधनस्य धर्मत्वप्रसिद्धेः । सर्वे हि वादिनः प्रीतिसाधनं धर्म इत्यत्राविप्रतिपन्नाः, तद्विशेषेष्वेव विवादः । मीमांसका हीष्टापूर्तयोर्धर्मत्वमिच्छन्ति । सङ्घट्टवन्दनादौ सौगताः । सामान्यं तु प्रीतिसाधनं धर्मस्वरूपं सर्ववादिनामविवादसिद्धमेवं । एषैव च प्रागपि सामान्यसिद्धिरुक्ता । अतएवच विशेषसिद्धिजिज्ञासायां प्रमाणविशेषविधानं, तत एव तत्सिद्धेः । वेदागमे हि प्रमाणे यागादयो धर्माः । बुद्धागमे तु चैत्यवन्दनादयः । को धर्म इत्यत्रापि विशेषजिज्ञासयैव प्रश्नः । वक्ष्यति च 'विशेषस्य च जिज्ञासे'ति । तस्मादेषैवात्र वचनव्यक्तिर्मुख्या । अतएवाद्ये प्रथममुक्त्वा सत्सूत्रेण च प्रत्यक्षादिनिराकरणादेषैव वचनव्यक्तिः सूत्रकाराभिमता लक्ष्यते । यो धर्मः स चोदनालक्षणः इति प्रतिज्ञातेऽन्यलक्षणनिराकरणं सङ्गच्छते, नान्यथा । तस्मादेषैवात्र वचनव्यक्तिः । अस्यां चार्थाव्यभिचारादर्थविशेषणमनर्थकमिति ॥ २८२ ॥

परिहरति—चोदनेति । अयमभिप्रायः— सत्यम् । एषैव चात्र वचनव्यक्तिः । इयमेव तु नासत्यर्थविशेषणे सिध्यतीति फलवदर्थग्रहणम् ।

१. 'इयमवा', २. 'दो वक्तव्यः', ३. 'व । प्रा' क. पाठः. ४. 'पमात्राजि' ग. पाठः.

**लभ्यतेऽर्थानुवादेन संशयो ह्यन्यथा भवेत्।**
**तथा च येऽप्यनर्थस्य साधनत्वेन कल्पिताः ॥ २८४ ॥**
**निषेधैस्तेऽपि धर्माः स्युश्चोदनालक्षणत्वतः।**
**तस्मादर्थापरित्यागादेकार्थग्रहणं यथा ॥ २८५ ॥**
**लभ्यते वचनव्यक्त्या सा स्यादर्थानुवादतः।**

---

असति हि तस्मिन् वचनव्यक्त्यन्तरसन्देहो भवेत्। एवं हि तदा सम्भाव्यते, यश्चोदनालक्षणः स धर्म इति। अत्र तु वक्ष्यमाणो दोषः। नित्यानुवादभूते त्वर्थग्रहणे नैवं वचनव्यक्तिः सम्भवति, अर्थग्रहणस्य विध्यनुवादयोरसम्भवात्। विधौ तावद् वाक्यभेदादसम्भवः। अनुवादस्य चाप्राप्तेः। नहि चोदनालक्षणमर्थसम्बन्धं न व्यभिचरति अनर्थस्यापि तल्लक्षितत्वात्। अतो नानुवादः। नचैतत्परित्यागेन वाक्यार्थलम् अनर्थकत्वाद् वाक्यैकदेशस्य। अतो यतरस्मिन् पक्षेऽर्थपदान्वयो घटते, ततरः पक्षोऽवधार्येत। धर्मानुवादेन प्रमाणविधौ सम्भवति नित्यानुवादभूतोऽर्थशब्द इति स एव पक्षो निश्चीयते। अतो विध्यनुवादसूचनार्थ एवार्थशब्दो न विशेषणम्। 'विशेषणाद् विना चैतद्' इति च स्पष्टमेव सूत्रार्थ इति दर्शयिष्यति ॥ २८३½ ॥

स्यादेतत्। सम्भावितवचनव्यक्तिपरिग्रहे को दोष इति, अत आह — तथेति। चोदनालक्षणानुवादेन धर्मविधावधर्माणामपि निषेधचोदनयानर्थसाधनत्वेन लक्षितानां ब्रह्महत्यादीनां चोदनालक्षणत्वाद् धर्मत्वं भवेत्। नचैतदिष्टम्। अतो न विधेयार्थमपि विधिफलमर्थवदर्थ[3]पदग्रहणम्। अतो नेयं वचनव्यक्तिः साध्वीयसीति ॥ २८४½ ॥

अतस्तदपरित्यागेनान्या सा नाम वचोभङ्ग्याश्रयणीया, यस्यामर्थश्च धर्मतया न त्यज्यते, एकश्च वाक्यार्थो भवति। सा च धर्मानुवादेन प्रमाणविधिः, तस्यां हि धर्मस्यार्थत्वाव्यभिचारादर्थो न त्यज्यते। एक एव वाक्यार्थो भवति, सामर्थ्यलभ्यत्वादर्थस्य। इयं चार्थानुवादादेव सिध्यति, नान्यथेत्युक्तमेवेत्याह — **तस्मादिति** ॥ २८५½ ॥

---

१. 'प्य' ग. पाठः. २. 'पः अ', ३. 'र्थग्र' क. पाठः. ४. 'साधनामेव', ५. 'नत्वन्य' ग. पाठः.

**विशेषणाद् विना चैतदर्थसामर्थ्यकारितम् ॥**
**कथ्यते भाष्यकारेण फलं हिंसादिवर्जनम् ॥ २८६½ ॥**

---

यद्येषैवात्र वचनव्यक्तिः, कथं तर्हि भाष्यकारः 'उभयमिहे'त्यादिग्रन्थेनार्थपदस्य विशेषणतां दर्शयति । विस्पष्टं हि तत्रोक्तं 'तत्रानर्थो धर्म उक्तो मा भूदित्येवमर्थमर्थग्रहणमि'ति, यदपि चेदम् 'अथवे'त्यादि भाष्यमाक्षिप्तं तस्याप्यद्ययावन्न किञ्चित् समाधानमुपलभामहे, अत आह — **विशेषणादिति** । अनेन भाष्यद्वयमपि समाहितम् । यत् तावदुभयमिहेत्युक्तं तदर्थविशेषणाद् विनैवार्थसामर्थ्यकारितमेव भाष्यकारेण कथितम् । किमिदमर्थसामर्थ्यकारितमिति । एतदुक्तं भवति — यद् धर्मानुवादेन प्रमाणविधानादेवानर्थानां हिंसादीनामधर्मत्वेन वर्जनं भवति, प्रमाणानुवादेन च धर्मविधौ तेषामपि धर्मतापद्येत । तदिहानर्थो धर्म उक्तो मा भूदित्येवमर्थमर्थग्रहणमिति वदता वचनव्यक्तिविशेषपरिग्रहार्थोऽर्थशब्द इति दर्शितम् । आक्षिप्तभाष्यसमाधानेऽप्ययमेव ग्रन्थो व्याख्येयः । नेदमथवेति शब्दसामर्थ्यकारितं भाष्यकारीयमुत्तरम् । तथाहि वाक्यभेदो भवति । इहतु विनैव विशेषणादर्थसामर्थ्यकारितमेवेदमुच्यते । तच्च वचनव्यक्ति विशेषाश्रयणेन दर्शितम् । नचार्थादापद्यमानो वाक्यभेदमापादयति । अशब्दप्रमाणकत्वाद्, वाक्यभेदस्य च शब्ददोषत्वात् । अतोऽथवेत्यादिना धर्मोद्देशेन प्रमाणविधानमत्र भाष्यकृता दर्शितम् । तत्र चार्थशब्दस्यानुवादत्वाद् वाक्यभेदः सुपरिहर एव । यदेतदनर्थानां हिंसादीनां वर्जनम्, इदं धर्मानुवादेन प्रमाणविधानवचनव्यक्तेरेवार्थसामर्थ्यकारितं फलं भाष्यकारेण कथ्यत इत्यर्थ इति ॥ २८६½ ॥

इत्युपाध्यायसुचरितमिश्रकृतौ काशिकाटीकायां
चोदनासूत्रं समाप्तम् ।

---

१. 'भावनर्थो' ग. पाठः. २. 'दकत्वा' क. पाठः.

## तस्य निमित्तपरीष्टिः ॥ ३ ॥

तस्य निमित्तपरीष्टिरिति सूत्रम् । तस्यायमर्थः — तस्य धर्मस्य यन्निमित्तं प्रमाणं चोदनाभिधानं, तत्परीष्टिः कर्तव्येति । पाक्षिकी च परीष्टिपदरूपसिद्धिः । तथाहि 'इषु गतौ' इत्यस्माद् धातोः 'इषेरनिच्छार्थस्य' इति युचि विहिते 'परेर्वा' इति क्तिन्युचोर्विकल्पः स्मर्यते । तेन युज्विधौ पर्येषणेति भवति । क्तिनि तु परीष्टिरिति । अत्र वदन्ति — किमिदमनवसर एव परीक्षाप्रतिज्ञानम् । चोदनालक्षणोऽर्थो धर्म इति हि प्रतिज्ञातम् । अतस्तदुपपादनसमर्थहेतुवचनावसरे किमपरं निमित्तपरीक्षा प्रतिज्ञायते । नहि नैयायिकाः शब्दोऽनित्य इति प्रतिज्ञाय तदेतत् परीक्षामहे इति परीक्षामवतारयन्ति, अपितर्हि सहसैव कृतकत्वादिति हेतुमभिदधति । तदिहापि चोदनासूत्रप्रतिज्ञातावधारणद्वयोपपादनाय सदौत्पत्तिकसूत्राभ्यां हेतुवचनमुचितम् । किमन्तरा परीक्षाप्रतिज्ञानेन । यदि मतं — परार्थप्रतिज्ञास्वयं न्यायः[१] यत् प्रतिज्ञानन्तरमेव हेत्वभिधानं, स्वप्रतिपत्तौ तु न हेतुधर्मा योजयितव्या इति । तन्न । नहि जैमिनेरपि स्वप्रतिपत्तये शास्त्रनिर्माणम्, अन्यतो विदितवेदार्थः शिष्यहितार्थाय सूत्राणि प्रणीतवान् । अतोऽत्रापि परार्थैव प्रतिज्ञा । अथोच्यते — द्वेधा हि परः, व्युत्थिताव्युत्थितभेदात् । तत्र व्युत्थितप्रतिपादने प्रतिज्ञानन्तरमेव हेतुरभिधीयत इति न्याय्यम्[२] । उत्तरे तु परीक्षापुरस्सरमेव हेत्वभिधानेन प्रतिपाद्यन्त इति । तन्न । लक्षणान्तरेष्वपि प्रसङ्गात् । भेदादिलक्षणेष्वपि यथास्वमर्थं प्रतिज्ञाय परीक्षाप्रतिज्ञानमापद्यते । नच तथा दृश्यते । कश्चैष न्यायः यद् विप्रतिपन्नाय प्रतिज्ञानन्तरमेव हेतुरुच्यते न शिष्येभ्य इति । प्रत्युत तानेव प्रति लाघवाय प्रतिज्ञानन्तरमेव हेतुर्वक्तुमुचितः, किमन्तरा व्याक्षेपकरी प्रतिज्ञा निक्षिप्यत इति यत्किञ्चिदेतत् । तस्मादयमत्र समाधिः — इहाद्येन सूत्रेण शास्त्रस्य प्रयोजनं प्रतिज्ञातम् । द्वितीयेन च समस्तवक्ष्यमाणतन्त्रार्थसंक्षेपप्रतिज्ञानम् । अनेन तु सुखग्रहणार्थमाद्याध्यायार्थप्रतिज्ञानम् । 'अथातः शेषलक्षणम्[३]' । (३.१.१) 'अथ विशेषलक्षणम्' (८.१.१) इतिवद् ऋषिणा प्रणीतम् ।

---

१. 'न्यो' . पाठः. २. 'यं' क. पाठः. ३. 'मिति' ग. पाठः

एतदुक्तं भवति — इहाध्याये धर्मप्रमाणं परीक्षिष्यामह इति । यद्यपि चोदनासूत्रेणापि समस्ततन्त्रार्थसंक्षेपे क्रियमाणे प्रमाणलक्षणार्थोऽपि चोदनैव प्रमाणमेवेति प्रतिज्ञातः, तथापि सङ्कीर्णे प्रतिज्ञाते पुनरनेन निष्कृष्याद्याध्यायार्थः प्रतिज्ञायते । अनिष्कृष्यमाणे हि प्रतिज्ञासङ्करेण न ज्ञायते कस्य प्रतिज्ञाभागस्य सदौत्पत्तिकसूत्राभ्यां हेतुरभिधीयत इति । बह्वेव हि तत्र प्रतिज्ञातं धर्मस्वरूपादि । अतस्तत्रापि हेत्वभिधानमिदमिति कश्चिद् भ्राम्येत् । अतस्तद्भ्रमापनुत्तये स्वयमेव निर्धारणं दर्शयति । योऽयं तन्त्रार्थः संक्षिप्यास्माभिः प्रतिज्ञातः, तस्मिन् व्याख्यास्यमाने निमित्तपरीक्षैव तावदिहाध्याये वर्तिष्यते प्रमाणपुरस्सरत्वात् प्रमेयसिद्धेः । तदिह तावच्चतुर्विधा परीक्षा वर्तिष्यते — किं चोदनैव उतान्यदेवेति नियमः, चोदना वान्यद् वेति विकल्पः, उभयं वेति समुच्चयः, न चोभयमित्युभयापलापः । आह च —

> "निमित्तान्वेषणा चेह चतुर्धैव करिष्यते ।
> चोदनैवान्यदेवेति यद्वान्यच्चोदनापि वा ॥
> अथवा चोदनान्यच्च न चान्यन्नापि चोदना ।"

इति । तदेते नियमविकल्पसमुच्चयोभयापलापैश्चत्वारः पक्षा भवन्ति । भवति च प्रमाणविकल्पः । यथारादवस्थितमग्निं कदाचिल्लिङ्गादवैति । कदाचिदाप्तोपदेशात् । नच समुच्चयेऽन्यतरवैयर्थ्यम्, ईश्वरमहर्षयो हि प्रत्यक्षेण धर्ममवयन्ति आगमेनेतर इति प्रमातृभेदादुभयोपपत्तिः । भाष्यकारेण तु प्रदर्शनार्थं 'किं चोदनैव उतान्यदपी'ति दर्शितम् । परीक्षमाणस्य हि चतुर्धैव प्रतिभा जायते । नदिह प्रत्यक्षसूत्रे तावत् प्रत्यक्षादिनिषेधेन प्रतिपक्षनियमविकल्पसमुच्चयाः प्रत्युक्ताः । उभयापलापस्तु चोदनाप्रामाण्यसमर्थनेनौत्पत्तिकसूत्रे निरसिष्यते 'तत् प्रमाणमनपेक्षत्वादि'ति । तदयं निमित्तपरीक्षासंक्षेपो भवति — प्रत्यक्षादिव्युदासेन चोदनैवेत्यवधारणसिद्धिः, अभावाशङ्कानिराकरणेन च प्रमाणमेवेति, शब्दार्थसम्बन्धवाक्यरचनापौरुषेयत्वप्रतिपादनेन च पुरुषानुप्रवेशसम्भाविताप्रामाण्यव्युदासः, तद्भूताधि-

१. 'रे न' ग. पाठः.

**प्रतिज्ञाव्यतिरेकेण भाष्यकारेण यद्यपि ।**
**वक्ष्यमाणा स्वपक्षस्य युक्तिः पूर्वनिदर्शिता ॥ १ ॥**
**प्रतिज्ञामात्रमित्येतज्जैमिनेर्मतमुच्यते ।**
**वृत्तिकारोऽधिकं वापि भूतादिद्वारमब्रवीत् ॥ २ ॥**

इति निमित्तसूत्रं तृतीयम् ।

---

करणेन च वाक्यार्थसंविन्मूलोपपादनम्, उपरिष्टात् तु मन्त्रार्थवादप्रामाण्यप्रकारकथनं, स्मृतिपादेन च मन्वाद्याप्तस्मृताचरितागृह्यमाणकारणकाष्टकाहोलाकादिपदार्थानां मूलवेदसद्भावोपपादनं, नामधेयपादेन चोद्भिदादिनाम्नां गुणपराणामेव नामधेयतयैव क्रियोपयोगकथनमिति कृत्स्न एवाध्याये धर्मस्य निमित्तपरीक्षेति सूक्तं तस्य निमित्तपरीष्टिरिति ॥

अत्र भाष्यम् 'उक्तमिदमस्माभिश्चोदना निमित्तं धर्मज्ञाने इति तत् प्रतिज्ञामात्रेणोक्तमि'त्यादि । तदयुक्तम्, सोपपत्तिकप्रतिज्ञाभिधानात् । तथाहि — 'चोदना हि भूतमि'त्यादिना चोदनाप्रामाण्योपपत्तिरुक्तैव', 'नान्यत् किञ्चनेन्द्रियमि'ति चान्याप्रामाण्योपपत्तिः । अतः कथमुच्यते तत् प्रतिज्ञामात्रेणोक्तमिति, अत आह—**प्रतिज्ञेति सार्धेन** । अस्यार्थः—यद्यपि भाष्यकारेणानागतावेक्षणेन सदौत्पत्तिकसूत्राभ्यां वक्ष्यमाणा स्वपक्षस्य युक्तिः प्रतिज्ञाव्यतिरिक्ता दर्शिता, तथापि न सूत्रकारेण काचिदुपपत्तिरुक्तेति तन्मतानुसारेण प्रतिज्ञामात्राभिधानमिति ॥ १ ॥

समर्थनान्तरमाह — **वृत्तिकार** इति । अस्यार्थः — यत्तु चोदना हीत्यादिना भूताद्यर्थप्रकाशनसामर्थ्यं चोदनायाः कृतं, तत् प्रामाण्यद्वारमात्रमेव कथितम् । पारमार्थिकी युक्तिरुपरिष्टाद् वक्ष्यते सूत्रकारेणैव । अतो वक्ष्यमाणयुक्त्यधिकमेव तत् प्रामाण्यसम्भावनामात्रमभिहितम् । सम्भावितो हि प्रतिज्ञायां पक्षो हेतुना साध्यते, नत्वसम्भावित इति स्वाभिप्रायेणापि प्रतिज्ञामात्राभिधानोपपत्तिरिति ॥ २ ॥

इत्युपाध्यायसुचरितमिश्रकृतौ काशिकाटीकायां
निमित्तसूत्रं समाप्तम् ॥

---

**सत्सम्प्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत्**
**प्रत्यक्षमनिमित्तं विद्यमानोपलम्भनत्वात् ॥ ४ ॥**

**वर्ण्यते सूत्रभेदेन येन प्रत्यक्षलक्षणम् ।**
**तेन सूत्रस्य सम्बन्धो वाच्यः पूर्वप्रतिज्ञया ॥ १ ॥**
**लक्षणस्याभिधानं तु केनांशेनोपयुज्यते ।**
**किमर्थं चानुमानादेर्लक्षणं नात्र कथ्यते ॥ २ ॥**
**न तावदप्रमाणत्वं तेषां नाप्यक्षबुद्धिषु ।**

---

अत्रानन्तरं परीष्टिसूत्रप्रतिज्ञातां निमित्तपरीक्षामवतारयितुं सूत्रम्—"सत्सम्प्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत् प्रत्यक्षमनिमित्तं विद्यमानोपलम्भनत्वाद्" इति । तदिदं वृत्त्यन्तरेऽनिमित्तादवच्छिद्य तत् प्रत्यक्षमित्येवमन्तं लक्षणपरं व्याख्यातम् । तदेतदुपन्यस्य दूषयति—**वर्ण्यत** इति । अस्यार्थः—धर्मस्य निमित्तं परीक्षितव्यमिति हि प्रतिज्ञातम् । अनन्तरं च प्रत्यक्षस्य लक्षणमुच्यमानं न पूर्वप्रतिज्ञया सङ्गच्छत इति ॥ १ ॥

न परमसङ्गतिः, अनुपयोगोऽपीत्याह — **लक्षणस्येति** । लोकप्रसिद्धप्रमाणव्यवहारिणो हि मीमांसकस्य किं तल्लक्षणकरणेनेति भावः । द्व्यंशा हि पूर्वप्रतिज्ञा चोदनैव प्रमाणं प्रमाणमेव चोदनेति तन्त्रार्थसंक्षेपप्रतिज्ञानम् । पुनश्च परीष्टिसूत्रेण निष्कृष्याद्यलक्षणविषयतया । नचान्यतरांशप्रसाधनेनापि लक्षणाभिधानमुपयुज्यत इति । यदि तु नैयायिकादिप्रस्थानमनुविदधता प्रत्यक्षस्य लक्षणं प्रणीयते, तद्वदेव हि 'तत्पूर्वकं त्रिविधमनुमानमि'त्यादिवदनुमानादेरपि लक्षणप्रणयनमापतितमित्याह — **किमर्थमिति** ॥ २ ॥

स्यादेतत् । अप्रमाणमेवानुमानादि प्रत्यक्षादन्यत्वात् तदाभासवदिति तल्लक्षणानभिधानमिति, तदयुक्तमित्याह — **न तावदिति** । अयमभिप्रायः — यदेव किञ्चित् तदप्रामाण्यसिद्धये प्रमाणमुपन्यस्यते, तत् तेनैव बाध्यते । अपिचानुमा(न ? ना)प्रामाण्यसिद्धयेऽनुमानमुपन्यस्यते इति स्ववाग्विरोधः । तदलं नाप्रत्यक्षं प्रमाणमिति पाषण्ड-

शक्यतेऽन्तर्गतिर्वक्तुं नच लक्षणतुल्यता ॥ ३ ॥
नचापि सिद्धिरेषां स्यादर्थात् प्रत्यक्षलक्षणात् ।
न हि तत्पूर्वकं सर्वं प्रमाणमिति निश्चितम् ॥ ४ ॥
प्रत्यक्षलक्षणोक्तिश्च नानुमानादिलक्षणात् ।
विना न सिध्यतीत्येवमर्थाक्षेपो न युज्यते ॥ ५ ॥
तदतत्पूर्वकत्वे धीर्नच तल्लक्षणाद् भवेत् ।

---

जल्पितेनेति । स्यादेतत् — सम्भवैतिह्ययोरिवानुमानागमयोः प्रत्यक्षान्तर्भावादितरेषां लक्षणानभिधानमिति, तन्न । लक्षणवैलक्षण्यादित्याह— नापीतिवक्तुमन्तेन । स्यादेतत्— लक्षणवैलक्षण्यमेवासिद्धं, सर्वेषां सत्येन्द्रियार्थसन्निकर्षे जायमानत्वादिति ।[1]तन्न । नहि चक्षुषा सन्निकृष्टधूमोऽप्यविदितास्मृतव्याप्तिरनुमिमानो वह्निमुपल(भ्य ? भ)ते । अत इन्द्रियलिङ्गशब्दसादृश्या(न)न्यथासिद्धबुद्धिसमुपलम्भकप्रमाणाभावा एव यथाक्रमं प्रत्यक्षादिप्रमाणोदये साधनमिति साधनभेदाल्लक्षणवैलक्षण्ये सति नान्योन्यान्तर्भावोपपत्तिः । तदिदमाह — नचेति ॥ ३ ॥

नच वाच्यं सर्वादौ प्रत्यक्षलक्षणाभिधानादेव तत्पूर्वकत्वेनेतराणि लक्षितानीति पृथग्लक्षणानभिधानमिति. तत्पूर्वकस्मृत्यादीनामप्रामाण्यदर्शनेनाभाससङ्करप्रसक्तेरित्याह — नचापीति ॥ ४ ॥

नच सामान्यातिदेशलक्षणमिव विशेषातिदेशलक्षणं प्रत्यक्षलक्षणोक्तिरनुमानादीनां पारमार्थिकं लक्षणमाक्षिपति, तेन विना तदुपपत्तेः । सामान्यं तु नानाक्षिप्तविशेषमात्मानं लभत इत्याक्षिपत्यर्थविशेषम् । तदेतदाह — प्रत्यक्षेति ॥ ५ ॥

तत्पूर्वकत्वसिद्ध्यभ्युपगमेन चास्माभिः पूर्वं स्मृत्या व्यभिचार उक्तः । तदपि प्रत्यक्षलक्षणोक्तेरनन्यथासिद्ध्यभावान्न सिध्यतीत्याह — तदतदिति । तच्चातच्च तदतदी । ते पूर्वे यस्येति बहुव्रीहिः । तदयमर्थः — तद्वा प्रत्यक्षमन्यद्वा पूर्वमनुमानादीनामिति न प्रत्यक्षलक्षणादवगम्यत इति ।

---

१. 'र्वे' ग. पाठः.

**तदुक्तेर्वानुमानादि किं न स्यात् तदपूर्वकम् ॥ ६ ॥**
**नच लक्षणभेदस्य स्वरूपेयत्तयोरपि ।**
**प्रत्यक्षलक्षणादेषां कथञ्चिदवधारणा ॥ ७ ॥**
**प्रसिद्धत्वादवाच्यत्वं प्रत्यक्षेऽपि प्रसज्यते ।**
**तेनान्यपरिसंख्यार्थं सूत्रं मूढेन वोच्यते ॥ ८ ॥**
**न त्वेकं लक्षयेदेषु बुद्धिपूर्वं कथञ्चन ।**
**सम्भवत्येकवाक्यत्वे वाक्यभेदश्च नेष्यते ॥ ९ ॥**
**नचाप्येतेन सूत्रेण प्रत्यक्षं लक्ष्यते स्फुटम् ।**

---

यदि तु विनैव कारणेन प्रत्यक्षलक्षणोक्तेरितरेषां तत्पूर्वकत्वमाश्रीयते, हन्त अतत्पूर्वकत्वमपि वाङ्मात्रेण शक्यमाश्रयितुमित्याह — तदुक्तेरिति । तदपूर्वं यस्येति विग्रहो दर्शयितव्य इति ॥ ६ ॥

सिध्यतु वा प्रत्यक्षलक्षणोक्तेरनुमानादीनां तत्पूर्वकत्वम् । यस्त्वेषामवान्तरलक्षणभेदः स्वरूपं च संख्या चेयन्ति प्रमाणानीति, तत् सर्वं न सिध्यतीत्याह — नचेति ॥ ७ ॥

स्यान्मतं — प्रसिद्धान्येवानुमानादीनि प्रमाणानि, किममीषां लक्षणकरणेनेति । तत् प्रत्यक्षेऽपि समानमित्याह — **प्रसिद्धत्वादिति** । अतो बहुषु प्रमाणेषु यदेकलक्षणकरणं तदन्यपरिसंख्यार्थमेव स्यात् । तदेतदाह — तेनान्येति सूत्रमन्तेन । अभिमतप्रमाणपरिसंख्यानं चायुक्तमिति भावः । मूढेन वा जैमिनिना प्रत्यक्षमात्रं लक्षितमित्यभ्युपगन्तव्यमापद्येत । एवं चात्मीयमज्ञानमृषेरारोपितं भवेदित्याह — मूढेन वेति नान्तेन । अपि च वाक्यभेदो नामागत्या क्वचिदाश्रीयते 'यथाश्रयश्च स्वकालत्वात्' इत्यत्र वक्ष्यते । नचेह सूत्रे किञ्चिदनुपपन्नं दृश्यते यद् भित्त्वा व्याख्यायत इत्याह — सम्भवतीति ॥ ९ ॥

लक्षणमप्येतदतिव्याप्तेरयुक्तमित्याह — **नचापीति** । अतिव्याप्तिमेव दर्शयति — तदाभासेष्विति । सर्वे हि मृगतृष्णादिविभ्रमाः सूर्य-

**तदाभासेषु तुल्यत्वात् स्वप्नज्ञानैकवर्जनात् ॥ १० ॥**

**तद्धीन्द्रियार्थसम्बन्धव्यापारेण विना भवेत् ।**
**केनचित् सम्प्रयोगे तु भ्रान्त्यादि स्यान्नियोगतः ॥**

**ग्राह्येणान्येन वेत्येतत् कृतं नैव विशेषणम् ।**
**सम्प्रयोगस्य येन स्याद्विशेषो वक्ष्यमाणवत् ॥ १२ ॥**

---

रश्मितप्तोषरादिसंयुक्तनयनजन्याः । संशयाश्च स्थाण्वादिसंयुक्तनयनजन्मान इति प्रत्यक्षतामश्नुवीरन् । सेयमतिव्याप्तिरिति । अल्पं चेदमस्माभिरुक्तं तदाभासेषु तुल्यत्वादिति । एकं तु स्वप्नज्ञानं वर्जयित्वा सकलप्रमाणाप्रमाणसजातीयविजातीयज्ञानमात्रसाधारणमिदं लक्षणमित्याह—स्वप्नेति । लिङ्गशब्दसदृशादिसम्बद्धेष्वेवेन्द्रियेष्वनुमानादिप्रमाणपञ्चकोत्पत्तिरिति भावः ॥ १० ॥

स्वप्नज्ञानवर्जने कारणमाह — तद्धीति । बाह्येन्द्रियसम्प्रयोगाभावाभिप्रायेण चेदमुक्तम् । स्वप्ने त्वात्ममनोदेहैः सङ्गतिरस्त्येवेति तदप्यनेन लक्षणेन व्याप्यत इति दर्शयितव्यमिति । स्वप्नज्ञानातिरिक्तं तु यत्किञ्चिद् भ्रान्त्यादि, तत् केनचित् सम्प्रयोगे सत्येव जायत इति प्रत्यक्षमापद्येतेत्याह — केनाचिदिति । यथा केनाचित् सम्प्रयोगे भ्रान्त्यादिर्भवति, तथा पूर्वमेवास्माभिर्विवृतम् । आदिशब्देन प्रमाणसंशययोरुपादानमिति ॥ ११ ॥

ननु केनचित् सम्प्रयोगमात्रं न प्रत्यक्षकारणमभिप्रेतम् । अपितर्हि ग्राह्येण । नच भ्रान्त्यादयो ग्राह्यसंयुक्तनयनस्य जायन्ते । किंतर्हि । अन्यसंयुक्तेन्द्रियस्यान्यार्थविषयाः । नचेदं ग्राह्यविशेषणमस्माभिरेव केवलमाश्रितम् । अपितु वृत्तिकारेणापि प्रत्यक्षलक्षणपरं सूत्रं व्याचक्षाणेन । तन्मतं च भवद्भिरुपरिष्टाद् वक्ष्यत एवेति नावयोर्विशेषमुपलभामहे, अत आह — ग्राह्येणेति । अयमभिप्रायः— सत्यमभिमतं विशेषणं भवतोऽपि । तत् त्वनुपात्तं न लभ्यते । वृत्तिकारमते तु व्यत्यस्तेन तद्वृत्तेन तदुपादास्यते ।

**असामर्थ्यं च मत्वास्य वृत्तिकारेण लक्षणे ।**
**तत्सम्प्रयोग इत्येवं पाठान्तरमुदाहृतम् ॥ १३ ॥**
**तेनान्येनापि संयोगे चक्षुरादेर्यदुत्थितम् ।**
**विषयान्तरविज्ञानं तत् प्रत्यक्षं प्रसज्यते ॥ १४ ॥**
**सत्सम्प्रयोगनिर्देशो व्यर्थश्चेदेतदेव हि ।**
**प्रतिपाद्यं परस्यापि लक्षणासिद्धिरेव च ॥ १५ ॥**

'यदाभासं हि विज्ञानं तत्संयोगे तदिष्यते ।'

इति वक्ष्यते । अतो भवन्मते ग्राह्यविशेषणानुपादानाद् ग्राह्यसम्प्रयोगजमन्यसम्प्रयोगजं वा ज्ञानं प्रत्यक्षमापद्येत । अतोऽस्ति महान् वक्ष्यमाणेन विशेष इति ॥ १२ ॥

यत एव यथावस्थितमिदं सूत्रं न प्रत्यक्षं लक्षयितुं क्षमते, अतएव वृत्तिकारेणापि प्रासङ्गिकलक्षणकरणे व्यत्ययेन पठितमित्याह — **असामर्थ्यं चेति** ॥ १३ ॥

प्रकृतमतिव्यापकत्वं लक्षणस्योपसहरति — **तेनेति** ॥ १४ ॥

पर इदानीं सत्सम्प्रयोगविशेषणोपादानसामर्थ्यादेव ग्राह्यविशेषणाक्षेपं मन्वानः प्रत्यवतिष्ठते, तदाह — **सत्सम्प्रयोगनिर्देश** इति । एवं हि मन्यते —

'सम्भवव्यभिचारौ हि विशेषणकरावुभौ'

तद् यदि सम्प्रयोगमात्रजं ज्ञानं सूत्रकारस्याभिमतमभविष्यत्, तदा विशेषणोपादानमनर्थकमापत्स्य(ते ? त ।) नह्यसम्प्रयोगजं प्रमाणमप्रमाणं वा ज्ञानमस्ति । अतो विशेषणोपादानसामर्थ्यादेव ग्राह्यविशेषणमवगम्यते । अतो न किञ्चिद् दोक्ष्यतीति । एतदेव दूषयति — एतदेव हीति । एवं हि मन्यते — नैवंविधेनोत्तरेण व्युत्थितो बोधयितुं शक्यते । तस्य ह्येतदेव प्रतिपाद्यं यत् त्वन्मते विशेषणानर्थक्यं, लक्षणस्य चातिव्याप्त्यादिभिरसिद्धिरिति ॥ १५ ॥

उपेत्य वा ब्रूम इत्याह — **स्वप्नादीनामिति** । उक्तमेतद् बाह्ये-

१. 'दपि दु', २. 'ते अवयवानामनर्थं' ग. पाठः.

स्वप्नादीनां निवृत्तिर्वा फलं तस्या भविष्यति ।
तस्माद् विध्यनुवादित्वं नानुक्ते लक्षणे भवेत् ॥
तेन नैषा वचोव्यक्तिर्यत् सतीन्द्रियसङ्गमे ।
विज्ञानं जायते तस्य प्रत्यक्षत्वं प्रतीयताम् ॥ १७ ॥
प्रत्यक्षं यज्जने सिद्धं तस्यैवंधर्मकत्वतः ।
विद्यमानोपलम्भत्वं तेन धर्मेऽनिमित्तता ॥ १८ ॥
एवंलक्षणकत्वं च न स्वरूपविवक्षया ।
एवंलिङ्गकमित्येतद् भाष्यकारेण वर्ण्यते ॥ १९ ॥

---

न्द्रियव्यापारादिनिरपेक्षं स्वप्नज्ञानमिति तन्मात्रं वर्जयित्वा सर्वमेव प्रत्यक्षं प्राप्नुयादिति । आदिशब्देन चादृष्टमात्रोद्बोधितसंस्कारकारणिका स्मृतिरभिप्रेतेति । तस्मादनुपात्तमेवात्र समग्रं प्रत्यक्षलक्षणमिति न तद् विधातुमनुवदितुं वा शक्यमित्याह — तस्मादिति । यत् प्रत्यक्षं तदेवंलक्षणकमिति लक्षणविधिः । यदेवंलक्षणकं तत् प्रत्यक्षमिति लक्षणानुवादः । नचानुक्तोऽर्थो विध्यनुवादभाग् भवति, उभयोरपि साधारणत्वादभिधानस्येति ॥ १६ ॥

एवं लक्षणपरतां प्रत्याख्यायाभिमतवचनव्यक्तिनिराकरणपुरस्सरमभिमतां सूत्रस्य वचोभङ्गिमाह — तेनेति द्वाभ्याम् । एतदुक्तं भवति— यदेवंलक्षणकं तत् प्रत्यक्षमिति नैष सूत्रार्थः । किं तर्हि । यल्लोकप्रसिद्धं प्रत्यक्षं तस्य सत्सम्प्रयोगजत्वं नाम धर्मोऽस्ति । तद्धर्मकत्वाच्च विद्यमानोपलम्भनत्वं भवति । ततश्च भविष्यत्यविद्यमाने धर्मेऽनिमित्ततेति ॥ १८ ॥

ननु शाबरेऽपि 'प्रत्यक्षमनिमित्तम्, एवं लक्षणकं हि तदि'त्युच्यते । तदलक्षणपरत्वे सूत्रस्यानुपपन्नमत आह—एवमिति । अयमभिप्रायः — शाबरा अपि ये लोकप्रसिद्धलक्षणानुवादेनानिमित्तत्वं विदधति तानपि न मृष्यामहे, सम्पूर्णलक्षणाभिधाने सूत्रस्याशक्तेः । अतो लक्षणोक्तिरिह लिङ्गविवक्षयैव । यथा धूमो लक्षणमग्नेः, एवं विद्यमानोपलम्भनत्वमनिमित्तत्वस्य । लक्ष्यते हि तत्तेनेति भाष्यकारस्याभिमतमिति ॥ १९ ॥

---

१. 'व स', २. 'र्णम', ३. 'णं त' ग. पाठः.

**यतोऽस्ति तत्र धर्मोऽयं विद्यमानोपलम्भनम् ।**
**तस्मात् तेन प्रसिद्धेन गम्यतामनिमित्तता ॥ २० ॥**
**प्रत्यक्षत्वमदोहेतुः शेषं हेतुप्रसिद्धये ।**

यल्लिङ्गं यस्य च, तदुभयमपि व्यनक्ति—यत इति । विद्यमानोपलम्भनत्वं नाम धर्मो लिङ्गम्। अनिमित्तता तु लिङ्गि। यदि तु तल्लिङ्गमसिद्धमिति कश्चिद् ब्रूयात्, तं प्रति सत्सम्प्रयोगजत्वहेत्वन्तरप्रसिद्धेन तेनानिमित्तताधिगन्तव्येति प्रसिद्धेनेत्युक्तमिति ॥ २० ॥

कुतः पुनर्हेत्वन्तरस्यैव प्रसिद्धिः, अत आह— प्रत्यक्षत्वमिति। एतदुक्तं भवति —त्रय एते प्रयोगाः — प्रत्यक्षमनिमित्तं विद्यमानोपलम्भनत्वात्। विद्यमानोपलम्भनत्वं च सत्सम्प्रयोगजत्वात्। सत्सम्प्रयोगजत्वं च प्रत्यक्षत्वात्। अत्र च विद्यमानोपलम्भनत्वस्य व्यक्तमेव पञ्चम्या हेतुत्वमुपात्तम्[1]। इतरयोस्तूपादानेनैव हेतुत्वं सूत्रितमिति द्रष्टव्यमिति। अयं च 'प्रत्यक्षं यज्जने सिद्धमि'त्यस्यैव प्रपञ्चो वेदितव्यः। तथाहि — तत्रैव विद्यमानोपलम्भनत्वादनिमित्तत्वम्, एवंधर्मकत्वोपात्तसत्सम्प्रयोगजत्वाद् विद्यमानोपलम्भनत्वं, प्रत्यक्षं यज्जन इति च प्रत्यक्षत्वादेवंधर्मकत्वमुक्तम्। इदं हि तत्राकूतं प्रत्यक्षं सदेवंधर्मकं भवतीति । इदं त्विह वक्तव्यम् । किमनया प्रयोगप्रपञ्चरचनया। विमतिपदास्पदं हि प्रत्यक्षमनिमित्तं प्रत्यक्षत्वादित्येतावतापीष्टं सिध्यत्येव । तत् तु शुष्कतर्कहेतौरुद्भावकत्वान्न तथाश्रितमिति समाधातव्यम् । एवंहि श्रुतिसाधारण्यमात्रेणानिमित्तत्वमुक्तमिति मन्वीरन्। नच श्रुतिसामान्यमात्रेणैव सर्वसाधर्म्यं भवति । नहि भवति गोपदास्पदं वागिति विषाणवती । विद्यमानोपलम्भनत्वादनिमित्तत्वमुच्यमानं चित्तं भावयति । कथं च विद्यमानोपलम्भनमनागते निमित्तं भवति । कथं च सत्सम्प्रयोगजमविद्यमानोपलम्भनम्। वर्तमानसम्प्रयोगजं हि सत्सम्प्रयोगजमभिधीयते, सच्छब्दस्य वर्तमानवचनत्वात् । नचानागतेन धर्मेण वर्तमानः सम्प्रयोगः सम्भवति । सम्बन्धिद्वयाधारो हि सम्बन्धः । नासावन्यतरस्मिन्नवर्तमाने वर्तत इति युक्तमभिधातुम् । एवं प्रत्यक्षशब्दोऽपि प्रत्युत्पन्नेन्द्रियसम्प्रयोगाधीनवृत्तिर्नावर्तमानसम्प्रयोगजे वर्तितुमर्हतीति युक्तं क्रमाभिधानम् । प्रपञ्चरुचयश्च मीमांसका इति युक्तं प्रपञ्चाभिधानम् ।

१. 'हि' ग. पाठः.

इदं तु वाच्यम्— अनैकान्तिकं सत्सम्प्रयोगजत्वं विद्यमानोपलम्भनत्वे। सत्येव हि नदीपूरनयनसन्निकर्षे अतीतादिवृष्टिविज्ञानं भवति। वर्तमान एव च मेघचक्षुस्सन्निकर्षो भविष्यद्वृष्टिविषयं विज्ञानं जनयति। अतो नायमेकान्तः यत् सत्सम्प्रयोगजं ज्ञानं विद्यमानोपलम्भनमिति। अपिच अपरोक्षनिर्भासमपि ज्ञानं वर्तमानसम्प्रयोगजमविद्यमानविषयं दृष्टम्। भवति हि वर्तमाने शुक्तिनयनसन्निकर्षेऽतीतानागतव्यवहितरजतावग्रहः। उक्तं च भवद्भिरपि भवदासदूषणावसरे सकलप्रमाणाप्रमाणज्ञानसाधारण्यं सत्सम्प्रयोगजत्वस्य। स्यान्मतम्—न तावदतीतानागतगोचरमनुमानं सत्सम्प्रयोगेण जन्यते, अविदितास्मृतव्याप्तेरभावात्। अस्ति हि तस्यापि नदीपूरजलदचक्षुस्सन्निकर्षः। नचातीतानागतवृष्टिपरिचयो भवति। शुक्तिरजतवेदनेऽपि पुरोवर्तिद्रव्यग्रहण एव सन्निकर्षः कारणम्। रजतानुभवस्तु दोषसाहाय्यात् प्राचीनज्ञानजन्मनः संस्काराद् यत्कारणं सन्निकृष्यते खल्वस्य नानार्थैरिन्द्रियम्। नचासत्सु दोषेष्वविद्यमानप्रकाशनमुपकल्पयति। अतो विषयादिदोषान्वयव्यतिरेकानुविधायिनो विभ्रमास्तमेव स्वात्मनि कारणीकारयन्तीति। तन्न। कारणकारणस्यापि कारणत्वानपायात्। शुक्तिनयनसन्निकर्ष एव हि संस्कारोद्बोधे कारणं भ्रान्तौ। अनुमाने च लिङ्गसन्निकर्षो व्याप्तिस्मरणे। अतः शक्यं तदुभयमपि परम्परया सत्सम्प्रयोगजमिति वक्तुम्। अविशेषितं चेह सत्सम्प्रयोगजत्वमात्रं हेतुरुक्तः। अतो दुष्परिहरमनैकान्तिकत्वं तादृशस्य।

अत्रोच्यते — उक्तमिदं लोकप्रसिद्धस्य प्रत्यक्षस्यायं धर्मः यत् सत्सम्प्रयोगजत्वं नाम विद्यमानोपलम्भनत्वसिद्धौ हेतुरुक्तः। लोके च ग्राह्येणैव सति सम्प्रयोगे प्रत्यक्षमिति सिद्धम्। नह्यन्यसम्प्रयुक्तचक्षुषोऽन्यत् प्रत्यक्षमिति दृष्टम्। तदिह ग्राह्येणैव वर्तमानसम्प्रयोगजत्वं विद्यमानोपलम्भनत्वे हेतुरुक्तः। नच तदनुमानादिषु सम्भवति। नहि तत्र ग्राह्येण वृष्ट्यादिनेन्द्रियसन्निकर्षो वर्तते। लक्षणपक्षे तु यावच्छ्रुतमात्रपरतन्त्रत्वादारब्धैतैव भ्रान्त्यादि प्रत्यक्षम्। तत्रापितु लोकपारतन्त्र्ये वृथा लक्षणकरणमिति। ननु प्रत्यक्षमनिमित्तं विद्यमानोपलम्भनत्वादित्यत्र को दृष्टान्तः।

१. 'तवृ' ग. पाठः. २. 'क्तिस'. ३. 'न्यत् सम्प्रयुक्तमन्यत् प्र' क. पाठः. ४. 'मभिति' ग. पाठः.

**अस्मदादौ प्रसिद्धत्वाद् योग्यर्थमभिधीयते ॥ २१ ॥**

**प्रकृतेन च सम्बन्धः शेषाप्रामाण्यदर्शनात् ।**

**तदप्रामाण्यसिद्धिश्च सम्बन्धादेरनीक्षणात् ॥ २२ ॥**

**शक्यमन्याप्रमाणत्वमिति सूत्रैर्न वध्यते ।**

**नच पर्यनुयोगोऽत्र लक्षणानुप्रयोगतः ॥ २३ ॥**

---

यदि प्रत्यक्षमेव, तन्न । पक्षसपक्षयोरभेदापातात् । तच्चायुक्तं सिद्धसाध्ययोर्भेदात् । साध्यो हि पक्षः सिद्धश्च सपक्षः । नचैकमेव सिद्धसाध्यस्वभावमित्युपपद्यते । सिद्धं चास्मदादिप्रत्यक्षस्य धर्मेऽनिमित्तत्वं, किं तत्साधनेन । अत आह — अस्मदादाविति । अयमभिप्रायः— प्रत्यक्षविशेषं पक्षीकृत्य प्रत्यक्षान्तरं सपक्षीक्रियते इति न पक्षसपक्षयोरेकता । नापि सिद्धसाध्यतेति ॥ २१ ॥

एवं स्वमतेन सूत्रं व्याख्यायेदानीं परपक्षोक्तान् दोषानिह परिहरति — **प्रकृतेने**ति । परपक्षे हि प्रकृतासङ्गतिरुक्ता । सेह नास्ति । चोदनैव प्रमाणमिति हि प्रतिज्ञातम् । तच्च प्रत्यक्षानिमित्तत्वप्रतिपादनेनैव शेषाणामप्यनुमानादीनामप्रामाण्यदर्शनेनावधारितरूपं सिध्यतीति । कथं पुनः प्रत्यक्षानिमित्तत्वे सत्यनुमानादीनामप्यनिमित्तत्वम् । नहि प्रत्यक्षमनागतातिवृत्तयोरसमर्थमित्यनुमानेनापि तथा भवितव्यम् । मेघोन्नतिनदीपूराभ्यामनागतातिवृत्ताया वृष्टेरननुमानप्रसङ्गादत आह — **तदि**ति । अयमभिप्रायः— व्याप्तिसंवेदनाधीनजन्मत्वादनुमानस्य नित्यपरोक्षेण च धर्मेण व्याप्तिसंवेदनासम्भवादनुमानोदयाभावः । नच वृष्ट्यादौ प्रसङ्गः । तेषां दृष्टपूर्वकत्वेन व्याप्तिसंवेदनोपपत्तेः । आदिशब्देन धर्मसादृश्यमुपादत्ते । एतच्चोपरिष्टात् प्रपञ्चयिष्यत एवेति ॥ २२ ॥

नन्वेवमपि प्रत्यक्षवदितरेषामप्यनिमित्तत्वं किं सूत्रैर्न निबद्धमत आह — **शक्यमि**ति । एकलक्षणकरणे हीतरलक्षणासिद्धेः सर्वेषां लक्षणकरणमापादितम् । अनिमित्तत्वे तु प्रत्यक्षस्योक्ते तत्पूर्वकत्वादितरेषामप्य-

---

१. 'तत्र सा' ग. पाठः २. 'न शे' क. पाठः. ३. 'पि भ' ग. पाठः.

नच न्यूनातिरेकादिप्रसङ्गो लक्षणं प्रति ।
सर्वथा लोकसिद्धत्वाद् धर्मोऽयं तावदिष्यते ॥ २४ ॥
ततश्च मृगतृष्णादि न प्रत्यक्षं प्रसज्यते ।
अनिमित्तप्रसङ्गस्तु तस्यापि विनिवार्यते ॥ २५ ॥
अतीतानागतेऽप्यर्थे सूक्ष्मे व्यवहितेऽपि वा ।

निमित्तत्वं शक्यावगममिति न पृथङ् निबध्यते । यथा वक्ष्यति — 'प्रत्यक्षद्वारत्वादनुमानादीनामप्यकारणत्वमि'ति । लक्षणानुपयोगेऽपि यः पर्यनुयोगो दत्तः, सोऽप्यत्र लक्षणानभ्युपगमादेव नास्तीत्याह — नचेति ॥ २३ ॥

तथा ग्राह्यविशेषणानुपादानादनुमानाद्यनुपसङ्ग्रहाच्च न्यूनं लक्षणं, सर्वसंविदां च सत्सम्प्रयोगेणाव्यभिचारात् सत्सम्प्रयोगनिर्देशोऽतिरिच्यत इत्याद्यपि यदुक्तं तदप्यत्र नाशङ्क्यत इत्याह — नचेति । लक्षणकरणस्य हि न्यूनातिरेकादयो दोषाः नालक्षणे प्रसजन्तीति । एतद्ध्यत्र सर्वथा प्रतिपाद्यं यल्लोकप्रसिद्धं प्रत्यक्षं तदेवंधर्मकमिति । सम्पूर्णं तु प्रत्यक्षस्य स्वरूपमनेनाभिधीयतां मा वा । न नस्तत्र तात्पर्यम् । अतश्चान्यपरत्वात् सूत्रस्य लक्षणपक्षोक्ता मृगतृष्णादिसंविदामपि प्रत्यक्षता नापद्यते इत्याह — सर्वथेति ॥ २५ ॥

ननु यदि लोकप्रसिद्धधर्मोपदर्शनेनानिमित्तत्वमात्रमत्र साध्यम्, एवं तर्हि प्रत्यक्षमनिमित्तं विद्यमानोपलम्भनत्वादित्येतावदेव वक्तव्यम् । किं सत्सम्प्रयोगजत्वाद्युपन्यासेन, अत आह — अतीतेति सार्धद्वयेन । अयमर्थः — सत्यमेतावताप्यनिमित्तता प्रतिपादितैव । किन्तु विद्यमानोपलम्भनत्वमेवासिद्धं योगिनां मुक्तात्मनां चातीतानागतादिविषयज्ञानोत्पत्तेरिति ये मन्यन्ते, तान् प्रति हेतुसिद्ध्यर्थं सत्सम्प्रयोगजत्वमपि हेत्वन्तरमुपन्यस्तं, न पुनः प्रत्यक्षस्वरूपविवक्षया । तथा विद्यमानोपलम्भनत्वादिति हेतुमभिदधता अविद्यमानो भविष्यद्धर्मो भविष्यत्त्वादेव न प्रत्यक्षेणानुभूयत इति यो हेतुरन्तर्णीतः, तस्यापि योगिमुक्तात्मनां ग्राह्यैरर्थान्तरैर्भविष्यद्भिर्व्यभिचारिता मा भूदित्येतदर्थमपि सत्सम्प्रयोगजत्वस्योपादानम् । एतद्धय-

१. 'मका', २. 'गेनापि' क. पाठः. ३. 'ता भवति । किं'. ४. 'नो धर्मो' ग. पाठः.

**प्रत्यक्षं योगिनामिष्टं कैश्चिन्मुक्तात्मनामपि ॥ २६ ॥**

---

नेनोच्यते — सर्वमेव प्रत्यक्षं सत्येवेन्द्रियसम्प्रयोगे जायते । अतो न किञ्चिद् भविष्यद्विषयमिति नास्ति व्यभिचारः । असिद्धताव्यभिचारिते समाहृत्य मा भूतामिति द्विवचनाभिधानमिति ।

इदं त्विह वक्तव्यं — निराकृतमेव 'अशक्यं हि तत् पुरुषेण ज्ञातुमृते वचनादि'त्यत्र योगिप्रत्यक्षस्यानागतादिविषयत्वम् । अत्र किं पुनरुपन्यासेनेति । तत्रैके वदन्ति — तत्रहि वचनादृते पुरुषाणामतीन्द्रियानुभवशक्तिर्निराकृता । अत्र पुनर्वचनादेव प्रतीत्य चिरं भावयतो धर्माधर्मौ प्रत्यक्षौ भविष्यत इति प्रत्यवस्थानं निराक्रियत इति । तदयुक्तम् । सर्वं हि तदनागतावेक्षणेन भाष्यवार्त्तिककाराभ्यामुक्तम्, इहैव सूत्रकारेण स्वयमुक्तत्वात् । नचैष परेषामपि सिद्धान्तः यदकस्मादेव बुद्धस्य वान्यस्य वा तद्भूमिमधिरूढस्याजातातिवृत्तप्रत्युत्पन्नसूक्ष्मव्यवहितविप्रकृष्टादयः साक्षाद् भावा भासन्त इति । अपितर्हि आगमादेव सामान्यतो विदितान् धर्मांश्चिरं भावयतः स्फुटमविकल्पकाश्च प्रकाशन्त इति । भावनाबलजमेव ज्ञानं दिव्यं चक्षुरित्याचक्षते । यत्तु भौतिकेनैव चक्षुषा सर्वमपरोक्षीक्रियत इति, तदतिस्थवीयः । प्रौढिप्रदर्शनपरतया तैरुक्तम् । तादृशमपि चात्रैव निराकार्यम्, इहैव सूत्रकारेण निराकृतत्वात् । तस्मादत्रत्यमेवानागतावेक्षणेन तत्रोक्तमित्युक्तमेव । ननुच पूर्वपूर्वहेत्वसिद्ध्याशङ्कयोत्तरोत्तरहेतुप्रदर्शनमिति 'यतोऽस्ति तत्र धर्मोऽयमि'त्यादिना 'प्रत्यक्षत्वमदोहेतुरि'त्येवमन्तेनोक्तमिति गतार्थमिदम् ।

अत्रोच्यते — प्रत्यवस्थानबीजमिदानीं परेषामभिधीयते । अविद्यमानोपलम्भनमेव हि योगजधर्मबलेन योगिनां प्रत्यक्षमितिहि ते प्रतिपन्नाः । अतएव 'अतीतानागतेऽप्यर्थे' इत्यादिना हेत्वासिद्धिबीजमुपदर्शितम् । पूर्वं त्वसिद्ध्याशङ्कया हेतुक्रमाश्रयणमित्येतावदेवोक्तम् । कथमसिद्धिरित्यत्र न किञ्चिदुक्तम् । 'योग्यर्थमभिधीयते' इत्यत्रापि योगिनामतिशयविशेषोऽन्तर्णीतः । स एव 'अतीतानागते'त्यादिना प्रकटीकृतः । कः

---

१. 'स्यान्य' ग. पाठः.

**विद्यमानोपलम्भत्वमसिद्धं तत्र तान् प्रति ।**
**भविष्यत्त्वस्य वा हेतोस्तद्ग्राह्यैर्व्यभिचारिता ॥ २७॥**
**मा भूतामिति तेनाह लोकसिद्धं सदित्ययम् ।**

---

पुनरतीतानागतादिविषयत्वे प्रत्यक्षस्य तेषामभिप्रायः । श्रूयताम् । एवं हि मन्यन्ते — यद् विद्यमानोपलम्भनमस्मदादिप्रत्यक्षं तेन मा नाम धर्मोऽनुभूयताम् । भावनाबलभुवा तु सकलातीतानागतादिविषयेण किं नानुभूयते । तदसिद्धेरनुपपन्नमिति चेत् । न । अनुमानादुपपत्तेः । तत्रैतत् स्याद् — न तस्य भावनाबलभुवः प्रत्यक्षस्यास्मदादावदृष्टचरस्य सद्भावे किञ्चन प्रमाणमस्तीति । तच्च न । एवमनुमानादुपपत्तेः । विजातीयान्तरायपरिहारेण भाव्यमानेषु भावेषु प्रज्ञाप्रसादादतिशयो दृश्यते । तथाहि—किमन्यत् । इह खलु नितान्तदुरधिगममात्मानमेव निर्धूतनिखिलकायकरणोपरागोपप्लवं विगलितसकलमितिमातृमेयमानविभागोद्ग्राहमयमहमिति विशदतरमवलोकयन्तो कृतिनः केचिदिति वेदान्तवादिनो वदन्ति । नहि तदस्मदादिवेद्यं नेति योगिनोऽपि न बुध्यन्ते । तद्वद्वा वयमपि विजानीमः । भवति चात्र कारणप्रकर्षो हि कार्यप्रकर्षेण व्याप्तो दृष्टः चित्रकारादिशिल्पप्रकर्ष इव चित्रादिकर्मप्रकर्षेण । प्रकृष्यते च कस्यचिद् योगिनो भावनाबलभुवः प्रत्यक्षस्य कारणमिति स्वभावहेतुः । अथापि स्यात् कुतः कारणप्रकर्षोऽवगम्यत इति । स्वभावहेतोरेव । यो यदभिनिविशमानोऽभ्यस्यति स तस्य प्रकर्षकाष्ठामासादयति चित्रकारस्येव शिल्पम् । अभ्यस्यति च कश्चिदवहितो ध्यानमिति साध्यान्वितहेतुप्रदर्शनम् । अतो ध्यानप्रकर्षात् तद्बलभुवो ज्ञानस्य प्रकर्षः । कश्च ज्ञानस्यापरः प्रकर्षः स्फुटाविकल्पकप्रकाशात् । यथाहुः —

> "तस्माद् भूतमभूतं वा यद्यदेवातिभाव्यते ।
> भावनाबलनिष्पत्तौ तत्स्फुटाकल्पधीः फलम् ॥"

इति । ननु जीवनाय शिल्पिनां शिल्पाभ्यासो युक्तः । नतु ध्यानाभ्यासस्य किञ्चिन्निबन्धनमस्ति । कथं नास्ति । करुणा हि ध्यानाभ्यासे निबन्धनम् । कश्चित् खलु भवान्तरीयात् संस्कारात् कारुणिको भवति ।

---

१. 'तादि' ग. पाठः. २. 'प्रतिज्ञा' क. पाठः. ३. 'यमि' ग. पाठः.

**न लोकव्यतिरिक्तं हि प्रत्यक्षं योगिनामपि ॥ २८ ॥**
**प्रत्यक्षत्वेन तस्यापि विद्यमानोपलम्भनम् ।**

स करुणामेवाभिनिविशते । अभ्यासातिशयाच्च सा तस्य प्रकर्षकाष्ठामासादयति । स काष्ठाप्राप्तप्रकर्षकरुणो दुःखोत्तरान् संसारिणो दृष्ट्वा दूरं दूयमानमानसश्चिन्तयति कथमेतानुद्धरेयमिति । ततः स पुरुषार्थसाधनमन्विच्छन् ध्यानाय प्रयस्यति । ततश्चिराभ्यासान्निष्पन्नध्यानो धर्माधर्माविप्यपरोक्षमीक्षते । अन्यन्मतं — संसारिणो हीन्द्रियाधीनज्ञानजन्मानः । प्राग्भवीयकर्मार्जितदेहेन्द्रिया हि ते । अतो युक्तं यद्देहेन्द्रियानुविधायिसंवेदना भवन्तीति । यदा पुनरमी योगाभ्यासादेव प्रक्षीणनिखिलज्ञानकर्माशया भवन्ति, तदा देहेन्द्रियैर्विमुच्यन्ते । तदा नियामकाभावात् स्वयं च प्रकाशस्वभावत्वात् सर्वमतीतादि बुध्यन्ते । अतस्तान् प्रति विद्यमानोपलम्भनत्वमसिद्धमिति तत्प्रतिबोधनाय लोकप्रसिद्धं सदित्याद्ययं जैमिनिराहेति । तानिदानीं प्रतिबोधयति — न लोकव्यतिरिक्तमिति । अयमर्थः — तेषामपि प्रत्यक्षं न लोकोत्तरं भवितुमर्हतीति ॥ २८ ॥

अत्र कारणमाह — प्रत्यक्षत्वेनेति । अयमभिप्रायः — तद् योगिनां ज्ञानं प्रत्यक्षं नवा । यद्यप्रत्यक्षं न तर्हि प्रमाणं, प्रत्यक्षानुमानव्यतिरिक्तप्रमाणानभ्युपगमादनुमानलक्षणाभावाच्च । नचाप्रमाणमर्थव्यवस्थापनायालम् । अतः किं तदभ्युपगमेन । अथ प्रत्यक्षम्, अन्वर्थत्वात् प्रत्यक्षशब्दस्य अवश्यमेव तेनेन्द्रियजन्मना भवितव्यम् । नह्यनिन्द्रियजं प्रत्यक्षमिति लौकिकानामुपचारो दृश्यते ।

ननु नेन्द्रियजत्वं प्रत्यक्षलक्षणम्, अपितर्हि, कल्पनापोढमभ्रान्तं प्रत्यक्षमिति । अभिलापसंसर्गयोग्यप्रतिभासाप्रतीतिः कल्पना । तया रहितं तिमिराशुभ्रमणनौयानसंक्षोभणाद्यनाहितविभ्रममभ्रान्तं ज्ञानं प्रत्यक्षमिति । इदं च लक्षणं योगिनामपि ज्ञानं व्याप्नोत्येव । तद्धि निर्विकल्पकमभ्रान्तम् । अत एव प्रत्यक्षं चतुर्धा विभजन्ते 'तच्चतुर्विधमिन्द्रियजमिन्द्रियजसमनन्तरप्रत्ययोद्भवं मानसं सर्वचित्तचैत्तानामात्मसंवेदनं योगिज्ञानं चे'ति । यदि हीन्द्रियजत्वमेव प्रत्यक्षलक्षणं स्यात्, त्रितयमप्रत्यक्षं स्यात् । मानसं च मीमांसकैरपि प्रत्यक्षमिष्यत एव । अतः सर्वानुगतापरोक्षावभासित्वमात्रवचन एव प्रत्यक्ष-

१. 'ध', २. 'दपि' ग. पाठः.

शब्दो निश्चीयते । यथा 'गमेर्डोरि'ति डोप्रत्ययान्तो व्युत्पादितो गोशब्दोऽगच्छत्यपि प्रयोगदर्शनात् सर्वानुगतगोजातिमात्रवचनो निश्चीयते, एवं नष्टावयवार्थविभागः प्रत्यक्षशब्दोऽपरोक्षावभासिनि समुदायशक्त्यैवं वर्तत इति । तन्न । अवयवान्वयाव्यभिचारात् । अवयवान्वयव्यभिचारे हि समुदायशक्तिरात्मानं लभते । नच प्रत्यक्षशब्दवाच्यमिन्द्रियान्वयं व्यभिचरति । मानसे व्यभिचार इति चेत् । न । मनसोऽपीन्द्रियत्वात् । अथ नास्ति मनो नामेन्द्रियम्, इन्द्रियजमेव तु ज्ञानं धारावाहिकेषु सन्तन्यमानेषूत्तरक्षणग्राहिणो ज्ञानस्य कारणं मन इति गीयते । उत्तरं च मानसमिति । तदयुक्तम् । अतीते हीन्द्रियजेज्ञान उत्तरक्षणोऽनुभूयते । स कथमसम्बद्धेन तेनावभासयितुं शक्यते । अक्षवदिति चेद्, न । प्राप्यकारित्वस्याक्षाणामिहैव वक्ष्यमाणत्वात् । अतो द्वितीयक्षणग्रहणमपीन्द्रियजमेवेति नास्ति व्यभिचारः । तस्यापीन्द्रियान्वयव्यतिरेकानुविधानात् । नहि निमीलितनयनस्य रूपबुद्धिरनुवर्तमाना दृश्यते । अतोऽवयवान्वयाव्यभिचारान्न समुदायशक्तेरात्मलाभः । अतोऽनिन्द्रियजं सद् योगिनां मुक्तात्मनां वा ज्ञानं न प्रत्यक्षम् । प्रत्यक्षं सन्नियतं विद्यमानोपलम्भनम्, अप्रत्यक्षं तु प्रमाणान्तरानभ्युपगमादेव निरस्तम् ।

यच्च भावनाबलं योगिज्ञानजन्मनि कारणमुक्तम् । तन्न, अवगतविषयत्वाद् भावनायाः । नचाकस्मादेवावगतेरुत्पत्तिः सम्भवति । सर्वोत्पत्तिमतां कारणवत्त्वात् । अथ प्रमाणान्तरावगतं भाव्यते किं भावनया, तत एव तत्सिद्धेः । किञ्च तत् प्रमाणं न तावदनुमानं, धर्माधर्मयोः पूर्वमग्रहणेन तद्व्याप्तलिङ्गदर्शनाभावात् । जगद्वैचित्र्यार्थापत्तेरपि किमपि कारणमस्तीत्येतावदुन्नीयते । नतु कश्चिद् विशेषः । नचानिर्दिष्टविशेषविषया भावना भवति । योगशास्त्रेष्वपि विशेषा एव ध्येयतयोपदिश्यन्ते —

"ध्येय आत्मा प्रभुर्योऽसौ हृदये दीपवत् स्थितः"

इत्यादिभिः । तर्ह्यागमादवगतं भावयिष्यते । यदि प्रमाणात्, तत एवावगतेः किं भावनया । हानोपादानार्थं हि वस्तु जिज्ञास्यते । ते च तत एव सिद्धे इति व्यर्था भावना । कारुणिकोऽपि धर्मागमानेव प्रयत्नतः शिष्येभ्यो व्याचक्षीत । न भावनोपरिखेदमनुभवेत् । अथ विप्रलम्भभूयिष्ठत्वादागमानां प्रमाणमागमो न वेति विचिकित्समानो भावनया जिज्ञासते । तन्न ।

---

१. 'व प्रव' ग. पाठः. २. 'जे', ३. 'प्राहिण' क. पाठः. ४. 'नाखे', ग. पाठः. ५. 'स्व' क. पाठः.

**सत्सम्प्रयोगजत्वं वाप्यस्मत्प्रत्यक्षवद् भवेत् ॥ २९ ॥**
**तेषामवर्तमानेऽर्थे या नामोत्पद्यते मतिः ।**
**प्रत्यक्षं सा ततस्त्वेव नाभिलाषस्मृतादिवत् ॥ ३० ॥**

ततोऽपि तदसिद्धेः । भावनावलपरिनिष्पन्नमपि ज्ञानमनाश्वासनीयार्थमेव, अभूतस्यापि भाव्यमानस्यापरोक्षवत् प्रकाशात् । तथा तैरेवोक्तं—'तस्माद् भूतमभूतं वे'ति ।

अपिच भावनाबलजमप्रमाणं गृहीतग्रहणात् । यावदेव हि गृहीतं तावदेव हि भावनया विपयीक्रियते । मात्रयापि त्वधिकं भावनया न गोचरयति । योगाभ्यासाहितसंस्कारपाटवनिमित्ता हि स्मृतिरेव भावनेत्यभिधीयते । सा च न प्रमाणमिति स्थितमेव । नच तदुत्तरकालं साक्षात्कारिज्ञानमुदेतीति प्रमाणमस्ति । इन्द्रियसन्निकर्षमन्तरेणार्थसाक्षात्कारस्य क्वचिदप्यदर्शनात् । भवति चात्र प्रयोगः—योगिनां धर्माधर्मयोरपरोक्षावभासि ज्ञानं नास्ति इन्द्रियसन्निकर्षाभावाद्, अस्मदादिवत् । यच्च कारणप्रकर्षात् कार्यप्रकर्ष इत्युक्तं, तदयुक्तम् । कारणप्रकर्षानुपपत्तेः । भावनाप्रकर्षानुपपत्तिश्च वर्णितैव प्रयोजनाभावाद्, अनालम्बनत्वादनधिकविषयत्वाच्च । नच तथाविधातिशयवतः कस्यचिदद्यत्वे दर्शनं, येन दृष्टत्वादभ्युपगम्येत । नित्यनिर्दोषवेदान्तप्रमाणके तु ब्रह्मातिशये न किञ्चिदनुपपन्नम् । तत्रापितु नानिन्द्रियजं प्रत्यक्षमुपपद्यते । समुच्छिन्नसकलमितिमातृमेयमानप्रपञ्चा हि सावस्था । यत्रापिचाभ्यासात् प्रकर्षो दृश्यते तत्रापि स्मृतिरेव प्रकृष्यते, नपुनरभ्यासतोऽनिन्द्रियसन्निकृष्टमपिच वस्त्वपरोक्षं भवति । नह्यभ्रान्तस्यासंन्निहितमवर्तमानं च पुरःस्थितवदवभासत इत्युत्प्रेक्षितुमपि शक्यमित्यलमनेनेति ।

ननुच शेषहेतुप्रसिद्धये प्रत्यक्षत्वं हेतुरिति पूर्वमुक्तम् । कथमिदानीं तेन विद्यमानोपलम्भनत्वं साध्यते, अत आह—**सत्सम्प्रयोगजत्वमिति**[3] । अयमभिप्रायः—नायं शास्त्रीयो हेतुक्रमः, येन तदतिक्रमे दोषो भवति । अतो व्याप्तिबलेन शक्यमनेनास्मदादिप्रत्यक्षवदुभयं साधयितुमिति यथेष्टाभिधानमिति ॥ २९ ॥

अत्र सूत्रकारेण प्रत्यक्षत्वाभ्युपगमेन योगिप्रत्यक्षस्यानिमित्ततां प्रतिपादयता निमित्तत्वाभ्युपगमे वा न प्रत्यक्षत्वमित्यर्थादावेदितम् । तत्

१. 'ति गांय', ग. पाठः, २. 'त्र यो', ३. 'सत्समिति' क. पाठः.

**लोके चाप्यप्रसिद्धत्वात् प्रत्यक्षत्वप्रमाणतः ।**
**प्रतिभावद्द्वयासत्त्वं सदित्येतेन कथ्यते ॥ ३१ ॥**
**लौकिकी प्रतिभा यद्वत् प्रत्यक्षाद्यनपेक्षिणी ।**
**न निश्चयाय पर्याप्ता तथा स्याद्द्योगिनामपि ॥ ३२॥**
**अविद्यमानसंयोगात् स्याच्चेत् प्रत्यक्षधीः क्वचित् ।**
**भविष्यत्यपि धर्मे स्याच्छक्तेत्याह सदित्ययम् ॥**

---

प्रयोगद्वयेन दर्शयति—**नेषामिति** द्वयेन । ततस्त्वेवेति । अवर्तमानविषयत्वादेवेत्यर्थः । यदि तु निराकृतस्वपक्षो बौद्धोऽप्रत्यक्षशब्दवाच्यमेव तत् प्रमाणान्तरमिति ब्रूयात्, तदर्थं प्रमाणत्वनिराकरणम् । एतच्च सूत्रकारेणैव सत्सम्प्रयोगग्रहणसामर्थ्यादेवोपात्तमिति 'सदित्येतेन कथ्यते' इत्युक्तमिति ॥ ३०, ३१ ॥

अन्यन्मतं—सिद्धानां खलु धर्मानुग्रहवशेनानागतादिविषया प्रतिभैव जायते । सा चाद्यत्वे क्वचिदस्मदादीनामप्युत्पद्यते यथा श्वो मे भ्रातागन्तेति । प्रायेण त्वृषीणां तज्ज्ञानमुत्पद्यत इत्यार्षमित्युच्यते । यथाहुः—'आर्षं सिद्धदर्शनं च धर्मेभ्यः' इति । तन्निराकरोति – **लौकिकीति** । अयमर्थः—योगिनामृषीणां वा प्रतिभा नार्थनिश्चयाय प्रभवति, प्रतिभात्वादस्मदादिप्रतिभावत् । अस्मदादीनां हि विसंवादभूयिष्ठा प्रतिभोपलभ्यत इति ॥ ३२ ॥

एवं तावद् विद्यमानोपलम्भनत्वस्य हेतोरसिद्धिमाशङ्क्य सत्सम्प्रयोगजत्वादिति यदुक्तं तद् विवृतम् । इदानीं भविष्यत्त्वस्य हेतोरनैकान्तिकशङ्कानिराकरणार्थं यदुक्तं तद् विवृणोति—**अविद्यमानेति** । अयमर्थः—यदि सत्सम्प्रयोगजं प्रत्यक्षमिति नोच्येत, ततोऽविद्यमानेऽपि संयोगे योगिनां क्वचित् प्रत्यक्षं जायत इति तस्य भविष्यत्यपि धर्मे शक्तिरनिवारिता स्यात्[1] । ततश्च भविष्यत्त्वस्य हेतोरनैकान्तिकत्वमिति सदित्यादि जैमिनिराहेति ॥ ३३ ॥

१. 'त्वं स्यादिति' ग. पाठः

प्रत्यक्षः प्रागनुष्ठानान्न धर्मोऽनुष्ठितोऽपि वा ।
फलसाधनरूपेण तदानीं येन नास्त्यसौ ॥ ३४ ॥
[1]अस्मत्प्रत्यक्षवच्चापि विद्यमानोपलम्भनम् ।
प्रत्यक्षं ध्यायिनां धर्मे प्रत्यक्षत्वाच्च नेष्यते ॥ ३५ ॥
अविद्यमानसंयोगात् प्रत्यक्षत्वनिराकृतिः ।
योगिनां केन लभ्येत नेष्टं सद्ग्रहणं यदि ॥ ३६ ॥

---

ननु भविष्यत्त्वाद् धर्मो न प्रत्यक्ष इत्युच्यते, तद् यदासौ भविष्यंस्तदा मा नाम प्रत्यक्षो भवतु । यदातु प्रवर्तते तदा किन्नाम न प्रत्यक्षेणानुभूयते, अत आह—प्रत्यक्ष इति । अयमभिप्रायः—अनुष्ठानार्थं हि प्रमाणमन्विष्यते । तदनुष्ठानात् प्रागेवान्वेष्यम् । नचानुष्ठानात् प्राग् धर्मोऽस्तीति कथं प्रत्यक्षो भवेदिति । किमिदानीमन्येनानुष्ठितो विद्यमानः प्रत्यक्षो धर्मः नेत्याह — अनुष्ठित इति । न प्रत्यक्ष इति सम्बन्ध इति । अत्र कारणमाह — फलसाधनरूपेणेति । भवेदेतदेवं यदि द्रव्यादयः स्वरूपेण धर्मा भवेयुः । फलसाधनरूपेण चैते धर्मा इति 'ताद्रूप्येण च धर्मत्वमि'त्यत्रोक्तम् । तच्च रूपमनुष्ठानकाले नास्ति । आमुष्मिकफलेष्वत्र फलस्याभावात् । ऐहिकफलेष्वपि चिरेण । निरन्तरयोर्हि साध्यसाधनयोः साधनं प्रत्यक्षं भवति मर्दनसुखयोरिव । इह तु फलकाले साधनं चिरातिवृत्तं, साधनकाले फलमजातमिति न फलसाधनं प्रत्यक्षम् । शक्तिस्तु सर्वभावानां नित्यपरोक्षैव । तेन न तद्विशिष्टो धर्मः प्रत्यक्षो भवतीति ॥ ३४ ॥

प्रकृतमिदानीं विद्यमानोपलम्भनत्वेन प्रत्यक्षस्य धर्मेऽनिमित्तत्वमुपसंहरति — अस्मदि[2]ति धर्मेन्तेन । ध्यायिनां प्रत्यक्षं विद्यमानोपलम्भनं सद् धर्मे न प्रमाणमस्मत्प्रत्यक्षवत् । वक्ष्यमाणहेत्वपेक्षया चशब्दः । नेष्यत इति वक्ष्यमाणेन सम्बन्ध इति । अयं च सूत्रकारेणोपपत्तिक्रमोक्त्या सर्वेषां चित्तं भावयितुं[3] हेतुक्रमो दर्शितः । शक्यते च प्रत्यक्षत्वमात्रेणैवानिमित्तता साधयितुमित्याह — प्रत्यक्षत्वादिति ॥ ३५ ॥

एवं सूत्रतात्पर्यं व्याख्यायेदानीमवयवाननुसन्धत्ते । तत्रापि सच्छब्द-

१. "क्षो ने' ग. पाठः. २. 'स्मत्प्रत्यक्षवदि'. ३. 'तुं क' क पाठः.

**सप्तम्यापितु लभ्येत सदर्थः कल्पना पुनः ।**
**परेषां वारणीयेति यत्नो जैमिनिना कृतः ॥ ३७ ॥**
**सम्यगर्थे च संशब्दो दुष्प्रयोगनिवारणः ।**
**प्रयोग इन्द्रियाणां च व्यापारोऽर्थेषु कथ्यते ॥ ३८ ॥**

मादौ चिन्तयति । अत्र भिक्षुणोक्तं सद्विशेषणमनर्थकम्, असता सम्प्रयोगाभावेनाव्यभिचारात् । यथोक्तं —

"सदित्यसद्व्युदासाय न नियोगात् स गंस्यते ।
सम्प्रयोगो हि नियमात् सत एवोपपद्यते ॥"

इति । एतदनभ्युपगमेन निराकृत्य कर्मधारयसमासमेव दर्शयति — **अविद्यमानेति** । अस्यार्थः — नायमर्थः सूत्रस्य सता सम्प्रयोगः सत्सम्प्रयोग इति । किं तर्हि । संश्चासौ सम्प्रयोगश्चेति कर्मधारयोऽयम् । सच्छब्दश्च विद्यमानवचनः । तदयमर्थो भवति — विद्यमानसम्प्रयोगजं प्रत्यक्षमिति । ततश्च यत् 'तेषामविद्यमानेऽर्थे' इत्यादिना योगिज्ञानस्य प्रत्यक्षत्वनिराकरणमुक्तं तदेवं लभ्यते । वर्तमानार्थवाचिनो हि सच्छब्दस्यासद्व्युदासः । स कथमसति तस्मिन् सिध्येत् । अयं च सूत्रार्थः 'सतीन्द्रियार्थसम्बन्धे' इति व्याचक्षाणेन भाष्यकारेणोक्त इति द्रष्टव्यमिति ॥ ३६ ॥

नन्वयमर्थो निमित्तसप्तम्यैवात्र लभ्यते । नह्यसत्सम्प्रयोगो निमित्तं भवति । अत आह — **सप्तम्येति** । अयमभिप्रायः — सत्यम् अवर्तमानः सम्प्रयोगो नाक्षजे ज्ञाने कारणम् । अपितु तमपि केचित् कारणतया मन्यन्ते । तदिह सम्प्रयोग इत्येतावति श्रुते सति भाविन्यतीते चेति यथेष्टं कल्पयेयुः । अतस्तत्कल्पनानिराकरणार्थं व्यक्तमेव जैमिनिना सद्विशेषणमुपात्तमिति ॥ ३७ ॥

व्याख्यातः सच्छब्दः । संशब्दमिदानीमनुसन्धत्ते **सम्यगिति** । सम्यक्प्रयोगः सम्प्रयोगः । तेन दुष्प्रयोगो निवारितो भवतीति । आह— विशेक्ष्यति भवान् समा प्रयोगं, प्रयोगमेवं तावदादौ भवान् व्याकुरुतामत आह — प्रयोग इति । रूपादिसंवित्कार्योन्नेयमिन्द्रियाणां व्यापारं प्रयोगापरपर्यायमाचक्षत इति ॥ ३८ ॥

1. 'सा प्रसादः । स' ग. पाठः. 2 'वादौ व्या' क. पाठः.

**दुष्टत्वाच्छुक्तिकायोगो वार्यते रजतेक्षणात् ।**
**एवं सत्यनुवादत्वं लक्षणस्यापि सम्भवेत् ॥ ३९ ॥**

**ततश्चाप्राप्यकारित्वाद् यद् बौद्धैः श्रोत्रचक्षुषोः ।**
**लक्षणव्याप्तिसिद्ध्यर्थं संयोगो नेति कीर्त्यते ॥ ४० ॥**

**प्राप्यग्रहणपक्षेऽपि सान्तराग्रहणं किल ।**
**अधिष्ठानाधिकश्चार्थो न गृह्येत त्वगादिवत् ॥ ४१ ॥**

---

कः पुनरत्र दुष्प्रयोगः यः संशब्देन व्यावर्त्यते, अत आह—**दुष्टत्वादिति** । कथं पुनरसौ दुष्टः । प्रयोगस्य ह्यत्यासत्त्यादयो दोषाः । नच ते शुक्तिसम्प्रयुक्तचक्षुषो भ्राम्यतो दोषा भवन्ति । विषय एवतु तत्र सादृश्यदूषितो विपरीतख्यातिहेतुः । अत आह—रजतेक्षणादिति । अयमभिप्रायः— ज्ञानकारणं हि सम्प्रयोगः स दुष्टोऽन्यदन्यात्मना भासयति, कारणदोषाविनाभावात् कार्यदोषस्य । अदुष्टस्तु सम्यग्ज्ञानं जनयति । सर्वकारणदोषाभावेन च तस्य सम्यक्त्वं भवति । यदा पुनरिन्द्रियार्थयोरन्यतरदपि दुष्यति, तदा तदाश्रितः संयोगोऽपि दुष्टो भवति। अतः संयोगस्य स्वदोषा अत्यासत्त्यादयो विषयदोषाश्च सादृश्यादयो दूषका भवन्ति । तदिह शुक्तौ रजतमिति गृह्यमाणायां कार्यदोषात् शुक्तिकायोगो दुष्ट इत्यवगम्यते । अतोऽसौ सम्यगर्थवाचिना संशब्देन वार्यत इति । एवञ्चावयवव्याख्यायामाश्रीयमाणायां लोकसिद्धलक्षणानुवादेनाप्यनिमित्तत्वविधिर्न दुष्यतीत्याह—एवमिति ॥ ३९ ॥

तथा यदपि बौद्धैः प्राप्तिवचनं प्रयोगशब्दं मन्वानैः श्रोत्रचक्षुषोरप्राप्यकारित्वादव्यापकं लक्षणमि[illegible]उक्तं, तदपि व्यापारमात्रवचनं प्रयोगशब्दं व्याचक्षाणैरस्माभिः परिहृतमित्याह—**ततश्चेति** । व्यापारमात्रवाचित्वादविरुद्धमित्युपरितनेन सम्बन्ध इति ॥ ४० ॥

श्रोत्रचक्षुषोरप्राप्यकारित्वे बौद्धानामभिप्रायमाह—**प्राप्येति** नान्तेन । एवं हि तैरुक्तं—

"सान्तरग्रहणं न स्यात् प्राप्तौ ज्ञानेऽधिकस्य च ।"

इति । यदि चक्षुश्श्रोत्रे विषयं प्राप्य गृह्णीतः, यदिदं दूरे शब्दो दूरेऽर्थ इति सान्तरग्रहणं यच्च सुमहतां महीमहीधरादीनामधिष्ठानाधिकपरि-

व्यापारमात्रवाचित्वादविरुद्धं तदत्र नः ।
यदि वार्थार्जवस्थानं सम्प्रयोगोऽत्र वर्ण्यते ॥ ४२ ॥
योग्यतालक्षणो वाच्यः संयोगः कार्यलक्षितः ।
साङ्ख्यादीन् वा विनिर्जित्य प्राप्तिपक्षोऽत्र दूष्यताम् ॥
तयोश्च प्राप्यकारित्वमिन्द्रियत्वात् त्वगादिवत् ।
केचित् तयोः शरीराच्च बहिर्वृत्तिं प्रचक्षते ॥ ४४ ॥

---

माणानां ग्रहणं तत् किलोभयमपि न स्यात्, प्राप्यकारिषु त्वगादिष्वदर्शनात् । तदेतदुक्तं भवति—यत् प्राप्यकारि न तत् सान्तरमधिकं च वेदयति, यथा कायः नच तथा श्रोत्रचक्षुषी इत्यावीतहेतुः । उपालम्भे किलशब्दः । उभयस्यापि समाधास्यमानत्वादिति । आर्जवावस्थानं वा सम्प्रयोगोऽभिमत इत्याह यदि वेति । आर्जवावस्थितस्य हि रूपादिज्ञानमुत्पद्यते । तत्रैव सम्प्रयोगशब्दोपचारः । त्वगादिषु सम्प्रयोगशब्दार्थो ज्ञानहेतुरुपलब्धः । तदिदमार्जवावस्थानमपि तद्धेतुतया तथा व्यपदिश्यते । एवमेव व्यापारेऽपि दर्शयितव्यमिति ॥ ४१, ४२ ॥

कार्यलक्षितयोग्यतालक्षणो वा यः शब्दार्थयोरिव रूपादिचक्षुराद्योः सम्बन्धः सम्प्रयोग इत्याह—योग्यतेति । अथवास्तु साङ्ख्यादिसिद्धान्तसिद्धः प्राप्तिरूप एव सम्बन्धः । नात्रापि किञ्चिद् दुष्यतीत्याह—साङ्ख्यादीनिति । निर्जित्य हि साङ्ख्यादीन् प्राप्तिपक्षोऽत्र दूष्यते । नच ते निर्जेतुं शक्याः । अप्राप्यकारिपक्षे हि सूक्ष्मव्यवहितविप्रकृष्टादीनामप्राप्तत्वाविशेषेण ग्रहणप्रसङ्गादिति भावः ॥ ४३ ॥

अनुमानेनापि श्रोत्रचक्षुषोः प्राप्यकारित्वमवगम्यते इत्याह —**तयोरिति** । तयोः श्रोत्रचक्षुषोरित्यर्थः । चक्षुश्श्रोत्रे प्राप्यकारिणी, बाह्येन्द्रियत्वात् त्वगिन्द्रियवदिति । ननुच कर्णशष्कुली चक्षुर्गोलकं च शरीरस्थमेवोपलभ्यते, कथं तत् प्राप्यकारीत्युच्यते । तदेतदेतेषां तावत् प्राप्यकारिवादिनां साङ्ख्यानां मतेन समादधाति—केचिदिति । एवंहि साङ्ख्या मन्यन्ते — आहङ्कारिकयोः श्रोत्रचक्षुषोर्वृत्तिः शरीराद् बहिर्भवति अर्थदेशं प्राप्नोति । सा च कार्यदर्शनोन्नेया यथाकार्यमवतिष्ठत इति ॥ ४४ ॥

**चिकित्सादिप्रयोगश्च योऽधिष्ठाने प्रयुज्यते ।**
**सोऽपि तस्यैव संस्कार आधेयस्योपकारकः ॥ ४५ ॥**
**तद्देशश्चापि संस्कारः सर्वव्याप्त्यर्थ उच्यते ।**
**चक्षुराद्युपकारश्च पादादावपि दृश्यते ॥ ४६ ॥**
**तस्मान्नैकान्ततः शक्यं संस्कारात् तत्र वर्तनम् ।**
**बहिर्वृत्तिस्तयोश्चेष्टा पृथ्वग्रा सन्ततापिच ॥ ४७ ॥**
**अधिष्ठानाधिकं तेन गृह्यते यत्र यादृशम् ।**
**पार्थवं वृत्तिभागे स्याद् दूरेऽपि ग्रहणं यथा ॥ ४८ ॥**

---

नन्वधिष्ठानमेवेन्द्रियं, तत्रोद्धरणपूरणादिनिग्रहानुग्रहदर्शनात् । इतरथा तदसम्भवात् । यदि ह्यधिष्ठानातिरिक्तमक्षं भवेत्, तर्ह्यधिष्ठान-संस्कारोऽनर्थकः स्यात्, अत आह — **चिकित्सादीति** । अयमभि-प्रायः — यदीन्द्रियमधिष्ठाने न सम्बद्धं भवेत्, ततोऽधिष्ठानसंस्कारस्त-स्योपकारको न स्यात् । अधिष्ठानाधारं तु तत् । अतस्तस्यैवाधारभूतस्या-धिष्ठानस्य संस्कार आधेयस्येन्द्रियस्योपकारको भविष्यति गजाश्वपर्याण-संस्कार इवारोहकस्येति ॥ ४५ ॥

नन्वेवमपि गोलकाधिकरणस्यैव तत्संस्कार उपकारको भवतु, तस्य त्वसम्बद्धस्य भागस्य गोलकेन गोलकसंस्कारो नोपकारकः स्यात् । तेन च संस्कृते न प्रयोजनम् । तस्यैव प्राप्तत्वेन प्रकाशकत्वात् । अतो यत् प्रकाशकं तत् संस्कर्तुमशक्यमसम्बन्धात् । यच्च शक्यं न तेन संस्कृतेन प्रयोजनम्, असम्बद्धस्य हि भागस्य प्रकाशयितुमशक्तेः, अत आह — **तद्देश इति** । अयमभिप्रायः — एकैवेन्द्रियवृत्तिरनुगताधिष्ठानदेशसम्बन्धा अर्थदेशं यावत् प्राप्ता, अतोऽधिष्ठानदेश एव संस्कारः सर्वोपकारको भवि-ष्यति । यथा पादयोः प्रयुक्तः संस्कारो दूरस्थस्यापि चक्षुष उपकारको भविष्यतीति ॥ ४६ ॥

अतो नायमेकान्तः यदधिष्ठानदेशे संस्कारात् तद्वर्त्यैवेन्द्रियमिती-त्याह — **तस्मादिति** । निरन्तराधिकग्रहणमुपपादयति — **बहिरिति** स्यादन्तेन । कार्यदर्शनबलेन हि तद्वृत्तिः कल्प्यमाना यथाकार्यमवतिष्ठत

**दीपप्रभा यथा तस्मिन् विनश्यति विनश्यति ।**
**तथा बहिर्गताप्येषा मूलच्छेदाद् विनश्यति ॥ ४९ ॥**
**अधिष्ठानपिधाने तु सत्यप्युच्छिन्नयत्नया ।**
**तयार्थोऽनुपनीतत्वादात्मना नानुभूयते ॥ ५० ॥**
**विच्छिन्न इति बुद्धिः स्यादधिष्ठानमपेक्ष्य च ।**

इत्युक्तम् । अतोऽधिष्ठानाधिकपरिमाणार्थदर्शनात् पृथ्वग्रा कल्पयिष्यते । निरन्तरदर्शनाच्च सन्तता । अतो यत्र यादृशं वृत्तिभागे पार्थवं पृथुत्वं भवति, तदनुरूपमेवाधिष्ठानाधिकं महीधरादि गृह्यते । अमूर्ताया अपि वृत्तेरौपाधिको व्योम्न इव भागव्यपदेशः । यदेव तया प्रकाश्यते तदौपाधिकमेव भागव्यपदेशं लभते इति । नच वाच्यं यदि वृत्तिर्गत्वार्थं प्रकाशयति किमिति तर्हि नितान्तदूरवर्तिनोऽपि भावान् न प्रकाशयतीति । यावति हि दूरे कार्यमुपलभ्यते तावन्तमेवाध्वानमसौ सर्पतीत्यधिकदर्शनवत् कल्पनीयमित्याह — दूरेऽपीति ॥ ४८ ॥

नन्वेवमपि यदीन्द्रियवृत्त्यार्थाः प्रकाश्यन्ते, सा तर्हि निर्गत्य गतास्त्येवेति किं न पिहितेन्द्रियस्यापि भावा भासन्ते, अत आह — **दीपप्रभेति** । नावश्यं पिहितेन्द्रियस्य वृत्तिरस्ति कार्याभावात् तु सा दीपनाशे प्रभावन्निमीलयतोऽपि नष्टेत्युन्नीयत इते ॥ ४९ ॥

अस्तुवा अधिष्ठानपिधानेऽपि वृत्तिः । आत्मप्रयत्नानुगृहीता तु सा आत्मन्यर्थमुपनयति । अधिष्ठानपिधाने ह्यात्मनः प्रयत्नोच्छेदात् प्रयत्नानधिष्ठितया तयानुपनीतोऽर्थो नात्मनानुभूयत इत्याह — **अधिष्ठानेति** ॥ ५० ॥

विच्छिन्नबोधमिदानीमुपपादयति — विच्छिन्न इतीति । विभोरप्यात्मनः प्राग्भवीयकर्मार्जितं सकलभोगायतनं शरीरमिति तदपेक्षया विच्छेदबुद्धिः । कायेन्द्रिये तु शरीरविच्छेदाभावादविच्छेदबोधो युक्त इति । शब्दे तु विच्छेदाधिकबोधो भ्रान्तिरेवेति किं तदुपपादनेन । तथाहि — स्वदेश एव शब्दः श्रोत्रेण प्रकाश्यते । कुतस्तस्य विच्छेदः । कुतः विभो-

१. 'ध' ग. पाठः. २. 'न । स्व' क. पाठः.

शब्दे त्वाधिक्यविच्छेदौ भ्रान्त्यैवोक्तावसम्भवात् ॥

रमूर्तस्य वृद्धिह्रासावित्याह—शब्दे त्विति। एतत् तु स्वमतेनोक्तम्। साङ्ख्यमते तु श्रोत्रवृत्तिः शब्ददेशं गच्छत्येव । तत्र शरीरापेक्षयैव विच्छेदबोधो वक्तव्यः । असम्भवं च शब्दाधिकरणे वक्ष्याम इति ।

अयं च साङ्ख्यसिद्धान्तसिद्धो वृत्तिगमनपक्षो वार्त्तिककारेण प्राप्तिसाधारण्यमात्रेणोक्तः, न पुनरभिप्रेतः । नहीन्द्रियवृत्तिर्नाम काचित् प्रमाणेनावगम्यते । तथाहि—आहङ्कारिकाणीन्द्रियाणीति कापिला मन्यन्ते । यथाहुः —

"सात्त्विक एकादशकः प्रवर्तते वैकृतादहङ्कारात् ।"

इति। कश्चायमहङ्कारः। यदि योऽयमात्मानं प्रकाशयति, स तर्हि ज्ञानमितीन्द्रियाणां कथं प्रकृतिर्भविष्यति। आत्माधारमान्तरं ज्ञानं कथं तेन बाह्येन्द्रियाण्यारब्धुं शक्यन्ते। अथ मतं तत्त्वान्तरमहङ्कार इति। तन्न । प्रमाणाभावात्। अपिच- तत्त्वान्तरमपि तत् कापिलैर्विभुः सङ्गीर्यते। ततस्तन्मयानीन्द्रियाण्यपि विभूनि भवेयुः। नच विभूनां वृत्तिरुपपद्यते। वृत्तिर्निर्गमनम्। नच तद् विभूनां सम्भवति। स्यान्मतम्—नच ब्रूमो विभूनीन्द्रियाणि गच्छन्तीति, किं तर्हि। तदाधारा वृत्तिरिति। केयं वृत्तिरिति वक्तव्यम्। यदि श्रोत्रादीनां शब्दादिग्रहणयोग्यता, सा तद्धर्ममूर्ता शक्तिः कथं गच्छेत् । अपिच त्रीण्यन्तःकरणानि महानहङ्कारो मन इति कापिला मन्यन्ते। नच करणं करणान्तराणां प्रकृतिरुपपद्यते करणत्वात् मनोवत्। अतो नाहङ्कारिकाणीन्द्रियाणि। नच तद्वृत्तिरमूर्ता प्राप्यकारिणीति प्रमाणवती कल्पना । तथा शब्दाधिकरणे वक्ष्यति 'श्रोत्रागमनपक्षे चे'त्यत्र वृत्तिगमनप्रतिषेधम्। अतो भौतिकान्येवेन्द्रियाणि प्राप्यकारिणीति वक्तव्यम्।

किं पुनर्भौतिकत्वे प्रमाणमिन्द्रियाणाम्। दृष्टानुसारः। तथाहि — बहिर्भूतानामेव यथायथं रूपाद्यभिव्यञ्जकत्वमुपलब्धम्। तेजसा हि रूपं प्रकाश्यते यथा दीपेन। रसोऽद्भिः। शुष्काणामपि द्रव्याणां सन्नपि रसो न व्यक्तमुपलभ्यते यथार्द्राणाम्। नच शुष्केषु रसो नास्ति, यावद्द्रव्यभावित्वात्। अतोऽद्भी रसोऽभिव्यज्यते। पार्थिवं च किञ्चिद् द्रव्यं गन्ध-

१. 'शब्देन' क. पाठः. २. 'णां सन्न' ग. पाठः.

पुरुषेन्द्रियशब्दौ च व्यवधानेन कल्पितौ ।

स्याभिव्यञ्जकं दृष्टम् । यथा निम्बत्वक् चन्दनगन्धस्य । तत्कषायपरिषिक्तस्य हि चन्दनस्य स्फुटतरं गन्धोऽभिव्यज्यते । नचाद्भिरसावभिव्यज्यते, केवलानामनभिव्यञ्जकत्वात् । वायुनापि बहिः स्पर्शाभिव्यक्तिरुपलब्धा, यथा हेमन्तशिशिरयोर्वियति विततानामपां सूक्ष्मत्वादनुपलक्ष्यमाणानां वाति वाते शीतस्पर्शोऽवगम्यते । नचासौ वायोः । अनुष्णाशीतस्पर्शत्वाद् वायोः । अतो रूपाभिव्यञ्जकं चक्षुस्तैजसम् । आप्यं रसनमभिव्यञ्जकं च रसस्य । घ्राणं पार्थिवं गन्धस्य । वायवीयं त्वगिन्द्रियं स्पर्शस्य । श्रोत्रमिदानीं किंप्रकृतिकम् । तदपि भौतिकमिन्द्रियत्वात् । किं पुनर्भूतं तस्य प्रकृतिः । आकाश इति वदामः । तथाहि—द्विविधं कार्यं सर्वभूतानां शरीरमिन्द्रियं च । आकाशस्याप्यवकाशदानेन शरीरोपकारकत्वात् कार्यकारणत्वम् । अतस्तस्यापीन्द्रियेण कार्येण भवितव्यम् । तत्रेन्द्रियान्तराणां भूतान्तरप्रकृतित्वादाकाशमेव श्रोत्रस्य प्रकृतिरिति निश्चीयते । अपिच स्वगुणमेव भूतान्तराणि व्यञ्जयन्ति । नच तेषां शब्दो गुणः, आकाशगुणत्वात् । अत आकाशमेव तस्याभिव्यञ्जकमिति युक्तम् । एवञ्च दृष्टानुसारिणी कल्पना कृता भवति । सन्ति हि देहेषु पृथिव्यादिभूतभागाः रूपरसगन्धाद्यभिव्यक्तिशक्तयश्च बहिरिति शरीरेऽपि वर्तमानानां तेषामेव व्यञ्जकत्वानुमानं युक्तम् । एवञ्च प्राप्तिरपि स(मि?म)र्थिता भवति । त्वग्घ्राणरसनानां हि स्थितमेव प्राप्यकारित्वम् । श्रोत्रस्यापि कर्णच्छिद्रपरिमितनभसो धर्माधर्मोपगृहीतस्य स्वदेश एव विभुं शब्दं प्रकाशयतः प्राप्यकारित्वमेव । तेजसो हि विसरणस्वभावस्य चक्षुषो निर्गतस्यार्थदेशप्राप्तिरुपपन्नैव । अनुद्भूतरूपत्वाच्च तस्य रूपानुपलम्भः । अत एवाग्नितेजसः पृथ्वग्रादिकल्पना च तस्य कार्यदर्शनानुसारेण मूर्तत्वादुपपत्तिमती । सर्वत्र च यथाकार्यदर्शनं योग्यतासनाथा प्राप्तिरिन्द्रियार्थयोः सम्बन्ध इति दर्शयितव्यम् । अतो न काचिदतिप्रसक्तिर्वक्तव्या यथा वक्ष्यति—'प्राप्तिमात्रं हि सम्बन्धः' इति । अतः सिद्धमिन्द्रियाणि भौतिकानि प्राप्यकारीणि चेति ॥ ५१ ॥

एवं तावत् सत्सम्प्रयोगशब्दाः विवृताः । पदान्वयमतःपरमनुसन्धास्यामः । अत्र किल पुरुषस्य सम्प्रयोग इन्द्रियाणां बुद्धिजन्मेत्युच्यते ।

**पुरुषो लौकिको वा स्याद् यो वास्मिन् साधयिष्यते ॥**
**विक्रिया ज्ञानरूपास्य न नित्यत्वे विरोत्स्यते ।**
**बुद्धिजन्मेति चाप्याह जायमानप्रमाणताम् ॥ ५३ ॥**

तच्चायुक्तं, विभोः पुरुषस्य सर्वभावैरेव सम्प्रयोगाव्यभिचारेण विशेषणोपादानवैयर्थ्यात् । इन्द्रियाणां च भौतिकानामचेतनत्वात् । चेतना हि बुद्धिरिति सर्वलौकिकाः परीक्षकाश्च मन्यन्ते । न पुनरिन्द्रियव्यापारो बुद्धिरिति । साङ्ख्या हीन्द्रियवृत्तौ बुद्धिशब्दमुपचरन्ति । तत्र तेषामेव परिभाषामात्रम् । अतोऽत्र वक्तव्यं कीदृशोऽत्र पदान्वय इत्यत आह —पुरुषेन्द्रियशब्दाविति । अयमभिप्रायः—किमत्र वक्तव्यम् । भाष्यकारेण पुरुषेन्द्रियशब्दौ व्यवहितकल्पनया व्याख्यातौ येनैवमाह 'सतीन्द्रियार्थसम्बन्धे पुरुषस्य या बुद्धिर्जायते तत् प्रत्यक्षमि'ति । कः पुनरयं पुरुषः यस्य बुद्धिजन्मना सम्बन्धः, अत आह — पुरुष इति । नात्र तात्पर्यमन्यपरत्वात् सूत्रस्य । परमार्थतस्तु पुरुषोऽत्रात्माभिप्रेतः य आत्मवादे प्रसाधयिष्यते । न शरीरं, तस्य भौतिकत्वेनाचेतनत्वादिति ॥ ५२ ॥

नन्वेवमपि यन्नित्यमात्मानं मीमांसका मन्यन्ते, तन्न सिध्येत् । ज्ञानजन्मनि विकारापत्त्या चर्मवदनित्यत्वप्रसक्तेः । ज्ञानजन्मना त्वविकृतस्य पूर्वावस्थायामिवाप्रमातृत्वप्रसङ्गः, अत आह — विक्रियेति । एवंहि मन्यन्ते — न किञ्चिद् विकारमात्रेण वस्तु नश्यति, तत्प्रत्यभिज्ञानात् । एतच्चात्मवाद एव भाष्यकारेण वक्ष्यते । अतो दुरुक्तं परैः

"बुद्धिजन्मनि पुंसश्च विकृतिर्यद्यनित्यता ।
अथाविकृतिरात्मायं प्रमातेति न युज्यते ॥"

इति । अत्र बुद्धिजन्म प्रत्यक्षमित्युच्यते । तस्य कोऽर्थः । किं बुद्धेर्जन्मातिरिक्तमनतिरिक्तं वा, यद्यतिरिक्तं तद् वाच्यं कीदृशमिति । नच स्वमते जन्मस्वरूपमभिहितम् । यदि वैशेषिकोक्तस्वकारणसमवायो जन्माभिधीयते, तस्य नित्यत्वेनाक्षानधीनत्वात् प्रत्यक्षशब्दाभिधेयत्वानुपपत्तिः । अनतिरिक्तत्वे तु पुनरुक्ततैव दोषः, अत आह — बुद्धिजन्मेति । अयमर्थः — नायं बुद्धिजन्मेति षष्ठीसमासः । किन्तु बुद्धिश्चासौ जन्म चेति कर्मधारयः । जन्मशब्दश्च कर्तरि मनिन्प्रत्ययान्तः । तेन जायमाना बुद्धिः प्रमा-

**व्यापारः कारकाणां हि दृष्टो जन्मातिरेकतः।**
**प्रमाणेऽपि तथा मा भूदिति जन्म विवक्ष्यते॥ ५४॥**
**नहि तत् क्षणमप्यास्ते जायते वा प्रमात्मकम्।**
**येनार्थग्रहणे पश्चाद् व्याप्रियेतेन्द्रियादिवत्॥ ५५॥**

---

णमित्युक्तं भवति। न पुनर्वैशेपिकादिवन्नित्यमत्यन्तभिन्नं समवायमाचक्ष्महे। कारणदशाविशेष एव कार्यजन्मेत्युच्यते। नासावत्यन्तं कार्यकारणाभ्यां व्यतिरिच्यते। अतः किमन्यदोपोद्भावनेनेति॥ ५३॥

जायमानविशेषणोपादाने प्रयोजनमाह — व्यापार इति। कारकान्तराणि जनित्वा कियन्तञ्चित् कालं स्थित्वा स्वकार्येषु वर्तमानानि दृष्टानि। तद् बुद्धावपि प्रमाणे मा भूदिति जन्मविवक्षा सूत्रकारेण कृतेति॥

किं पुनः कारकान्तरसाधर्म्ये दुष्यति, अत आह — नहीति। अयमभिप्रायः — न किञ्चिद् दुष्यति। किन्तु नेन्द्रियादिवद् जाता सती बुद्धिः क्षणमात्रमप्यास्ते। अतः कथं तद्वदेव स्थित्वा प्रवर्तत इति। न केवलं जाता नास्ते, किन्तु जायमानापि नोदास्ते। सा ह्युत्पद्यमानैव स्वार्थं प्रकाशयन्त्येवोत्पद्यत इति न क्षणान्तरं प्रतीक्षते। नह्यर्थप्रकाशनादन्यद् बुद्धे रूपमुपलभ्यत इत्याह — जायत इति। कारकान्तरवैधर्म्यप्रतिपादनेनात्र नित्यबुद्धिवादिनो निराकर्तुं बुद्धेरनतिचिरविनाशित्वमुक्तम्। तत्र चायं हेतुः। यदीयमुत्पत्तिमती तस्या विनाशिनावश्यं भवितव्यम्। नचाहेतुको विनाशः सम्भवति, उत्पत्तिमत्त्वादेव। नच प्रहारादिरस्या विनाशहेतुः, अमूर्तत्वात्। अतो ज्ञानान्तरेण वा नाश्यते, तज्जन्मना वा संस्कारेण। तच्चोभयमपि सहसैव निष्पन्नम्। अस्ति हीन्द्रियादिका सामग्र्यप्रतिबन्धा। सा किमपरं विज्ञानं न जनयति। स्मृतिहेतुरपि संस्कारोऽनयैव जातमात्रया जनित इति कर्मवत् कार्यविरोधित्वादपि तादात्विको विनाशो बुद्धेरिति युक्तम्। नच सैवेति बुद्धेः प्रत्यभिज्ञानमस्ति। नच भेदानध्यवसायमात्रादेकत्वसिद्धिः। अपिचार्थान्तरदर्शने स्फुट एवाशुतरविनाशो बुद्धेः, एवञ्च व्यवस्थितैकदर्शनेऽपि तद्वदेव तदनुमानम्। अपिच तत्रापि व्यवहिते ज्ञानं निवर्तते, तच्चिरावस्थायित्वेऽनुपपन्नम्। एवंहि व्यवहिते कुम्भे प्रत्यक्षज्ञानमनुवर्तेत। नचैवम्। स्मृतिस्तु परस्ताद् दृश्यते। सा प्रत्यक्षज्ञानव्यासत्वे

**तेन जन्मैव विषये बुद्धेर्व्यापार इष्यते ।**
**तदेव च प्रमारूपं तद्वती करणं च धीः ॥ ५६ ॥**
**जन्म चाव्यतिरेकेण भाष्यकारेण वर्णितम् ।**
**तच्च भूतभविष्यत्त्वात् कृतं बुद्धेर्विशेषणम् ॥ ५७ ॥**

---

न स्यात् । परोक्षापरोक्षयोरेकगोचरयोरेकदा विरोधात् । स्यादेतदव्यक्तग्रहणमनवस्थायित्वाद् विद्युत्सम्पाते रूपाव्यक्तग्रहणवदिति । न । प्रतिषेद्धव्याभ्यनुज्ञानात् । यदि मन्यते बुद्धेरनतिचिरानुवृत्तौ प्रकाशस्य गत्वरत्वाद् विद्युत्सम्पात इव न व्यक्तं भावाः प्रकाशेरन्, अतो नाशुतरविनाशिनी बुद्धिरिति । तन्न । प्रतिषेद्धव्याभ्यनुज्ञानात् । एवंहि विद्युत्प्रकाशजनितेऽव्यक्तबोध उत्पन्नमात्रापवर्गितां बुद्धेर्ब्रुवाणो निषेध्यमेवाशुतरविनाशमभ्यनुजानाति । अपिच विशेषाग्रहणे सामान्यमात्रग्रहणमव्यक्तग्रहणम् । नतु स्वगोचरे किञ्चिदव्यक्तं नामास्ति, विषयाभिरूपत्वाद् ग्रहणानाम् । विशेषाग्रहणं च तद्ग्रहणनिमित्ताभावादेव, नतु बुद्धेरनवस्थानात् । विद्युत्प्रकाशेऽपि यावदाशुतरविनाशिन्या धिया विषयीकृतं तद् व्यक्तमेव । विशेषास्तु तत्र ग्रहणहेत्वभावादगृहीता एव, न पुनरव्यक्तपरिच्छिन्नाः । नहि गृहीतमव्यक्तं नाम सम्भवतीति नानवस्थायित्वेऽपि धियामव्यक्तग्रहणापत्तिः । नित्यबुद्धिवादिनश्चायमभिप्रायः शब्दाधिकरणे भाष्यकारेण वक्ष्यत इति ॥ ५५ ॥

नतु प्रमाणं नाम कारकविशेषः । नचाकुर्वत् क्रियां कारकं भवति । यदि तु बुद्धिर्जनित्वा न व्याप्रियते, कथमसौ कारकं प्रमाणमिति च सामान्यविशेषशब्दाभ्याममभिधास्यते, अत आह तेनेति । सत्यं, न व्यापारसम्बन्धमन्तरेण कारकत्वं भवति । जन्मैव तु बुद्धेर्व्यापारः, व्यापारान्तरासम्भवात् । तदेव च विवक्षावशात् प्रमेत्युपचर्यते । जन्मना हि तस्याः प्रमाणत्वं भवति । अतस्तयैव क्रियया कारकं प्रमाणमिति च सामान्यविशेषशब्दाभ्याममभिधानसिद्धिः । चशब्दात् प्रमाणं चेत्यर्थः ॥ ५६ ॥

अयं च जन्माव्यतिरेकपक्षो 'या बुद्धिर्जायते' इति वदता भाष्यकारेणैव वर्णित इत्याह — जन्मेति । अपरमपि जायमानावस्थाविशे-

---

१. 'भवेत्' ग. पाठः. २. 'त्वे', ३. 'द्धेरचि', ४. 'ति । वि', ५. 'शे या' क. पाठः. ६. 'न्मेति' ग. पाठः.

**यदा त्वौलूक्यसिद्धान्तात् समवायस्य जन्मता ।**
**बुद्धिस्तत्रेन्द्रियाधीना तेन प्रत्यक्षमुच्यते ॥ ५८ ॥**
**प्रमाणफलभावस्तु यथेष्टं परिकल्प्यताम् ।**
**सर्वथाप्यनिमित्तत्वं विद्यमानोपलम्भनात् ॥ ५९ ॥**
**यद्वेन्द्रियं प्रमाणं स्यात् तस्य वार्थेन सङ्गतिः ।**
**मनसो वेन्द्रियैर्योग आत्मना सर्व एव वा ॥ ६० ॥**

---

षणोपादानस्य प्रयोजनमाह — तच्चेति । बुद्धिः प्रमाणमित्येतावत्युक्ते भूता भविष्यन्ती वा प्रमाणमित्यपि केचित् सम्भावयेयुः, यथा सद्विशेषणोपादाने वर्णितम् । अतस्तदाशङ्कानिराकरणार्थं जायमानविशेषणोपादानम् । भूतभविष्यत्त्वादि(त्यपादाने ? त्यापादने) पञ्चमीति ॥ ५७ ॥

अस्तुवा वैशेषिकसिद्धान्तसिद्धः स्वकारणे कार्यसमवायो व्यतिरिक्त एव जन्म, तथापि न किञ्चिद् दुष्यतीत्याह — यदा त्विति । स खलु नित्योऽपीन्द्रियाधीनाभिव्यक्तिरिति प्रत्यक्षमपेक्ष्यत इति ॥ ५८ ॥

अत्र भाष्यकारेण 'बुद्धिर्वा जन्म वे'त्यादिना प्रमाणानियमो दर्शितः, तत्राभिप्रायमाह — **प्रमाणफलभावस्त्विति** । अयमभिप्रायो भाष्यकारस्य — एकमिदं सूत्रं नोभयमुत्सहते कर्तुं यत् प्रमाणं च नियच्छति, अनिमित्ततां च विदधातीति । भिद्येत हि तथा वाक्यम् । तदत्रानिमित्ततामात्रमेव विद्यमानोपलम्भनात् प्रतिपाद्यम् । प्रमाणं तु विवक्षावशेन बुद्ध्यादीनामन्यतमं भविष्यति । करणं हि प्रमाणं, साधकतमं च करणं, विवक्षाधीनश्च साधकतमभावः । अतो यदेव तु बाह्यापेक्षया फलं प्रत्यासन्नमिति विवक्ष्यते तदेव प्रमाणं भविष्यति । ततः परं चाभ्यर्हितत्वविवक्षया फलमिति ॥ ५९ ॥

यथेष्टकल्पनामेव दर्शयति — यद्वेति । असतीन्द्रिये ज्ञानोदयाभावात् तदेव प्रमाणम् । सदपि चेन्द्रियमसङ्गतमर्थेन न ज्ञानं जनयतीति तदर्थसङ्गतिः प्रमाणम् । सम्बद्धमपि चेन्द्रियमर्थेन मनसानधिष्ठितं न प्रमाणमिति तन्मनस्संयोगः प्रमाणम् । सर्वस्मिन्नपि च सत्यसत्यात्ममनस्संयोगे ज्ञानानुदयात् स च प्रमाणम् । अथवा सर्वेषामेकतरापायेऽपि न ज्ञानं

---

१. 'मी । अ' क. पाठः ।

**तदा ज्ञानं फलं तत्र व्यापाराच्च प्रमाणता ।**
**व्यापारो न यदा तेषां तदा नोत्पद्यते फलम् ॥**
**नच सर्वात्मनाक्षेण सम्बन्धोऽर्थस्य विद्यते ।**
**येन सर्वार्थबोधः स्यात् तत्प्रमाणाभिधायिनाम् ॥**
**प्राप्तिमात्रं हि सम्बन्धो नेन्द्रियस्याभ्युपेयते ।**
**मा भूत् कारणमात्रेण त्वचा रूपावधारणम् ॥ ६३ ॥**

जायत इति सर्व एव संयोगः प्रमाणम् । आत्मना वा मनसो योग इति योजनीयमिति ॥ ६० ॥

एषु प्रमाणेषु फलं दर्शयति — तदेति । इन्द्रियादिप्रामाण्यपक्षे ज्ञानं फलमित्यर्थः । ननु यदीन्द्रियादि प्रमाणं, तेन तर्हि सदा ज्ञानं जनयितव्यमेव । नच तदस्ति, अस्ति खलु पिहितचक्षुषोऽपि चक्षुः । नच तद् ज्ञापयति । संयुक्तं ज्ञापयतीति चेद्, न । व्यभिचारात् । संयुज्यते खल्वस्य नानार्थैर्नायनं तेजः । किञ्चिदेव तु ज्ञापयति । अतो व्यभिचारादकारणमिन्द्रियादि ज्ञानजन्मनीति, अत आह — तत्रेति । उक्तमिदमस्माभिर्व्यापारवचनः प्रयोगशब्द इति । फलानुमेयश्चासौ व्यापारः । अतो यत्रैव फलमुपलभ्यते तत्रैव व्यापारवत्त्वात् तेषां प्रमाणत्वमिति । असति तु व्यापारे न फलमुत्पद्यत इति नातिप्रसङ्ग इत्याह — व्यापार इति ॥ ६१ ॥

नन्वस्तु व्यापारवाचिप्रयोगशब्दपक्षेऽतिप्रसङ्गपरिहारः । प्राप्तिवचनत्वेऽतिप्रसङ्गो दुष्परिहरः । अस्ति हि चाक्षुषस्य तेजसो नानार्थैः सम्प्रयोगः । नच तावद् ज्ञापयति, किञ्चिदेव तु कदाचित् । अपिच का चेयं प्राप्तिः । यदि संयोगः, स च द्रव्येणैवेति रूपसंवित्तिर्न स्यात् । अथ तेनापि संयुक्तसमवायादस्ति सन्निकर्ष इत्युच्यते, समानोऽसौ रसादिष्वपीति तेऽपि चक्षुषानुभूयेरन्निति सर्वात्मकार्थग्रहणमितीन्द्रियसंयोगप्रमाणपक्षे परैरुक्तं यत् तत् परिहरति — नचेति ॥ ६२ ॥

कः पुनः सर्वात्मना सम्बन्धो नास्तीति वदतोऽभिप्रायः — यदि गुणैः संयोगो न रसादिभिः सम्भवतीति, स तर्हि रूपेणापि गुणत्वाविशेषान्न स्यादेव । संयुक्तसमवायस्त्वविशिष्टः सर्वेषामित्युक्तमेव, अत आह—

**यथा प्रमाणनिष्पत्तौ योग्यत्वादिन्द्रियार्थयोः ।**
**नियता सङ्गतिर्हेतुः फलेऽप्येवं भविष्यति ॥ ६४ ॥**
**योगस्य द्व्याश्रयत्वेऽपि भवत्यन्यतराश्रयः ।**
**व्यपदेशोऽथवाप्यक्षं तत्रासाधारणं भवेत् ॥ ६५ ॥**

---

**प्राप्तीति** । अयमभिप्रायः—भवेदयं दोषः यदि प्राप्तिमात्रमेवेन्द्रियार्थयोः सम्बन्धः प्रमाणमाश्रीयत इति । स तु योग्यतासहायः । योग्यता च कार्यदर्शनोन्नेया । अतो यदेव यदिन्द्रियसंयोगानन्तरमनुभूयते तत्रैव तत्सम्प्रयोगस्य योग्यत्वं, नेतरत्र, प्रमाणाभावात् । अत एव जिघृक्षितसूक्ष्मरूपादिग्रहणप्रसङ्गोऽपि परिहर्तव्य इति किमिति नाभ्युपेयते, अत आह — **मा भूदिति** । अयमभिप्रायः — यो हि ज्ञानं प्रमाणमिष्ट्वा सत्सम्प्रयोगं प्रमाणकारणमातिष्ठते न तु प्रमाणं, तेनापि प्राप्तेरविशेषात् त्वचा रूपावधारणं मा भूदिति न प्राप्तिमात्रं सम्बन्धोऽभ्युपगन्तव्य इति ॥ ६३ ॥

अथ तु प्रमाणनिष्पत्तौ योग्यतासहिता प्राप्तिरिष्यते, शक्यं तत् फलनिष्पत्तावपि वक्तुमिति दोषप्रसङ्गपरिहारतुल्यत्वान्नैकः पर्यनुयोज्यो भवतीत्याह — **यथेति** । नियता हि काचिदेव स्वविषयेण रूपादिना चक्षुरादीनां सङ्गतिरिति । योग्यत्वादिति । तत्रैव कार्यदर्शनयोग्यत्वादित्यर्थः ॥ ६४ ॥

एवं तावदिन्द्रियार्थसम्बन्धप्रमाणपक्षेऽतिप्रसङ्गपरिहारोऽभिहितः । इदानीं द्व्याश्रयो योगः कथमक्षेणैव व्यपदिश्यत इति चोद्यं परिहरति — **योगस्येति** । अस्यार्थः — नेदमदृष्टपूर्वं यदनेकैरपि सम्बद्धमेकेनैव व्यपदिश्यत इति । भवति हि डित्थडवित्थयोर्मातुर्डित्थमातेति व्यपदेश इति । आह — अस्त्वन्यतराश्रयो व्यपदेशः । इह तु नियमेनैवाक्षेण व्यपदेशो दृश्यते नार्थेन । मातुस्तु डवित्थेनापि कदाचिद् व्यपदेशो भवत्यत आह — **अथवेति** । असाधारणेन हि व्यपदेशो भवति । ज्ञानस्यासाधारणमक्षं, तदर्थमेवाक्षाणां निर्माणात् । अर्थस्तु कार्यान्तरसाधारणः नासौ व्यपदेशहेतुरिति ॥ ६५ ॥

**संयोगे त्वात्ममनसोः स्याच्चेद् विषयभिन्नता ।**
**प्रमाणफलयोर्नासावर्थे हि व्यापृतं द्वयम् ॥ ६६ ॥**
**अथाप्याश्रय इष्टस्ते न योगाद् विषयान्तरम् ।**
**आत्मस्थत्वेन विज्ञानं न भिन्नविषयं ततः ॥ ६७ ॥**
**प्रकृष्टसाधनत्वाच्च प्रत्यासत्तेः स एव नः ।**
**करणं तेन नान्यत्र कारके स्यात् प्रमाणता ॥ ६८ ॥**
**प्रमाणे सर्वसंयोगे दोषो नैकोऽपि विद्यते ।**
**प्रमाणं त्विन्द्रियं यस्य तस्यैको विषयः स्फुटः ॥**
**प्रमाणफलते बुद्ध्योर्विशेषणविशेष्ययोः ।**
**यदा तदापि पूर्वोक्ता भिन्नार्थत्वनिराक्रिया ॥**

---

अत्र चेन्द्रियार्थसम्बन्धप्रमाणपक्षे विषयभेदोऽपि प्रमाणफलयोर्नास्त्येव, सम्बन्धस्यार्थाश्रयत्वाद् ज्ञानस्यापि तद्विषयत्वादिति । आत्ममनस्सम्बन्धप्रमाणपक्षे तर्हि विषयभेदो भवेत् । स ह्यात्ममनआश्रयः ज्ञानं चार्थविषयमिति शङ्कते तावत्— **संयोगे त्विति फलयोरन्तेन** । परिहरति — नेति । कारणमाह — अर्थे हीति । अस्यार्थः— यद्यप्यात्ममनस्सम्बन्धो नार्थाश्रयः, तथाप्यर्थे व्याप्रियते । ज्ञानमपि तद्विषयमेवोत्पद्यत इति व्यापारतः समानविषयत्वमिति ॥ ६६ ॥

अथ पुनराश्रयो विषयोऽभिप्रेतः, तदुभयोरप्यात्मस्थत्वात् सुतरां समानविषयत्वमित्याह — **अथापीति** ॥ ६७ ॥

अयमेवात्ममनस्संयोगो ज्ञानोत्पत्तेः प्रत्यासन्नतया कारकान्तरेभ्यो विशिष्ट इत्ययमेव प्रमाणमित्याह — **प्रकृष्टसाधनत्वादिति** ॥ ६८ ॥

सर्वसंयोगप्रमाणपक्षेऽपि पूर्वोक्तसमस्तदोषपरिहारोऽनुसन्धातव्य इत्याह— **प्रमाण इति** । इन्द्रियप्रामाण्यपक्षेऽपि तस्यार्थप्राप्त्या ज्ञानस्य च तद्विषयत्वेन स्फुटं विषयसाम्यमित्याह — **प्रमाणमिति** ॥ ६९ ॥

एवं तावदिन्द्रियादिप्रामाण्यपक्षे प्रमाणफलयोर्विषयसाम्यमुक्तम् । इदानीं ज्ञानप्रामाण्यपक्षेऽप्येवमेव दर्शयितव्यमित्याह—**प्रमाणेति** । सर्व-

---

१. 'ति प' ग. पाठः.

**विशेषणे तु बोद्धव्ये यदालोचनमात्रकम् ।**
**प्रसूते निश्चयं पश्चात् तस्य प्रामाण्यकल्पना ॥ ७१ ॥**
**निश्चयस्तु फलं तत्र नासावालोचितो यदा ।**
**तदा नैव प्रमाणत्वं स्यादर्थानवधारणात् ॥ ७२ ॥**
**हानादिबुद्धिफलता प्रमाणं चेद् विशेष्यधीः ।**
**उपकारादिसंस्मृत्या व्यवायश्चेदियं फलम् ॥ ७३ ॥**

---

सविकल्पकज्ञानानि विशेषणज्ञानपूर्वकाणि. यथा दण्ड्ययं गौरयं शुक्लोऽयं गच्छत्ययं डित्थोऽयमिति । तदिह विशेषणज्ञानं प्रमाणं विशेष्यज्ञानं च फलम् । विशेष्यज्ञानसिद्ध्यर्थत्वाच्च विशेषणज्ञानस्य । तत्रापि व्यापारतः समानविषयत्वमिति ॥ ७० ॥

यदा तु विशेषणमेव बोद्धव्यं प्रमित्सितं भवति, तदा तर्हि कः प्रमाणफलयोर्विवेकः, कथं वा समानविषयत्वमत आह — **विशेषणे त्विति** । अयमभिप्रायः — तत्रापि विज्ञानद्वयमुपलभ्यते । आलोचनाज्ञानं हि तत्र विशेषणे निश्चयं प्रसूते । तादर्थ्याच्च समानविषयत्वमिति विवेक इति ॥ ७१ ॥

आलोचनाज्ञानमात्रपर्यवसाने तर्हि को विवेकः, अत आह— **निश्चय** इति । अयमभिप्रायः — आलोचनाज्ञानेऽपि हि. तदिदमिति प्रत्यभिज्ञा-नात्मकमीदृशोऽयमिति वा निश्चयात्मकं ज्ञानान्तरं शब्दयोजनाशून्यमस्त्येव, यथा तिरश्चामन्येषां वा अस्मृतशब्दानां वाचकरहितमसाधारणं वस्तु प्रति-पद्यमानानाम् । अतोऽस्त्येव ज्ञानद्वयप्रदर्शनात् प्रमाणफलविवेकः । यदा पुनरालोचितेऽर्थे निश्चयो न जायत एव, तदा प्रमाणत्वमेव नास्तीत्याह— **नासाविति** । अर्थावधारणफलत्वात् प्रमाणत्वस्य, तस्य च तदानीमभावा-दिति ॥ ७२ ॥

विशेष्यज्ञान इदानीं, का वार्ता । न तावदप्रामाण्यं, सर्वत्र प्रसङ्गात् । नचासति फले प्रमाणत्वमपि शक्यं समर्थयितुम् । अथ तदेव प्रमाणं फलं चेति द्विरूपमिष्यते, अस्तु तर्हि विशेषणज्ञानादिष्वपि द्विरूपत्वमेव, किं भेदोपन्यासेन । युक्तं चैतदेवम् । एवं हि प्रमाणफलयोरत्यन्तप्रत्या-

**विषयैकत्वमिच्छंस्तु यः प्रमाणं फलं वदेत् ।**
**साध्यसाधनयोर्भेदो लौकिकस्तेन बोधितः ॥ ७४ ॥**
**छेदने खदिरप्राप्ते पलाशे नच्छिदा यथा ।**
**तथैव परशोर्लोके छिदया सह नैकता ॥ ७५ ॥**
**भवते भेदहानेन रुचिता विषयैकता ।**
**तत्त्यागेन परेभ्यस्तु भेदो रुचिमुपागतः ॥ ७६ ॥**

सत्तिराश्रिता भवति । सैव चोपपत्तिमती । नह्यन्यत्र साधनमन्यत्र साध्यं दृष्टम् । नहि परशौ खदिरं प्राप्ते पलाशे छिदा भवति, अत आह — **हानादीति** । अयमभिप्रायः — यत् तावदिदमतिप्रत्यासत्तितृष्णयैकत्वं प्रमाणफलयोः, तदनन्तरमेव निराकरिष्यामः । यत्तु विशेष्यज्ञानस्य फलान्तरं न दृश्यत इति । तन्न । अस्ति तत्रापि तदुत्तरकालभावि हानादि फलम् । अथ ज्ञानस्य ज्ञानमेव फलम्, एवमिहापि हानादिधीरेव फल भविष्यतीति । अथोपकारादिस्मृतिव्यवहिता हानादिबुद्धिर्न फलमिति किं मन्यसे, अस्तु तर्हीयमेवोपकारादिस्मृतिः फलमित्याह — उपकारादीति ॥ ७३ ॥

यत्तु विषयैकत्वमिच्छता प्रमाणफलयोरेकत्वमाश्रितं, तदलौकिकमयुक्तं चेत्याह — विषयेति ॥ ७४ ॥

यच्चेदमुक्तं परशौ खदिराश्रिते पलाशे न छिदा दृश्यते इति । इदं वा किं दृश्यते यत् परशुच्छेदनयोरेकत्वमिति । अतो यत्र साधनं व्याप्रियेत तत्र फलं निष्पद्यते । तच्च पूर्वं प्रतिपादितमेव, नतु साधनमेव फलमित्यभिप्रायेणाह — छेदन इति ॥ ७५ ॥

यदि तूच्यते — साध्यसाधनयोर्विषयभेदो[1] न दृष्टः एकत्वं च, तदन्यतरस्मिन्नाश्रयितव्येऽस्मभ्यं विषयाभेदो रोचत इति । तन्न । शक्यमिदमितरेणापि वक्तुमिति सापहासमाह — भवत इति ॥ ७६ ॥

१. 'दो द' ग. पाठः.

**करणत्वोपचारस्तु फले चेत् कल्प्यते त्वया ।**
**कथञ्चिद् विषयैकत्वं परैर्वा किं न कल्प्यते ॥ ७७ ॥**
**परिच्छेदफलत्वेन वृत्तस्यानन्तरस्य नः ।**
**प्रमाणत्वं भवेज्ज्ञाने प्रमाणे तु परं फलम् ॥ ७८ ॥**
**स्वसंवित्तिफलत्वं तु तन्निषेधान्न युज्यते ।**
**प्रमाणे विषयाकारे भिन्नार्थत्वान्न युज्यते ॥ ७९ ॥**

यदि तूच्यते — फलभूतस्यैव ज्ञानस्य करणत्वमौपचारिकं कथञ्चित् कल्प्यते, नतु पारमार्थिकम्। पारमार्थिकं हि द्विरूपत्वमेकस्य न सम्भवति। तदौपचारिकं करणत्वमाश्रित्य तदुभयमुपपादयिष्याम इति । एवं तर्हि भिन्नयोरेव प्रमाणफलयोः कथञ्चिद् विषयैकत्वं किमिति न कल्प्यते, तथा सत्युभयं पारमार्थिकं भविष्यतीत्याह—**करणत्वे**ति । तच्च कथञ्चिद् विषयैकत्वं पूर्वमुक्तमेव । **परै**रिति । बौद्धापेक्षया स्वात्मनि परशब्द इति ॥७७॥

प्रकृतमिदानीं प्रमाणफलविवेकमुपसंहरति— **परिच्छेदे**ति । अर्थपरिच्छेदफले आत्ममनस्संयोगाद्यानन्तर्यविवक्षया प्रमाणम् । ज्ञाने च प्रमाणे पूर्वमालोचनादिज्ञानं प्रमाणम् । परं तु विशेषणादिज्ञानं फलमिति प्रकरणार्थः । सर्वं चेदम् 'एवं सत्यनुवादत्वमि'त्येतत्पक्षाश्रयणेनोक्तमिति द्रष्टव्यमिति ॥ ७८ ॥

यदि तूच्यते -- नेदमौपचारिकं करणत्वम्, अपितर्हि द्विरूपमेकमेव ज्ञानं स्वसंवित्त्या विषयाकारेण च । तदत्र स्वसंवित्तिः फलं, विषयाकारः प्रमाणम् । यथाहुः —

"विषयाकार एवास्य प्रमाणं तेन मीयते ।
स्वसंवित्तिः फलं चात्र तद्रूपो ह्यर्थनिश्चयः ॥"

इति । स तु विषयाकारः स्वयमनाकारस्य न स्वाभाविको ज्ञानस्य केवलमर्थेनाधीयत इति सौत्रान्तिकमतमुपन्यस्य निरस्यति — **स्वसंवित्ती**ति । इदं नीलमिति बहिर्विषयानुभवसमर्थमेव ज्ञानं न स्वरूपानुभवक्षमं, स्वात्मनि क्रियाविरोधादिति विज्ञानवादे वक्ष्याम इति । यच्चेदमुक्तं विषयाकारः प्रमाणमिति । तन्न, प्रमाणाभावात् । विषयाकारो

**स्वाकारश्च स्वसंवित्तिं मुक्त्वा नान्यः प्रतीयते ।**
**प्रामाण्यं यस्य कल्प्येत स्वसंवित्तिफलं प्रति ॥ ८० ॥**
**स्वाकारस्य परिच्छेदो नचाकारान्तराद् विना ।**
**तस्याप्येवं तथाच स्यान्नाकारान्तः कदाचन ॥ ८१ ॥**
**नचासश्चेतितः सत्तां स्वाकारः प्रतिपद्यते ।**
**ग्राह्ये च विषयाकारे ग्राहकोऽन्यो न लभ्यते ॥ ८२ ॥**

---

नाभार्थेन ज्ञानमाधीयत इति न नः प्रमाणं, तदधीनज्ञानवैचित्र्यानुपपत्तेः । यदि त्वयं विषयाकारो विषयस्थ एव, तदा तस्मिन् प्रमाणे भिन्नार्थत्वमपरिहार्यमेवेत्याह — प्रमाण इति ॥ ७९ ॥

अन्यन्मतं — स्वभावतः स्वच्छं ज्ञानमनादिवासनोपप्लावितानेकनीलाद्याकारमात्मानमात्मनैव गृह्णाति । तदस्य स्वाकारः प्रमाणं, विषयाकारः प्रमेयं, स्वसंवित्तिः फलमिति । यदाहुः —

''यदाभासं प्रमेयं तत् प्रमाणफलते पुनः ।
ग्राहकाकारसंवित्त्योस्त्रयं नातः पृथक् कृतम् ॥''

इति । तदेतदुपन्यस्य दूषयति — **स्वाकारश्चेति** । स्वसंवित्तिस्तावन्निषेध्यत इत्युक्तम् । यश्चायं स्वाकारः प्रमाणतया कल्पितः सोऽपि स्वसंवित्तेरन्यो नावगम्यते । संविद्रूपतैव ज्ञानस्य स्वाकारः । तच्च फलमेव किमन्यत् प्रमाणं भविष्यतीति । विषयाकारस्तु बहिरेव बाधिताकारसंवित्संविदितो नान्तर्वृत्तिमनुभवितुमर्हतीति नैवमपि समानविषयत्वमुपपादयितुं शक्यमिति भावः ॥ ८० ॥

अस्तु वा स्वसंवित्तेरन्यः स्वाकारः । स तु परिच्छिन्नो वा प्रमाणमपरिच्छिन्नो वा । न तावदपरिच्छिन्नः । अपरिच्छिन्नस्य सत्त्वायोगात् । परिच्छेदश्च न तेनैव तस्येत्यपरापराकारकल्पनायामाकारानन्त्यप्रसङ्ग इत्याह — **स्वाकारस्येति** । असञ्चेतितस्य स्वाकारस्य न सत्ता सिध्यतीत्याह — **नचेति** । इदं चानागतावेक्षणेन पूर्वमस्माभिरुक्तमेव । यश्चायं विषयाकारो ज्ञानादभिन्नो ग्राह्य इति कल्पितः, तस्यापि स्वात्मनि वृत्ति-

---

१. 'नास्ति नः' ग. पाठः. २. 'वा' क. पाठः.

**मनसश्चेन्द्रियत्वेन प्रत्यक्षा धीः सुखादिषु ।**
**मनसा सम्प्रयुक्तो हि नान्यात्मा प्रतिपद्यते ॥ ८३ ॥**
**सम्बद्धं वर्तमानं च गृह्यते चक्षुरादिना ।**

---

विरोधेन ज्ञानेन ग्रहीतुमशक्यत्वाद् अन्यस्य च ग्राहकस्यानुपलम्भनादभावः स्यादित्यभिप्रायेणाह — ग्राह्य इति । तदेवं परपक्षे त्रितयमेव मानमेयफलात्मकं लुप्यत इति दर्शितमिति ॥ ८२ ॥

ननु भवत्पक्षेऽपि सुखादिप्रत्यक्षेषु स्वसंवित्तिरेव फलमभ्युपगन्तव्यम्, ज्ञानातिरिक्तानां सुखादीनामसम्भवात् । तान्यपि ज्ञानसमानहेतुकानि । ज्ञानं हि समनन्तरप्रत्ययाद् वासनासहायाद् भवति । सुखाद्यपि रूपादिज्ञानेभ्यो वासनासहायेभ्यः परिनिष्पद्यते । अतस्तदपि ज्ञानमेव, कारणाभेदे कार्यभेदायोगात् । यथाहुः —

"तदतद्रूपिणो भावास्तदतद्रूपहेतुजाः ।
तत्सुखादि किमज्ञानं विज्ञानाभिन्नहेतुजम् ॥"

इति । एवं ज्ञानानां सतां ग्राह्यान्तराभावात् संवेदनत्वमेव, अत आह— **मनसश्चेति** । अयमभिप्रायः — न सुखादिसंवेदनान्यपि विज्ञानान्तरविधामतिवर्तन्ते । तान्यप्यन्तःकरणेन मनसेन्द्रियेण संयुक्तान्यात्मगुणान्तर्भूतान्येवात्मना प्रतिपद्यन्ते । अतो मातृमेयमानमितयस्तत्रापि भिद्यन्ते । यत्तु ज्ञानकारणत्वेन ज्ञानत्वमुक्तं, तत्र किं समवायिकारणं सुखस्य ज्ञानमाहोस्विन्निमित्तम् । न तावत् पूर्वः कल्पः, तेषां ज्ञानवदात्मसमवायित्वात् । निमित्तत्वं तु सर्वार्थक्रियास्वविशिष्टं ज्ञानस्येति तासामपि ज्ञानत्वापातः । तस्मान्न किञ्चित् स्वसंवेदनमिति । यदुक्तं परैः— 'सर्वचित्तचैत्तानामात्मसंवेदनं प्रत्यक्षमि'ति, तत् प्रत्युक्तं भवतीति ॥ ८३ ॥

ननु समस्तोऽयं प्रमाणफलप्रपञ्चो लक्षणाभ्युपगमेन भवता दर्शितः । तदिह विषयविशेषोऽपि दर्शयितुमुचितः । यथान्यैः 'कल्पनापोढमभ्रान्तं प्रत्यक्षमि'ति प्रत्यक्षलक्षणमुक्त्वा तस्य स्वलक्षणविषयत्वं दर्शितमत आह— **सम्बद्धमिति** । अयमभिप्रायः — स नाम विषयं दर्शयतु यस्य किञ्चिद्

---

१. 'क' ग. पाठः. २. 'ति' क. पाठः.

सामान्यं वा विशेषो वा ग्राह्यं नातोऽत्र कल्प्यते ॥
लक्षणं यच्च यैरुक्तं प्रत्यक्षे लौकिके सति ।
विद्यमानोपलम्भत्वात् सर्वस्यैवानिमित्तता ॥ ८५ ॥
निर्विकल्पकपक्षे तु सुतरामनिमित्तता ।
साध्यसाधनसम्बन्धो नाविकल्प्य हि गृह्यते ॥ ८६ ॥
कथं प्रत्यक्षपूर्वत्वमनुमानादिनो भवेत् ।
यदा स्मृत्यसमर्थत्वान्निर्विकल्पेन्द्रियस्य धीः ॥

---

व्यावर्त्यमास्ति, यथा बौद्धस्यैव सामान्यम् । अस्माकं तु सम्बद्धवर्तमानविषयं प्रत्यक्षं, न सामान्यविशेषयोरन्यतरदपि व्यावर्त्यमिति किं विषयनिर्देशेनेति ॥ ८४ ॥

नन्वत्र भाष्यकारेण 'प्रत्यक्षमनिमित्तम्, एवंलक्षणकं हि तत्' इत्युक्तम् । अतो यदेवंलक्षणलक्षितं तन्नामानिमित्तं भवतु । बौद्धादिलक्षितं तु किं निमित्तं न भवतीत्याशङ्क्याह — लक्षणमिति । एवं हि मन्यते — बौद्धादिलक्षणलक्षितमपि यदि लौकिकं प्रत्यक्षं, तर्हि नियतं विद्यमानोपलम्भनम् । नो चेत् प्रत्यक्षमेव न भवतीति सिद्धा सर्वस्यानिमित्ततेति ॥ ८५ ॥

ये च निर्विकल्पकप्रत्यक्षवादिनो बौद्धाः तेषां सुतरां धर्मे प्रत्यक्षस्यानिमित्ततेत्याह — निर्विकल्पकेति । अत्र कारणमाह — साध्यसाधनेति । स्वर्गयागादिसाध्यसाधनसम्बन्ध एव धर्मः, नासावविकल्प्य ग्रहीतुं शक्यत इति ॥ ८६ ॥

अत्र भाष्यकारेण प्रत्यक्षस्यानिमित्ततां प्रतिपाद्य तत्पूर्वकत्वाच्चानुमानादीनामप्यनिमित्तत्वमुक्तम् । तच्च तत्पूर्वकत्वासम्भवेनाक्षिपति — कथमिति । किमिति न भवतीत्यत आह — यदेति । एवं हि मन्यते — इन्द्रियार्थसामर्थ्यमात्रजन्मा हि धीः प्रत्यक्षम् । सा च स्मृत्याक्षिप्तनामजातिगुणद्रव्यकर्मविकल्परहिता । नहीन्द्रियाणि स्मर्तुं शक्नुवन्ति । नाप्यर्थः । यथाहुः — 'नहीन्द्रियमियतो व्यापारान् कर्तुं समर्थं, सन्निहितविषय-

**नचाविकल्प्य लिङ्गस्य लिङ्गसम्बन्धयोस्तथा ।**
**गृहीतिरुपमानेऽपि सादृश्यग्रहणात् स्मृतेः ॥ ८८ ॥**
**अर्थापत्तिः पुनः प्रायो नान्यदृष्टेऽर्थ इष्यते ।**
**प्रवर्तते च यं दृष्ट्वा सोऽप्यर्थः सविकल्पकः ॥ ८९ ॥**

बलेनोत्पत्तेरि'ति । अतो नैवंविधप्रत्यक्षपूर्वकत्वमनुमानादीनामुपपद्यत इति ॥ ८७ ॥

ननु निर्विकल्पकप्रत्यक्षपूर्वकाणि किमित्यनुमानादीनि न भवन्ति, अत आह — **नचेति** । अयमभिप्रायः — लिङ्गादिविकल्पपूर्वकाण्यनुमानादीनि । न तेषां निर्विकल्पकादेवात्मलाभः सम्भवति । नच विकल्पसम्भिन्नानां ज्ञानानां प्रत्यक्षत्वमुपपद्यते । आन्तरालिकविशेषणविशेष्यार्थस्मरणेनेन्द्रियार्थव्यापारव्यवधानात् । नच निर्विकल्पकोदये व्यापृतं सदर्थेन्द्रियं पुनः सविकल्पकोत्पत्तावपि व्याप्रियत इति प्रमाणमस्ति, विशेषणादिस्मरणसमनन्तरं सम्भवत् सविकल्पकं तद्भावभावात् तत्कारणकमेव भवेत् । अपिच यदि तदिन्द्रियं पुनः सविकल्पकोत्पत्तावपि कारणं, तत् प्रागप्यासीदिति किं न सहसैव सविकल्पकप्रत्ययानपि जनयेत् । अतो नेन्द्रियार्थसामर्थ्यजन्मानः सविकल्पकप्रत्यया इति न प्रत्यक्षम् । इन्द्रियव्यापारासत्तिमात्रेण तु प्रत्यक्षत्वे निमीलितनयनस्यापि विकल्पः प्रत्यक्षो भवेत् । यच्च नामाविकल्पकं प्रत्यक्षं न तल्लिङ्गादिविकल्पकमिति न कथञ्चित् प्रत्यक्षपूर्वकत्वमनुमानादीनाम् । उपमानेऽपि वनस्थस्य[1] गवयदर्शिनः स्मृते नगरस्थे गवि यत् सादृश्य[2]ग्रहणं, तदपि नाविकल्प्य भवतीति सम्बन्ध इति ॥ ८८ ॥

अर्थापत्तिरप्यतीन्द्रियेषु विषयेष्वेव शक्त्या श्रोत्रादिषु न परं प्रत्यक्षेण अन्येनापि प्रमाणेनादृष्टपूर्वेषु प्रवर्तते । सा कथं प्रत्यक्षपूर्विका भविष्यतीत्याह — **अर्थापत्तिरिति** । क्वचित् पूर्वदृष्टेऽपि सन्निवेशविशेषविशिष्टे प्रवर्तते, यथा गृहाभावदृशः पुरुषस्य देवदत्तस्य बहिर्भावावगम इति प्राय इत्युक्तम् । ननु भवत्वतीन्द्रियविषया अर्थापत्तिः । यत्तु अनुपपद्यमानमुपलभ्य प्रवर्तते तत् प्रत्यक्षपूर्वकं भविष्यतीत्यत आह — प्रवर्तते

---

१. 'स्थग', २. 'यसदृशस्' ग. पाठः. ३. 'श्यं त' क. पाठः

**यत्र चानुमितं लिङ्गं सूर्यगत्यादि लिङ्गि च ।**
**तत्र प्रत्यक्षपूर्वत्वं कथमध्यवसीयते ॥ ९० ॥**
**प्रत्यक्षावगते चार्थे कुतस्तेषां प्रमाणता ।**
**तैर्यदा स प्रतीयेत तदा नाक्षस्य गोचरः ॥ ९१ ॥**
**अथ कस्यचिदर्थस्य ज्ञानात् तत्पूर्वता भवेत् ।**
**तदार्थस्य भविष्यत्त्वं न स्यादज्ञानकारणम् ॥ ९२ ॥**
**वर्तमाने हि कस्मिंश्चिद् विज्ञातेऽर्थेऽक्षबुद्धिभिः ।**

चेति । योऽपि दाहादिः शक्त्याद्यर्थापत्तेर्निमित्तं सोऽपि यावत् कथमिदं कदाचित् कार्यमकस्माज्जातमिति न विकल्प्यते, न तावदर्थापत्तेर्निमित्तं भवतीति ॥ ८९ ॥

अपिच यत्र देशान्तरप्राप्त्या सूर्यस्य गतिमनुमाय गतिसाधनं लिङ्ग्यनुमीयते, तत्र कथं प्रत्यक्षपूर्वकत्वमित्याह — **यत्र चेति** । लिङ्गं सूर्यगत्यादीति सम्बन्धः । लिङ्गि तु गतिसाधनमत्र दर्शयितव्यमिति॥९०॥

प्रत्यक्षपूर्वकत्वे च गृहीतग्राहित्वादनुमानादीनामप्रामाण्यं प्रसज्यत इत्याह — **प्रत्यक्षेति** । नन्वन्यदा प्रत्यक्षं प्रमाणं भवति, अन्यदा चानुमानादीनि प्रमाणं भविष्यन्तीत्यत आह— **तैर्यदेति** । यद्यनुमानादिप्रवृत्तिकाले न प्रत्यक्षं प्रवर्तते, तदा सोऽर्थोऽक्षस्य न गोचरो भवतीति कथं प्रत्यक्षपूर्वकत्वम् । प्रत्यक्षावगतिवेलायां तु गृहीतग्राहित्वेनाप्रमाणमित्युक्तमेवेति ॥ ९१ ॥

अथोच्येत — न ब्रूमः प्रमेयमेवानुमानादीनां प्रत्यक्षेण गृह्यत इति प्रत्यक्षपूर्वकत्वम् । अपितु लिङ्गादेरन्यतरस्यादौ प्रत्यक्षेण ज्ञानात्, तदिदमाशङ्कते — **अथ कस्यचिदिति** । सर्वस्य हि जातमात्रस्य प्रथमं किञ्चित् प्रत्यक्षं, ततोऽनुमानादीति सद्दशं तत्पूर्वकत्वमिति । एतदपि दूषयति— **तदेति** । अत्रहि 'भविष्यंश्चैषोऽर्थो न ज्ञानकालेऽस्ती'ति भविष्यत्त्वं धर्मरूपस्य प्रमाणान्तरेणाज्ञाने कारणमुक्तम् । तन्न प्राप्नोतीत्यर्थः ॥ ९२ ॥

किमिति न स्यादत आह — **वर्तमान** इति । एवंहि मन्यते— प्रमाणान्तरावेद्यतासिद्ध्यर्थं हि धर्मस्य प्रत्यक्षत्वं विनिवार्यते, न पुनः प्रत्यक्ष-

**लिङ्गादविद्यमानोऽपि धर्मो गम्येत तैस्तदा ॥९३॥**
**प्रत्यक्षेण गृहीत्वा च वर्णान् वेदेऽपि गृह्यते ।**
**प्रमेयमिति सोऽपि स्यात् तत्पूर्वत्वादकारणम् ॥९४॥**
**केचित् तत्पूर्वकत्वं तु हेतुर्नैवेति मन्वते ।**
**तत्पूर्वकत्वाद् यत्तावत् प्रामाण्यं तदसम्भवः ॥९५॥**
**प्रत्यक्षेण गृहीत्वा च लिङ्गाद्यन्यतमं ध्रुवम् ।**

---

मात्रेण निवारितेन किञ्चित् प्रयोजनम् । तावतापि चोदनैवेति प्रतिज्ञाया असिद्धेः । तद् यदि क्वचिदेव प्रत्यक्षेण गृहीतेऽनुमानादीनि प्रवर्तन्त इतीदृशं तत्पूर्वकत्वमनुमानादीनां, तदा प्रत्यक्षेण वर्तमान एव क्वचिदर्थे विज्ञाते अनुमानेनाविद्यमान एव धर्मोऽवगम्यते । एवं प्रमाणान्तरैरपि । ततश्च भविष्यत्त्वेन प्रत्यक्षाग्रहणमकिञ्चित्करमेव स्यात् । यदि प्रत्यक्षविषय एव तानि प्रवर्तन्त इतीदृशं तत्पूर्वकत्वं भवति, तदा प्रत्यक्षाविषये तान्यपि न प्रवर्तन्त इति प्रमाणान्तरावेद्यता सिध्यति । चोदनैवेति च प्रतिज्ञातार्थः । लिङ्गादिति प्रदर्शनमात्रम् । तैरनुमानादिभिरित्यर्थः ॥ ९३ ॥

इष्टविघातका(री ? रि) चेदृशं तत्पूर्वकत्वमित्याह — **प्रत्यक्षेणेति** ॥ ९४ ॥

एवं दूषितमन्येषां मतेन समर्थयते — **केचिदिति** । किं नामेदमत आह — तत्पूर्वेति । एवंहि मन्यते — नात्र तत्पूर्वकत्वं प्रमाणान्तराणामनिमित्तत्वे हेतुरुच्यते, किन्तु प्रत्यक्षानिमित्तत्वे प्रतिपादिते यत् तावत् तत्पूर्वकतया प्रामाण्यसम्भावनमनुमानादीनां, तत् तावन्नास्तीत्येतदनेन भाष्येणोक्तमिति ॥ ९५ ॥

अत्र चानुमानाद्यनिमित्तत्वे हेत्वनभिधानादपरितुष्यन् समाधानान्तरमाह — **प्रत्यक्षेणेति** । अयमभिप्रायः — प्रत्यक्षदृष्टगोचराण्येवानुमानादीनि । तथाहि — नागृहीतेऽग्नौ धूमस्य तद्व्याप्तिरवधारयितुं शक्यत इति धूमदृशापि नाग्निरनुमीयत एव । यावन्नगरे गौर्न प्रत्यक्षेणावसीयते, तावद् वने गवयं पश्यतापि नोपमातुं शक्यते । तद् यदि धर्मोऽपि प्रत्यक्षेणावसीयेत, कदाचित् ततस्तद्व्याप्तलिङ्गदर्शनादनुमीयेत वा, उपमीयेत वा । न

**प्रवृत्तिरनुमानादेर्न च धर्मेऽस्ति तादृशम् ॥ ९६ ॥**

**अनुमानानुमानादेर्न चाप्यस्तीह सम्भवः ।**

**सम्बन्धिलिङ्गिलिङ्गानां पूर्वसिद्धेरसम्भवात् ॥ ९७ ॥**

**सत्ता च नानुमानेन कस्यचित् प्रतिपद्यते ।**

**धर्मेणान्यद् विशेष्यं चेत् पक्षोऽसिद्धविशेषणः ॥**

**तस्माददृष्टपूर्वत्वात् केनचिद् वस्तुना सह ।**

**धर्मस्य नानुमेयत्वमसाधारणवस्तुवत् ॥ ९९ ॥**

**अदृष्टसदृशत्वाच्च स्वयं चानुपलम्भनात् ।**

त्वसौ कदाचिद् प्रत्यक्ष इत्युपपादितम् । अयं चार्थो लिङ्गशब्दं प्रयुञ्जानेन वार्त्तिककारेण दर्शितः । नह्यसति व्याप्तिदर्शने धूमोऽग्नेर्लिङ्गं भवति । नच व्याप्तिदर्शनमसत्यग्निज्ञाने । एवमुपमानेऽपि दर्शयितव्यम् । आदिशब्देन सदृशमुपादत्त इति ॥ ९६ ॥

यच्चानुमितानुमानं न प्रत्यक्षपूर्वकमित्युक्तं तदप्ययुक्तम् । तत्रापि हि यावद् गतितत्साधनयोः प्रत्यक्षेण सम्बन्धो नावगम्यते, लिङ्गीयगति-साधनं लिङ्गं च सम्प्रति दृश्यमाना देशान्तरप्राप्तिरादित्यस्य न तावदनुमानं प्रवर्तत इत्याह — **अनुमाने**ति ॥ ९७ ॥

अनुमाने सर्वत्र धर्मी धर्मविशिष्टः प्रमेयो भवति, न वस्तुसत्तामा-त्रम् । धर्मानुमाने तु धर्मोऽस्तीति सत्तामात्रमनुमेयमापद्यते । नच तद् युक्तमित्याह — **सत्ता चे**ति । यदि त्विहापि धर्मविशिष्टः कश्चिद् धर्म्येकोऽनुमीयेत, तद्धर्मविशेषणासिद्धेरयुक्तमित्याशङ्क्या सहाह — **धर्मे-णे**ति ॥ ९८ ॥

एवमुपपादितमननुमेयत्वं प्रयोगेण दर्शयति — **तस्मा**दिति ॥ ९९ ॥

अनुपमेयत्वेऽपि धर्मस्य प्रयोगमाह — **अदृष्टे**ति । यस्य हि सादृ-श्यमस्ति तत् सदृशम् । अवयवसामान्यानुवृत्तिश्च प्रतियोगिनि सादृश्यम् । न चासाधारणस्य सामान्यानुवृत्तिः सम्भवति । तथाहि तस्यासाधारणतैव

**धर्मस्य नोपमेयत्वमसाधारणवद् भवेत् ॥ १०० ॥**
**नन्वर्थापत्तिरेवं स्याज्जगद्वैचित्र्यदर्शनात् ।**
**सुखिदुःख्यादिभेदो हि नादृष्टात् कारणादृते ॥१०१॥**
**दृष्टस्य व्यभिचारित्वात् तदभावेऽपि सम्भवात् ।**
**सेवाध्ययनतुल्यत्वे दृष्टा च फलभिन्नता ॥ १०२ ॥**
**स्यादेवं यदि शक्येत स्वाभाविकनिवारणा ।**
**कर्मशक्तेश्च वैचित्र्ये हेतुरन्यो भवेद् यदि ॥ १०३॥**

---

न स्यात् । तदयमीदृश(मे ? ए)कः प्रयोगो भवति । धर्मो नोपमीयते अदृष्टसदृशत्वादसाधारणवत् । तथैव वा नानुमीयते नोपमीयते स्वयमनुपलम्भाद् गगनकुसुमवदित्यूहनीयम् ॥ १०० ॥

आह — अस्तूपमानानुमानयोरनिमित्तत्वम् । अर्थापत्तिस्तु प्रायशोऽतीन्द्रियार्थविषया दृष्टेति तथैव जगद्वैचित्र्यदर्शनप्रसूतया धर्मोऽवगंस्यते इत्याह — **नन्विति** । जगद्वैचित्र्यमेव दर्शयति — सुखीति । ईश्वरदरिद्रादिभेदेन हि सुखिदुःख्यादिभेदभिन्नं जगदुपलभ्यते । तदेवं जगतो वैचित्र्यमसति कारणेऽनुपपद्यमानं कारणमवगमयति, तच्च धर्माधर्माविति । ननु सुखदुःखयोस्तावद् यदनन्तरं दर्शनसद्भावः, तदेव कारणम् । तत्रापि दृष्टमेवासीदिति किमदृष्टकल्पनया, अत आह — **दृष्टस्येति** । सत्यपि च दृष्टे तन्न सम्भवति । अव्यभिचारि च कारणं कारणविदामिष्टम् । अतोऽदृष्टकल्पनैव प्रसक्तेति भावः । न केवलं सति दृष्टे न भवति, असत्यपि भवत्येव । यद् यस्मिन्नसति भवति तद् न तत्कारणकं घट इव शशविषाणाकारणक इत्याह — तदभाव इति । व्यभिचारमेव प्रपञ्चयति — सेवाध्ययनतुल्यत्व इति ॥ १०२ ॥

एतदेव निराकरोति — **स्यादेवमिति** । निराकृते स्वभाववादेऽदृष्टं कल्पयितुं शक्यते । नच स्वभाववादो निराकर्तुं शक्यते । कर्मशक्तिवैचित्र्यसिद्ध्यर्थमवश्याभ्युपगमनीय इत्याह — कर्मशक्तेरिति । अवश्यं हि फलवैचित्र्यसिद्ध्यर्थं कर्मणां शक्तिभेदोऽङ्गीकरणीयः । नहि तत्र स्वभावादन्यो हेतुरुत्प्रेक्षितुमपि शक्यत इति ॥ १०३ ॥

**यथा च फलवैचित्र्ये कर्मणां शक्तता स्वतः ।**
**तथा विचित्रता लोके स्वभावादुपपत्स्यते ॥ १०४ ॥**
**अधर्मे धर्मरूपे वा ह्यविभक्ते फलं प्रति ।**
**किमप्यस्तीति विज्ञानं नराणां क्वोपयुज्यते ॥ १०५ ॥**
**किंनु यागादितो दुःखं हिंसादेः किं सुखोद्भवः ।**
**स्वर्गपुत्रादिभेदश्च कीदृशात् कर्मभेदतः ॥ १०६ ॥**
**इति यावदविज्ञानं तावन्नैव प्रवर्तते ।**
**प्रवृत्त्यङ्गं च यज्ज्ञानं तस्य मूलं प्रतीक्ष्यते ॥ १०७ ॥**
**तस्मात् सिद्धेऽपि सामान्ये विशेषो नागमादृते ।**
**विशेषस्य तु जिज्ञासा सूत्रकारेण सूत्रिता ॥ १०८ ॥**

---

अथ तत्र स्वभावो हेतुरिष्यते, एवं तर्हि[1] सोऽपि जगद्वैचित्र्यार्थमेवास्तु । किमन्तर्गडुना कर्मशक्तिकल्पनया । तदेतदाह — **यथा चेति** ॥ १०४ ॥

अथोच्येत — स्वभावो नामानपायी भवति, यथा शीतौष्ण्ये तोयतेजसोरिति[2] । इह तु धनवानेवाकस्माद् दरिद्रः । न तत् स्वाभाविकत्व उपपन्नमिति कल्पनीयमदृष्टमिति, यद्विनाशादस्य धनविनाशो जायत इति । अस्तु तर्ह्यनिर्धारितरूपा अदृष्टसिद्धिः, किमतिनिर्बन्धेन यस्त्वयं विभागः इदं धर्मफलमिदमधर्मफलमिति, स नावगन्तुं शक्यते । नच तस्मिन्ननवगते किमपि कारणमस्तीति ज्ञानं क्वचिदुपयुज्यत इत्याह — **अधर्म** इति ॥ १०५ ॥

एतदेव प्रपञ्चयति — **किंन्विति** । न केवलं धर्माधर्मफलविवेको न सिध्यति । धर्मफलानामपि स्वर्गपुत्रादीनां कीदृशात् कर्मभेदतः सिद्धिरित्येतदपि न ज्ञायत इत्याह — स्वर्गपुत्रादीति ॥ १०६ ॥

नच वाच्यं मा ज्ञायि कर्मफलविवेकः । अस्ति तावत् कारणसामान्यज्ञानमिति । तावता च प्रवृत्त्यभावादित्याह — **इतीति** । प्रवृत्त्यङ्गस्य च ज्ञानस्य हानोपादानार्थिभिर्मूलं परीक्ष्यत इत्याह — प्रवृत्तीति ॥ १०७ ॥

---

१. 'र्हि तदपि' क. पाठः. २. 'सोः । इ' ग. पाठः.

**गम्यमाने विशेषे च तदन्तर्भावकारितः ।**
**सामान्यप्रत्ययोऽपि स्याच्छास्त्रादेवेत्यकारणम् ॥**
**यथार्थापत्तिरेवं च नानुमा नोपमेष्यते ।**
**शास्त्रं चेत् तदपेक्षेत तस्यैव स्यात् प्रमाणता ॥११०॥**
**प्रत्यक्षाग्रहणं यत्तु लिङ्गादेरविकल्पनात् ।**
**तन्नेष्टत्वाद् विकल्पस्याप्यर्थरूपोपकारिणः ॥ १११ ॥**

उपसंहरति — **तस्मा**दिति । सूत्रकारेणापि विशेषजिज्ञासैव प्रतिज्ञाता, उपरिष्टाद् विशेषाणामेव जिज्ञास्यमानत्वात् । स च विशेषोऽनन्यप्रमाणक इत्युक्तमित्याह — विशेषस्येति ॥ १०८ ॥

काणादास्तु जगद्वैचित्र्यात् सामान्यतः सिद्धेरागमेन विशेषतोऽवगम्यते । तदयं द्वाभ्यामेव प्रमाणाभ्यां परिनितिष्ठतीति वदन्ति, तत्राह— **गम्यमान** इति । एवं हि मन्यते — सामान्यावगतौ त्विह विशेषो न निर्धार्यते व्यभिचारात् । विशेषस्तु सिध्यन् नानालीढसामान्य एव सिध्यतीति किं पृथक् तत्र प्रसिद्ध्या । तस्मादकारणमर्थापत्तिः सामान्यसिद्धाविति ॥ १०९ ॥

ये तु वदन्ति— नेयमर्थापत्तिः, किन्तु सामान्यतोदृष्टानुमानमिदम् । कार्यसामान्यस्य कारणसामान्येन व्याप्तेः । अतो जगद्वैचित्र्यार्थापत्तिवादिनामिवानुमानमेवेदमिति । तेऽप्यर्थापत्तिनिरासेनैव निरस्ता इत्याह—**यथे**ति । अयमर्थः — जगद्वैचित्र्यार्थापत्तिरिव सामान्यतोदृष्टानुमानं प्रवर्तत इति यानुमानस्योपमा कृता, सार्थापत्तिनिराकरणमात्रेणैव नेष्यते नानुमेष्यते नोपमेष्यत इति तु ये वदन्ति, तेषामुत्रमायामभागी प्रतिषेध इति । यदि त्वनुमानमपि विशेषावधारणे शास्त्रापेक्षमित्युच्यते, तदेव तर्हि सामान्यविशेषयोरपि निरपेक्षं प्रमाणमापद्यत इत्याह — **शास्त्रं चे**दिति ॥ ११० ॥

एवं तावत् प्रत्यक्षेण लिङ्गाद्यन्यतमं गृहीत्वानुमानादि प्रवर्तत इति प्रत्यक्षपूर्वकमित्युक्तम् । इदानीं तु यदुक्तं न लिङ्गादिप्रत्यक्षमविकल्पनात्, प्रत्यक्षस्य लिङ्गादिग्रहणस्य च सविकल्पकत्वादिति । तद् दूषयितुमनुभाषते — **प्रत्यक्षे**ति । एवमनुभाष्य दूषयति — **तन्ने**ति । कारणमाह — **इष्टत्वा**दिति । अयमभिप्रायः — नायमेकान्तः निर्विकल्पकमेव

**अस्ति ह्यालोचनाज्ञानं प्रथमं निर्विकल्पकम् ।**
**बालमूकादिविज्ञानसदृशं शुद्धवस्तुजम् ॥ ११२ ॥**

---

प्रत्यक्षमिति । तदुत्तरकालं हि यदनुपरतेन्द्रियव्यापारेण विकल्पोपकृतमर्थरूपमनुभूयते, तदपि प्रत्यक्षमित्युपरिष्टात् प्रपञ्चयिष्यामः । अतः सविकल्पकप्रत्यक्षपूर्वकत्वमनुमानादीनामुपपन्नमिति ॥ १११ ॥

अत्र कश्चिदपिशब्दमसहमानः प्रत्यवतिष्ठते । एवंहि मन्यते— सर्व एव सविकल्पकः प्रत्ययः, वाग्रूपानुविद्धबोधात् । नहि स नाम लोके प्रत्ययो दृश्यते यः शब्दानुगमाद् विना भवति । व्यवहारार्थं च प्रमाणमनुध्रियते । नच निर्विकल्पकेन कश्चिद् व्यवहारोऽस्ति, सर्वव्यवहाराणां विशेषनिश्चयाधीनत्वाद् निश्चयस्य च विकल्पमन्तरेणाभावात् । यदि तूच्यते अस्ति बालानां तिरश्चां चाविकल्पः प्रत्ययः व्यवहारश्चेति । तन्न । तेषामपि सूक्ष्मवागुपपत्तेः । त्रेधा हि वाचं विभजन्ते वैखरी मध्यमा सूक्ष्मा चेति । यथोक्तं —

> "शब्दब्रह्मैव तेषां हि परिणामि प्रधानवत् ।
> वैखरीमध्यमासूक्ष्मावागवस्थाविभागतः ॥"

इति । किं पुनर्बालानां सूक्ष्मशब्दसद्भावे प्रमाणं, प्रत्ययत्वमेव । प्रत्यया हि ते कथमशब्दा भविष्यन्ति अस्मदादिप्रत्ययवदेव । कथमव्युत्पन्ना बालाः शब्देनार्थं योजयन्तीति चेद्, न । प्राग्भवीयशब्दवासनावशादुपपत्तेः । अस्ति हि तेषां भवान्तरीयशब्दवासना । सादृश्यवशादभिव्यक्ता सती शब्दस्मरणमुपकल्पयति । ततः सूक्ष्मशब्दसम्भिन्नमर्थं बाला अपि प्रतिपद्यन्ते इत्यतोऽयुक्तो विकल्पस्यापीत्यपिशब्द इत्यत आह— **अस्तीति**। अयमभिप्रायः— अयमप्यनेकान्तः यः सविकल्पक एव प्रत्यक्ष इति । आलोचनाज्ञानमपि सविकल्पकात् पृथग्भूतमस्ति । प्रतीमो हि वयमुन्मिषितचक्षुषः सहसा संमुग्धं द्व्याकारं परमार्थं वस्तु, यत् सामान्यं विशेष इति च पश्चात् परीक्षका विभजन्ते । यदितु नादावुदीयते निर्विकल्पकं विज्ञानमित्युच्यते, ततः सविकल्पकमपि कथमात्मानं लभते । तद्धि संङ्केतकालभाविशब्दादिस्मरणपूर्वकम् । नचाकस्मादेव तत्स्मरणमाविरस्ति, निर्विकल्पकोद्बोधितप्राचीन-

**न विशेषो न सामान्यं तदानीमनुभूयते ।**
**तयोराधारभूता तु व्यक्तिरेवावसीयते ॥ ११३ ॥**

---

भावनाबीजजन्मानस्तु विकल्पा इति युक्तं यदात्मानं लभत इति । यदपि चाव्यवहाराङ्गत्वं निर्विकल्पकस्येत्युक्तम् । तदयुक्तम् । नहि व्यवहारार्थमेव प्रमाणमाश्रीयते । उपेक्षा हि प्रमाणफलमिष्यत एव । अपिच सन्ति केचिद् व्यवहाराः ये निर्विकल्पकमात्रादेव भवन्ति, यथाग्निना दह्यमानस्य सहसापसरणम् । तद्धि परामर्शानपेक्षमेव झटिति जायमानमुपलभ्यते । तिर्यग्बालानां चाविकल्पकेनैव सर्वो व्यवहारः । नच तेषां सूक्ष्मशब्दसद्भावे प्रमाणमस्ति । प्रत्ययत्वस्यास्मदादिस्वसंवेद्याविकल्पकप्रत्ययेनानैकान्तिकत्वात् । कथंच तेषामगृहीतसम्बन्धानां शब्दसम्भिन्नार्थबोधः । यदुक्तं प्राग्भवीयवासनावशादुपपत्तिरिति, तन्न । तस्याः प्रायेण मरणेनोच्छेदात् । भवान्तरानुभूतस्मरणे वा परस्तादपि सम्बन्धग्रहणानर्थक्यम् । यो हि जातमात्रः सूतिकाशयने शयानः कुमारको भवान्तरीयं स्मरति, स कथमुपरिष्टान्न स्मरिष्यति । अथ मतं परस्तादस्य संस्कारो नश्यतीति । तन्न । यस्य हि निधनेन योनियन्त्रपीडया च संस्कारो न विनष्टः, तस्य कथमकस्मादेव द्वित्रैरेव वर्षैः संस्कारनाशो भवति । तस्मादस्ति बालानामविकल्पः प्रत्ययः, तन्मूलश्च व्यवहार इति सिद्धं निर्विकल्पकमपि प्रत्यक्षमिति । आदिशब्देन च जातमात्रस्य बधिरस्य तिरश्चां च ज्ञानमुपादत्त इति ॥ ११२ ॥

नन्वर्थेन्द्रियसामर्थ्यमात्रजं ज्ञानं निर्विकल्पकम् । न तत्रानुवृत्तिव्यावृत्ती प्रतिभासेते । नच ते अन्तरेण सामान्यविशेषौ प्रकाशेते । अतः कथं तद्विषयं निर्विकल्पकं भविष्यतीत्याशङ्क्याह — न विशेष इति । एवंहि मन्यते — सत्यमापातजं निर्विकल्पकं सामान्यविशेषौ न प्रकाशयति । किमत्रानिष्टमापादितमिति । ननु यदि सामान्यविशेषौ न प्रतीयेते, किं नाम तेनावगन्तव्यम् । नहि तदतिरिक्तं वस्त्वस्तीत्यत आह — तयोरिति । अयमभिप्रायः — व्यक्तिमात्रगोचरं निर्विकल्पकम् । अस्ति च विशेषातिरिक्ता व्यक्तिः । बाढं, योऽर्थः सामान्यस्य विशेषाणां चाश्रयः सा व्यक्तिः । के पुनरमी विशेषाः । खण्डादयः, यैरितरेतरं व्यक्तयो विशेष्यन्ते । सामान्यं तु

**महासामान्यमन्यैस्तु द्रव्यं सदिति चोच्यते ।**
**सामान्यविषयत्वं च प्रत्यक्षस्यैवमाश्रितम् ॥ ११४ ॥**
**विशेषास्तु प्रतीयन्ते सविकल्पकबुद्धिभिः ।**

---

स्वप्रकाशमेव । इदं च निर्विकल्पकेन सामान्यविशेषयोरग्रहणं सामान्यमिदं विशेषोऽयमिति च विविच्याग्रहणादुक्तम् । तयोरपितु स्वरूपं प्रकाशत एव । तदेतदुपरिष्टाद् वक्ष्याम इति ॥ ११३ ॥

अद्वैतवादिनस्तु सन्मात्रविषयं निर्विकल्पकं प्रत्यक्षमित्याचक्षते, तदेतदुपन्यस्यति— **महासामान्यमिति** । एवंहि मन्यन्ते— निर्विकल्पकं प्रत्यक्षं वस्तुस्वरूपं विदधाति न वस्त्वन्तरेभ्यो विविनक्ति । इदमिति हि तत् प्रकाशते न पुनर्नेदमिति । नचाप्रकाशमाने विवेके विशेषाः प्रतिभाता भवन्ति । अपिच गवाश्वयोरितरेतरव्यवच्छेदो विशेषः । तदिह किमेकव्यवच्छेदपूर्वकोऽपरस्य विधिः, आहोस्विदेकविधिपूर्वकोऽन्यस्य व्यवच्छेदः, अथ युगपदुभयम् । न तावद् व्यवच्छेदपूर्वको विधिः सम्भवति, निराश्रय व्यवच्छेदानुपपत्तेः । निर्ज्ञातस्वरूपं कुतश्चिद् व्यवच्छिद्यते । अनवगते तु किं कुतो व्यवच्छिद्यते । अतएव यौगपद्यमप्यनुपपन्नम् । विधिपूर्वकस्तु व्यवच्छेदो न क्षणान्तरमध्रियमाणे ज्ञाने सम्भवति । नहि तदेकं विधाय सहसा निरुद्धं क्षणान्तरेऽन्यं व्यवच्छेतुमुत्सहते । अपिच इतरेतराभावो विशेषः । स कथं प्रत्यक्षविषयो भविष्यति, षष्ठप्रमाणविषयत्वात् । अतः सन्मात्रग्राहि प्रत्यक्षम् । तदयमर्थः— द्रव्यं सदित्येवमादीतिपर्यायवाच्यं महासामान्यमन्यैः प्रत्यक्षस्य ग्राह्यमुच्यत इति । एवमनेन प्रकारेण सामान्यविषयत्वं प्रत्यक्षस्य तैराश्रितमित्याह— सामान्येति ॥ ११४ ॥

नन्वेवमप्यप्रतिभासमाना विशेषा न सन्त्येवेति कथं सामान्यमपि सेत्स्यतीत्यत आह— **विशेषास्त्विति** । अनादिकालीनवासनोपप्लावितविचित्रविकल्पवतीभिर्बुद्धिभिर्विशेषाः प्रकाश्यन्ते । अतस्तदाश्रयः सामान्यव्यवहारो भवति । परमार्थतस्तु न तत् सामान्यम् । एकमेव तु प्रत्यस्तमितसमस्तसामान्यविशेषादिप्रपञ्चं तत्त्वमास्थीयते वेदान्तविद्भिः । तथाच

**ते च केचित् प्रतिद्रव्यं केचिद् बहुषु संश्रिताः ॥ ११५ ॥**

**तानकल्पयदुत्पन्नं व्यावृत्त्यनुगमात्मना ।**
**गव्यश्वे चोपजातं तु प्रत्यक्षं न विशिष्यते ॥ ११६ ॥**

---

सर्वविशेषोपसंहार उक्तः— 'सदेव सोम्येदमग्र आसीत्' 'नेह नानास्ति किञ्चने'ति । के पुनस्ते विशेषाः ये सविकल्पकबुद्धिभिः प्रतीयन्त इति तत्स्वरूपं दर्शयति — तेचेति । द्विधा खलु विशेषाः साधारणा असाधारणाश्चेति । साधारणा यथा द्रव्यत्वादयः । तर्हि पृथिव्यादयः सदन्तरेभ्यो गुणकर्मभ्यो विशिष्यन्त इति विशेषा इत्युच्यन्ते । तानेव तु बहुषु संश्रिता इति ॥ ११५ ॥

आह — द्रव्यत्वं हि नवसु पृथिव्यादिषु संश्रितमसाधारणास्तु ये प्रतिद्रव्यमन्येऽन्ये च । के पुनस्ते । यदि खण्डादयः, तन्न । तेषामपि साधारणत्वात् । खण्डमुण्डादीनामपि ह्यन्या अन्या व्यक्तयो भवन्ति । एवं रूपादिष्वपि दर्शयितव्यम् । अतो नासाधारणा नाम विशेषाः केचिदवगम्यन्ते । ये तु नित्यद्रव्यवृत्तयोऽन्त्या विशेषाः, ते व्यावृत्तिबुद्धेरेव हेतुत्वाद् विशेषा एवेति कैश्चिदुक्तम् । तदयुक्तं, प्रमाणाभावात् । तथाहि — न तावदर्वाग्दशामस्मद्विधानां ते बुद्धिविषयाः । योगिनस्तु तान् पश्यन्तीति न नः प्रमाणं क्रमते । नचैवं तैरदृष्टपूर्वैः किञ्चिद् विदितसम्बन्धं लिङ्गमस्ति यतः प्रमास्यन्त इति वक्तव्याः प्रतिद्रव्यवर्तिनो विशेषाः । त उच्यन्ते । सत्यमेकैकश आलोच्यमाना रूपादयो नासाधारणाः यावता गुणजात्यादिगणेनैकैका व्यक्तिः व्यक्त्यन्तरेभ्यो विशिष्यते सोऽसाधारण एव । बहुसाधारण्येऽपि हि यदेव किञ्चिद् यस्यामेव व्यक्तौ न्यूनमधिकं वा भवति, तेनैवासाधारणव्यपदेशो भवति । तच्चतदाकृत्यधिकरणं असाधारणविशेषा व्यक्तिरिति व्याख्यानावसरे वार्त्तिककारो वक्ष्यति । तानिमान् व्यावृत्त्यनुगमात्मनावस्थितानुभयविधानपि विशेषानकल्पयन् । गव्यश्वे वा प्रत्यक्षमुत्पन्नं न विशिष्यते । विषयविशेषनिबन्धनो हि ज्ञानविशेषः । न चेह विषयविशेषो निर्भासते दुरधिगमो ज्ञानविशेषः । अतः प्रत्यक्षज्ञानं सन्मात्रगोचरमेवेति सिद्धम् । तदेतदाह — तानिति ॥ ११६ ॥

१. 'यः' स क. पाठः २. 'शे'. ३. '...र्यांर' ग. पाठः ४. 'नु । ...' क. पाठः. ५. 'तीतिन', ६. 'ना' ग. पाठः.

**तदयुक्तं प्रतिद्रव्यं भिन्नरूपोपलम्भनात् ।**
**नह्याख्यातुमशक्यत्वाद् भेदो नास्तीति गम्यते ॥ ११७ ॥**

एतन्निराकरोति — तदयुक्तमिति । अयमभिप्रायः — किमुन्मिषितचक्षुषो विचित्रान् भावानुपलभमानस्य बुद्धिर्विशिष्यते न वा । यदि नेत्याह, किमस्योत्तरेण । अथ विशिष्यते, सैव तर्हि विलक्षणाकारा बुद्धिरुपजाता असंशयिता देशादिभेदेऽप्यनुपजातव्यतिरेका एकत्वमिव नानात्वमपि स्थापयति । कथं ह्येकबुद्धिगोचरयोर्नानात्वैकत्वयोरेकं सत्यमितरच्चालीकं भविष्यति । यत्तु विदधाति वस्तुनः स्वरूपं प्रत्यक्षं न निषेधतीत्युक्तम् । सत्यम् । विदधदेतद् भिन्नमेव विदधाति तथा प्रतीतेः । नन्वितरप्रतिषेधाद् विना भिन्नं विधातुमेव न शक्यते । नैवम् । न हीदमितरप्रतिषेधाद् वस्तु भिन्नं, किं तर्हि स्वरूपेणैव । अतस्तत् प्रकाशते । भिन्नं न प्रकाशत इति दुर्भणम् । अतएवेतरेतराभावस्य प्रत्यक्षतापत्तिरिति यदुक्तं तदपि प्रत्युक्तम् । नहि भिन्नं ग्रहीतुमितरेतराभावो ग्रहीतव्यः । सोऽपि तत्रास्तु तावत् । न प्रत्यक्षेणावसीयते । पश्चात् तु प्रतियोग्यादिस्मरणपुरस्सरं मानविकल्पनासावध्यवसीयते । योऽपि विधिव्यवच्छेदयोः क्रमयौगपद्यविकल्पः, सोऽप्यसदर्थ एव । न ह्यत्र निर्विकल्पकोदयकाले व्यवच्छेदावगतिरस्ति । किं तत्क्रमादिपरिचोदनया । स्वरूपमात्रं तु वस्तुनः प्रकाशते । तच्चानुभवबलादेव विलक्षणमित्युक्तम् । ननु यदि स्वरूपभिन्नं वस्तु किं विशेषैः । न प्रयोजनवशाद् वस्त्वाश्रीयते । किन्तु संविद्वशेन । सा चाविशिष्टा विशेषेष्विति विशेषाः कथं नाश्रीयेरन् । अपिच असत्सु विशेषेषु तद् भिन्नं स्वरूपमेव न संवर्तते । यथा असत्सु चित्रावयवनीलादिषु चित्ररूपम् । नचैतावता तत् तेभ्यो भिन्नं भवति । नच तद्ग्रहणमन्तरेण गृह्यते । तद्वद् विशेषवशप्रभावितमेव द्रव्यस्य भिन्नं रूपं तद्ग्रहणसमकालं चानुभूयत इति तन्निरपेक्षग्रहणप्रसङ्गोऽपि न चोदनीयः । सर्वं चैतत् संविद्बलादेवास्माभिरभिधीयते । नपुनरलौकिकं किञ्चिदुपकल्प्यते । एतदेवाभिप्रेत्य भिन्नरूपोपलम्भनात् इत्युक्तम् । किमुक्तं भवति । रूपमेव तद् यदेतद् भिन्नम् । अतो युक्तं यदन्यव्यवच्छेदादिबोधनिरपेक्षेण प्रत्यक्षेणावसीयत इति । आह—तत् तर्हि रूपं व्याक्रियतामिदं नामेति, अत आह — नहीति । अयमभिप्रायः — नोपाख्या

**निर्विकल्पकबोधेऽपि द्व्यात्मकस्यापि वस्तुनः ।**
**ग्रहणं लक्षणाख्येयं ज्ञात्रा शुद्धं तु गृह्यते ॥ ११८ ॥**
**नह्यसाधारणत्वेन परव्यावृत्त्यकल्पनात् ।**

---

वस्तुनः सत्त्वे कारणम् । अपिनर्हि, प्रख्या । अस्ति चात्र निर्विकल्पकदशायामपि विलक्षणवस्तुसंविद् भिन्नरूपविषया सा इति च दर्शितम् । तच्च निर्विकल्पकप्रतिभातं रूपं पश्चात् तु द्वित्रादिभिर्विशेषैः परस्मा अप्यदूरान्तरेण दर्शयितुं शक्यमेवेति ॥ ११७ ॥

किमिदानीं व्यावृत्तरूपविषयमेव निर्विकल्पकं, नेत्याह — **निर्विकल्पकेति ग्रहणमन्तेन** । सामान्यविशेषात्मनोऽपि वस्तुनो ग्रहणमित्यर्थः । तथाहि — यदायमेकदा नानात्मनो गोपिण्डानुपलभते, तदास्य सहसैवाविकल्पकेन व्याकारा मतिराविरस्ति । एकव्यक्तिबोधेऽपि चासावाकारोऽवभासत एव । रूपं हि तद् व्यक्तेः, कथं तस्यां प्रकाशमानायां न प्रकाशेत । तथा दृष्टैकव्यक्तेतरपरदर्शने स एवायं गौरिति प्रत्यभिज्ञेति । नच तददृष्टपूर्वे सम्भवति । आह च —

> ''तत्रार्थापत्तितः पूर्वं दृष्टेयमिति गम्यते ।
> नैव हि प्रागदृष्टेऽर्थे प्रत्यभिज्ञानसम्भवः ॥

इति । ननु न विशेषः न सामान्यं निर्विकल्पकेनानुभूयत इत्युक्तम् । कथमिदानीं द्व्यात्मकस्यापि ग्रहणमित्युच्यत इत्यत आह—लक्षणाख्येयमिति । अयमर्थः— लक्षणाख्येयमिदं निर्विकल्पकस्य रूपं सामान्यविशेषात्मकं वस्तु निर्विकल्पकेन विषयीक्रियत इति । तच्च निर्विकल्पकलक्षणकारैरेव परीक्षकैराख्यायते । प्रमाता तु सामान्यमिदं विशेषोऽयमिति च विवेकविधुरमिदमिति संमुग्धरूपमेव वस्तूपलभते । शुद्धमिति । अनुवृत्तिव्यावृत्तिपरामर्शरहितं गृह्यत इत्यर्थः । शुद्धवस्तुजमित्यत्रापि शुद्धशब्दस्यायमेवार्थो द्रष्टव्यः ॥ ११८ ॥

शुद्धं गृह्यत इत्येतदेव प्रपञ्चयति — **नहीति**[2] । अयमभिप्रायः— स्वरूपमात्रेण सामान्यविशेषौ निर्विकल्पकेन गृह्येते । नासाधारणतया ।

१. 'सविषयरूपमेव', २. 'त्वि' ग पाठः.

**विशेषावगमाक्लृप्तेः सामान्यमिति नापि तत् ॥**
**ततःपरं पुनर्वस्तुधर्मैर्जात्यादिभिर्यया ।**
**बुद्ध्यावसीयते सापि प्रत्यक्षत्वेन सम्मता ॥ १२० ॥**
**करणं चेन्द्रियं बुद्धिर्न तत्र ज्ञानमाहितम् ।**
**तत्स्मृत्याद्यसमर्थत्वाद् विकल्पोऽतो न वार्यते ॥**
**आत्मन्येव स्थितं ज्ञानं स हि बोद्धात्र गम्यते ।**
**स्मरणे चास्य सामर्थ्यं सन्धानादौ च विद्यते ॥**

---

सामान्यतया च व्यावृत्त्यनुगमविकल्पाभावात् । ननु किं तदन्यद् व्यावृत्तेरनुगमाच्च विशेषस्य सामान्यस्य च स्वरूपं यद् गृह्यत इत्युच्यते । स एव तयोरात्मा । कथं तदग्रहे तयोरग्रहणमुपपत्स्यते । अहो विवेककौशलं तत्रभवताम् । अनुगमव्यावृत्तिधर्माणौ सामान्यविशेषौ न पुनरनुगतिव्यावृत्ती एवेति यत्किञ्चिदेतत् ॥ ११९ ॥

एवं निर्विकल्पकं व्याख्यायेदानीं तद्बलभाविनः सविकल्पकस्य प्रत्यक्षत्वप्रमाणत्वे दर्शयिष्यन् प्रत्यक्षतां तावदाह — **ततः परमिति** । अस्यायमर्थः — ततो निर्विकल्पकात् परं जातिगुणकर्मनामभिर्यया बुद्ध्या विकल्प्य वस्तु गृह्यते यथा गौरयं शुक्लोऽयं डित्थोऽयमिति, सापि प्रत्यक्षत्वेन सम्मतेति ॥ १२० ॥

ननूक्तमिन्द्रियार्थसामर्थ्यमात्रजं हि ज्ञानं प्रत्यक्षमिति स्मृत्याकृष्टसमस्तनामजात्यादिबलभुवश्च विकल्पाः । नचेन्द्रियाणामर्थस्य च स्मरणसामर्थ्यमित्यप्रत्यक्षं सविकल्पकमित्यत आह— **करणं चेति** । अयमर्थः— यदीन्द्रियाणि स्मृत्वार्थं विकल्पयन्तीत्यस्माभिरुच्येत, तदेवमुपालभ्येमहि यत् तानि स्मर्तुं न शक्नुवन्तीति । नत्वेतदेवम्, इन्द्रियाणां करणत्वात् । कर्तरि चात्मनि स्मरणसमवायात् । अतस्तत्स्मृत्याद्यशक्तिरदोष एवेति ॥ १२१ ॥

किमाश्रितं तर्हि ज्ञानमत आह — **आत्मन्येवेति** । आत्मा हि चेतयते । स च प्राग्भवीयधर्मोपार्जितेन्द्रियोपनीतमर्थं बुध्यते स्मरत्यनुसन्धत्ते चेति न किञ्चिदनुपपन्नमिति ॥ १२२ ॥

---

१. तः स्मृ' क. पाठः.

तेनेन्द्रियार्थसम्बन्धे विद्यमाने स्मरन्नपि ।
विकल्पयन् स्वधर्मेण वस्तुप्रत्यक्षवान्नरः ॥ १२३ ॥
तच्चैतदिन्द्रियाधीनमिति तैर्व्यपदिश्यते ।
तदसम्बन्धजातं तु नैव प्रत्यक्षमिष्यते ॥ १२४ ॥
पुनः पुनर्विकल्पेऽपि सती जातिः प्रतीयते ।
तत्संबन्धानुसारेण सर्वं प्रत्यक्षमिष्यते ॥ १२५ ॥
न हि प्रविष्टमात्राणामुष्णाद् गर्भगृहादिषु ।
अर्था न प्रतिभान्तीति गृह्यन्ते नेन्द्रियैः पुनः ॥ १२६ ॥
यथा त्वाभासमात्रेण पूर्वं ज्ञात्वा स्वरूपतः ।
पश्चात् तत्रावबुध्यन्ते तथा जात्यादिधर्मतः ॥ १२७ ॥

---

नन्वेवमिन्द्रियसम्प्रयोगस्य शब्दादिस्मरणेन व्यवहितत्वादप्रत्यक्षमापद्येतेत्युक्तम्, अत आह — तेनेति । अयमभिप्रायः — नात्रेन्द्रियार्थसम्बन्धो विच्छिन्नः । विद्यमाने च तस्मिन् शब्दादि स्मरन्नपि येनैव जात्यादिना वस्तु विकल्प्य गृह्णाति तत्र प्रत्यक्षवान् नरो भवत्येव । स्मरणेनेन्द्रियाणामदूषितत्वादिति भावः ॥ १२३ ॥

नन्विन्द्रियमात्रप्रभावितं प्रत्यक्षमित्युच्यते । तत्र शब्दादिस्मरणसहितानीन्द्रियाणि कारणमिति कथं प्रत्यक्षशब्दवाच्यत्वमत आह — तच्चैतदिति । इन्द्रियाधीनं ज्ञानं प्रत्यक्षमाख्यायते । गौरयमित्यपरोक्षाभासं ज्ञानमनुपरतेन्द्रियव्यापारस्य जायमानमिन्द्रियाधीनमेवेति तैरिन्द्रियैर्व्यपदिश्यत एव, स्मृतिसहायानामपि तेषामेव कारणत्वादिति भावः ये त्वनपेक्षिताक्षव्यापारा एव गौरयमित्यादिस्मरणविकल्पाः तेऽस्माभिरपि स्मृतिमात्रहेतुत्वान्न प्रत्यक्षतयेष्यन्त इत्याह — तदसम्बन्धेति ॥ १२४ ॥

इन्द्रियसम्बन्धानुसारिणस्तु भूयांसो विकल्पाः प्रत्यक्षशब्दवाच्या एवेत्याह — पुनरिति ॥ १२५ ॥

यत्तूक्तं — यदीन्द्रियाणि विकल्पोदये कारणं किं न सहसैव जनयन्तीति, तत्राह — नहीति ॥ १२६ ॥

अथास्फुटावभासमापातजं तत्रैन्द्रि(य ? यि)कं ज्ञानमस्तीत्युच्यते तदत्रापि समानमित्याह — यथेति ॥ १२७ ॥

**यदि त्वालोच्य सम्मील्य नेत्रे कश्चिद् विकल्पयेत् ।**
**न स्यात् प्रत्यक्षता तस्य सम्बन्धाननुसारतः ॥**
**असम्बन्धविकल्पेऽपि तुल्यमात्मादिकारणम् ।**
**तेनासाधारणत्वं स्यादत्राक्षस्यैव कल्पने ॥ १२९ ॥**
**निर्विकल्पकबोधेऽपि नाक्षं केवलकारणम् ।**

यत्तूक्तं — किञ्चिद् दृष्टवतो निमीलितनेत्रस्यापि विकल्पः इन्द्रियव्यापारासत्तिमात्रेण प्रत्यक्षो भवेदिति, तन्न । अनभ्युपगमादेवेत्याह — **यदि त्विति** । अयमभिप्रायः — नेन्द्रियव्यापारासत्तिरैन्द्रि(य ? यि)कत्वे कारणं, किं तर्हि, इन्द्रियव्यापारानुपरति । अत इन्द्रियसम्बन्धानुसाराभावात् तत्र प्रत्यक्षता न स्यादिति ॥ १२८ ॥

नन्वनेकात्माक्षादिकारणं सविकल्पकं, कथं तदक्षेणैव व्यपदिश्यते अत आह — **असम्बन्धेति** । अयमर्थः — असाधारणं हि शब्दप्रवृत्तौ कारणम् । आत्मादि च कारणमिन्द्रियासम्बन्धार्थेषु विकल्पेषु स्मरणानुमानादिषु तुल्यम् । अक्षमेव त्वपरोक्षावभासिनः सविकल्पकस्योदयेऽसाधारणकारणमिति तेनैव व्यपदिश्यते । कल्पन इति सविकल्पकज्ञान इत्यर्थः ॥

निर्विकल्पकप्रत्यक्षवादिनामपीदं चोद्यं समानमित्याह — **निर्विकल्पकेति** । यदि त्विन्द्रियजन्मनो हि निर्विकल्पकस्यानन्तरं सम्भवदेतत् सविकल्पकं तत्कारणकमेव, इन्द्रियं तु निर्विकल्पकोत्पत्तावेवोपक्षीणव्यापारमित्युच्यते, तथापि परम्परयाक्षकारणत्वेन प्रत्यक्षं व्यपदेक्ष्यते । यथा कुसुमं पङ्कजमिति । नहि तत् पङ्काज्जायते । किं तर्हि पङ्कभुवः कन्दात् केवलम् । इदं परम्परयाक्षजत्वमविशिष्टमनुमानादीनामिति तेषां प्रत्यक्षशब्दवाच्यतानिराकरणार्थं रूढिमभ्येषिष्यामः । यथा पङ्कजशब्द एव व्यवहितस्य योगस्य सौगन्धिकादिसाधारण्यान्नियामिका रूढिरिष्यते । सेयं योगरूढिरिति वार्त्तिककारीयैराख्यायते । तदेतदाह — तत्पारम्पर्येति । इदं त्विह वचनीयम् — रूढिश्चेदाश्रिता किं योगाभ्युपगमेन । समुदायशक्त्यैव हि तदाश्वकर्णादिवत् क्वचिदेव शब्दो वर्तिष्यते क्वचिच्च नेति किं

१. 'म्बन्धवि', २. 'नि'. ३. 'कोदये', ४. 'णम् इ', ५. 'जए' क. पाठः.

**तत्पारम्पर्यजाते वा रूढिः स्यात् पङ्कजादिवत् ॥**
**अनिमित्तैव वा रूढिः सुतरां सविकल्पकम् ।**
**प्रत्यक्षं सम्मतं लोके न तथा निर्विकल्पकम् ॥**
**वृद्धप्रयोगगम्याश्च शब्दार्थाः सर्व एव नः ।**
**तेन यत्र प्रयुक्तोऽयं न तस्मादपनीयते ॥ १३२ ॥**

योगव्यसनेन । न व्यसनितया योगमाश्रयामः, प्रतीतं तु योगं न हातुं क्षमामहे अवघात इव दृष्टम् । यथा तत्रैव नियमान्यथानुपपत्त्या दृष्टकल्पना, तथात्रापि प्रयोगनियमार्थं समुदायशक्तिकल्पनेति किमनुपपन्नम् । नन्वप्रयोगादेवान्यत्राप्रयोगो भविष्यतीति । किमिदमप्रयोगादप्रयोग इति । यदि पूर्वपूर्वेषां प्रयोक्तॄणामप्रयोगादुत्तरोत्तरेषामप्रयोग इति । तदयुक्तम् । अप्रयोगाभावात् । प्रयोगमात्रे हि प्रवृत्तिहेतुता, अवयवयोः स्वार्थे प्रयोगो दृश्यत एव । समुदायस्तु नान्यः कश्चिद् यस्याप्रयोग इति शक्यते वक्तुम् । समुदायशक्तेरनभ्युपगमात् प्रयोगमात्रादेव पङ्कजादिशब्दप्रवृत्तेः । प्रयुक्तो हि पङ्कशब्दः पङ्के । जनिः प्रादुर्भावे । तदतिरिक्तं वस्तु समुदायो नास्त्येव । कस्याप्रयोग इति वक्तव्यम् । अर्थान्वयो हि तथा प्रवृत्तौ हेतुः । स च सौगन्धिकादिष्वपि समान इति तेष्वपि पङ्कजशब्दप्रवृत्तिः । अतोऽवश्यमन्यत्राप्रयोगार्थं रूढिराश्रयितव्या । यदुक्तमन्यत्राप्रयोगस्तु रूढिमापादयतीति, तदिष्यत एव । योगोऽपि दृष्टो न हातुं शक्यत इत्युक्तम् । अश्वकर्णादौ त्ववयवानुगमाभावात् क्वचिदेव रूढिरात्मानं लभते । अतो नेयं रूढिरेव केवला नापि केवलयोगः । योगरूढिरिति मन्यन्ते वृद्धा इति ॥

अथ व्यवधानादकारणं योग इति मन्यसे, तथापि रूढ्यैव केवलया प्रत्यक्षशब्दः सविकल्पके वर्तिष्यते । भूम्ना हि तत्रैव लौकिकाः प्रत्यक्षशब्दमुपचरन्ति । अल्पं निर्विकल्पक इत्याह— **अनिमित्तैवेति** ॥ १३१ ॥

यदि तूच्यते सत्यं वृद्धाः प्रयुञ्जते । लक्षणकारास्तु निर्विकल्पकमेव प्रत्यक्षमातिष्ठन्ते । यथाहुः— 'कल्पनापोढमभ्रान्तं प्रत्यक्षम्' इति । अत आह— **वृद्धप्रयोगेति** द्वयेन । अयमभिप्रायः— लौकिको हि शब्दार्थ

१. 'य श', २. 'ति । कि' क. पाठः

**सिद्धानुगममात्रं हि कर्तुं युक्तं परीक्षकैः ।**
**न सर्वलोकसिद्धस्य लक्षणेन निवर्तनम् ॥ १३३ ॥**
**कल्पनायाः स्वसंवित्ताविन्द्रियाधीनता कथम् ।**
**मनस्तत्रेन्द्रियं चेत् स्याद् गोत्वादावपि तत् समम् ॥**
**स्वसंवित्तौ तदिष्टं चेल्लोको न ह्येवमिच्छति ।**
**तस्माद् रूढित्वमेष्टव्यं पारिभाषिकतापि वा ॥**

---

सम्बन्धः । तेन परीक्षकैरपि यथालोकमेव वर्तितव्यम् । अन्यथाकरणे तेषां लोकबाध एवेति ॥ १३३ ॥

अपिच कल्पनापोढवादिनामपि कल्पनाज्ञानं स्वसंवेदने प्रत्यक्षमिष्टमेव । यदेवमाहुः —

"कल्पनापि स्वसंवित्ताविष्टा नार्थे विकल्पनात्"

इति । एवं हि मन्यन्ते — न कल्पना स्वसंवित्तिरात्मानं विकल्पयति, बहिरर्थविकल्पावभासित्वात् । असाधारणस्य च कल्पनात्मनोऽपि कल्पनास्पदत्वात् । अत्राप्याहुः — 'नैनमियमभिलापेन संसृजति तथा वृत्तेरात्मनि विरोधात्' इति ।

"तेषामतः स्वसंवित्तिर्नाभिजल्पानुषङ्गिणी"

इति च । तदिदं कल्पनास्वसंवेदनं प्रत्यक्षं नोपपद्येत । तदपि हि निर्विकल्पकप्रत्ययान्तरिताक्षव्यापारमेव । अथ तत्र रूढ्या प्रत्यक्षशब्दो वर्तत इत्युच्यते, तद् गोत्वादिबहिर्विषयप्रकाशेऽपि प्रमानं, न परं स्वसंवित्ताविस्यभिप्रायेणाह — कल्पनेति । यदि मतम् अस्ति तत्रेन्द्रियजं निर्विकल्पकज्ञानं समनन्तरप्रत्ययः । तदेव मन इत्याचक्षते । यथाहुः — 'तच्चतुर्विधमिन्द्रिय(ज ?)मिन्द्रियजं समनन्तरप्रत्ययोद्भवं मानसमिति' । मनोऽपि चेन्द्रियमिति मनोधीनतया प्रत्यक्षं भविष्यतीति । तद् गोत्वादिबोधेऽपि समानम् । तद्बोधेऽपि वयं मनोव्यापारमातिष्ठामह एव । मनःस्वरूपे तु विवदामः । तत्तावदन्यदेवेत्याह — मन इति ॥ १३४ ॥

नन्वान्तरं मनः कथं बहिर्विषयबोधे वर्तिष्यत इति, तत्तावदाशङ्कते — **स्वसंवित्ताविति** । परिहरति — लोक इति । **अयमभिप्रायः**—

**मनसस्त्विन्द्रियत्वेन सुखदुःखादिबुद्धिषु ।**
**यथा प्रत्यक्षतैवं नस्तदधीना भविष्यति ॥ १३६ ॥**
**तदधीनत्वसाम्येऽपि कल्पनापोढशब्दनात् ।**
**प्रत्यक्षं किञ्चिदेवेष्टं यथा तव तथैव नः ॥ १३७ ॥**
**लिङ्गाद्यभावतश्चापि नानुमानादिधीरियम् ।**
**बाधकप्रत्ययासत्त्वान्नाप्रामाण्यं च युज्यते ॥ १३८ ॥**
**नच पूर्वमदृष्टत्वात् स्मृतित्वमुपपद्यते ।**

---

सत्यमिष्टं कल्पनाज्ञानं स्वसंवेदने प्रत्यक्षमिति भवद्भिः । लौकिकास्तु विपरीतं मन्यन्ते । अयं गौरिति पररूपनिरूपणं सविकल्पकं लौकिका मन्यन्ते न पुनरहं गौरित्यात्मनिरूपणम् । यदपि बाह्येषु मनो न वर्तत इति । सत्यम् । बहिरिन्द्रियानपेक्षं न प्रवर्तते । गोत्वादयस्तु संयुक्तसमवायेन चक्षुषा सन्निकृष्यन्त इत्यस्ति तेषु मनोव्यापार इति तन्निबद्धमक्षव्यपदेशं लभत इति भावः । अतोऽवश्यं स्वसंवेदने कल्पनाप्रत्ययं प्रत्यक्षमाचक्षाणैर्मनो वा अक्षमभ्युपगन्तव्यं रूढिर्वा परिभाषा वा । सर्वथा वयमपि प्रत्यवस्थातुं शक्ता इत्यभिप्रायेणाह — तस्मादिति ॥ १३५ ॥

सुखादिस्वसंवेदनेऽपि मन एवाक्षमाश्रितं भवद्भिः । तद्वदिहापि जातिविकल्पो भविष्यतीत्याह — **मनसस्त्विति** ॥ १३६ ॥

अथ समानेऽपि मनोधीनत्वे स्वकीयकल्पनापोढलक्षणानुसारेण किञ्चिदेव प्रत्यक्षमाश्रीयते । तथा सतीच्छानुसारेण व्यवस्थायामिष्यमाणायां वयमपि यथाशयं किञ्चिदेव प्रत्यक्षं वक्ष्याम इत्याह — **तदधीनत्वेति** ॥ १३७ ॥

पारिशेष्यादपि प्रत्यक्षान्तर्भाव एवास्याः सविकल्पकधियो युक्त इत्याह — **लिङ्गादीति** । ननु सति प्रामाण्ये पारिशेष्यं भवति, न त्वियं प्रमाणमत आह — बाधकेति ॥ १३८ ॥

इदं त्विह वक्तव्यम् — सत्यं नेयमप्रमाणं, मृगतृष्णादिज्ञानवद् व्यवहाराविरोधात् । नच प्रमाणमसदर्थगोचरत्वात् । निर्विकल्पपरिप्लावितस्वलक्षणप्रापकतया स्मृतिरित्याख्यायते । नच स्मरणं प्रमाणमत आह — **नचेति** । पूर्वदृष्टार्थविषयं स्मरणं भवति । नच निर्विकल्पकेन सामान्य-

**तस्मात् प्रत्यक्षमेवेदं व्यवहारस्तथैव च ॥ १३९ ॥**
**जात्याद्यर्थान्तरं यस्मादतद्रूपेऽपि वस्तुनि ।**
**भवत्यध्यस्य धीस्तस्मान्मृगतृष्णादिभिः समा ॥**
**नैतदश्वादिबुद्धीनामध्यारोपाद्यसम्भवात् ।**
**स्थितं नैव हि जात्यादेः परत्वं व्यक्तितो हि नः ॥**
**यदि ह्येकान्ततो भिन्नं विशेष्यात् स्याद् विशेषणम् ।**
**स्वानुरूपां सदा बुद्धिं विशेष्ये जनयेत् कथम् ॥१४२॥**
**स्फटिकादौ तु लाक्षादिस्वरूपा या मतिर्भवेत् ।**

दर्शनमास्ति, अप्रत्यक्षविषयत्वात् तस्य भवत्सिद्धान्ते । अस्माकमपि स्वलक्षणान्तरसम्भेदः पूर्वमदृष्ट एव । नचासदर्थत्वं, वक्ष्यमाणन्यायेन जात्यादीनां स्थास्यमानत्वात् । अतो नागृहीतग्रहणादप्रामाण्यं नासदर्थतया वेति, अतः प्रमाणं सत् पारिशेष्यात् प्रत्यक्षेऽन्तर्भवतीत्युपसंहरति —तस्मादिति । भवन्तोऽपि वाङ्मनसविसंवादेनैवास्याः बुद्धेरप्रामाण्यमाचक्षते । सर्वव्यवहाराणां सविकल्पकाधीनत्वादित्याह — व्यवहार इति ॥ १३९ ॥

ननु किमिदं 'नाप्रामाण्यं च युज्यत' इति । विशिष्टावगाहिनो हि विकल्पाः । भिन्नं च विशेष्याद् विशेषणम् । अभेदे विशेषणविशेष्यानुपपत्तेः । अतोऽर्थान्तरभूतैर्जात्यादिभिर्विशिष्टे वस्तुनि गृह्यमाणे अतस्मिंस्तद्ग्रहणाद् भ्रान्तिरेव सविकल्पकज्ञानमित्याह — **जात्यादीति** ॥ १४० ॥

परिहरति — **नैतदिति** । कारणमाह — स्थितमिति । पररूपेण हि परस्मिन् निरूप्यमाणे भ्रान्तिर्भवति । नच जात्यादीनां पाररूप्यं, तेषामनतिभेदादिति भावः ॥ १४१ ॥

नन्वभेदे विशेषणविशेष्यभावानुपपत्तिरुक्ता, अत आह — **यदि हीति** । न विशेषणमेकान्ततो जात्यादि विशेष्याद् भिद्यते, सर्वदैव तदाकारावबोधादित्यर्थः ॥ १४२ ॥

नन्वत्यन्तभिन्नमेव लाक्षादिरूपं स्फटिकादि स्वाकारेण विशिष्टं बोधयद् दृष्टं, तद्वदेव हि जात्यादिविशिष्टबोधोऽपि भवन् मिथ्या स्यादिति; अत आह — **स्फटिकादाविति** । अयमभिप्रायः — उक्तमस्माभिः

**अव्युत्पन्नस्य सा मिथ्या व्युत्पन्नानां हि भेदधीः ॥**

**नहि जात्यादिनिर्मुक्तं वस्तु दृष्टं कदाचन ।**
**तद्विमोकेन वा तानि लाक्षादिस्फटिकादिवत् ॥**

---

सदैव जात्यादिविशिष्टं वस्तु गृह्यते । कस्यचित् कदाचिद् विवेकानवगमात् । अतः कथं मिथ्या भविष्यति । लाक्षोपहितं तु स्फटिकं कश्चिदेवाव्युत्पन्नोऽजातविवेकोऽरुणमिति बुध्यते । अतस्तज्ज्ञानं भ्रान्तिर्भवति । तदैव हीतरे दृष्टविवेका जानन्ति नेदमरुणमौपाधिकोऽयमरुणभ्रम इति । अव्युत्पन्नोऽपि चोपाधिविगमे जानात्येव यथा नेदमरुणमिति । अतो युक्तं भ्रान्तित्वं बाधोत्पादादिति ॥ १४३ ॥

जात्यादितद्वतां तु परस्परविवेको न दृष्टपूर्वः । अतो न भ्रान्तित्वं युक्तमित्याह — नहीति । ननु भवत्वेवं जातौ । नहि तया निर्मुक्तं वस्तु कदाचिदुपलभ्यते । गुणकर्मभ्यां तु वियुक्तवस्तुबोधो दृष्ट एव । भ्रियमाण एव हि द्रव्ये कुतश्चित् कारणात् पूर्वगुणविनाशो गुणान्तरोत्पादश्च दृश्यते । एवं कर्मण्यपि दर्शयितव्यम् । अतः कथं तयोरव्यतिरेकः, अत आह — तद्विमोकेनेति । अयमभिप्रायः — यद्यपि तद्विमुक्तं वस्तु दृश्यते, तानि तु तद्विमुक्तानि न जातु दृश्यन्ते । यच्च नाम यतो भिन्नं तत् ततो विमुक्तमपि कदाचिदुपलब्धं मणेरिवौपाधिकोऽरुणिमा । नचेह तथा । अतो व्यापकनिवृत्त्या व्याप्यस्यात्यन्तभेदस्य निवृत्तिः । कथमिदानीं पूर्वापरयोर्गुणकर्मणोर्नाशोत्पादौ । प्रत्यभिज्ञायते हि तदेवेदमिति द्रव्यं, गुणकर्मणी च विनष्टे । तदिदमभेदे नोपपद्यते । न नोपपद्यते, स्थित्युत्पत्तिविनाशात्मकमेव नो वस्त्विति रुचकाद्युदाहरणे वक्ष्यामः । तदिह वस्त्वपि गुणकर्मनाशे नश्यत्येव । रूपं हि तद् वस्तुनः, कथं तद्विनाशे न नश्यतीति शक्यते वक्तुम् । तयोरपि नात्यन्तिको विनाशः, वस्त्वात्मना विद्यमानत्वात् । जातावपि चैषैव गतिः । तत्रापि हि स्थित्युत्पत्तिविनाशा दृश्यन्त एव । वियुक्तबोधोऽपि दृश्यते । दृश्यते हि विनष्टपिण्डवियुक्ता पिण्डान्तरे जातिः । सा कथं ततो भिन्ना भविष्यति । अथ तत्र कथञ्चिद् भेदमाश्रित्य समाधि-

**तत्रापि चेन्न दृश्येत भेदः कैश्चित् कदाचन**
**रक्तादिबुद्धिसम्यक्त्वं विनिवार्येत केन वा ॥ १४५ ॥**
**नचाप्ययुतसिद्धानां सम्बन्धित्वेन कल्पना ।**
**नानिष्पन्नस्य सम्बन्धो निष्पत्तौ युतसिद्धता ॥**
**तथाच सति सम्बन्धे हेतुः कश्चिन्न विद्यते ।**

---

रभिधीयते, शक्योऽसौ गुणकर्मणोरपि वक्तुमिति केन विशेषेण जातावभेदमाश्रित्य गुणकर्मणोर्भेदं वर्णयाञ्चक्रुः । अतो यदा जात्यादयो दृश्यन्ते, तदा पिण्डादभेदेनैवावगम्यन्त इत्यभेदोऽपि तेषाम् । यैव तु काचिदनुपपत्तिरापाद्यते सानेकान्तवादिनां नासज्यत इत्यस्तु तावदिदमिति ॥ १४४ ॥

यदितु जात्यादिबोधविधानुविधायिनः स्फटिकादावपि चारुणादिबोधा भवेयुः, कस्तेषामपि प्रामाण्यं वारयेदित्याह — **तत्रापीति** ॥ १४५ ॥

एवं जात्यादीनामभेदं प्रतिपाद्येदानीमैकान्तिकभेदवादिनः काणादान् प्रत्याह—**नचापीति** । एवं हि मन्यन्ते—भिन्नयोरेव जात्यादितद्वतोः समवायलक्षणः सम्बन्ध इति । तथाच पठन्ति— 'अयुतसिद्धानामाधाराधेयभूतानामिहप्रत्ययहेतुर्यः सम्बन्धः स समवायः' इति । तदयुतसिद्धयोः सम्बन्धित्वासम्भवादनुपपन्नमिति । कथं पुनरयुतसिद्धानां सम्बन्धित्वमनुपपन्नं भवतीत्यत आह— नानिष्पन्नस्य सम्बन्ध इति । अयमभिप्रायः— केयमयुतसिद्धिः । किं युतसिद्ध्यभावमात्रम्, अथैवापृथक्सिद्धिः । यदि युतसिद्ध्यभावः, कस्य केन सम्बन्ध इति सिद्धयोर्हि सम्बन्धिनोः सम्बन्धो भवति, नासिद्धयोः । अथापृथक्सिद्धिः, तत्राप्येतदेवोत्तरं नानिष्पन्नस्य सम्बन्ध इति । अपृथङ्निष्पन्नयोस्तादात्म्यादिति भावः । अथैतद्दोषपरिहारार्थं पृथङ्निष्पत्तिरिष्यते, तथा सति युतसिद्धिरेवापद्यत इत्याह — निष्पत्ताविति ॥ १४६ ॥

किं पुनरनिष्टमापादितम् । नन्विष्यत एव जातितद्वतोरसम्बद्धयोरेव कियानपि कालभेदः । तां च तयोरवस्थां योगिनः पश्यन्ति नान्ये । न

---

१. 'त्र', २. 'अ' ग. पाठः. ३. 'त्वं न सम्भव', ४. 'यदि यु' क. पाठः. ५. 'थाप्र', ६. 'रिदमनि' ग. पाठः.

**षण्णामपि न सम्बन्धः पदार्थानां प्रतीयते ॥ १४७ ॥**
**समवायवियोगाच्च विश्लेषः स्यात् परस्परम् ।**
**तत्क्लृप्तावव्यवस्था स्यात् तस्य तस्यान्यसङ्गतेः ॥**

---

तावता रज्जुघटयोरिव तयोर्युतसिद्धयोरेव सम्बन्धः संयोगः स्यादिति वाच्यम् । नहि नः पृथक्सिद्धिर्युतसिद्धिलक्षणम् । अपितर्हि । भिन्नाश्रयत्वं पृथग्गतिमत्त्वं च । द्वयोरन्यतरस्य वा युतसिद्धिः तदभावोऽयुतसिद्धिः । नच जातेस्तदुभयमस्तीत्ययुतसिद्धयोः समवाय एव सम्बन्धो भविष्यति, अत आह — **नथाच सन्नीति** । अयमभिप्रायः — न तावत् पृथक्सिद्धे जातिव्यक्ती वयमुपलभामहे । योगिगम्यश्च जात्यादिरहितः क्षणो दुस्साध एव । उपेत्यापि ब्रूमः । हेत्वभावात् सम्बन्धो न स्यादिति । नहि रज्जुघटयोरिव पृथक्सिद्धयोर्देवदत्तादिजातिव्यक्त्योः संयोजको दृश्यते । समवायस्तु न तावत् सम्बन्धहेतुः, सम्बन्धरूपाभ्युपगमात् । अथापि तद्धेतुः, नैवमपि युतसिद्धौ सम्बध्नाति । ननूक्तं युतसिद्धिरेव जातेर्नास्तीति भिन्नाश्रयसमवायाभावादपृथग्गतिमत्त्वाच्चेति । न, युतासिद्धिशब्दस्य पृथक्सिद्धिमात्रवचनत्वात् . नञा तदभावमात्रमयुतसिद्धिराख्यायते । सा चेत् पृथक्सिद्धिरस्ति कथमयुतसिद्धिर्भविष्यति । अथापि पारिभाषिकोऽयुतसिद्धिशब्दः, तथापि व्यक्तेः स्वावयवसमवायित्वाज्जातेश्च व्यक्त्याश्रयत्वाद् भिन्नाश्रयाश्रयित्वमस्तीति युतसिद्धिप्रसङ्गः । नच युतसिद्धिसम्बन्धे समवायो हेतुः । नच हेत्वन्तरमप्यस्तीति सूक्तं न सम्बन्धे हेतुः कश्चिदिति । सम्बन्धहेत्वभावाच्च षडपि द्रव्यादयः पदार्थाः असम्बन्धा भवेयुरित्याह — षण्णामिति ॥ १४७ ॥

अपिच, अयं समवायः सम्बध्य वा समवायिनौ सम्बध्नाति असम्बध्य वा । न तावदसम्बध्य, असम्बद्धस्य सम्बन्धहेतोरदृष्टत्वात् । सम्बन्धस्तु सम्बन्धहेत्वन्तरमन्तरेण न सम्भवति. नच तदुपलभ्यते । अतः समवायिभ्यः समवायस्य वियोगाद् विश्लेषात् समवायिनामपि परस्परविश्लेषः स्यादित्याह — **समवायेति** । सम्बन्धहेत्वन्तरकल्पनायां त्वव्यवस्था स्यादित्याह — तत्क्लृप्ताविति ॥ १४८ ॥

**अथ तस्यात्मरूपत्वान्नान्यसम्बन्धकल्पना ।**
**अभेदात् समवायोऽस्तु स्वरूपं धर्मधर्मिणोः ॥**
**नहि स व्यतिरिक्तः सन् सम्बन्धं प्रतिपद्यते ।**
**तस्मिंस्ताभ्यामभिन्ने तु न नानात्वं तयोर्भवेत् ॥**
**ननु धर्मातिरेकेण धर्मिणोऽनुपलम्भनात् ।**
**तत्सङ्घमात्र एवायं गवादिः स्याद् वनादिवत् ॥**
**आविर्भावतिरोभावधर्मकेष्वनुयायि यत् ।**

---

यदि तु समवायिनोरात्मरूपं स्वरूपमेव समवायः नासावन्येन सम्बन्धनीय इत्युच्यते, एवं तर्ह्यङ्गीकृतोऽभेदवाद इति धर्मधर्मिणोरेव स्वरूपं समवायोऽस्तु यद्यवश्यं समवायनाम्ना प्रयोजनं, किं समवायान्तरग्रहेणेत्याह — **अथेति** ॥ १४९ ॥

अत्र कारणमाह — **नहीति** । उक्तमिदं व्यतिरिक्तस्य सम्बन्धहेत्वन्तराभ्युपगमेऽनवस्था । अभेदे तु परमुभयवादिसिद्धयोर्धर्मधर्मिणोरेवाभेदोऽभ्युपगन्तव्यः । किं समवायग्रहेणेति ॥ १५० ॥

नन्वस्तु जात्यादिधर्माणामभेदः, धर्म्येव तु भिन्नो नोपलभ्यते यः सविकल्पकज्ञानैर्विषयीक्रियते, तत् तावदुपन्यस्यति — **नन्विति** । एवं हि मन्यन्ते — नायं धर्मी धर्मेभ्योऽतिरिक्तोऽङ्गुलीभ्य इवाङ्गुष्ठो दृश्यते । नचास्य व्यवस्थापने प्रत्यक्षं प्रक्रमते । तस्येन्द्रियजत्वादिन्द्रियाणां पञ्चानां पञ्चसु रूपादिषूपक्षीणत्वात् । षष्ठस्य च मनसः स्वातन्त्र्येण बहिर्विषयव्यवस्थापनेऽसामर्थ्यात् । यथाहुः —

"क्षीणानि चक्षुरादीनि रूपादिष्वेव पञ्चसु ।
न षष्ठमिन्द्रियं तस्य ग्राहकं विद्यते बहिः ॥"

इति । अतो रूपादिसङ्घातमात्रमेवेदं बहिरुपलभ्यते न तत्त्वान्तरं वृक्षसङ्घात इव वनबुद्धिरिति ॥ १५१ ॥

अत्र परिहारमाह — **आविर्भावेति** धर्म्यन्तेन । अयमभिप्रायः — प्रतीमो हि वयं विस्फारिताक्षा रूपादिवदेकं द्रव्यं नच विपर्येति तत्

**तद्धर्मि यत्र वा ज्ञानं प्राग् धर्मग्रहणाद् भवेत् ॥**
**अतो जात्यादिरूपेण धर्मि यद् गृह्यते नरैः ।**
**पाररूप्यं न तस्यास्तीत्यप्रामाण्यं न युज्यते ॥१५३॥**
**यस्यापि व्यतिरेकः स्याद् धर्मेभ्यो धर्मिणः स्फुटः ।**
**नित्यं तस्यापि ताद्रूप्यान्न मिथ्यात्वं प्रसज्यते ॥**
**यो ह्यन्यरूपसंवेद्यः संवेद्यो वान्यथा पुनः ।**
**स मिथ्या न तु तेनैव यो नित्यमवगम्यते ॥ १५५॥**
**नचानेकेन्द्रियग्राह्यं भिन्नतां प्रतिपद्यते ।**

---

कथमन्यथा भविष्यतीति । यत्त्वभेदेन नोपलभ्यत इति । सत्यम्, केन वा धर्मेभ्योऽत्यन्तभेदो धर्मिण उपेयते । ग्राहकाभावस्तु रूपादिवदन्वयव्यतिरेकाभ्यां दर्शनस्पर्शनयोरेव सामर्थ्यप्रदर्शनेन परिहर्तव्यः । अपिच यदि धर्मातिरिक्तो धर्मी न स्यात् कोऽयमाविर्भावतिरोभावधर्मकेषु रूपादिष्वनुगतः प्रत्यभिज्ञायते । प्रत्यभिजानीमो हि वयमग्निसंयोगप्रच्यावितप्राच्यरूपमुपजातरूपान्तरं सोऽयं घट इति घटम् । नच तदत्यन्ताभेदे घटते स्थित्युत्पत्तिविनाशानामेकत्रापातात् । अतोऽस्ति धर्मेभ्यो भिन्नं तेष्वनुगतं, धर्मिरूपं यद्वशादेवं विभाग इति । अपिचात्यन्ताभेदपक्षे धर्मग्रहणमन्तरेण धर्मी न ज्ञायेतैव । दृश्यते च धर्मग्रहणात् प्रागेव सन्तमसादौ धर्मिज्ञानमित्याह — यत्र वेति । अतः सिद्धमस्ति धर्मि धर्माश्च तदनतिरेकिणो जात्यादय इति ॥ १५२ ॥

तद्विशिष्टबोधे पररूपनिरूपणाभावान्नाप्रामाण्यं सविकल्पकज्ञानानामित्याह — **अत** इति ॥ १५३ ॥

अस्तु वात्यन्तभेदः, तथापि न मिथ्येत्याह — **यस्यापी**ति द्वयेन । अयमभिप्रायः — नान्यरूपसंवेद्यतामात्रेण, मिथ्यात्वं, किन्तु पुनरन्यथासंवेदनेन । बाधकप्रत्ययेनेति यावत् । इह च सर्वेषां सर्वदा च तद्रूपा बुद्धिरिति भावनाया इव धात्वर्थविशिष्टबोधो न मिथ्येति ॥ १५५ ॥

नन्वेवं कायचक्षुर्गोचरो धर्मी भिद्यते ग्राहकभेदाद् रूपादिवत् । तानि वा तद्वदेव सत्यपि ग्राहकभेदे न भिद्येरन् अनेकेन्द्रियग्राह्यमेकं सद्

---

१. 'स घ'. २. 'कं सत्त्व' ग. पाठः

**मा भूद्भिन्नशरीरस्य ग्राह्यत्वाद् भिन्नरूपता ॥१५६॥**
**जात्यभेदादभेदश्चेदिन्द्रियत्वेन तत् समम् ।**
**तुल्यबुद्धेरतो भिन्ना न सत्तेन्द्रियभेदतः ॥ १५७ ॥**
**बुद्धिभेदाच्च नैकत्वं रूपादीनां प्रसज्यते ।**
**एकानेकत्वमिष्टं वा सत्तारूपादिभेदतः ॥ १५८ ॥**
**क्वचिच्च सङ्करान्नाक्षमेकमित्यवसीयते ।**
**दार्ढ्यदौर्बल्यभेदेन व्यवस्थापि यतः क्वचित् ॥१५९॥**

---

दृष्टं सत्त्वमिति चेत्, न । विकल्परूपस्येन्द्रियेणाग्रहणात् । अपिचेन्द्रियाणां सङ्कीर्णविषयत्वेऽक्षानेकत्ववैयर्थ्यमपि । एकमेव हि तदेन्द्रियं नानाविषयान् परिच्छेत्स्यतीति किंमिन्द्रियभेदेन । तदुक्तं —

"नैकं रूपाद्यभेदो वा दृष्टं चेन्नेन्द्रियेण तत् ।
अक्षानेकत्ववैयर्थ्यं स्वार्थे भिन्नेऽपि शक्तिमत् ॥"

इति, अत्राह—**नचानेके**ति । यत्तावदुक्तं ग्राहकभेदाद् भेद इति । तदयुक्तं, भिन्नशरीरस्थचक्षुर्ग्राह्यस्याभिन्नत्वेन हेतोरनैकान्तिकत्वादिति ॥ १५६ ॥

यदि तु चक्षुष्ट्वेनैकत्वादिन्द्रियभेद एव तत्र नास्तीत्युच्यते, तदिह्वापीन्द्रियत्वेन समानम् । अतो बुद्धिभेदनिवन्धन एव भेदो न ग्राहकभेदनिवन्धन इत्यभिप्रायेणाह — **जात्यभेदा**दिति । अतएव भिन्नेन्द्रियग्राह्यापि सत्ता एकबुद्धिविषयतया न भिद्यत इत्याह — **तुल्ये**ति । सर्वेन्द्रियैर्हि सत्तागुणत्वयोर्ज्ञानमिति भावः ॥ १५७ ॥

रूपाद्यभेदो वेति यदुक्तं तत्राह — **बुद्धिभेदा**दिति । सिद्धसाधनत्वं वा द्वयोरपि प्रयोगयोरित्याह — **एके**ति । सद्रूपेण रूपादीनामेकत्वं रूपादिरूपेण च धर्मिणो नानात्वमित्यर्थः ॥ १५८ ॥

अक्षानेकत्ववैयर्थ्यं परिहारमाह — **क्वचिच्चे**ति । न क्वचिद् धर्मिणि त्वक्चक्षुषोः सङ्करो दृष्ट इत्येकमेवाक्षं युक्तमित्यर्थः । अत्र कारणमाह — **दार्ढ्ये**ति । यदि हि सङ्करदर्शनादेकत्वमाश्रीयते, तद्दार्ढ्यदौर्बल्यभेदेन व्यवस्था नोपपद्येत । दृढे हि चक्षुषि दुर्बले च श्रोत्रे रूपमुपलभ्यते । एवं बलवति

यथा हि मनसः सार्धं रूपादौ चक्षुरादिना ।
प्रवृत्तिः सुखदुःखादौ केवलस्यैव गम्यते ॥ १६० ॥
न क्वचित् सङ्कराभावात् सर्वत्रैव निवर्तते ।
क्वचिच्च सङ्करं दृष्ट्वा सङ्करोऽन्यत्र कल्प्यते ॥ १६१ ॥
श्रोत्रादेरुपघातेऽपि शब्दादिस्मृतिदर्शनात् ।
वर्तमानस्य चाज्ञानाद् व्यवस्था सम्प्रतीयते ॥
एकं यदि भवेदक्षं सर्वैर्गृह्येत वा न वा ।
कल्प्यते शक्तिभेदश्चेच्छक्तिरेवेन्द्रियं भवेत् ॥१६३॥

---

श्रोत्रे दुर्बले च चक्षुष्यपि शब्दः श्रूयते । सेयं चक्षुश्श्रोत्रयोर्विषयव्यवस्था नाक्षैकत्वे घटत इति ॥ १५९ ॥

नन्वियं व्यवस्थानुपपन्नैव, सर्वत्रैव प्रसङ्गात् । यदि हीन्द्रियान्तरमिन्द्रियान्तरविषये न प्रवर्तते, क्वचिदपि न प्रवर्तेत । प्रवृत्तौ वाव्यवस्थया सर्वत्रैव प्रवर्तेत अतिक्रमदर्शनादत आह — **यथा हीति** द्वयेन । नेदमदृष्टान्तं पक्षीक्रियते यत् क्वचिद् व्यवस्था क्वचित् सङ्कर इति । सङ्कीर्यते हि मनश्चक्षुरादिभिः रूपादिबोधे । सुखादिसंवेदने च व्यवतिष्ठते । अतः कार्यदर्शनानुसारिणौ व्यवस्थासङ्करौ नानुपपन्नौ । नत्वेकत्र व्यवस्थादर्शनात् सर्वत्रैव सङ्करो निवर्तते । क्वचिद् वा दृष्ट इति सर्वत्रैव प्रसजतीति ॥

किंपुनरनयोर्व्यवस्थासङ्करयोर्मनसः कारणमत आह — **श्रोत्रादेरिति** । उपहतश्रोत्रादिरपि शब्दादि स्मरति इत्यत आन्तरे स्मृतिसुखादावन्यनिरपेक्षं, वर्तमानं च रूपादि न जानाति । अतस्तत्र बहिःकारणापेक्षं मनः । अतः क्वचित् सङ्करः क्वचिच्चासङ्कर इति व्यवस्था सिध्यतीति ॥१६२॥

एवं कार्यव्यवस्थया व्यवस्थासङ्करौ प्रतिपाद्येदानीमक्षैकत्वे दोषमाह — **एकमिति** । नन्वेकत्वेऽपि शक्तिभेदाद् व्यवस्था सेत्स्यति, अत एकमेव सर्वशरीरव्यापि त्वगिन्द्रियं कल्प्यतां, शक्तयस्तस्य देहभागेषु भिन्ना भवन्तु किमिन्द्रियभेदेनात आह — **कल्प्यत इति** । शक्तिभेदो वा कल्प्यते इन्द्रियभेदो वा । को विशेषः । नन्विन्द्रियकल्पनायां शक्ति-

---

१. 'नः क्व' क. पाठः.

**शृणुयाद् बधिरः शब्दं सङ्करे चक्षुरादिना ।**
**मनसो वा स्वतन्त्रत्वे वर्तमानार्थबुद्धिषु ॥ १६४ ॥**

**न स्मरेद् बधिरः शब्दं श्रोत्रं चेत् स्मृतिकारणम् ।**
**स्मृतिवद् वा भवेदस्य वर्तमानार्थधीरपि ॥ १६५ ॥**

मद्भेदोऽप्यपरः कल्पनीय इति गौरवम् । अस्तुवा प्रमाणवन्त्यदृष्टानि कल्प्यानि सुबहून्यपि, सन्ति देहेषु पृथिव्यादिभूतभागाः स्वस्वगन्धादिप्रकाशनशक्तयश्चेति वर्णितम् । यत्तु सकलशरीरव्यापिन एकस्यैव वायवीयस्य त्वगिन्द्रियस्य रूपादिप्रकाशनशक्तिकल्पनं तदत्यन्तापरिदृष्टमप्रमाणकमिति भावः । इन्द्रियं भवेदिति । इन्द्रियस्थानेऽशक्तिः कल्पनीयतया निपतेदित्यर्थः ॥ १६३ ॥

एवं दार्ढ्यदौर्बल्यभेदेन कार्यव्यवस्थां प्रतिपाद्याक्षानेकत्वं समर्थितम् । इदानीं व्यवस्थानाश्रयणे दोषमाह — **शृणुयादिति** । यदि नेन्द्रियाणि व्यवस्थितविषयाणि भवेयुः, बधिरोऽपि चक्षुष्मान् शब्दं शृणुयात् । चक्षुषोऽपि तद्विषयव्यापारात् । अतो नैकत्र सङ्करदर्शनेन सर्वत्र तत्कल्पना कार्या । तदिदं दार्ढ्यदौर्बल्यभेदेनेत्यस्यैव व्यतिरेकप्रदर्शनम् । व्यवस्था तावद् दृश्यते । यदि तु सर्वत्रैव सङ्करः स्यादयं दोषः स्यादिति । मनस इदानीं यथा हि मनस इत्यनेन निदर्शितयोर्व्यवस्थासङ्करयोरुक्तयोर्व्यतिरेके दोषं दर्शयिष्यन् सङ्करव्यतिरेके तावदाह — **मनसो वेति** । अयमर्थः — यदि मनो बहिर्विषयवेदने स्वतन्त्रं भवेत्, तत्राप्ययमेव दोषः बधिरः शब्दं शृणुयादिति । तस्यापि मनसो भावात् । अयं च वर्तमानस्य चाज्ञानादित्यनेन यो बहिर्विषयवेदने मनसः सङ्करो दर्शितः तस्य व्यतिरेक इति ॥ १६४ ॥

अन्तर्विषयवेदने च यन्मनसः स्वातन्त्र्यमुक्तं तद्व्यतिरेके दोषमाह— **न स्मरेदिति** । यदिज्ञानान्तरेऽपि बहिर्विषयवेदनवन्मनो बाह्यापेक्षं भवेद्, बधिरः शब्दं न स्मरेत् श्रोत्राभावात् । अथासत्यपि कारणे

१. 'तस्य व्यव' क. पाठः.

**स्मृतिश्च न भवेत् पश्चाद् गृह्णीयात् तन्न चेन्मनः ।**
**श्रोत्रग्रहणवेलायां नच सर्वा स्मृतिर्भवेत् ॥ १६६ ॥**
**बोधात्मकतया पुंसः सर्वत्र ग्रहणं भवेत् ।**

---

स्मृतिः स्याद्, एवमेव वर्तमानोपलब्धिरपि भवेत् । अयं च श्रोत्रादेरुपघातेऽपीत्यनेनोक्ताया आन्तरेषु मनसो व्यवस्थाया व्यतिरेक इति ॥ १६५ ॥

परतन्त्रं बहिर्विषयवेदने मन इत्युक्तम् । किंपुनः कारणं बाह्यबोधे मनो व्याप्रियत इति । सन्ति चक्षुरादीन्येव तत्र कारणानि अत आह— **स्मृतिश्चेति** वेलायामन्तेन । अयमभिप्रायः— एवंवादिना मन एवाक्षिप्यते । तत्र चैतदेव तावद् वक्तव्यम् । आत्मेन्द्रियार्थसन्निकर्षे ज्ञानस्याभावो भावश्च मनसो लिङ्गमिति । अस्ति खल्वात्मा । सन्निकृष्यते च नानार्थैर्नायनं तेजः । किञ्चिदेव तु ज्ञायते न सर्वम् । तत् कस्य हेतोः कारणवैकल्येन कार्यप्रतिबन्धो दृष्टः यथा सत्सु तन्तुषु पटो नोत्पद्यते तन्तुसंयोगानामभावात् । एवमिहाप्यस्ति तदन्यद् ज्ञानकारणं यस्मिन्नव्याप्रियमाणे न ज्ञानमुत्पद्यते व्याप्रियमाणे च भवति । तच्च मन इत्युच्यते । अपिच श्रोत्रादिभिः शब्दाद्युपलब्धिकाले यदि मनो न व्याप्रियते, कथमुत्तरकालं स्मरणमुपपद्येत । मनो हि स्मृत्युत्पत्तौ कारणम् । तद् यदि शब्दाद्युपलब्धिवेलायां मनो व्यापृतं भवति, ततः पूर्वमसावर्थो मनसा प्रकाशित इति परस्तादपि स्मर्यत इत्युपपन्नं भवति । बाह्येन्द्रियमात्रकारणके तु पूर्वज्ञाने तेषां स्मृतिसमवाये व्यापाराभावात् स्मृतिर्न स्यात् । न ह्यकारणिका ज्ञानोत्पत्तिः सम्भवति । अतोऽस्ति बहिर्विषयबोधे मनोव्यापारः । सुखादिसंवेदनं चासत्त्वे मनसो नोपपद्येतेति । अपिचासत्त्वे मनसो यदिदं पूर्वानुभूतानां सर्वेषामस्मरणं तन्नोपपद्यते । किञ्चिदेव तु कदाचित् कश्चित् स्मरतीति दृश्यते । तदेवमुपपद्यते यद्यस्ति किञ्चिदन्तःकरणं, तदात्मसंयोगविशेषेण हि तदा स्मृतिर्व्यवतिष्ठते । नच संस्कारोद्बोधानुद्बोधकृता व्यवस्था । अनुग्राहको हि करणानां संस्कारः न स्वतन्त्रः करणम् । इतरथा तु स एवान्तःकरणमापद्येतेत्याह— नचेति ॥ १६६ ॥

आह— सेत्स्यत्ययं बाह्यान्तःकरणविवेकः । करणसद्भाव एव तु किं कारणं, बोधस्वभावो हि पुरुषः । तदयमन्यनिरपेक्ष एव शब्दादीन्

---

१. 'ना यदि म' ग. पाठः. २. 'वे·म' क. पाठः.

**युगपद्विषयेऽप्यस्य कारणापेक्षिता नचेत् ॥ १६७ ॥**
**तस्माज्ज्ञानानुसारेण व्यवस्थासङ्करौ क्वचित् ।**
**ग्राह्यग्राहकशक्तिभ्यः कार्यद्वारेण कल्पितौ ॥ १६८ ॥**
**चक्षूरूपादिभेदस्तु पञ्चधैव व्यवस्थितः ।**
**तेन नीलादिभेदेऽपि नेन्द्रियानन्त्यकल्पना ॥ १६९ ॥**
**तस्मात् पञ्चभिरप्यक्षैर्बोधः सत्तागुणत्वयोः ।**
**द्रव्यमूर्तौ पुनर्द्वाभ्यां रूपादावेकशः स्थितिः ॥१७०॥**

---

भोत्स्यते, अत आह — **बोधे**ति । यदि ह्ययं बोधस्वभावोऽन्यनिरपेक्षो बुध्यते, युगपदेव विश्वं जानीयात् । अतोऽवश्यमस्य नियामकानि कारणान्यभ्युपगन्तव्यानीति ॥ १६७ ॥

प्रकृताविदानीं व्यवस्थासङ्करौ[2] ग्राह्यग्राहकशक्तिद्वारेणोपवर्णितावुपसंहरति — **तस्मा**दिति । कार्यद्वारेण हि ग्राह्यग्राहकशक्तयः । ताभ्यो व्यवस्थासङ्करसिद्धिरिति ॥ १६८ ॥

ननु कार्यानुसारेणेन्द्रियभेदे वर्ण्यमाने नीलादिभेदभिन्नानेकदर्शनात् तदनुसारिणीन्द्रियकल्पना न व्यवतिष्ठेतैव, अत आह— **चक्षूरूपादी**ति । नानाविधमपि हि रूपं विष्फारिताक्षा बुध्यन्त इत्यवान्तरभेदमनादृत्य रूपमात्रप्रकाशकमेव चक्षुरिति निश्चीयते । एवं श्रोत्रेऽपि दर्शयितव्यम् । अतो नेन्द्रियानन्त्यम् । चक्षूरूपादीति । चक्षुरादिभेदो रूपादिभेदवशेनेति । आदिशब्दस्य प्रत्येकमभिसम्बन्ध इति ॥ १६९ ॥

सुखग्रहणार्थमिदानीं व्यवस्थासङ्करौ संक्षिप्य दर्शयति — **तस्मा**दिति । स्पर्शवद्द्रव्यपरिमाणं मूर्तिः । असर्वगतद्रव्यपरिमाणं वा, तद्विशिष्टानि भूम्यसेजांसि द्रव्याणि द्वाभ्यां दर्शनस्पर्शनाभ्यामुपलभ्यन्ते । रूपादिपञ्चकं त्वेकैकशश्चक्षुरादिभिः । एवं द्रव्यान्तरगुणान्तरकर्मणां जातेश्च यथादर्शनं व्यवस्थासङ्करावनुसन्धातव्याविति ॥ १७० ॥

---

१. 'स्वरूपोऽन्य', २. 'रौ ग्राहक' क. पाठः.

**ननु जात्यादिरूपेऽपि शब्दाभेदोपचारतः ।**
**प्रवर्तमाना मिथ्या स्याद् बुद्धी रूपेषु बुद्धिवत् ॥ १७१ ॥**
**न शब्दाभेदरूपेण बुद्धिरर्थेषु जायते ।**
**प्राक्शब्दाद् यादृशी बुद्धिः शब्दादपि हि तादृशी ॥**
**ननु गोत्वादिरूपेण गवाकारादिबुद्धयः ।**
**न प्राक् शब्दार्थसम्बन्धज्ञानात् सन्ति कदाचन ॥**
**जात्यादेस्तत्स्वरूपं चेदशब्दज्ञोऽपि लक्षयेत् ।**
**अन्वयव्यतिरेकाभ्यां शब्दरूपत्वनिश्चयः ॥ १७४ ॥**

---

एवं तावदस्ति धर्मी ग्राहकभेदे चाभिन्नः । जात्यादयश्च तदनतिरेकिणो धर्मा इति पररूपनिरूपणाभावान्न सविकल्पकज्ञानानां मिथ्यात्वमित्युक्तम् । इदानीमशब्दरूपाणामेव भावानां सविकल्पकज्ञानेषु शब्दाकारेण निरूप्यमाणत्वादस्ति पाररूप्यमिति ये वदन्ति, तेषां मतमुपन्यस्यति — **नन्विति** । अयमर्थः — यद्यपि जात्यादिरूपो धर्मी, तथापि तेषामेव शब्दातिरिक्तानामभावात् तद्रूपेण वस्तुनि निरूप्यमाणे शब्दात्मनैव निरूपणमापद्यते । ततश्चाशब्दात्मनां शब्दात्मना निरूपणे पुनरपि पाररूप्यमापन्नमिति मृगतृष्णादिज्ञानवदेव पञ्च विकल्पा मिथ्या स्युरिति ॥ १७१ ॥

परिहरति — **न शब्देति** । कारणमाह — **प्रागिति** । बुद्धिरेवात्र शब्दाकारा नास्तीति भावः ॥ १७२ ॥

अत्र चोदयति — **नन्विति** द्वयेन । अयमर्थः — किमिदं प्राक् शब्दाद् यादृशी बुद्धिरित्युच्यते । नहि शब्दार्थसम्बन्धज्ञानात् प्राग् गोत्वशुक्लत्वादिरूपेण गवाकारादिभावविषया बुद्धयो भवन्ति । शब्दसम्बन्धोत्तरकालमेव तद्रूपा बुद्धिरुत्पद्यते । तद् यदि शब्दातिरेकिणो जात्यादयः सन्ति तेषां च तद्रूपत्वं, ततः प्रागपि शब्दसम्बन्धादशब्दज्ञोऽपि तद्रूपं लक्षयेत् । नच लक्षयति । अतः शब्दान्वयव्यतिरेकानुविधानाच्छब्दस्यैव तद्रूपत्वमिति निश्चीयत इति ॥ १७४॥

यथा रूपादयो भिन्नाः प्राक् शब्दात् स्वात्मनैव तु ।
गम्यन्ते तद्वदेवैतत् संज्ञित्वं केवलं परम् ॥ १७५ ॥
नचाविकल्पितः शब्दादिति वाच्यो न गृह्यते ।
तेनागृहीतशब्दोऽपि गोत्वादीन् प्रतिपद्यते ॥ १७६ ॥
श्रुतिसंस्पर्शबोधेऽपि नैवाभेदोपचारता ।
विवेकादर्थशब्दानां चक्षुश्श्रोत्रधिया कृतात् ॥
अनन्तधर्मके धर्मिण्येकधर्मावधारणे ।
शब्दोऽभ्युपायमात्रं स्यान्नात्माध्यारोपकारणम् ॥
नचोपेयेऽभ्युपायस्य रूपाध्यासः प्रसज्यते ।
नहि दीपेन्द्रियादीनां रूपाध्यारोप इष्यते ॥ १७९ ॥

---

परिहरति — यथेति । यथैव हि रूपरसगन्धस्पर्शशब्दा एवाक्षजायां बुद्धौ विभक्ता भासन्ते विनापि शब्दम्, एवं गोत्वादिजातयो गमनादीनि कर्माणि प्रागपि शब्दान्निर्विकल्पकेनापि विलक्षणेन रूपेण प्रतीयन्त एव । सम्बन्धग्रहणोत्तरकालं तु केवलं संज्ञासंज्ञिसम्बन्धग्रहणमेवाधिकं नापरं किञ्चित् । यदि तु शब्दादयो न सन्तीत्युच्यते, कस्याध्यास इति वक्तव्यमिति ॥ १७५ ॥

सिध्यत्यपि शब्दात्मकता यदि शब्दसम्भेदात् प्राग् गोत्वादयो न प्रतीयन्त एव । न त्वेतदस्ति, अगृहीतसम्बन्धस्यापि तद्बोधोत्पादादित्याह — नचेति ॥ १७६ ॥

परस्तादपि नाभेदोपचारोऽस्तीत्याह — श्रुतीति । कारणमाह — विवेकादिति । द्वाभ्यामिन्द्रियाभ्यां द्वावर्थशब्दौ गम्येते इत्यर्थः ॥ १७७ ॥

अन्यतरधर्मनिष्कर्षमात्रे तु शब्दस्य व्यापारः, न स्वरूपारोप इत्याह— अनन्तेति ॥ १७८ ॥

स्यादेतत् — उपायः शब्दोऽर्थबोधे । उपायधर्माश्चोपेयेऽध्यारोप्यमाणा दृष्टा दर्पणादिधर्मा इव मुखादौ, अत आह — नचेति । अनैकान्तिको हेतुरिति भावः ॥ १७९ ॥

---

१. 'भ्यां द्वा' . पाठः.

**नित्यं यदि च गोत्वादि शब्दरूपेण गृह्यते ।**
**रूपान्तरं न दृष्टं चेद् भेदाध्यासौ कुतो न्विमौ ॥**
**यद्यभेदो न मिथ्यात्वं भेदश्चेत् स्यात् स्वरूपतः ।**
**नाध्यारोपप्रसङ्गः स्याद् भ्रान्त्या त्वध्यासकल्पना ॥**
**शब्देनैव च निर्देशो गृहीतेऽर्थेऽवकॢप्तते ।**
**गौरित्येव च निर्देशो वाच्यतद्बुद्धिवादिनाम् ॥**
**निर्देशतुल्यतायां च श्रोत्रा वक्तृस्वरूपता ।**
**शब्दज्ञानप्रमेयेषु विज्ञानस्यावसीयते ॥ १८३ ॥**

अत्रापरे वदन्ति — न वयं जात्यादीनपलपामः । किं तर्हि । गौरयमिति सामानाधिकरण्येन शब्दरूपानुविद्धबोधाद् रूपसमारोपमाचक्ष्महे इति । तान् प्रत्याह — नित्यमिति । अयमभिप्रायः — यदि शब्दरूपानुविद्ध एव सर्वदा गोत्वादिबोधः रूपान्तरं तु तेषां कदाचिदपि न दृष्टं, कथं तर्हि शब्दरूपात् तद्रूपभेदसिद्धिः, असति भेदे कुत्र किमध्यस्यत इति ॥ १८० ॥

अभेदाभ्युपगमे च पाररूप्याभावान्न सविकल्पकज्ञानानां मिथ्यात्वमित्याह — यद्यभेद इति । पारमार्थिके तु स्वरूपभेदाभ्युपगमेऽध्यारोपवाचोयुक्तिरनर्थिका । नह्यसङ्कीर्णस्वभावं वस्तु वस्त्वन्तरात्मना भ्रान्तिवर्जितैरारोपयितुं शक्यते । नच सर्वदा सर्वेषां भ्रान्तिः सम्भवति, तदेतदाह — भेदश्चेदिति । अतो भ्रान्त्यैवेयमध्यासकल्पना तद्वादिनामित्याह — भ्रान्त्येति ॥ १८१ ॥

भ्रान्तौ बीजमाह — शब्देनेति । गृहीतो ह्यर्थो न शब्दमन्तरेण निर्देष्टुं शक्यत इति भावः । तथापि किमत आह — गौरिति । त्रयाणामपि वाच्यवाचकज्ञानानां समानो निर्देशः गौरिति शब्दो गौरित्यर्थो गौरिति ज्ञानमिति । वाच्यं च स च बुद्धिश्च वाच्यतद्बुद्धयः । तद्वादिनां पुरुषाणां गौरिति समानो निर्देशः प्रतीयत इत्यर्थः ॥ १८२ ॥

तथापि किं जातमत आह — निर्देशेति । अयमर्थः — एवं हि श्रोता विकल्पयति यतोऽयं वक्ता त्रिष्वपि समानं शब्दं प्रयुङ्क्ते, अतोऽस्या-

१. 'गोरर्थो' क. पाठः.

भ्रान्तिहेतुसमानत्वेऽप्युपायत्वान्मतिश्रुती ।
मन्यतेऽर्थे समध्यस्ते नार्थाध्यासं तयोः पुनः ॥
गोत्वे सास्नादिमद्रूपा गादिरूपाभिधायके ।
निराकारोभयज्ञाने संवित्तिः परमार्थतः ॥ १८५ ॥
यदि चाभेदरूपेण शब्देनार्थः प्रतीयते ।
एकरूपत्वमक्षादौ देवनादेः प्रसज्यते ॥ १८६ ॥

---

नुभवस्त्रिष्वपि समान एव । तद्धच्च स्वयमपि सविकल्पकज्ञानप्रमेयमर्थं बुध्यमानस्त्रिगोचरस्य ज्ञानस्य वक्तृस्वरूपतामध्यवस्यति । यादृशं वक्त्रा प्रतिपन्नं तादृगेव प्रतिपद्यत इति यावत् । एवं पूर्वपूर्ववक्त्रनुसारेणोत्तरोत्तरेषां श्रोतॄणां निर्देशसाधारण्यादध्यासभ्रम इति ॥ १८३ ॥

यदि निर्देशसाधारण्याद् भ्रान्तिः, अर्थाध्यास एव किं न शब्दबुद्ध्योः प्रतिपाद्यते । समानं हि भ्रान्तिबीजमत आह — **भ्रान्तीति** । उपायो ह्यर्थस्य जडात्मनः स्वयमप्रकाशस्य मतिश्रुती । उपायपूर्विका चोपेयस्थितिरिति तत्पूर्वमर्थं बुध्यमानास्तदध्यासं मन्यन्ते । श्रुतिश्च श्रूयत इति शब्दोऽभिधीयते । मत्यध्यासश्च पूर्वमनुपक्षिप्तोऽपि कैश्चिदाश्रितः । स च शब्दाध्यासनिराकरणेनैव तुल्यन्यायतया निराकृतो भविष्यतीत्युपन्यस्तः । एवं बौद्धगन्धिवैयाकरणा मन्यन्ते — जात्यादिरर्थो व्यतिरेकाव्यतिरेकविकल्पदूरीकृतनिरूपणः । शून्याङ्कुरजन्मादौ तु बाह्यासम्भवादशक्योऽभ्युपगन्तुम्, अतो ज्ञानाकार एवार्थ इति । तदपि ज्ञानात् प्रागेवार्थरूपोपलम्भात् तद्द्वारेणैव ज्ञानावधारणान्निराकृतं वेदितव्यम् । विकल्पपरिहारस्त्वाकृतिग्रन्थे वक्ष्यते । शून्यादौ तु बाह्यार्थसम्भवो निरालम्बनवाद इति ॥ १८४ ॥

निपुणं तु चिन्तयतां त्रिष्वपि विलक्षणा बुद्धिरुपजायत इत्याह — **गोत्व इति** । उभयोर्ज्ञानमनाकारमनुमीयत इत्यर्थः ॥ १८५ ॥

अयमपरः शब्दाध्यासे दोष इत्याह — **यदि चेति** । शब्देन सहाभेदरूपेणेत्यर्थः । अक्षादौ शब्देऽध्यस्यमाने शब्दैकत्वात् तद्रूपत्वाच्चार्थस्य देवनादेरेकत्वं प्रसज्यत इति ॥ १८६ ॥

---

१. 'राकरणः' क. पाठः. २. 'ह्यार्थसं' ग. पाठः.

**स्यादनक्षनिवृत्त्या चेन्न प्राक् शब्दात् प्रतीयते ।**
**गवादिष्वपि तुल्यं चेन्नैकरूपस्य दर्शनात् ॥ १८७ ॥**
**त्रये विभीतकादीनां नैकधर्मान्वयोऽस्ति हि ।**
**शब्दः साधारणस्तेषां जातिशब्दाद् विलक्षणः ॥**
**परस्परविभिन्नं तु ज्ञायतेऽत्राकृतित्रयम् ।**
**तदध्यासे न युज्येत तद्रूपस्याविभागतः ॥ १८९ ॥**
**भिन्नाः स्युरक्षशब्दाश्चेन्नार्थे संशयदर्शनात् ।**
**न सामान्यादृते स स्याद्रूपाभेदश्च गम्यते ॥ १९० ॥**

---

नन्वस्त्येवानक्षनिवृत्त्या त्रिष्वप्येकत्वं, न । शब्दात् प्रागनवगतेः । अगृहीतसम्बन्धस्य च शब्दस्याप्रत्यायकत्वात् । तदेतदाशङ्कया सहाह — **स्यादि**ति । अध्यासवादी स्वाभिप्रायेण चोदयति — गवादिष्विति । इतरश्च स्वमतत्वेनोत्तरमाह — नेति । कारणमाह — एकेति । दृश्यते हि प्रागेव शब्दान्निर्विकल्पकेनाप्येकं रूपमनुगतमिति प्रागेवोक्तमिति ॥ १८७ ॥

विभीतकादिषु नैकरूपानुगमोऽस्तीत्याह — त्रय इति । शब्द एवात्र साधारणो गवादिजातिशब्दविलक्षणो नार्थ इति ॥ १८८ ॥

किं पुनरत्राप्येकशब्दवाच्यतया शाबलेयादिवदेकधर्मान्वयो नेष्यते । अत आह — **परस्परे**ति । अयं च विविक्ताकृतिबोधोऽध्यासपक्षे न युक्तः । शब्दरूपस्याविभागादित्याह — तदध्यास इति ॥ १८९ ॥

ननु न वर्णः शब्दः । किं तर्हि । स्फोटः । तदिह भिन्नार्थप्रत्ययावसेय एव भिन्नः स्फोट इत्याशङ्कते — **भिन्नाः स्युरि**ति । तत्र परिहारमाह — नेति । कारणमाह — अर्थ इति । संशयो ह्यर्थ उच्चरिते शब्दे भवति । स शब्दभेदे न भवेदिति भावः । यदि संशयः ततः किमत आह — न सामान्यादिति । सामान्यदर्शननिबन्धनो हि संशयः । स शब्दभेदेऽनुपपन्न इति । शब्दसादृश्यात् तर्हि संशयो भविष्यतीत्यत आह — रूपाभेद इति । अयमभिप्रायः — न वर्णातिरिक्तः पदस्फोटोऽस्तीति वक्ष्यामः । वर्णा एव हि पदं, ते चाभिन्नरूपाः प्रतीयन्त इति ॥ १९० ॥

---

१. 'वस्तुत्वे' ग. पाठः.

भवत्यादौ च भिन्नेऽपि नामाख्यातत्वसंज्ञया ।
रूपैकत्वेन चाभ्यासे तुल्यार्थत्वं प्रसज्यते ॥ १९१ ॥
शब्दनिष्पत्त्यभेदाच्च तिङन्तार्थस्य साध्यता ।
कथं कथं च मूर्तार्थो वाचके मूर्तिवर्जिते ॥ १९२ ॥
गवाश्वशुक्लशब्दादेर्वाच्यरूपानपेक्षणे ।
वाचकत्वव्यवस्थानं कथं जातिगुणादिषु ॥ १९३ ॥
वृक्षप्लक्षादिशब्दानां तुल्ये भेदे घटादिभिः ।
विशेषणविशेष्यत्वं कथमर्थानपेक्षया ॥ १९४ ॥
सामानाधिकरण्यं च न स्याद् वाचकबुद्धिवत् ।
एकत्र चोपसंहारो न बुद्ध्योर्निर्विकल्पके ॥ १९५ ॥

---

दुर्भणः शब्दभेद इति दूषणान्तरमाह -- भवत्यादाविति ॥ १९१ ॥

अयं चापरो दोष इत्याह — शब्देति कथमन्तेन । अभिन्ना हि शब्दस्य निष्पन्नरूपता नामाख्यातयोरिति । इदं च नोपपद्यत इत्याह — कथं चेति । कः पुनर्मूर्तोऽर्थः । न तावज्जातिः अमूर्तत्वात् । व्यक्तिस्त्वध्यासवादिभिरपि नापलपितैव । सा च मूर्तैवेति । को दोषः । सत्यम् । इदं तु परिणामविवर्तवादिनः प्रत्युक्तम् । परिणामवादिनो हि वागेवार्थात्मना परिणमतीति मन्यन्ते, त उपालभ्यन्ते । कथममूर्तस्य मूर्तः परिणामः । मूर्तानां हि मृदादीनां मूर्तो घटादिपरिणामो भवतीति युक्तम् । एवं विवर्तवादेऽपि वाच्यम् । मूर्तं हि मुखमादर्शे विवृत्तं युक्तं यद् मूर्तमुपलभ्यते । अमूर्तविवर्ते तु कथं मूर्तनिर्भासा बुद्धिरिति ॥ १९२ ॥

तथा यच्चेदं गवाश्वादयो जातिशब्दाः शुक्लादयो गुणशब्दा इति विभज्यन्ते, तदपि वाच्यरूपानपेक्षणे नोपपद्यत इत्याह — **गवाश्वेति** ॥

विशेषणविशेष्यभावोऽपि बाह्यार्थानपेक्षया न व्यवतिष्ठत इत्याह — **वृक्षप्लक्षादीति** ॥ १९४ ॥

सामानाधिकरण्यं च नीलोत्पलादिषु शब्दबुद्ध्योरिवार्थबुद्ध्योरपि नाध्यासे उपपन्न इत्याह—**सामानाधिकरण्यमिति**। अपिच एकत्रोप-

**वस्तुमात्रे स चेदेवं सर्वेषामेकवाच्यता ।**
**भवेद् गवादिशब्दानां सर्वैर्वस्तु हि गम्यते ॥ १९६ ॥**
**नचासाधारणे भेदे नीलोत्पलमितीष्यते ।**
**नहि शब्दप्रवृत्तिः स्यादन्यत्रान्यत्र चेष्यते ॥ १९७ ॥**
**नच नीलोत्पलं नाम वस्त्वेकं किञ्चिदिष्यते ।**
**शब्दार्थयोर्यतो भेदो गम्यतेऽवयवानुगः ॥ १९८ ॥**
**शब्दद्वयस्य चाध्यासः पर्यायेष्वपि दृश्यते ।**
**एकाधिकरणास्तेन स्युस्ते नीलोत्पलादिवत् ॥**

---

संहते बुद्धी समानाधिकरणे भवतः । तदिहाध्यासवादिनां कुत्रैकत्रोपसंहारो वाच्यः । न तावदसाधारणे, तस्यापि कल्पनीयत्वादित्याह — एकत्रेति । अस्मन्मते तु वाच्यभागानुप्रवेशद्वारेणास्यैकत्रोपसंहार इति विवेचनीयमिति ॥ १९५ ॥

यदि त्वसाधारण एव वस्तुत्वसामान्यगोचर उपसंहार इष्यते, ततः सर्वेषामेव गवाश्वादिशब्दानां वस्तुगोचरत्वाविशेषात् सामानाधिकरण्यं प्राप्नोतीत्याह—वस्तुमात्र इति । इह वस्तुत्वाभ्युपगममनापाद्यैव वार्त्तिककृता दोषबाहुल्यादतिप्रसङ्गोऽभिहित इति ॥ १९६ ॥

अभ्युपगम्याप्यसाधारणोपसंहारं व्यक्त्यानन्त्यान्नीलोत्पलपदप्रयोगो न स्यात्, दृश्यते चासाविति दूषणान्तरमाह — नचेति ॥ १९७ ॥

नचानेकनीलोत्पलव्यक्तिसाधारणी नीलोत्पलत्वजातिर्भवद्भिरिष्यते यत्र शब्दो वर्तेतेत्याह — नचेति । न केवलं नेष्यते, युक्तिश्च तदभ्युपगमे न भवतीत्याह — शब्दार्थयोरिति । द्वौ ह्यत्र नीलोत्पलशब्दावध्यस्येते । अतः श्रुतशब्दभागानुगतौ द्वावेव शब्दाध्यासरूपावर्थौ गम्येते । नहि शब्दद्वयाध्यासे प्रत्यायैकत्वं सम्भवतीति ॥ १९८ ॥

यदि सहप्रयोगमात्रात् सामानाधिकरण्यमित्युच्यते, स तर्हि पर्यायशब्दयोरपि कदाचिदव्युत्पन्नबोधार्थे प्रयोगो दृष्ट इति तयोरपि सामानाधिकरण्यं स्यादित्याह— शब्दद्वयस्येति ॥ १९९ ॥

**नचानवगते पूर्वं पदमर्थे प्रयुज्यते ।**
**तत्र सम्बन्धवेलायां कीदृशोऽर्थः प्रतीयते ॥ २०० ॥**
**तदानीं नार्थरूपे हि शब्दरूपस्य सम्भवः ।**
**नचासाधारणांशेन सम्बन्धानुगमः क्वचित् ॥ २०१ ॥**
**तत्र पूर्वानपेक्षत्वे यद्यात्माध्यासशक्तता ।**
**शब्दस्य प्रथमेऽपि स्याच्छ्रवणेऽध्यस्तरूपता ॥ २०२ ॥**
**मम वाच्यानभिज्ञत्वान्न भवेत् स्मरणं ततः ।**
**भवतस्त्वर्थरूपस्य वाचकेष्वपि दर्शनात् ॥ २०३ ॥**
**यथा त्वज्ञातशब्दानां वाच्ये तद्धीर्न जायते ।**
**तथैवाज्ञातवाच्यानामुपलब्धेऽपि वाचके ॥ २०४ ॥**

---

अपिच नानवगतसम्बन्धं पदं प्रत्याययति । नचानवगतेऽर्थे सम्बन्धोऽनुभवितुं शक्यते । तदिहाध्यासवादे सम्बन्धानुभववेलायां कीदृशोऽर्थः प्रत्येतव्य इति वाच्यमित्याह — नचेति । न केनचिद् रूपेण प्रत्येतुं शक्यत इति भावः ॥ २०० ॥

किमिति न शक्यते, अत आह — तदानीमिति । शब्दरूपो ह्यर्थः । नचाव्युत्पन्नस्ताद्रूप्यावधारणे समर्थः । तदिहाध्यासात् सम्बन्धबुद्धिः ततश्चाध्यास इति तत्रेतरेतराश्रयमिति भावः । असाधारणेन च सम्बन्धग्रहणं नाशङ्कनीयमेव, पिण्डान्तरेऽप्रयोगप्रसङ्गादित्याह — नचेति ॥ २०१ ॥

तदिदानीं सम्बन्धानपेक्षस्यैव शब्दस्यात्माध्यासशक्तत्वं बलादापतितं, तत्र च प्रथमश्राविणोऽपि तद्रूपार्थबोधप्रसङ्ग इत्याह — तत्रेति ॥

नच वाच्यं तवापि शब्दो नित्यमर्थेन सम्बद्धः तत् किमर्थं स्मरणं नादधातीति । मम ह्यस्ति वाच्यं व्यतिरिक्तं तद्, येन वाच्यवाचकसम्बन्धोऽवगतः स शब्ददर्शनादर्थं स्मरति । यस्त्वस्येदं वाच्यमिति न जानाति न तस्यार्थस्मरणमिति नानुपपन्नं किञ्चिदित्याह — ममेति । भवतस्तु वाचकरूपातिरिक्तवाच्यरूपाभावात् प्रथमश्रवणेऽप्यध्यस्तरूपता स्यादिति पूर्वेण सम्बन्ध इत्याह — भवत इति ॥ २०३ ॥

नत्वेतदस्तीति व्यतिरेकेण दर्शयति — यथेति ॥ २०४ ॥

तस्मान्नातीव वाच्यानां वाचकाधीनता भवेत् ।
स्मारकत्वाच्च तेष्वेव पारतन्त्र्यं प्रतीयते ॥ २०५ ॥
तेन सम्बन्धवेलायामर्थात्मा योऽवसीयते ।
शब्दादपि स एवेति नार्थरूपं प्रणश्यति ॥ २०६ ॥
प्रवृत्तौ वा निवृत्तौ वा यां शब्दः कुरुते मतिम् ।
तादात्म्यं तस्य शब्दस्य न कथञ्चित् प्रतीयते ॥
करहस्तादिशब्देभ्यः शब्दरूपस्य भेदतः ।
भिन्नोऽर्थः सम्प्रतीयेत तदध्यारोपकल्पने ॥ २०८ ॥
आत्माध्यासश्च सादृश्यादुपरागाच्च दृश्यते ।
न तावदर्थसादृश्यं शब्दस्येह प्रतीयते ॥ २०९ ॥
नचानुरागः शब्देन भिन्नदेशस्य युज्यते ।
दूरस्थप्रतिविम्बं च नारूपस्य प्रतीयते ॥ २१० ॥

---

यतश्च गृहीतशब्दोऽपि नार्थं प्रतिपद्यते, ततो नैव वाचकाधीनं वाच्यमित्याह — **तस्मादिति** । प्रमाणान्तरावगतार्थरूपस्मारकत्वात् तु श्रुतेरेव तत्पारतन्त्र्यं युक्तमित्याह — **स्मारकत्वादिति** ॥ २०५ ॥

उपसंहरति — **तेनेति** ॥ २०६ ॥

प्रवृत्तिनिवृत्त्युपदेशेषु कुर्याद् न कुर्यादित्येवमादिषु शब्दस्यातदात्मकत्वात् तदात्मकार्थबोधोऽनुपपन्न इत्याह — **प्रवृत्ताविति** ॥ २०७ ॥

पर्यायशब्देषु च शब्दभेदादर्थ(भेदोप ? भेदा)पत्तिरित्याह — **करहस्तादीति** ॥ २०८ ॥

अपिचायमध्यासः सादृश्याद् वा भवति शुक्ताविव रजतस्य, उपरागाद् वा मणाविव जपारुणिम्नः । नचैतदुभयमपि शब्दाध्यासे सम्भवति । दूरस्थेनानुरागासम्भवात् सादृश्यानवगतेश्चेति । तदेतदाह — **आत्माध्यास** इति सार्धेन । यदपि विवर्तवादिनां प्रत्यवस्थानं दूरस्थमपि चन्द्रादि जले विवर्त(मु ? उ)पलभ्यते, तद्वच्छब्दोऽपि प्रत्येष्यत इति । तदयुक्तम् । अरूपस्य प्रतिविम्बासम्भवादित्याह — **दूरस्थेति** ॥ २१० ॥

**शब्दसर्वगतत्वेन यद्यर्थप्राप्तिरुच्यते ।**
**सर्वार्थानां भवेच्छब्दैः सर्वैरेवानुरञ्जनम् ॥ २११ ॥**
**नच भिन्नेन्द्रियग्राह्यं किञ्चिदस्त्यनुरागकृत् ।**
**नहि लाक्षानुरक्तेऽपि स्फटिके धीस्त्वगादिभिः ॥**
**अनुमानागमौ मिथ्या स्यातामध्यासकल्पने ।**
**निरूपणस्य मिथ्यात्वात् सर्वाभावः प्रसज्यते ॥**
**तथास्त्विति यदि ब्रूयाद् मिथ्या स्ववचने सति ।**
**कथमेवं वदेदर्थो नानृताद्धि प्रतीयते ॥ २१४ ॥**

---

ननु यदिदमुक्तं दूरस्थत्वाच्छब्देनानुरागो न सम्भवतीति, तदयुक्तम् । वैभवेन शब्दस्य सर्वत्र सन्निधानादत आह — **शब्देति** ॥ २११ ॥

किञ्चायमनुरागः समानेन्द्रियग्राह्येणैव दृष्टः यथा चाक्षुषस्य मणेररुणिम्ना चाक्षुषेणैव । नहि त्वचा स्फटिकेऽनुभूयमाने चाक्षुषोऽरुणिमा तमनुरञ्जयति । एवं श्रौत्रः शब्दो न चाक्षुषमर्थमनुरञ्जयितुं शक्नोतीत्याह— **नचेति** ॥ २१२ ॥

एवं तावदशब्दात्मनः शब्दात्मकतया वेदने पाररूप्यप्रसञ्जनेन यत् सविकल्पकज्ञानानां मिथ्यात्वमुक्तं तन्निराकृतम् । अध्यासवादिनां तु सविकल्पकज्ञानमिथ्यात्वेनानुमानादीनां प्रामाण्यं दुर्लभमित्याह — **अनुमानेति** । न केवलमनुमानादीनां प्रामाण्यं न सिध्यति, सर्वनिरूपणानामेव तु विकल्पाधीनत्वात् सर्वलोकवेदव्यवहारोच्छेदप्रसङ्ग इत्याह — **निरूपणस्येति** । निरूपणं निर्णय इति ॥ २१३ ॥

ननु सर्वं मिथ्यैव वाचोऽतिरिक्तं वाङ्मयत्वाद् विश्वस्य, 'तद् यथा शङ्कुना सर्वाणि पर्णानि सन्तृण्णान्येवमोङ्कारेण सर्वा वाक् सन्तृण्णा ओङ्कार एवेदं सर्वं' 'वागेव विश्वा भुवनानि जज्ञिरे' इति श्रुतेः । अत आह — **तथास्त्विति** । सर्वमिथ्यात्वे प्रतिज्ञाया एव मिथ्यात्वाद् न सर्वमिथ्यात्वं सिध्यतीति ॥ २१४ ॥

शून्यवादोत्तराच्चापि यथार्थं बुद्धिशब्दयोः ।
प्रवृत्तिर्न तु तत् तन्त्रमर्थरूपं कदाचन ॥ २१५॥
तस्मात् प्रागपि ये शब्दाद् भिन्नैकत्वादिबुद्धिभिः।
गृह्यन्ते सर्वदा तेषां परमार्थास्तिता भवेत् ॥ २१६॥
शब्दाभ्युपायकेऽप्यर्थे तदभावे च यद्यपि ।
अर्थबुद्धिर्न जायेत नार्थे रूपं प्रणश्यति ॥ २१७ ॥
चक्षुरादेरभावे हि रूपाद्यात्मा न गृह्यते ।
स्वरूपनाशो रूपादेस्तावन्मात्रेण नेष्यते ॥ २१८ ॥
सम्बन्धस्य च नित्यत्वान्नार्थस्य स्यादरूपता ।

---

अपि चायमध्यासापरनाम्ना बाह्यापलापः । बाह्यापलापो माहायानिकः पक्षः । स च शून्यवादोत्तरेणैव निराकार्य इत्याह — **शून्यवादेति** । बुद्धिग्रहणं बुद्ध्यध्यासनिराकरणार्थम् । इदं च प्रागपि व्याख्यातमिति ॥ २१५ ॥

प्रकरणार्थमुपसंहरति — **तस्मादिति** । भिन्नैकत्वादिबुद्धिभिरिति । अनुगतव्यावृत्तिबुद्धिभिरित्यर्थः ॥ २१६ ॥

एवं तावत् प्रमाणान्तरप्रतिपन्नार्थगोचरः शब्दः न तत् तन्त्रमर्थरूपमित्युक्तम् । इदानीं तु यद्यपि शब्दोपायकोऽर्थोऽसति शब्दे नावगम्यते, तथापि न तस्य स्वरूपनाशो भवति । नहि चक्षुरादेरभावे रूपादिपञ्चकं न प्रतीयत इति तदसद् भवति । तदेतदाह — **शब्दाभ्युपायक इति** द्वयेन । इह चोपायापेक्षत्वेनासत्त्वं निराकृतं, 'न हि दीपेन्द्रियादीनामित्यत्र हेतोरनैकान्तिकत्वमुक्तमिति विवेक इति ॥ २१७,२१८ ॥

नन्वस्तु शब्दातिरिक्तमर्थरूपम् । तत्तु सम्बन्धग्रहणात् प्राक् शब्दाकारेण नावगतम् । उत्तरकालं तु तदाकारमवगम्यत इत्यतदाकारस्य तदाकारप्रतीतेर्मिथ्यात्वमत आह — **सम्बन्धस्येति** । नित्यो हि वाच्यवाचकसम्बन्ध इति पूर्वमपि तच्छब्दवाच्यशक्तिरासीदेव । परस्तात् त्वभिव्यक्ता ।

**युगपन्न हि सर्वेषामन्याकारार्थवेदनम् ॥ २१९ ॥**

**तदाकारेऽपि तद्वच्चेद् द्वये सति परीक्ष्यताम् ।**

**किन्त्वर्थस्यातथाभावो ग्रहीतुः किन्त्वशक्तता ॥**

**सदसद्भावयोरर्थे विरोधित्वादसम्भवः ।**

**ग्रहीतृभेदाच्छक्तत्वमशक्तत्वं च युज्यते ॥ २२१ ॥**

**यथान्धानन्धयोः पार्श्वे रूपस्येत्यभिधास्यते ।**

**तेनार्थे ध्वन्युपायस्य तद्धीर्नान्यस्य जायते ॥ २२२ ॥**

---

एतावच्च तदानीमपि शब्दाकारत्वं न तदात्मता । अतो नातदाकारं तदाकारतया गम्यत इति कुतो भ्रान्तिः । शब्दसम्बन्धमात्रेण चेदं शब्दाकारत्वमुच्यते । न तु शब्दात्मकतया, 'नित्यं यदि च गोत्वादी'त्यत्र शब्दात्मकत्वमङ्गीकृत्य भ्रान्तित्वं निराकृतमिति विवेकः । अरूपता अशब्दरूपतेत्यर्थः । कथं पुनरिदमवगम्यते सम्बन्धग्रहणात् प्रागपि तद्रूपमासीदिति, अत्राह — युगपदिति । नहि युगपदेव सर्वे शब्दासम्भिन्नमर्थं बुध्यन्ते । यदैव ह्येकोऽशब्दाकारमर्थं प्रत्येति, तदैव व्युत्पन्नो गौरयमिति विकल्पयति । अतो नातद्रूपस्य तद्रूपतया ग्रहणमिति ॥ २१९ ॥

अत्र चोदयति— **तदाकार** इति ।

> यथैव ह्यतदाकारो न सर्वैरवगम्यते ।
> तदाकारोऽपि न तथा सर्वैरिति कथं तथा ॥

इति । परिहरति — द्वये सतीति । परीक्षास्वरूपं दर्शयति — किन्त्विति ॥ २२० ॥

निर्णयमाह — **सदसद्भावयो**रिति । तदाकारत्वमस्ति नास्ति चेति नोपपद्यते, विद्यमानस्य तु शक्त्यशक्तिभेदादुपलम्भानुपलम्भौ युक्तौ । शक्तिसदसद्भावावपि तदाधारभेदादुपपन्नावेवेति विद्यमानैव तदाकारता अशक्तैर्नानुभूयत इति निर्णयं इति ॥ २२१ ॥

अत्रैव दृष्टान्तमाह — यथेति । रूपस्य ग्रहणे ग्रहीतृभेदात् शक्ताशक्तत्वं यथेत्यर्थः । एतच्च सम्बन्धपरिहारेऽभिधास्यत इत्याह — इत्यभिधास्यत इति । इतरिदमर्थे । शक्ताशक्तत्वे विभजते — तेनेति । येनेयं

**देवदत्तादिशब्दे तु सम्बन्धाद्यत्वदर्शनात् ।**
**अर्थस्यानित्यतायां च ताद्रूप्यस्याप्यनित्यता ॥२२३॥**
**तत्राप्यौत्पत्तिकी शक्तिस्तद्रूपप्रत्ययं प्रति ।**
**ग्राह्यग्राहकयोरिष्टा नियोगस्य त्वनित्यता ॥ २२४ ॥**
**तत्र सर्वैरताद्रूप्यं प्राङ् नियोगात् प्रतीयते ।**
**तेनेष्टमेव मिथ्यात्वं कैश्चिदध्यासकल्पने ॥ २२५ ॥**

---

शक्तितो व्यवस्थोपपत्तिमती तेन शब्दोपायकस्य ग्रहीतुः शब्दाकारा धीर्नेतरस्येति विवेकः ॥ २२२ ॥

अत्र चोदयति — देवदत्तादीति । तुशब्दः पूर्वोक्तनिवृत्तौ । नित्यस्तु स्यादितिवत् । यदेतदुक्तं प्रागपि शब्दाकार एवासावर्थ इति तदव्यापकं, देवदत्तादीनां कल्पनास्वसम्भवात्, तत्र ह्यादिमान् सम्बन्धः । अर्थोऽपि देवदत्तादिरनित्यः । अतः पूर्वापरयोः कोट्योः प्रसंख्यानात् ताद्रूप्यं शब्दरूपत्वमनित्यम् । अतोऽवश्यमेव तत्रातदाकारं तदाकारतया कल्प्यत इति मिथ्यात्वमिति ॥ २२३ ॥

परिहरति -- तत्रापीति । देवदत्तशब्दोऽपि देवा एनं देयासुरित्याशिषा लब्धमर्थं निजयैव शक्त्या वदति । एवं चैत्रादिशब्दा अपि नक्षत्रग्रहादिनिमित्ता गवाश्वादिशब्दवन्नित्यसम्बन्धा एवेति तद्वदेव नातदाकारता तद्रूपप्रत्ययं प्रतीति देवैर्दत्तो योऽर्थः स तस्यार्थः अतस्तदर्थरूपप्रत्ययं प्रति ग्राह्यग्राहकयोर्वाच्यवाचकयोरौत्पत्तिक्येव शक्तिः, नियोगमात्रं तु यदभिनवे पिण्डे तदनित्यम् । नच तदनित्यतया शब्दार्थसम्बन्धस्यानित्यता भवति । शब्दस्यातदर्थत्वादिति ॥ २२४ ॥

यत्र तर्हि पिण्डे नियोगवशादेव देवदत्तादिशब्दा अ(न?)न्वर्था एव वर्तन्ते । डित्थादिशब्दाश्चानुगमशून्याः तत्र कथं सत्यत्वं, तत्र हि शब्दात्मनैवार्थो विकल्प्यते न त्वर्थसमवायि किञ्चिद् विशेषणमस्ति । सैव च नामकल्पनेत्युच्यते । अन्वर्थत्वे तु यथासम्भवं कर्मादिकल्पनैव दर्शयितव्या । अतः पुनरपि नामकल्पनं मिथ्येत्यापतितं तदिहैकेषां मतेनाभ्युपगमेनैवोत्तरमाह — तत्रेति ॥ २२५ ॥

**यदा तु यादृशः पिण्डः पूर्वं शब्दात् प्रतीयते ।**
**तादृशस्मरणे हेतुः शब्दस्तत्र यथार्थता ॥ २२६ ॥**
**नियोगात् परतो वापि शब्देन त्यज्यतां मिथः ।**
**तद्ग्राह्यशक्तिरर्थस्य पाररूप्यं न तावता ॥ २२७ ॥**
**सर्वाकारपरिच्छेद्यशक्तेऽर्थे वाचकेऽपि वा ।**
**सर्वाकारार्थविज्ञानसमर्थे नियमः कृतः ॥ २२८ ॥**

---

स्वमतेन परिहारमाह — यदा त्विति । सत्यमतद्रूप एवासौ पिण्डः परस्तादपि न शब्दाकारेणावसीयते । किन्तु तदवस्थैव संज्ञा, यादृशोऽसावर्थः पूर्वमवगतस्तादृशस्यैव तस्य स्मरणे हेतुः । अतो नान्यदन्याकारेण प्रतिपन्नमिति कुतो मिथ्यात्वम् । कथं नु नामकल्पनायां डित्थोऽयमिति सामानाधिकरण्यबुद्धिः । अर्थसमवायिना हि विशेषणेन नीलोत्पलादिषु सामानाधिकरण्यं दृष्टम् । एकान्तभिन्नगोचरयोस्तु शब्दार्थबुद्ध्योः कथं सामानाधिकरण्यमिति वक्तव्यम् । अतो भ्रान्तिरेवेयम् । मैवम् । उक्तं हि — 'नात्र शब्दाकारं वस्तु चकास्ती'ति । डित्थोऽयमिति नायमर्थः डित्थशब्दात्मकोऽयमिति । नहीयमीदृशी प्रतिपत्तिरिति । अपि तर्हि डित्थ इति नामास्येति । अतो न नामकल्पना भ्रान्तिरिति ॥ २२६ ॥

अन्यन्मतं — प्रागपि नामनियोगान्नामाकारग्राह्यशक्तिरर्थस्यासीदिति । अत्यन्तासत्या गगनकुसुमवद् भावयितुमशक्यत्वात् । नियोगे तु कृतेऽसौ शक्तिरभिव्यज्यते परम् । अतः प्रागपि तद्रूपसद्भावेऽस्ति प्रमाणमिति न पाररूप्यं, तदेतदाह — नियोगादिति ॥ २२७ ॥

एतदेव प्रपञ्चयति — **सर्वाकारेति** । अस्ति हि सर्वशब्दपरिच्छेद्यताशक्तिरर्थस्य । यत्र हि डित्थडवित्थयोरन्यतमः शब्दो नियुज्यते स एव तं गमयति । शब्दोऽपि सर्वाकारार्थविज्ञानसमर्थ एव यत्रैव नियुज्यते तमेव गमयति । तदेवमनियमप्रसक्तौ नियममात्रं नियोक्त्रा पित्रादिना क्रियत इति ॥ २२८ ॥

---

१. 'द्यश' ग. पाठः.

**तत्र शब्दार्थसम्बन्धं प्रमातुः स्मरतोऽपि या ।**
**बुद्धिः पूर्वगृहीतार्थसम्बन्धादुपजायते ॥ २२९ ॥**
**चक्षुषा सन्निकृष्टेऽर्थे नाप्रत्यक्षमसौ भवेत् ।**
**विविक्ता एव तेऽप्यर्थाः स्मृतिप्रत्यक्षगोचराः ॥२३०॥**
**स्मर्येते शब्दसम्बन्धौ मा भूत् प्रत्यक्षता तयोः ।**
**तदप्रत्यक्षभावेन न त्वर्थस्यापि वार्यते ॥ २३१ ॥**
**गृहीतमपि गोत्वादि स्मृतिस्पृष्टं च यद्यपि ।**
**तथापि व्यतिरेकेण पूर्वबोधात् प्रतीयते ॥ २३२ ॥**

---

एवं तावत् सर्वप्रकारं पाररूप्ययुक्तिरुत्सारिता । इदानीं स्मृतिसङ्करेणाप्रामाण्यसम्भावनां वारयति — **तत्रेति** सार्धेन । शब्दार्थसम्बन्धं स्मरतोऽपि वा प्रमातुर्या बुद्धिर्भवति नासावप्रत्यक्षं, चक्षुषा सन्निकृष्टेऽर्थे या बुद्धिर्भवति सा प्रत्यक्षं तदानीमपि चक्षुस्सन्निकर्षोऽनुपरत एव । एवं स एवायं गौरिति पूर्वगृहीतानुसन्धानादपि जायमाना नेयमप्रत्यक्षं, प्रत्यक्षकारणस्य चक्षुषोऽनुपरतत्वात् । तदत्र शब्दार्थसम्बन्धस्मरणपूर्वगृहीतानुसन्धानाभ्यां प्रत्यक्षत्वं न वार्यत इति प्रतिज्ञातः(?)परस्तादुपपादयिष्यत इति । नचात्र 'तेनेन्द्रियार्थसम्बन्ध' इत्यनेन गतार्थत्वं तत्र स्मरन्नपि स्वधर्मेण विकल्पयन्नरः प्रत्यक्षवानिति प्रतिज्ञातं केवलं, न तूपपादितम् । अत्र शब्दाध्यासनिरासपर्यन्तेन सन्दर्भेण स्वधर्मविकल्पः प्रसाधितः । इदानीं तु स्मरन्नपीत्यस्यार्थः प्रपञ्च्यते । तेन तद् ग्रहणकवाक्यम् । उत्तरस्तु तत्प्रपञ्च इत्यनवद्यम् । इदं चानवहितानां चित्तमनुरञ्जयति नेतरेषामिति । कथं पुनः स्मृतिसम्भेदेनाप्रामाण्यमत आह — **विविक्ता एवेति** ॥ २३० ॥

विवेकमेव दर्शयति — **स्मर्येते** इति । शब्दसम्बन्धौ हि स्मर्येते अतस्तावप्रत्यक्षौ नत्वर्थस्य प्रत्यक्षता वारयितुं शक्यत इति ॥ २३१ ॥

नन्वर्थो हि पूर्वगृहीत एव गृह्यते । स एवायमिति च प्रतिसन्धीयते । अतः कथं प्रत्यक्षो भविष्यतीत्यत आह — **गृहीतमपीति** । व्यतिरेकेण आधिक्येनेत्यर्थः ॥ २३२ ॥

व्यक्तिकालादिभेदेन तत्रास्त्यवसरो मितेः ।
यः पूर्वावगतोंऽशोऽत्र स न नाम प्रतीयते ॥ २३३ ॥
इदानीन्तनमस्तित्वं न हि पूर्वधियागतम् ।
नहि स्मरणतो यत् प्राक् तत् प्रत्यक्षमितीदृशम् ॥
वचनं राजकीयं वा वैदिकं वापि गृह्यते ।
नचापि स्मरणात् पश्चादिन्द्रियस्य प्रवर्तनम् ॥

---

आधिक्यमेव दर्शयति --- व्यक्तीति । पूर्वं हि व्यक्त्यन्तरे जातिरवगता इदानीं व्यक्त्यन्तरेऽवगम्यते । तथा पूर्वेद्युरवगता अपरेद्युरवगम्यते निर्विकल्पकक्षणेऽवगता सविकल्पकक्षणेऽवगम्यत इत्यधिकपरिच्छेद्याभावादस्ति मितेरवसरः । कालश्च यदिन्द्रियसम्बन्धार्थगोचरोऽवगम्यते तदिन्द्रियजन्मनैव प्रत्यक्षेणावगम्यत इति तत्सम्बन्धस्य प्रत्यक्षत्वमुपपन्नमिति । तदप्रत्यक्षवादिनां तु चिरक्षिप्रादिप्रत्यया अनालम्बनाः स्युः । ननु त एव कालस्य लिङ्गमस्तु विषयस्त्वमीषामभिधातव्यः । यदि द्रव्यादयः, न, तत् स्वरूपमात्रेऽनुत्पादात्, तद्गोचरत्वे कालानुमानासम्भवात् । स्वांशपर्यवसानस्य च विज्ञानवादे निराकरिष्यमाणत्वाद् न स्वांशालम्बनत्वम् । अतो यदमीषामालम्बन (स ? तत्) प्रत्यक्षादवसीयत एव । कालेति । आदिशब्देनावस्थाभेदो गृह्यत इति । ननु न केवलमधिकं गम्यते किन्तु प्रागवगतमपीति कथं प्रामाण्यमत आह—यः पूर्वेति । सविकल्पके हि शब्दार्थस्वरूपसम्बन्धकालसम्बन्धाः प्रथन्ते । तत्र शब्दादिरंशोऽस्मृतिविषय इति मा नाम प्रमाणविषयो भवतु । इदानीन्तनी तु वस्तुनः सत्ता न पूर्वमवधृतेत्यस्ति तत्र प्रमाणावसर इति स्थितं प्रामाण्यमिन्द्रियव्यापारानुविधानाच्च प्रत्यक्षत्वमिति । एकं चेदं पूर्वविज्ञानजनितसंस्कारप्रत्युत्पन्नेन्द्रियादिकारणकं ग्रहणस्मरणात्मकं प्रत्यभिज्ञानाभिधानं प्रमाणमिति वेदितव्यमिति ॥ २३३½ ॥

नन्विदं भवत्यधिकविषयं, स्मरणोत्तरकालं भवत् कथं प्रत्यक्षम् । नहि निर्विकल्पस्य प्रत्यक्षस्यैष धर्मो दृष्टः । अत आह — नहीति । नहि स्मरणात् प्राग्भाविता प्रत्यक्षलक्षणम् । अपि तर्हीन्द्रियजत्वम् । तच्चात्राप्यविशिष्टमिति भावः ॥ २३४½ ॥

वार्यते केनाचिन्नातस्तत् तदानीं प्रदुष्यति ।
तेनेन्द्रियार्थसम्बन्धात् प्रागूर्ध्वं वापि यत् स्मृतेः ॥
विज्ञानं जायते सर्वं प्रत्यक्षमिति गम्यताम् ।
विमनस्का यदा केचित् सम्बद्धमपि चेन्द्रियैः ॥
न बुध्यन्ते तथा चान्ये सादृश्यादिविमोहिताः ।
तत्र योऽर्थं विवेकेन कौशलात् सदृशेष्वपि ॥ २३८ ॥
सूक्ष्मं वापि प्रपद्येत तस्य भ्रान्तिर्न तावता ।
यथा षड्जादिभेदेन गाने लौकिकवैदिके ॥ २३९ ॥
विवेकेनावगच्छन्ति येषां तत्संस्कृता मतिः ।
गानमात्रं विजानन्ति तत्रानधिकृतास्तु ये ॥ २४० ॥
तदज्ञानान्न मिथ्यात्वं वक्तुं शक्यं विवेकिनाम् ।

---

यदि स्मरणेनेन्द्रियप्रवृत्तिरेव वार्यते तदा दूष्यते । ततस्तदुत्तरकालं जायमानं सविकल्पकं प्रत्यक्षं भवेदपि । न त्वेतदस्तीत्याह — **नचेति** । ॥ २३५½ ॥

यतः स्मृत्या नेन्द्रियं विरुध्यते न वा दूष्यते । तेन प्रागूर्ध्वं वा स्मृतेर्यदिन्द्रियार्थसम्बन्धाद् ज्ञानं जायते सर्वं तत् प्रत्यक्षमभ्युपगन्तव्यमित्याह — **तेनेति** ॥ २३६½ ॥

ननु विदितशब्दार्थसम्बन्धाः सत्येवेन्द्रियार्थसम्बन्धे केचिदेव तमर्थं जात्यादिना विकल्पयन्ति नापरे । अतस्तावत्सामग्रीकस्यैव कस्यचिदभावादप्रतिबन्धककारणविशेषा भ्रान्तिरेव सविकल्पकप्रत्यय इत्यत आह — **विमनस्का इति** द्वयेन । अयमभिप्रायः — न व्युत्पत्तीन्द्रियसम्प्रयोगमात्रजं ज्ञानं सविकल्पकं, तदपि सर्वसाधारणं मनःप्रणिधानाद्यपेक्षते । अतो यदि नाम कस्यचिद् विमनस्कस्य दूरसूक्ष्मसादृश्यादिविषयदोषाद् व्यामूढस्य नामुकोऽयमिति विशदतरमवभासो भवति, नैतावता कुशलस्य सूक्ष्मसादृश्यादिविवेकचतुरस्यापि विभ्रमेण भवितव्यमिति युक्तमिति ॥ २३८½ ॥

अत्रैव दृष्टान्तमाह — **यथा षड्जादीति** द्वयेन । तत्संस्कृतेति । षड्जाद्यभ्याससंस्कृतेत्यर्थः ॥ २४०½ ॥

ते हि षड्जादिशब्देभ्यो विनाप्येषां विविक्तताम्
॥ २४१ ॥
यथावदवगच्छन्ति तद्वद् गोत्वादि वस्त्वपि ।
सङ्कीर्णमर्थमात्रं तु बुध्यन्तेऽभ्यासवर्जिताः ॥ २४२ ॥
विवेकं प्रतिपद्यन्ते ये शब्दस्मृतिसंस्कृताः ।
यथा रूपादिमत्यर्थे यस्यैवास्ति यदिन्द्रियम् ॥
स तन्मात्रं गृहीत्वान्यन्न गृह्णात्यनुपायतः ।
तथा विवेकहेतूनां यदा यं प्रतिपद्यते ॥ २४४ ॥
तदुपेये तदा ज्ञानं वर्तते तदनुग्रहात् ।
तेन यावत्प्रमातॄणां विवेकोपायदर्शनम् ॥ २४५ ॥
न स्यात् तावद् भवेत् तेषां विज्ञानं निर्विकल्पकम् ।

---

यथा षड्जादिष्वकुशलस्यापि विविक्ताकारबोधो भवति विना षड्जादिशब्दप्रयोगम्, एवं गोत्वाद्यविदितास्मृतशब्दैर्विविक्तमुपलभ्यत एवेत्याह — ते हीति ॥ २४१½ ॥

नानाजातिगुणादिसङ्कीर्णं तु तदशब्दज्ञस्य विजातीयपिण्डविविक्तमवभासते । शब्दस्मरणसंस्कृतानां तु पिण्डविविक्तजात्यादिमात्रं निर्भासत इत्याह — सङ्कीर्णमिति ॥ २४२½ ॥

यत एव स्मरणतन्त्रा विकल्पाः, अतो यदा यच्छब्दस्मरणमाविरस्ति तेनैव तदा वस्तु विकल्प्यते । यथा चक्षुष्मदादिना रूपादि नेतरेण, चक्षुष्मतापि बधिरेण रूपमात्रं न शब्दः अनुपायत्वादिति । तदेतत्सर्वमाह— यथेति द्वयेन । विवेकहेतूनाम् । शब्दानामित्यर्थः ॥ २४४½ ॥

अतः सिद्धं सविकल्पकमपि प्रत्यक्षम् । यावत्तु विवेकोपाया न शब्दा बुद्धा भवन्ति तावन्निर्विकल्पकं न तु तदेवेत्याह—तेनेति ॥ २४५½ ॥

**तस्माद् यत्र विकल्प्येत वस्तु वस्त्वन्तरात्मना ॥**
**प्रमाणाभासता तत्र न स्वधर्मविकल्पने ।**
**प्रत्यक्षत्वमतः सिद्धं सामान्यस्य तथैव च ॥ २४७॥**
**सम्बन्धस्येति तत्पूर्वमनुमानादि जायते ।**
**सर्वं चाप्यनुमानादि प्रत्यक्षे निर्विकल्पके ॥ २४८ ॥**
**न प्रवर्तत इत्येतदनुमानेऽभिधास्यते ।**
**नन्वेवं सति याप्यग्नेर्दूरादप्यौष्ण्यकल्पना ॥ २४९ ॥**
**सापि प्रत्यक्षमेव स्याद् यथा गोत्वादिबुद्धयः ।**
**प्रत्यासन्नतरं गोत्वे प्रत्यक्षत्वेन सम्मतम् ॥ २५० ॥**
**विज्ञानं नान्यदस्तीति प्रत्यक्षमिदमेव नः ।**

---

अतो यत् 'कल्पनापि स्वसंवित्ताविष्टा नार्थे विकल्पनादि'ति बौद्धैरुक्तं तत् परधर्मविकल्पेऽनुमन्यामहे न स्वधर्मजात्यादिविकल्पनेष्वित्याह — **तस्मादिति** ॥ २४६½ ॥

अतो लिङ्गलिङ्गिसामान्ययोस्ततसम्बन्धस्य च सविकल्पकप्रत्यक्षवेद्यत्वादुपपन्नमनुमानादीनां प्रत्यक्षपूर्वकत्वमित्याह— **प्रत्यक्षत्वमिति** ॥

किं पुनः प्रयस्यता सविकल्पकस्य प्रत्यक्षत्वं साध्यते । निर्विकल्पकद्वारेणापि बौद्धादीनामिवानुमानादिव्यवहारो घटिष्यते अत आह — **सर्वं चेति** । यथा न निर्विकल्पकपूर्वकमनुमानाद्यात्मानं लभते, तदनुमानेऽभिधास्यत इति ॥ २४८½ ॥

अत्र चोदयति — **नन्वेवमिति** । यदीन्द्रियव्यापारानुपरममात्राज्जात्यादिविकल्पानां प्रत्यक्षत्वम्, एवंतर्हि विस्फारिताक्षो दूरादुष्णोऽयमिति वह्निं विकल्पयति । तदपि प्रत्यक्षमापद्यते इन्द्रियव्यापाराविरामादिति ॥ २४९½ ॥

परिहरति — **प्रत्यासन्नेति** । अयमभिप्रायः — अग्निसंवेदन एव तत्रेन्द्रियव्यापार उपक्षीणः । अग्नित्वादेव व्याप्तिबलेनानुमानिकोष्णविकल्पो जायते । गोत्वे तु नेन्द्रियव्यापारतः प्रत्यासन्नमर्थान्तरं प्रत्यक्षत्वेन

तत्राप्यक्षैरसम्बन्धं मन्वानस्योपजायते ॥ २५१ ॥
यदा बुद्धिस्तदा नैव प्रत्यक्षत्वेन कल्प्यते ।
स्पर्शनेन तु सम्बन्धे प्रत्यक्षत्वेन जायते ॥ २५२ ॥
मतिरौष्ण्ये परोक्षेयं चक्षुषाग्नौ प्रकाशिते ।
तस्माद् यदिन्द्रियं यस्य ग्राहकत्वेन कल्पितम् ॥
तेनैव सति सम्बन्धे प्रत्यक्षं नान्यथा भवेत् ।
एवं समानेऽपि विकल्पमार्गे
यत्राक्षसम्बन्धफलानुसारः ।
प्रत्यक्षता तस्य तथाच लोके
विनाप्यदो लक्षणतः प्रसिद्धम् ॥ २५३ ॥

---

सम्मतं किञ्चिदस्ति येन तदेव प्रत्यक्षं नेतरदित्युच्यते । अतो गोत्वमेव प्रत्यक्षमिति ॥ २५०½ ॥

यदपि तत्रापि दूराद् गोमहिषादिसंशये शब्दविशेषादिना गोत्वादिनिश्चयो भवति, सोऽक्षसम्बन्ध आनुमानिक एव नतु प्रत्यक्ष इत्याह—तत्रेति ॥ २५१½ ॥

अपिच संवित्पराहतमेवारादुष्णविकल्पस्य प्रत्यक्षत्वम् । अपरोक्षा हि बुद्धिः प्रत्यक्षं, तद् यदा स्पर्शेन्द्रियेणोष्णमनुभूयते तदा त्वपरोक्षाकारा बुद्धिरिति भवति प्रत्यक्षं, चक्षुषा वह्नौ प्रकाशिते भवन्ती परोक्षावभासित्वान्न प्रत्यक्षमित्याह—स्पर्शनेनेति ॥ २५२½ ॥

अतः स्वेन्द्रियानुसारेणैव प्रत्यक्षता । इन्द्रियान्तरं त्वसत्कल्पमेवेत्याह— तस्मादिति ॥ २५३ ॥

कथं पुनः समानजन्मनोरुष्णाग्निविकल्पयोरेकं प्रत्यक्षमितरच्चानुमानिकम्, एवंहि प्रत्यक्षं लक्षयतालौकिकमेव प्रत्यक्षं लक्षितं भवेदत आह—एवमिति । नेदमलौकिकं यत्र ह्यपरोक्षावभासबुद्धिः तत् प्रत्यक्षमिति लक्षणाद् विनापि लौकिका मन्यन्ते । अक्षसम्बन्धोऽपि चापरो-

क्षावभासौपयिकतयैव लक्षणकारैरपि प्रत्यक्षलक्षणत्वेनाश्रीयते न स्वरूपेण । अतो यत्राप्यावक्षसम्बन्धफलमपरोक्षावभासित्वमनुस्त्रियते तस्य प्रत्यक्षता नेतरस्येति सिद्धम् ॥ २५४½ ॥

इत्युपाध्यायसुचरितामिश्रकृतौ काशिकाटीकायां
प्रत्यक्षसूत्रं समाप्तम् ॥

---

शुभं भूयात् ।

## खिलपूरणी ।

| पृष्ठम् | पङ्क्तिः | खिलांशः | पूरितांशः |
|---|---|---|---|
| ३ | १२ | अधर्म + स्तु | अधर्ममाहुः । अन्यांस्तु |
| ५ | ७ | (ग्रहण + त्व?) नेन्द्रि | ग्रहणं तु प्रत्युत्पन्नेन्द्रि |
| ,, | १६ | नहि का + + क्तम् | नहि तत्र विषयो भिद्यत इत्युक्तम् । |
| ,, | १८ | हि + + + वर्त | हि वदं वर्त |
| ,, | २२ | वि + + + का | विषयानेका |
| ७ | ७ | यो... र्धा | योग्ययागादिधा |
| ,, | ९ | ष्ट .. च्यते | ष्टलाभे लभ्यते |
| ,, | १५ | य .. र्थेम | यं योग्यं धात्वर्थेन |
| ,, | १७ | निव ... तमावा | निविशते तदेव वा |
| ८ | ४ | न .. प्र | न प्र |
| ,, | २० | ब्दा .. स्य | ब्दार्थस्य |
| ,, | २१ | व ... पा | वं भजते लिङादिव्यापा |
| ,, | २३ | वृ ... व | वृत्तेः कश्चासाव |
| ,, | २६ | चेत् ... स | चेत् नवमपि स |
| ,, | २८ | स ... प्र | सर्वव्यापाराणां प्र |
| ९ | २ | मेन प .. वि | मेऽनवस्थापातः वि |
| १० | १३ | ष्टो .. मव्या | ष्टोपायोऽयं व्या |
| ,, | १६ | न्ति ... अतः | न्ति प्रवर्तनाम् । अतः |
| ,, | १८ | क्तम् । हि .. त्य | क्तम् । एतदेवाभिप्रेत्य |

अनन्तशयनसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः ९९.

श्रीसेतुलक्ष्मीप्रसादमाला ।

ग्रन्थाङ्कः ११.

# मीमांसाश्लोकवार्त्तिकं

## सुचरितमिश्रप्रणीतया

काशिकाख्यया टीकया

समेतम्

संस्कृतग्रन्थप्रकाशनकार्याध्यक्षेण

के. साम्बशिवशास्त्रिणा

संशोधितम् ।

द्वितीयः सम्पुटः ।

# PREFACE.

This is the second part of the Kāśika, a commentary by Upādhyāya Sucarita Miśra on the Mīmāmsā ślokavārtika, and contains Nirālambana vāda and Śūnya vāda of the Autpattikasūtra. The printing of this part was delayed for want of sufficient manuscript materials; but fortunately, after the first three formes were struck off, a better manuscript was discovered at the library of Brahmasri Idappalli Subrahmaṇya Valiya Raja. This manuscript marked ख, about three centuries old, ran up to the end of Sūnya vāda and also contained at the end Śabdanityatādhikaraṇa and Vedapratyāyakatādhikaraṇa. The first three formes already struck contained some lacunae and the portions filling them as found in the new manuscript are separately printed and prefixed to the work. The department had already collected a manuscript about four centuries old from the library of the Raja of Kilimanur, and it may be mentioned here that it was this ancient manuscript marked क that prompted us to undertake the edition of the work.

*Trivandrum,*
*24-12-1104.*

K. SĀMBAŚIVA ŚĀSTRI.

## निवेदना ।

अयम् उपाध्यायसुचरितमिश्रकृतायाः काशिकाख्याया मीमांसा-श्लोकवार्त्तिकव्याख्याया द्वितीयो भागः, यत्रौत्पत्तिकसूत्रे शून्यवादान्तो विषयः संघटितः । अस्य भागस्य प्रसाधने समुपक्रान्तेऽपि यत्सत्यं परिशुद्धं मातृकान्तरमनुपलभमानैरस्माभिर्मनागिवोदासि । अथ दैवादनुकूलात् कृतभूरिपरिश्रमाणामस्माकं किमपि चक्षुषीव प्रभातं मातृकान्तरमेकमुपलब्धं, यद् इडप्पळ्ळि-सुब्रह्मण्यवलियराजस्वामिकम् आदितोऽनुक्रमशः शून्यवादान्तेन भागेनान्ते शब्दनित्यतावेदप्रत्यायकताधिकरणाभ्यां च सनाथं ख-संज्ञितं त्रिशतवर्षवृद्धम् । अतश्च मातृकान्तराद् यथायथं समुद्धृतैर्भागैस्तत्र तत्र कासुचित् पङ्क्तिषु संमुद्रितचरीषु दृष्टाः खिला भागाः प्रपूरिताः । एतदर्थं कापि लध्वी पट्टिकापि साकमनेन समायोजि । क-संज्ञा कापि मातृका प्रागेवास्मदधिकरणे सम्पादिता किळिमानूर्राजसम्बन्धिनी मार्की चतुःशतवत्सरीवृद्धा निकाममस्माकं प्रथममूलं स्वमिति सुतरामादराभिनन्दनयोः स्थानम् ।

अनन्तशयनम्,<br>२४-१२-१०४.

के. साम्बशिवशास्त्री.

श्रीपद्मनाभसेवि-
न्यखिलश्रीवर्धनी महाराज्ञी ।
श्रीसेतुलक्ष्म्यभिख्या
प्रत्यक्षा जयति वञ्चिभूलक्ष्मीः ॥

ग्रन्थावलिरियमिन्धे
प्रसाधिता तत्प्रसादगुणगुम्फा ।
श्रीसहितसेतुलक्ष्मी-
प्रसादमाला सुवर्णमणिचित्रा ॥

# विषयानुक्रमणी ।

| विषयः. | पृष्ठम्. |
|---|---|

## औत्पत्तिकसूत्रम् ॥ ५ ॥

विषयः.　　　　　　　　　　　　　　　　　　　　　　　　　　　　　　पृष्ठम्.

विषयः. पृष्ठम्.

| विषयः. | पृष्ठम्. |
|---|---|

विषयः.　　　　　　　　　　　　　　　　　　　　　　पृष्ठम्.

॥ श्रीः ॥

# मीमांसाश्लोकवार्त्तिकं

## सुचरितमिश्रप्रणीतया

काशिकाख्यया टीकया समेतम्।

(द्वितीयो भागः।)

---

**औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धस्तस्य ज्ञानमुपदेशोऽव्यतिरेकश्चार्थेऽनुपलब्धे तत् प्रमाणं बादरायणस्यानपेक्षत्वात् ॥ (५)**

**प्रत्यक्षादौ निषिद्धेऽपि ननु लोकप्रसिद्धितः।**
**धर्माधर्मौ प्रमास्येते ब्राह्मणादिविवेकवत् ॥ १ ॥**

---

अत्र भाष्यकारेण प्रत्यक्षाद्यनिमित्तत्वे प्रतिपादिते सदुपलम्भकप्रमाणप्रत्यस्तम(य?यादभा)वप्रमेयतां धर्मस्याशङ्क्य तन्निराकरणपरतयौत्पत्तिकसूत्रमवतारितम् अभावोऽपि नास्ति यतः "औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धस्तस्य ज्ञानमुपदेशोऽव्यतिरेकश्चार्थेऽनुपलब्धे तत्प्रमाणं बादरायणस्यानपेक्षत्वात्" इति। तच्च चोदनैवेत्यवधारणं चाक्षिपति— प्रत्यक्षादाविति। अयमर्थः— भावगोचरनिखिलप्रमाणाभावे ह्यभावः प्रमाणम्। नचेह तथा, लोकप्रसिद्धेरेवाभावात्। नच सा न प्रमाणं, ब्राह्मणादिवर्णविवेकस्य तदधीनत्वात्। इतरथा तदभावात्। नखलु सुनिपुणमपि विलोकयमाना वयं क्षत्रियादिविलक्षणं ब्राह्मणशब्दवाच्यं पिण्डानुगतमपरं रूपमपरोक्षमीक्षामहे। तदवश्यं वर्णविवेकाय लोकप्रसिद्धिः स्वतन्त्रा प्रमाणमास्थेया। अपिच सकलशब्दार्थावधारणमेव तदायत्तं, तामन्तरेण प्रमाणान्तरासम्भवात्। अतो निषिद्धेऽपि प्रत्यक्षादौ नाभावश(ङ्का)। नच चोदनैवेत्यवधारणोपपत्तिरिति ॥ १ ॥

G. P. T. 383. 500. 12-3-102 B.

**अभिवन्द्य गुरूनादौ शिष्यधीपद्मिनीरवीन् ।**
**तत्प्रसादात् करिष्येऽहं मीमांसाश्लोकवार्त्तिकम् ॥ २॥**
**तद् विद्वांसोऽनुगृह्णन्तु चित्तश्रोत्रैः प्रसादिभिः ।**
**सन्तः प्रणयिवाक्यानि गृह्णन्ति ह्यनसूयवः ॥ ३ ॥**
**न चात्रातीव कर्तव्यं दोषदृष्टिपरं मनः ।**
**दोषो ह्यविद्यमानोऽपि तच्चित्तानां प्रकाशते ॥ ४ ॥**
**कुतो वा गृह्यते दोषं सूरयो मद्विधोक्तिषु ।**
**नेष्यते यः परस्थोऽपि स स्वयं गृह्यते कथम् ॥ ५॥**

---

विद्यागुरूणामिदानीं स्तुतिनमस्कारौ करोति— **अभिवन्द्येति ।** शिष्यधीपद्मिनीनां रवीनिव विकासकान् गुरूनादौ वन्दे । ततो वार्त्तिकं करिष्ये । तेषामेव प्रसादेन दृष्टेनार्थतत्त्वोपदेशेनादृष्टेन च स्तुतिनमस्कारभुवा । गुर्वनुगमनादयोऽपि ह्याचारप्रमाणका एव । वार्त्तिकग्रहणेन च दुरुक्तभङ्गमनुक्तवचनं च समाधत्ते । मीमांसाशब्देन न्यायशास्त्रमिदमतो न्यायानुसारेणाधिकरणभङ्गाद्यदूषणमिति दर्शयति । श्लोकपदेन च लाघवविकासं क्षिपाम इति दर्शयति । ततश्च सूत्रितन्याय मिममर्थमवाहिता जिज्ञासवो भावयिष्यन्तीति तात्पर्यार्थ इति ॥ २ ॥

सम्प्रति लोकयात्रामाद्रियमाणो येऽत्यन्तपरार्थाः स्वोपकारमगणयन्तोऽपि परोपकाराय यतन्ते सन्तस्तान् प्रत्याह— **तद् विद्वांस** इति । असूयवो मत्सराः ततोऽन्येऽनसूयव इति ॥ ३ ॥

ये तु मध्यस्था गुणदोषनिरूपणेन दोषवन्तमपहाय गुणवन्तमुपाददते, तान् प्रति परीक्षाविशेषार्थमर्थयते— **न चात्रेति** । (मदीये प्रबन्धेऽस्मिन् गुणदोष)इति युगपद् गुणदोषौ निरूपयन्तु भवन्तः । अन्यथा गुणानुपेक्ष्य दोषेषु निरूप्यमाणेषु दोषनिर्भावनैकमनसामसन्तो दोषाः प्रकाशेरन् इति ॥ ४ ॥

इदानीं दुर्जनान् प्रति सदण्डमाह— **कुतो वेति** । ये वयं परस्थानपि दोषान् न स्पृश्यामः, ते कथं स्वग्रन्थेषु दोषानुपाददीमहि । न चास्माभिरनुपात्तान् दोषान् सूरयो ग्रहीतुमर्हन्तीति ॥ ५ ॥

निर्दोषत्वैकवाक्यत्वं क्व वा लोकस्य दृश्यते ।
सापवादा यतः केचिन्मोक्षस्वर्गावपि प्रति ॥ ६ ॥

आगमप्रवणश्चाहं नापवाद्यः स्खलन्नपि ।
नहि सद्वर्त्मना गच्छन् स्खलितेष्व(प्य)पोद्यते ॥

यथा कथञ्चिदारब्धा त्रयीमार्गानुसारिणी ।
वाग्वृत्तिरल्पसारापि श्रद्दधानस्य शोभते ॥ ८ ॥

---

सम्प्रति मत्सरा नूनं दूषयिष्यन्ति मन्निबन्धनम् । अतस्तद्दोषोद्भावनेन शुश्रूषूणामुत्साहभङ्गो मा भूदित्येवमर्थमाह — निर्दोषत्वेति । प्रसिद्धातिशयावपि मोक्षस्वर्गौ प्रति नास्तिका विवदन्ते । वदन्ति च — "सुखदुःखे लौकिके स्वर्गनरकौ" इति । मोक्षे च सद्भावतः प्रभृति विवादः । एके हि नास्ति मोक्ष इति वदन्ति । अन्ये पुनः सकलविषयोपरागरहितं संवेदनप्रवाहमपवर्गमाहुः । अन्ये तदुपरमम् । अपरे सकलवैशेषिकात्मगुणोच्छेदलक्षणं निरतिशयमविषयपरिष्वङ्गजमनवसानमानन्दसन्दोहम् । अपरे च पूर्वे च भ्रान्तिसमुत्थैर्नानाविकल्पैः पारमार्थिकमोक्षस्वरूपमपलपन्त्येवेति ॥ ६ ॥

अपिच यदि नाम शुश्रूषवो मन्निबन्धने दोषानुपलभन्ते, तथाप्यहमनपवाद्यः । नह्यहं स्वतन्त्रः किञ्चिदभिदधे । आगमानुसारिणस्तु मे यथागमं वर्तमानस्य स्खलितमपि दैवादवर्जनीयतयापन्नमित्युपेक्षणीयमेव । नहि किमप्यभिमतं वस्तु निर्दोषं भवति । दोषांस्तु समाधाय गुणा उपजीवितव्या इत्याह— आगमेति । सतां हि मार्गोऽयमागमानुसारो नाम । तदिह बहुलं गुणा एव । दोषास्तु कथञ्चित् सन्तोऽप्यल्पत्वादसत्कल्पा इत्युपेक्षितव्या इति ॥ ७ ॥

किञ्चास्तु तावदस्मादृशानां कविप्रवीराणामागमानुसारिण्यो वाचः शोभन्त इति । अन्यस्यापि श्रद्दधानस्य त्रयीमार्गानुसारिणी यथाकथञ्चिदारब्धा क्लिष्टा अल्पसारापि वाग्वृत्तिः शोभते । अस्माकं तु बहुसारा अक्लेशनिर्मिता शोभततरामित्याह — यथेति ॥ ८ ॥

**मीमांसाशास्त्रतेजोभिर्विशेषेणोज्ज्वलीकृते ।**
**वेदार्थज्ञानरत्ने मे तृष्णातीव विजृम्भते ॥ ९ ॥**
**प्रायेणैव हि मीमांसा लोके लोकायतीकृता ।**
**तामास्तिकपथे कर्तुमयं यत्नः कृतो मया ॥ १० ॥**

इत्युपोद्घातः ।

---

**अथातो धर्मजिज्ञासा ॥ १ ॥**

**अथातो धर्मजिज्ञासा सूत्रमाद्यमिदं कृतम् ।**
**धर्माख्यं विषयं वक्तुं मीमांसायाः प्रयोजनम् ॥**

ननु किमङ्गभूतायां मीमांसायां वार्त्तिकं प्रणीयते ; वेदा एव साक्षाद् व्याख्यायन्तामत आह — **मीमांसे**ति । वेदा एव संशयपूर्वोत्तरपक्षक्रमेण व्याख्यायमाना मनो हरन्तितरां, न तु मन्त्रब्राह्मणभाष्यप्रस्थानेन । मीमांसयैव तु ते तथाव्याख्यायन्त इति तत्रैव वार्त्तिकं कर्तुं मे तृष्णा वर्धत इति ॥ ९ ॥

ननु मीमांसायामपि चिरन्तननिबन्धनानि सन्तीति किं मुधा प्रयस्यते । अत आह — **प्रायेणे**ति । लोकायतं नाम नास्तिकानां तन्त्रम् । तद्भावमापादिता नानापसिद्धान्तसङ्ग्रहेण । तामास्तिकपथे कर्तुमयं यत्नः कृत इति । आशंसायां वर्तमानेऽर्थे वा क्तो वर्णनीय इति ॥ १० ॥

इत्युपोद्घातः ।

---

सूत्रतात्पर्यमिदानीं दर्शयति— अथेति । इदं हि सूत्रं धर्माख्यमस्य शास्त्रस्य प्रतिपाद्यतया विषयभूतं प्रयोजनं वक्तुं कृतम् । आद्यमिति प्रयोजनाभिधानस्थानमिति दर्शयति । यद्यपि धर्मोऽस्य प्रयोजनमिति न कण्ठेनोक्तं, तथापि जिज्ञासाकर्मभूतो धर्म इत्याचक्षाणेनापुरुषार्थज्ञानस्यानिष्टत्वात् पुरुषार्थीभूतो धर्मः प्रयोजनमिति सूचितमिति सूत्रमित्युक्तम् । कृतपदेन च कृत्रिममिदमतः प्रमाणान्तरेण गुरुकुलवासावसाननिवृत्तिपरमपि व्याख्यायमानं न दोषमावहतीति दर्शयति । नित्ये

**सर्वस्यैव हि शास्त्रस्य कर्मणो वापि कस्यचित् ।**
**यावत् प्रयोजनं नोक्तं तावत् तत् केन गृह्यते ॥१२॥**
**मीमांसाख्या तु विद्येयं बहुविद्यान्तराश्रिता ।**
**न शुश्रूषयितुं शक्या प्रागनुक्त्वा प्रयोजनम् ॥१३॥**

हि यावद्वचनं वाचनिकम् । पौरुषेयं तु प्रमाणान्तरबलेनान्यार्थमपि प्रतिभासमानमन्यपरतया प्रतिपाद्यत इति ॥ ११ ॥

ननु किं प्रयोजनाभिधानेन । शास्त्रमेव प्रणीयताम् । प्रयोजनाभिधानं हि शास्त्राद् बहिर्भूतं शास्त्रं प्रणेतुकामस्य न युक्तम् । किञ्चास्य प्रयोजनम् । प्रयोजनविशेषात् शास्त्रेषु शुश्रूषुप्रवृत्तिरिति चेत् । तन्न । न हि प्रेक्षावतां पुंवचनादेवमयमर्थ इति विश्वासो युक्तः, विशेषतो हेतुदर्शनात् । अन्यार्थमपि शास्त्रं धर्मप्रयोजनतया श्रोतॄन् प्रवर्तयितुमयमाहेति शङ्कमाना नाश्वसेयुः । अतो मन्दफलं प्रयोजनवचनमत आह — **सर्वस्येति** । यदन्यदल्पायाससाध्यमपि किञ्चित् शास्त्रं लौकिकं वौदनपाकादि कर्म, तदप्यनुक्तप्रयोजनं नाद्रियन्ते । किं पुनर्मीमांसामिति युक्तः शास्त्रारम्भे प्रयोजननिर्देशः । यत्तु पुंवचनादनाश्वास इति, तन्न । आप्तानाप्तविशेषात् । वक्ष्यति हि — "तच्चेत् प्रत्ययितात्" इति भाष्यकारः । जैमिनिश्च "अपि वा कारणाग्रहणे प्रयुक्तानि प्रतीयेरन्" (१. ३. ७) इति । यत्तु विप्रलिप्समानो ब्रूत इति । तन्न । नह्यस्य महर्षेरनृतवचनं सम्भवति । न चास्य विप्रलम्भे प्रयोजनं किञ्चिदुपलभ्यते । यदि श्रोतारः प्रवर्तन्तामिति, किमस्य तैरफलेऽधर्मफले वा धर्मच्छलेन प्रवर्तितैः । प्रत्युताधर्म एवास्य शिष्यान् भ्रामयतो महान् दोष आपद्येत । न च परमधार्मिकोऽधर्ममाचरतीत्युत्प्रेक्षितुमपि शक्यम् । न च तन्त्रकारस्तन्त्रप्रयोजने भ्राम्यतीति सम्भाव्यते । अत एवासम्भवद्भ्रमविप्रलम्भत्वादृषीणामष्टकादिस्मरणानि श्रुतिमूलानीति स्मृत्यधिकरणे वक्ष्यते । सर्वपुरुषवचनाविश्वासे पुनस्तदपि भज्येतेति युक्तं प्रयोजनाभिधानमिति ॥ १२ ॥

सर्वस्यैवेति कार्क्षो मीमांसायां विशेषो योऽन्तर्णीतस्तमभिद्योतयति — **मीमांसाख्येति** । शास्त्रान्तराणि हि वाच्यैकविषयनिबन्धनानि

१. 'तां प्रतिपद्यत'. २ '...नाश्वा', ३. 'सू', ४. 'क्वा यो विशेषोऽन्तं' ख. पाठः. ५. 'व्यक्तक' ख. पाठः.

विद्यान्तरेषु नाप्येतद् यद्यपीष्टं प्रयोजनम् ।
अनर्थप्रापणं तावत् तेभ्यो नाशङ्क्यते क्वचित् ॥१४॥
मीमांसायां त्विहाज्ञाते दुर्ज्ञाते वाविवेकतः ।
न्यायमार्गे महान् दोष इति यत्नोपचर्यता ॥ १५ ॥
तस्मात् प्रयोजनं पूर्वमुक्तं सूत्रकृता स्वयम् ।
यत् तेनोक्तं वदेयुस्तद् भाष्यकारादयः कथम् ॥ १६॥

---

व्याकरणादीनि । मीमांसाख्या त्वियं विद्या बहूनि विद्यान्तराणि वेदतद-ङ्गादीन्युपायभूतान्याश्रिता । नह्यस्यास्तैर्यथावदविज्ञातैरर्थः शक्यनिर्णयः। तदियमुपायतः स्वरूपतश्च प्रचिता श्रोतॄणां श्रवणेच्छामपि कारयितुमनु-क्तप्रयोजना सती न शक्येति युक्तं प्रयोजनाभिधानमिति ॥ १३ ॥

अपिच विद्यान्तराण्यनुक्तप्रयोजनानि निष्प्रयोजनानि मन्यमाना जिज्ञासवो यदि नाम न जानीरन् मन्दश्रद्धया वा प्रवर्तमाना न सम्यग् विद्युः, तथापि तेभ्योऽज्ञातदुर्ज्ञातेभ्योऽनर्थप्राप्तिस्तावन्न सम्भवति । मी-मांसायां त्विहाज्ञाते दुर्ज्ञाते वा पूर्वोत्तरपक्षन्यायमार्गे विवेकाभावात् पूर्वपक्षमेव सिद्धान्तं मन्यमानास्तदनुरूपं चेष्टेरन् । तत्र नित्यनैमित्ति-कयोरकरणादसम्यक्करणाद्वा महान्तमनर्थं प्राप्नुयुः इति यत्नेनोपचरितव्या मीमांसेति श्लोकद्वयेनाह — विद्यान्तरेष्विति । ननु तथा विद्यान्तरा-नभिज्ञोऽपि दुष्यत्येव । तथाहि — व्याकरणानभिज्ञोऽपि तावद् यज्ञेऽप-शब्दं प्रयुञ्जानः प्रत्यवैति । श्रूयते हि 'तस्माद् ब्राह्मणेन न म्लेच्छितव्यं म्लेच्छो ह वा एष यदपशब्दः' इति । उच्यते । को वाह न शास्त्रा-न्तरानभिज्ञानेऽपि दोषो भवेदिति । अल्पभूयस्त्वे तु विशेषः । मीमांसा हि सर्वशास्त्रगताज्ञानसन्देहविपर्ययव्युदासक्षमन्यायनिबन्धनात्मिका । तै-दस्यामज्ञातायां न किञ्चिदपि ज्ञातं भवति । अतो महान्तमनर्थं प्राप्नोति । अत एवाह महान् दोष इति ॥ १४,१५ ॥

यतश्च यत्नेनोपचरितव्या मीमांसा, तस्माद् युक्तं सूत्रकृतां स्वयं प्रयोजनाभिधानमित्याह — तस्मादिति । ननु तथापि पाणिनिनेव भाष्य-

---

१. 'र्थनिर्णय शक्यः । त' ख. पाठः. २. 'तस्या' क. पाठः. ३. 'प्नुयात्', ४. 'नु यद्येवं पा' ख. पाठः.

**विधौ तु तमतिक्रम्य स्वर्गादेः साध्यतेष्यते ।**
**तत्साधनस्य धर्मत्वमेवं सति च लभ्यते ॥ १५ ॥**

---

सत्यमुक्ता । अयुक्ता सा । लोके प्रमाणान्तरावगतेः सिध्यत्यपि । ननु वेदे । प्रमाणान्तराभावात् । ननु स्वर्गकामपदसमभिव्याहारः प्रमाणं, न । तस्य श्रुत्या बाधात् । इहहि यजत इति साध्याकाङ्क्षिणी भावनावगता सती समानपदोपादानश्रुत्युपनीतयो .......... धात्वर्थसम्बन्धनिराकाङ्क्षा सती न व्यवहितकर्तृविशेषणत्वोपयुक्तस्वर्गादिभाव्यसम्बन्धमनुभवति । सन्निकृष्टालाभे हि विप्रकृष्टोऽपि वैदिको भवति न सन्निकृष्ट, ................च्यते । लभ्यते चेह धात्वर्थः सन्निकृष्ट इति न विप्रकृष्टफलपदसम्बन्धो युक्त इति ॥ १४ ॥

कृतिविधौ तर्हि कथं पुरुषार्थसाध्यसिद्धिरत आह---**विधाविति ।** अयमभिप्रायः—विधिर्हि चेतनप्रवर्तनात्मकार्थे फले व्यापारे शक्यते पुरुषं प्रवर्तयितुम् । अतः समानप्रत्ययोपात्तविध्यवरुद्धा भावना विधेः प्रवर्तनाशक्तिर्मा व्याघानीति सन्निहितमप्यपुरुषार्थत्वादय ...............र्वमतिक्रम्य व्यवहितेनापि पुरुषार्थेन स्वर्गादिना साध्येन सम्बध्यते । धात्वर्थस्तु साध्यत्वात् प्रच्यावितो भावनायामेव साधनाकाङ्क्षिण्यां साधनतया निव ........ ........तमावाक्यार्थो भवति यागेन स्वर्गं कुर्यादिति । अतः पुरुषार्थसाधनस्य यागादेर्धर्मत्वसिद्धिरिति युक्तमुपदेशप्रामाण्यप्रतिपादनमिति ।

इदं त्विह वक्तव्यम्---का(र्य)विधौ पुरुषार्थः साध्यो लभ्यते । विधिर्हि शब्दभेदो वा लिङादिः, तद्व्यापारातिशयो वा, कोऽपि तदर्थभेदो वा । सर्वथा च न युज्यते । शब्दे हि प्रवर्तयितरि पुरुषार्थसम्बन्धे प्रमाणमस्ति । आप्ते हि बुद्धिपूर्वकारिणि प्रवर्तके हितकार्ययं मामफले न प्रवर्तयतीति बुद्ध्वा भवति प्रवृत्तिविषयव्यापारफलवत्ता(ध्य)वसायः । शब्दस्त्वचेतनो नास्मिन् प्रवर्तयत्यपि पुरुषार्थफलप्रतिलम्भः । नहि प्रबलपवनाभिहतोऽवटे निपतत् फलं प्रतिलभते । आपिच प्रमाणं शब्दः । प्रमाणानां प्रमेयोपदर्शनादन्यत्र व्यापारः । प्रत्यक्षं हि रूपादीनुपदर्शयति ननु प्रवर्तयति । त्रेधा हि प्रामाणिकाः प्रमाणफलं विभजन्ते । हानमुपादानमुपेक्षा चेति । तदिदं प्रमाणानां प्रवर्तकत्वे नोपपद्यते । तदा ह्युपादानमेवैकं प्रमाणफलमापद्येत । कण्टकप्रत्यक्षेण हि कण्टकेषु प्रवर्त्यमानो जिहासन्नपि तान्

मृह्णीयात् । स्यादेतत् — शब्दप्रमाणधर्मोऽयं न प्रमाणान्तराणामिति । न, प्रमाणत्वाविशेषात् । एवंहि प्रयोगो भवति । शब्दो न प्रवर्तकः प्रमाणत्वात् प्रत्यक्षादिवत् । अस्तु वा प्रवर्तकः । नियमेन ………… प्रवृत्तिप्रसङ्गः । नच लिङादिश्राविणो नियमेन प्रवर्तमाना दृश्यन्ते । प्रथमश्रुतादप्रवृत्तेः । अविदितसमयत्वादप्रवृत्तिरिति चेत्, किमिदानीं सम्बन्धसंविदपेक्षया यदि शब्दः प्रवृत्तेः कारकः । नहि कारकाणि स्वरूपसंविदमप्यपेक्षन्ते । (प्रागेव समयसंवित्तिं ?) मृत्सलिलप्रच्छन्नं हि बीजमविदितस्वरूपसामर्थ्यमपि स्वकार्यमङ्कुरमारभमाणं दृष्टम् । एवमेव शब्दव्यापारो विधिरित्यपि निरसनीयम् ।

स्यान्मतम् — अभिधेय एव लिङादीनां व्यापारो विधिः । अतो न पूर्वोक्तदोषप्रसङ्गः इति । न, अनिरूपणात् । स खलु प्रेषणादिलक्षणो वा स्याद्, अन्यो वा । न तावद् प्रेषणादिलक्षणः शब्दे सम्भवति । अचेतनत्वात् । नचान्यस्तत्समर्थाचरणलक्षणः, तस्य कारीषादिवदनिरूपणात् । कारीषस्य हि वह्नेः शीतापनोदनोऽध्ययने दृष्ट(मु?उ)पकारः । न शब्दे तथा सम्भवति । प्रमाणान्तराभावात् । शब्दस्य चागृहीतसम्बन्धस्याप्रत्यायकत्वात् । यदि ब्रूयाद् व्यापारान्तरकल्पने स्यादयं दोषः, क्लृप्त एव तु लिङादीनामभिधाभिधानलक्षणो व्यापारः शब्दान्तराणामिव स्वार्थप्रकाशनान्यथानुपपत्तिप्रमाणकः प्रवृत्तिहेतुत्वप्रतिलब्धप्रवर्तनापरनामा विधिरिति प्रतिब्रूयादेनम् । स खलु व्यापारभेदोऽभिधेयो वा स्यादनभिधेयो वा स्यात् । अनभिधेये अशब्दा …….. स्यभावनासमभिव्याहारानुपपत्तिः । किञ्च सर्वशब्दानामेवानुमानेन स्वार्थगोचरो व्यापार उन्नीयते । नच तथावगतः । प्रवृत्तिहेतुभाव…. …….. पाराः प्रवर्तयन्तीति चेद्, विशेषहेतुर्वाच्यः । यद्यर्थविशेषगोचरता विशेषहेतुः, स तर्ह्यर्थभेदो विधिः, तदन्वयव्यतिरेकानुविधानात् । प्रवृ …. ……..वर्थभेदः । यदि भावना न, तस्या वर्तमानापदेशेष्वप्यविशेषात् । अन्यश्चेत् नैनमुपलभामहे प्रमाणाभावात् । अभिधीयत एव लिङादिभिरात्मीयमभिधानमिति चेत् । ………… सर्वशब्देभ्यः प्रवृत्तिप्रसङ्गः शक्यते वारयितुम् । नच कार्योन्नेयमभिधानमभिधीयत इति साम्प्रतम् । अनन्यलभ्यं हि शब्दाभिधेयमुपागमन् धीराः । किञ्च यदि व्यापारस्वरूपाभिधानं स …. ………… प्रवर्तकत्वप्रसङ्गः । सोपश्लेषो विशेष इति चेद्, न । स्वरूपाभिधानप्रसक्तेः । न ह्यनभिधाय विशेषणं विशेष्याभिधानं सम्भवति । अपिचा-

भिधाभिधानाभ्युपगमेन प ........ विशेषहेतोरभावात् । अस्तु तर्ह्यर्थभेदो विधिः । कः । कार्यम् । किं पुनः कार्यम् । कार्यमेव हि कार्यम् । नहीदं रूपान्तरेणानुभूयते । ननु न क्रियातिरेकि कार्यं प्रमाणान्तरैरवगम्यते । सत्यम् । अत एव शब्दप्रामाण्यसिद्धिः । अन्यथा प्रमाणान्तरगोचरत्वेन सापेक्षत्वादप्रामाण्यं चोदनायाः । अपिच कालत्रयविपरिवृत्त्यर्थगोचराणि मानान्तराणि । कार्यं च परामृष्टकालभेदं स्वप्रमाणादवगम्यत इति न प्रमाणान्तरगोचरः । कारकव्यापारो हि यागादिः कालत्रयावच्छेद्यो नाधिकारः । यद्येवमसत्कार्यं कालत्रयापरामर्शात् शशविषाणवदापद्येत । न । कालेनानेकान्तात् । कालो हि न तावत् कालान्तरपरिच्छिन्नः । नच नास्ति कालः । कालान्तरावच्छेदे त्वनवस्थापातः । अलब्धकालान्तरसम्बन्धोऽपि कालः प्रमाणसामर्थ्यादस्तीति चेत् । समानं हि कार्येऽपि । तदपि स्वप्रमाणेभ्यो लिङादिशब्देभ्यः कालानवच्छिन्नमवगम्यमानं कथमसद् भविष्यति । प्रमाणसम्बन्धो हि सत्ता, न कालसम्बन्धः । कार्यमेव तु मनसि वर्तमानं नियुङ्क्त इति नियोग इत्युच्यते ।

ननु नियोगो नियुक्तिः । स च नियोक्तृव्यापारः । नच वेदे नियोक्तास्ति अपौरुषेयत्वात् । शब्दस्य चानियोक्तृत्वान्न तद्व्यापारो नियोगः । अदूरविप्रकर्षेण तु नियोगादिपदप्रयोगः । याथात्म्यवेदनायां तु लिङेव पठितव्यः । सा ह्यस्य प्रमाणम् । किमात्मकस्तर्ह्ययम् । उक्तं कार्यात्मेति । नच द्रव्याद्यनात्मकत्वादभावः, तद्वदेव कार्यमपि तद्विभक्तमेव देशकालनरावस्थान्तराविपर्ययात् स्वसंवित्संवेद्यं नास्तीति शक्यतेऽवगन्तुम् । उदीयते खल्वपि लिङादिश्राविणां कार्यसंवित् । नचेयमनालम्बना, नच स्वांशालम्बनेति विज्ञानवादे वर्णितम् । अतो निर्विषया संविदात्मानमलभमाना स्वविषयभूतं कार्यमुपकल्पयति । नच प्रतिभामात्रमिदमिति वाच्यम् । अनियतनिमित्ता हि प्रतिपत्तिः प्रतिभा । नचेयमनियतनिमित्ता, शब्दनिमित्तत्वात् तदनन्तरमुत्पत्तेः । कथमनन्यगोचरे कार्यात्मनि व्युत्पत्तिः । तदभावे वा शब्दात् प्रतिपत्तिः कल्प्यताम् । लिङादीनां सकलेतरशब्दविलक्षणः कोऽपि महिमा, यदविदितसम(या ?या अ)पि स्वार्थं गमयन्ति । अथवा सर्वस्याकुमारमास्थविरं च कार्यावगतिः प्रवृत्तिहेतुरिति प्रसिद्धिः ।

तदन्यमपि लिङादिशब्दश्रवणानन्तरं चेष्टाविशिष्टमुपलभ्याकलयति नूनमितः सकाशादस्य कार्यसंविदासीत् कथमपरथा प्रवर्तेत इति । नन्वेवं क्रियामेव कार्यतया अज्ञासीदिति परस्यापि तद्गोचरामेव कार्यधियमुन्नयति । न । वर्तमानापदेशेषु सत्यपि क्रियाज्ञाने प्रवृत्त्यदर्शनात्, क्रियात्मनः कार्यस्य व्यभिचारात् प्रवृत्तावहेतुत्वात् । एतदेव फलेऽपि दर्शयितव्यम् । अतो निर्मुक्ताखिलफलादिविकल्पमव्यभिचरितप्रवृत्तिसम्बन्धं कार्यमात्रं लिङादिभ्यः प्रयोज्यवृद्धेनावगतमिति व्युत्पद्यमानो जानाति । नहि कार्यावगतिर्भवति प्रवृत्तिश्च नेति सम्भवति । अतः कार्यमेव कार्यविधिरित्याचार्याः प्रतिपेदिरे । ननुच प्रेषणादयो लिङर्थाः । न, स्वसन्ताने प्रवृत्तिहेतुत्वेन तेषामनुपलब्धेः । वेदे च व्यभिचारात् । (ननु त)र्हीष्टाभ्युपायता लिङादीनामर्थो भविष्यति । सर्वो हि समीहितोपायमाकलय्य तत्र तत्र प्रवर्तेत इति परमपि चेष्टमानमुपलभ्य जानाति नूनमिष्टो ........ मव्यापारः शब्दश्रवणानन्तरं चायं चेष्टत इति शब्देनेष्टाभ्युपायता प्रतिपादिता भवति । स एव विधिः । प्रवर्तनारूपो हि सः। प्रवृत्तिहेतुं धर्मं च प्रवदन्ति ........ ।अतः प्रेषणाध्येषणाभ्यनुज्ञातिरिक्तमप्रवृत्तप्रवर्तनं नियोज्यार्थकर्मगोचरं लोकवेदसाधारणं चोदनोपदेशपर्यायपदवाच्यं लिङादीनामर्थो विधिरिति युक्तम् । हि ........ त्य जैमिनिनोक्तम् उपदेश इति । भाष्यकारेण च 'उपदेश इति विशिष्टस्य शब्दस्योच्चारणमि'ति विवृतम् । 'पुरुषार्थोपायं किलानवगतमवगमयन् शब्दान्तरे दूरमुत्कृष्टो लिङादिशब्दोऽविशिष्ट इत्युक्तम् । अतो लोकवेदतन्त्रान्तरानुगतोऽयमेव सिद्धान्त इति कैश्चिदुन्नीतम् ।

तदिदमनुपपन्नम् । तथाहि — संविदेव तावत् परिपन्थिनी । नहि लिङादिश्रवणसमनन्तरमिष्टाभ्युपायोऽयं व्यापार इति भवति मतिः । अपि तर्हि, प्रवर्तनावगतिः । ननु चेष्टाभ्युपायतैव प्रवर्तना प्रवृत्तिहेतुत्वात् । तन्न । एवं सति 'यस्य पर्णमयी जुहूर्भवति' इत्यत्रापि विधित्वप्रसङ्गः । 'तरति मृत्युमि'त्यत्रापि । भवति हि तत्रापि पर्णमयता 'अपापश्लोकश्रवणस्य' अश्वमेधो वा ब्रह्महत्यातरणस्य साधनमिति प्रतिपत्तिः । यदि मतम् —अस्येदं भवतीत्यन्वयमात्रमत्रावगम्यते न व्यतिरेकः, नच तमन्तरेण साध्यसाधन-

सम्बन्धोऽवगम्यते इति । कथं तर्हि 'स्वर्गकामो यजेते'त्यत्रापि स्वर्गयागयोः साध्यसाधनसंवित् । नहि तत्रापि सति यागे स्वर्गो भवति असति नेति मतिः । यागेनेति हि तृतीया साधनभावमवगमयतीति चेद्, न । तृतीयाश्रवणात् । विधेरयं महिमा यदतृतीयान्तोऽपि यजिः करणतया निर्दिश्यते। स चेदन्यो नाभ्युपगम्यते कथं स्वभावसाध्यो यजिः करणतया निर्दिश्यते । अपिच यत्र स्पष्टमिष्टाभ्युपायत्वमवगम्यते यागस्य यथेष्टाभ्युपायोऽयं यागः यागेन स्वर्गः सिध्यतीति वा, तत्रापि विधित्वप्रसङ्गः। किञ्च तद्द्वेषीति तत्कारि चायमेवं ब्रुवाणो दृश्यते । तथाहि प्रतिभा विधिरिति निरस्यैतत्दुक्तं—

"न निरालम्बनं ज्ञानं क्रिया साधनयोगिनी ।

समान्यस्मिन्"

इति । तदिदं तवापि समानमिति वर्णितम् । अपिच एवंवादिना साधु समर्थितं 'विधावनाश्रिते' इति । अत्र हि विध्यधीना यागादेरिष्टाभ्युपायता नतु सैव विधिरिति दर्शयति । तस्मादतिकुशलैरुपदेशापदेशयोरविशेष एवोपपादित इति निर्मुक्ताखिलोपाधिविधितत्त्वमतीन्द्रियमन्यदेवेति पूर्वोक्तमेव साधीयः ।

अत्र वदामः— नैवमपि यागस्वर्गयोः साध्यसाधनसम्बन्धासिद्धिः । नियोगो हि तदा साध्यः । नच साध्यद्वयमेकत्र समवैति, समत्वादसम्बन्धात् । ननु नियोगसिद्धिंनान्तरीयकी स्वर्गसिद्धिः । अतएव साध्यविवृद्धिरियं नतु स्वर्गोऽपि स्वतन्त्रतया साध्यः । निरपेक्षं च साध्यद्वयमेकत्र विरुध्यते, नानुगुणम् । यथाह— "नियोगसिद्धौ सर्वं तदनुगुणम्" इति । केन नेष्यते । तस्मादविरोध इति । तदसत् । किं हि स्वर्गसिद्धिमन्तरेण नियोगस्य न सिध्यति । नहि नित्याधिकारेषु नियोगः साध्यान्तरमाकाङ्क्षति । कामाधिकाराः काम्यपर्यन्ता इति चेत्, को हेतुः । कमिसाध्यत्वावगतिः । तथाहि 'स्वर्गकामो यजेते'ति साध्यस्वर्गविशिष्टाधिकारिसाध्यो नियोगोऽवगम्यते । स कथमसिध्यति स्वर्गे सिध्येत् । अतः स्वर्गसिद्धिरवगम्यत इति नः साध्यस्वर्गविशिष्टोऽधिकारी ।

कस्तर्हि। काम्यस्वर्गविशिष्टः। अतः स्वर्गं कामयमानः पुरुषो नियोगं साधयिष्यति। अन्यदिच्छतोऽन्यत्र क्रिया नोपपद्यत इति चेद्, न। नियोगसामर्थ्यादुपपत्तेः। नियोगो हि प्रधानभूतः साध्यतयावगतः स्वर्गमपि कामयमानमात्मन्याकर्षतीति किमनुपपन्नम्। अपिच सिध्यन्नपि स्वर्गो यागात् सिध्यतीति न नः प्रमाणम्। स्वर्गयागौ हि युगपदरुणैकहायनीवदेकप्रधानकार्यान्वयिनौ नान्योन्यान्वयमनुभवतः। नचारुणिम्न इव द्रव्यावच्छेदशक्तिर्यजेरपि स्वर्गसाधनशक्तिरवधृता प्रमाणान्तरेण। ननु किमत्र प्रमाणान्तरेण। स्वर्गे याग एव प्रमाणम्। स हि स्वर्गकामं यागे नियुङ्क्ते। नचाकामोपाये कामी नियोक्तुं शक्यते। उक्तोत्तरमिदम्। किंहि भगवतो नियोगस्यालौकिकस्यासदृशमहिम्नो दुः(खत)या फलेऽपि नरं प्रवर्तयति। तस्य ह्यनुपाये कामिनं नियुञ्जानस्य किमिव हीयेत। यागे नियोगो नियुङ्क्ते इति वदता नूनमिदमवधीरितम्। आरम्भे हि पुरुषो नियुज्यते न कर्मणीति। तस्मान्न स्वर्गयागयोः साध्यसाधनसम्बन्धसिद्धिः। यदपि च क्रियादिकार्ये व्यभिचारादनुपाधिके व्युत्पत्तिरित्युक्तं, तदयुक्तम्। प्रतीतविषयत्वाद् व्युत्पत्तेः। नहि क्रियादिव्यभिचारात् शशविषाणं लिङाद्यर्थ इति शक्यते वक्तुम्। यदपि मन्यते क्रियाकार्य एव लोके व्युत्पन्नः फलसमभिव्याहाराद् वेदेऽन्यदविनाशि कार्यं लिङाद्यर्थ इति प्रत्येष्यते। लोके तु संमुग्धेनापि व्यवहारसिद्धेर्न शब्दार्थतत्त्वनिरूपणम्। बहव एव गौणलाक्षणिकशब्दनिबन्धना लोके व्यवहारा दृश्यन्ते। वेदे तु 'स्वर्गकामो यजेते'ति क्रियात्मनः कार्यस्य भङ्गुरत्वादामुष्मिकस्वर्गादिफलसाधनाशक्तेः कालान्तरस्थायिक्रियातो भिन्नं कार्यमुपेयते। वाक्यशेषाच्चैकत्र समुन्नीतः शब्दार्थो यववराहाद्यर्थवदन्यत्रासत्यपि वाक्यशेषेऽवगम्यते। नित्याधिकारेष्वसत्यपि फलपदसमभिव्याहारे तथाविधमेव कार्यं लिङादीनामर्थो भविष्यतीति। तदिदमन्यदेवाभ्यस्तमन्यच्चोपनिपतितम्। क्रियाकार्ये (विप्पन्न?) स्थायिकार्यं प्रतिपद्यते। नच क्रियायाः फलसाधनताशक्तेरशब्दार्थः सन् युक्तः कल्पयितुम्। कामं कर्मण एवाफलनिष्पत्तेः समस्ति रूपमिति कल्पयितुमुचितम्। नच पूर्वावगतशब्दार्थान्यथाकरणम्। नहि कर्मण्यनुशिष्टा द्वितीया सक्तुषु तदसम्भवाद् विपरिवर्त्य करणमभिधत्त इति युक्तमभिधातुम्। सर्वशब्देष्वनाश्वासप्रङ्गात्। अतएव

तत्र तत्र यथाश्रुतार्थसमन्वयानुपपत्तेः क्वचिद् गुणवादः क्वचिल्लक्षणा क्वचिद् विनियोगभङ्ग इति तन्त्रे व्यवहारः । ननु विनियोगभङ्गादभिधानमेव शब्दानामन्यथा नीयते । अपिच श्रुतकर्मफलसम्बन्धानुपपत्तेरनवगतपूर्वमपूर्वं कार्यं लिङर्थमुपयता साधु श्रुतमुपपादितम् । किं हि लिङापराद्धं यत् तस्यालौकिकमर्थमतिक्रम्य कर्मफलसम्बन्ध उपपाद्यते । ननु नाद्यापि लिङर्थो निश्चीयते । अयमेव हि निर्णयसमयः । अत्र च श्रुतफलपदान्तरसमभिव्याहारोपपत्तयेऽतीन्द्रियमेव कार्यमिति निश्चीयते । अतो न किञ्चिद् विरोत्स्यत इति । किमिदानीं 'स्वर्गकामो यजेते'ति श्रुतेरप्रतीतिरेव, लिङर्थे संशयो वा । अप्रतीतौ क्रियात्मनः कार्यस्य फलसम्बन्धानुपपत्तिरित्येतदेव दुर्भणम् । संशयस्तु पक्षद्वयावलम्बी । नचालौकिके क्रियातिरेकिणि कार्ये लिङादयो निरूपितप्रयोगाः । नचात्यन्तापरिदृष्टपूर्वार्थगोचरः संशयो दृष्टचरः । यवादिषु त्वार्यम्लेच्छप्रयोगनिबन्धनो दृष्टपूर्वार्थगोचरः सशयो युक्त एव । अतएवात्र न वाक्यशेपान्निर्णयः । सन्दिग्धे हि स वर्णितः । नच लिङर्थे संशयः । किन्तु लोके व्युत्पत्त्यनुसारेण क्रियात्मन्येव कार्ये निश्चयः । यदप्युच्यते कर्मफलसम्बन्धोपपत्तयेऽन्यत् कार्यमुपलभ्यत इति । केन वा कर्मफलसम्बन्धो दर्शितः । नह्ययं वैनियोगिकः । नियोग एवात्र प्रमाणम् । स चेत् तदधीनसिद्धिः दुरुत्तरमितरेतराश्रयम्, सिद्धो हि नियोगो विषयीभूतस्य भावार्थस्य करणतामाह । तत्सिद्ध्या च नियोगात्मलाभ इत्यलमनेनापि ।

यथावार्त्तिकमनुसन्धास्यामः । एवंहि वार्त्तिककृता भावार्थाधिकरणे उक्तं 'लिङादिशब्दानां पुरुषं प्रति प्रयोजकव्यापारोऽभिधात्मिका भावना विधिरि'ति । द्वे किल भावने मीमांसकाः सङ्गिरन्ते शब्दात्मिकामर्थात्मिकां च । तत्रार्थात्मिका सर्वाख्यातसाधारणी स्वर्गादिफलधर्मिका यागादिधात्वर्थकरणिका स्ववाक्यप्रकरणान्यप्रकरणानारभ्यवादस्मृतिलोकाचारप्राप्ततत्तदितिकर्तव्यतावती तत्र तत्र सिध्यति । शब्दात्मिका तु लिङादिशब्दानां प्रयोजकानां प्रयोज्यपुरुषकर्मिकाभिधासम्बन्धज्ञानकारणिकार्थवादोदितप्राशस्त्येतिकर्तव्यतावतीति विवेचनीयम् । कथं पुनरभिधा शब्दात्मिका । शब्दव्यापारो हि सः । न । व्यापारतद्वतोरनतिभेदादुपपत्तेः । द्रव्य-

मेव हि पूर्वावस्थातः प्रच्युतं परामवस्थामप्राप्तं पूर्वापरीभूतं व्यापारशब्द-वाच्यम् । कथं लिङादीनामभिधा पुरुषकर्मिका । नहि ते पुरुषमभिदधति भावनावचनत्वात् । सत्यम् । भावनैव तैरभिधीयमाना न स्वरूपमात्रेण व-र्तमानापदेशवदभिधीयते । किन्तु कुर्यादि(ति) प्रवृत्तिविषयतया । नच शब्दशक्तयोऽनुयोक्तुमर्हन्ति । तथाहि — लिङादिश्रवणानन्तरं प्रयोज्यवृद्धं चेष्टमानमुपलभ्य ततः प्रवृत्तिहेतुप्रत्ययः प्रयोज्यस्यावगम्यत इति तावत् सर्ववादिसिद्धमविवादम् । प्रवृत्तिहेतुस्वरूपे तु बहुधा विवादः । तत्र क्रिया-फलादीनां व्यभिचारादप्रवृत्तिहेतुत्वात्, प्रमाणान्तरागोचरे तु प्रवृत्तिहेतौ व्युत्पत्त्यसम्भवात्, कर्मफलसम्बन्धानुपपत्तेश्च सकलेतरप्रकारासम्भवादविवा-दसिद्धमभिधेयप्रत्ययबलोन्नीयमानस्वरूपं लिङादीनामभिधानमेव प्रवृत्तिहेतु-रिति साम्प्रतम् । सा च प्रवर्तनेति स्थितम् । सा च प्रवर्त्यकर्मिका । प्रवर्त्यश्च पुरुष इति युक्तं पुरुषकर्मत्वमभिधायाः । लिङादिव्यापारोऽप्यभिधेयप्रत्यय-हेतुत्वादभिधेत्युच्यते । पुरुषं च प्रवर्तयन् प्रवर्तनेति गीयते । नच सर्वा-भिधासु प्रसङ्गः, शब्दशक्तिवैचित्र्यादित्युक्तम् । शक्तिर्हि कार्यदर्शनसमधि-गम्या । तद् यतः प्रवृत्तिदर्शनं तद्व्यापारः प्रवर्तना, प्रवृत्तिहेतुत्वात् । नच शब्दान्तरेभ्यः प्रवृत्तिरुपलभ्यत इति न तदभिधायास्तथात्वप्रसङ्गः । यश्चा-भिधाया अनभिधाने दोषः उक्तः, सोऽभिधानपक्षाभ्युपगमेनैव परिहृतः । यत्तु कार्योन्नेयत्वादनभिधानत्वमुक्तं तदप्ययुक्तम् । किं हि कार्यमनुपपद्य-मानं प्रवर्तनामवगमयति । न तावद् भावनावगतिः, वर्तमानापदेशेष्वपि प्रसङ्गात् । अतोऽनन्यप्रमाणत्वादुपपन्नमभिधेयत्वमभिधायाः । यत्तु अनन्य प्रमाणके व्युत्पत्त्यसम्भव इत्युक्तम् । न, अर्थापत्तिप्रमाणकत्वात् । नन्वर्था-पत्त्या प्रवर्तनापदेशसाधारणमभिधाया रूपमुन्नीयते । नच तावन्मात्रं प्रव-र्तना लडादिभ्योऽपि प्रवृत्तिसंवेदनप्रसङ्गात् । असाधारणस्तु कोऽपि विशेषो लिङ्प्रवृत्तेः प्रमाणान्तरागोचर एवेति दुष्परिहरो व्युत्पत्तिविरहः । मैवम् । प्रवृत्तिहेतुत्वेनार्थापत्तितस्तदवगमात् । तथाहि — यत्र तावत् लिङादिभ्यः प्रवृत्तिरुपलभ्यते, तत्र मया प्रवर्तितव्यमित्यन्तःसङ्कल्पमूलात्मा लिङ्प्रवृ-त्तिविशेष उन्नीयते । अप्रवर्तमाना अपि प्रवर्तस्वेति मामयमाहेति लिङ्-श्राविणो वक्तारं निर्दिशन्ति । तदवसीयते प्रवृत्तिहेतुरभिहितो लिङा । स च नर्ते व्यापारात् सिध्यतीत्युक्तमेव । नच किमात्मको लिङ्व्यापार

इति वाच्यम् । 'अन्तःसङ्कल्पमूलात्मा ह्यसावि'ति वक्ष्यति । नासावुदासीनः कदाचिदवगम्यते । प्रवृत्तिजनन एव हि भावभेदे व्युत्पत्तिरासीदिति स्वयमपि प्रवर्तितव्यमिति प्रतिपद्यमान एव हि लिङर्थं प्रतिपद्यते । नोदासिनमाख्यातान्तरवत् । नो हि फलादयः स्वरूपेणावगताः प्रवर्तयन्ति । अस्य त्वयमेवात्मा यत् प्रवृत्तिधियं जनयति । अपर्यनुयोज्यत्वाद् वस्तुस्वरूपाणां नामाख्यातविभागवदुपपत्तेः । सोऽयमेवमात्मनि लिङर्थे व्युत्पन्नः स्वप्रतिपत्तिकाले न शब्दादृते तमर्थं बुध्यत इत्यनन्यप्रमाणकत्वम् । नतु प्रवर्तनास्वरूपमेवान्यतो नावगतं, येन मतान्तरवद् व्युत्पत्तिविरहश्चोद्येत । सम्प्रति तु न जातेरिव व्यक्तिमन्यतः प्रवर्तनां प्रतिपद्यामह इति शाब्दीमभिदध्महे । नचाभिधा नाभिधीयत इति वाच्यम् । अभिधाशब्दवदुपपत्तेः । यदेव हि शब्दश्रवणानन्तरमनन्यलभ्यं बुद्धौ विपरिवर्तते तदभिधेयम् । तथाच लिङादीनामभिधानमिति किं नाभिधीयते । उक्तं हि 'लिङादिभ्यः प्रवृत्तिहेतुरुपलभ्यत' इति । नच लिङादीनामभिधात्मनो व्यापारादन्यः प्रवृत्तिहेतुः शक्यते निरूपयितुमिति । अतएव नानवस्था । नहि प्रवर्तनावत् तदभिधानमपि शब्दादवगम्यते, यत् तद्गोचरमपरमभिधानमुपेयते । नच लिङादिस्वरूपाभिधानप्रसक्तिः, स्वयमेव तद्व्यापारवैलक्षण्यात् । लिङुपश्लेषे हि विशेषके विशेषणाभिधानमापादितम् । स्वगते तु विशेषे तदनवकाशमेव । सर्वे शब्दव्यापाराः खल्वपि स्वरूपेणैव व्यतिभिद्यन्ते । अतएव विलक्षणाभिधेयप्रत्ययहेतुभावभाजः एकस्या अपि विधिविभक्तेः क्रियाकालादिवन्नाभिधाभिधानमनुपपन्नम् । अतो लिङादीनामभिधा प्रवर्तना सोऽयं विधिः । आह च—

"अभिधां भावनामाहुरन्यामेव लिङादयः ।"

इति । तदनेनैवमात्मना विधिना सम्बद्धा भावना प्रवृत्तिविषयतयावगता फलवत्तया निश्चीयते, स्वसन्ताने फलवतः प्रवृत्तिविषयतयावगतेः । तथाचावगतानुष्ठीयत इति विधिशक्तिमुपक्रान्तामवसीदन्तीमुत्तभ्नाति फलवत्ता, न तु सैव विधिरिति । अतएवापुरुषार्थेषु सागरं तरेदित्येवमादिषु विध्यवगतिः । तथा तत्र न स्यादितरथा तत्र न स्यात् अपुरुषार्थत्वात्(?) । लिङ्व्यापारस्तु तत्राप्यविशिष्टः, निर्वाहिकायास्तु फलवत्तायाः प्रमाणाभावाद् न

**स्वप्रत्ययान्तरापेक्षा स्यादनाप्तनरोक्तिषु ।**
**आप्तोक्तिषु नरापेक्षा नोभयं चोदनासु नः ॥ १६ ॥**

## अथ वृत्तिकारग्रन्थः ।

**आदिशब्दो मकारान्तो लुकि क्लेशेन सङ्गतिः ।**
**नञध्याह्रियते सूत्रे सङ्करात् परिचोदना ॥ १७ ॥**

निर्वहति । तदभावश्चानाप्तवाक्यत्वात् । वेदे त्वपौरुषेयत्वान्न पुरुषदोषाशङ्कापीत्युपपादितम् । 'विधौ तु तमतिक्रम्ये'ति प्रपञ्चितश्च विधिरपि मनागित्युपरम्यते इति ॥ १५ ॥

(अपौरुषेयत्वात्?) अनपेक्षत्वादिति सूत्रावयवं व्याचष्टे — **स्वप्रत्यये**ति । अनाप्तवाक्ये हि दृष्टव्यभिचारित्वात् तज्जनितात् प्रत्ययात् प्रत्ययान्तरं स्वीयमर्थावधारणायापेक्षते । नच तत्राप्यनाप्तवचः प्रमाणमनुवादत्वात् । आप्तोक्तीनां तु प्रमाणविषयगोचराणां प्रामाण्यात् तस्यैवाप्तस्य नरस्यापेक्षा किमयमर्थोऽनेन प्रमाणेनोपलब्धो न वेति । नचेयमुभय्यप्यपेक्षा चोदनासु सम्भवति, अपौरुषेयत्वस्य वेदाधिकरणे वक्ष्यमाणत्वात् । तत उपपन्नं चोदनायाः प्रामाण्यमिति ॥ १६ ॥

अत्रानन्तरं वृत्तिकारमतारम्भभाष्यं — "वृत्तिकारस्त्वन्यथेमं ग्रन्थं वर्णयाञ्चकार तस्य निमित्तपरीष्टिः इत्येवमादिमि"ति । तत्रादिशब्दे तावद् द्वैविध्ये साध्वसाधुविवेकार्थमाह — **आदिशब्द** इति । मकारान्तोऽयमादिशब्दः न लुगन्त इति । कारणमाह — लुकीति । सामान्यविवक्षायां तु नपुंसकलिङ्गता । अत्र च प्रथममेव ग्रन्थात्मके विशेषेऽवगते न सामान्यविवक्षा युक्तेति । भित्त्वा तु वाक्यं सामान्यविवक्षायां क्लेशो भवतीति । अपरमपि वृत्तिकारमतेन परीष्टिसूत्रव्याख्यानार्थं भाष्यं 'न परीक्षितव्यं निमित्तमि'ति । तदयुक्तम् । सूत्रे नञोऽश्रुतत्वात्, अत आह — नञिति । इदं हि सूत्रं विधिनिषेधशून्यमपरिपूर्णं नञध्याहारेण परिपूर्यते । प्रसिद्धस्य धर्मनिमित्तस्य परीक्षाविधेरयोग्यत्वादिति व्याख्याते तु नञध्याहारेण परीष्टिसूत्रे प्रत्यक्षसूत्रमवतारयितुं भाष्यकृतोक्तं — 'ननु व्यभिचारात् परीक्षितव्यं निमित्तं शुक्तिका हि रजतवत् प्रकाशते यतः' इति । एवंह्यत्र परि-

**प्रमाणलक्षणाज्ञानाद् व्यभिचारात् परीक्षणम् ।**
**नैतत् प्रत्यक्षमित्येवमपरीक्षोपसंहृता ॥ १८ ॥**
**तत्रान्यस्यायथार्थत्वं प्रत्यक्षे तु यथार्थता ।**

---

चोदितं — न प्रसिद्धत्वं निमित्तापरीक्षायां हेतुः, प्रसिद्धतरस्य प्रत्यक्षस्य शुक्तिरजतवेदने व्यभिचारादिति । तदयुक्तं, नहि प्रत्यक्षं व्यभिचरति अपि-तर्हि तदाभासम् । नचाभासव्यभिचारे प्रमाणव्यभिचारपरिचोदना युज्यते । अत आह — सङ्करादिति । प्रत्यक्षतदाभासयोरक्षजत्वेन सादृश्यान्मोहादा-भासव्यभिचारेऽपि प्रत्यक्षव्यभिचारं चोदयतीति ॥ १७ ॥

तदेव प्रपञ्चयति—**प्रमाणे**ति । वक्ष्यमाणपारमार्थिकप्रत्यक्षलक्षणा-ज्ञानाद् व्यभिचारात् परीक्षा कार्येति चोदयति । एतत्परिचोदनोत्तरतया प्रत्यक्षसूत्रमुपवर्णितं 'नैतदेवम् । यत् प्रत्यक्षं न तद् व्यभिचरति । यद् व्य-भिचरति न तत् प्रत्यक्षम् । किं तर्हि प्रत्यक्षम् । तत्सम्प्रयोगे पुरुषस्येन्द्रि-याणां बुद्धिजन्म सत्प्रत्यक्षम् । यद्विषयं ज्ञानं तेनेन्द्रियाणां पुरुषस्य सम्प्रयोगे यद् बुद्धिजन्म तत् सत्प्रत्यक्षम्' । नचेदृशस्य व्यभिचारोऽस्ति । तदिदं वार्त्तिककारो दर्शयति — **नैत**दिति । परीष्टिसूत्रेणापरीक्षा प्रतिज्ञाता प्रत्यक्षसूत्रेणोपपाद्योपसंहृतेति ॥ १८ ॥

कथं पुनरेवंलक्षणकेऽपरीक्षा सिध्यतीत्यत आह — **तत्रे**ति । तत्र हि प्रत्यक्षलक्षणे । यदनेवंलक्षणकं तदयथार्थम् । प्रत्यक्षं तु यथार्थ-मेव । अयथार्थाशङ्का तु परीक्षायां हेतुरिति युक्तमपरीक्ष्यत्वमिति ।

किं पुनरयथार्थज्ञानम् । शुक्तौ रजतमिति । सा खलु दोषवशादन्या-कारेणावभासत इति भवति तद्गोचरज्ञानमयथार्थम् । तदिदमयुक्तम् । नहि शुक्ती रजतमिति भासते । किं तर्हि इदमिति शुक्तिरजतसाधरणात्मना पुरोवर्ति द्रव्यं गृह्यते । अनन्तरं च सदृशदर्शनोद्बोधितप्राचीनरजतानुभव-प्रभावितभावनाबीजजन्मा दोषवशाल्लुप्ततदवमर्शा रजतमिति स्मृतिरुदेति । तदेते द्वे एव ग्रहणस्मरणात्मके विज्ञाने । तद्गोचरयोश्च दोषवशादेव भेदक-धर्मानवधारणम् । भेदाग्रहणादेव विभ्रमव्यवहारः, न पुनरन्यस्यान्यथा-भासनात् । इदमिह भासत इति प्रतीतिसाक्षिकम् । अतः कथं रजतरूप-रूपितस्य शुक्तिरालम्बनम् । इदमेव ह्यालम्बनस्यालम्बनत्वं यदात्माकार-

ज्ञानजननम् । अतो नातदाकारस्य तदालम्बनमिति ज्ञानमेव साकारमिति बलादापतितम् । न खलु रजतमिति शुक्तेराकारः । रजतं तु नासन्निहित-मक्षजज्ञानालम्बनमिति युक्तम् । अतो बाह्यरहितं निरालम्बनमेव ज्ञान-मिति बलादापन्नम् । एवञ्च मुधैव निरालम्बनानुमानप्रत्याख्यानप्रयासः । अपिच दोषनिबन्धनो विभ्रमः । दोषाश्च स्वकार्ये शक्तिविघातहेतवः । अतो युक्तं तद्वशेन भेदकधर्मानवधारणं, न पुनरन्यस्यान्यथा भानम् । अपिच एवमयं विपरीतख्यातिवादी वक्तव्यः रजतधियः शुक्तिगोचरायाः किं निबन्धनमिति । न तावदिन्द्रियं प्राप्यकारित्वाद्, असन्निहितरजत-प्राप्त्यसम्भवात् । अन्यप्राप्तौ चान्यप्रकाशनेऽतिप्रसङ्गात् । प्रमाणान्तरं त्वस-म्भवादनुपन्यसनीयम् । अतो ग्रहणकारणाभावात् स्मृतिरियमिति निश्ची-यते । अस्ति हि स्मृतेः कारणं पूर्वानुभवप्रभावितोभयवादिसिद्धा भावना । नन्वसति तत्परामर्शे स्मरणमपि नोपपन्नम् । न नोपपन्नम् । अनुभूतविषयं हि ज्ञानं स्मृतिः । न तदिति परामर्शः । तस्मादिदं रजतमिति ग्रहण-स्मरणयोरुभयोरपि यथार्थत्वाद् यथार्थायथार्थज्ञानविभागो दुर्भणः ।

अत्र वदामः—यदि द्वे अप्येते यथार्थे, न तर्हि भ्रान्तिः । अयथार्थ-ज्ञानं भ्रान्तिरिति लौकिका मन्यन्ते । स्मरामीत्यग्रहो भ्रान्तिरिति चेत् । तन्न । भाष्यकारो हि "स एवासमीचीनः प्रत्यय" इति प्रत्ययमस-मीचीनं दर्शयति । अपिच कोऽयमग्रहः । ग्रहणाभाव इति चेत् । अभावो नाम न कश्चिदायुष्मतां यो भ्रान्तिरित्युच्यते । ननु स्मरणमेव स्मरामीत्यु-ल्लेखशून्यमग्रहणमाचक्ष्महे न तत्त्वान्तरम् । एवं तर्हि रजतमिति स्मृति-र्भ्रान्तिः । नच तद् युक्तम् । मिथ्या भ्रान्तिरिति पर्यायौ, न स्मृतिर्मिथ्या, यथावस्थितार्थविषयत्वात् । पूर्वानुभूतदेशकालाग्रहो भ्रान्तिरिति चेत् । न । अन्यानवभासोऽवभासान्तरं मिथ्याकरोति, सर्वमिथ्यात्वप्रसङ्गात् । नह्येकस्मिन् भासमाने सर्वं भासते । अतो यद्यपि रजतस्य देशकालौ न स्मर्येते, रजतं तु यथावस्थितं स्मृत्या विषयीकृतमिति न भ्रान्तिः । अथ सापेक्षत्वात् स्मृतेरप्रामाण्यम्, अतो भ्रान्तिरिति चेत् । यद्येवं सर्वस्मृतीनां भ्रान्तित्वापातः, अविशेषात् । नच स्मरन् भ्राम्यतीत्युच्यते । अथ मतं—गृह्यमाणस्मर्यमाणयोर्विवेकाग्रहो भ्रान्तिरिति, उक्तमस्माभिः नाग्रहो नाम कश्चिदृते ग्रहणस्मरणाभ्याम् । तयोश्च न ग्रहणं भ्रमः, प्रमाणत्वात् । नच

स्मृतिः । व्यभिचारादतिप्रसङ्गाच्च । विवेकाग्रहे च विभ्रमे सर्वसंविदां भ्रान्तित्वप्रसङ्गः । अवश्यं हि येनकेनचिद् विवेको न गृह्यते । स्यान्मतं—व्यवहारविसंवादो मिथ्यात्वमिति, तन्न । तद्धेतोरभावात् । यदि खल्विदमिति ग्रहणं रजतमिति देशकालानवच्छिन्नं रजतस्मरणं, को व्यवहारहेतुः । नो खलु रजतपदादनधिष्ठानं रजतं स्मरन् रजतमिति व्यवहरत्यत्रेदमिति तद्विद्वान् । यो यदर्थी स तदुपादित्सया चेष्टते । अनधिष्ठानं तु रजतं जानतो न व्यवहारहेतुमुपलभामहे । अपिच कोऽयं नियमः स्मृतरजतस्तदर्थी शुक्तावेव प्रवर्तत इति । यदि ह्ययं तामेव रजतं जानीयात्, ततस्तत्र प्रवर्तत इति युक्तम् । इतरथा लोष्टादावपि प्रवर्तेत । नह्ययं शुक्तेरिव रजतं ततोऽपि विविनक्ति । अवश्यं स्थूलोऽपि विवेको जिघृ(क्षि ? क्ष)तो नानुभूयते । अथोच्येत—ज्ञानद्वयमप्येतद् विवेकाग्रहणात् सत्यरजतसंविदो भिन्नमिति नावभासते । सा च व्यवहारहेतुतयावगता । ततोऽत्रापि प्रवर्तत इति । अहो दुरूहमिदमूहितम् । इदं तु ब्रूमः—किमिह सत्यरजतसंविदो विवेको नावभासते, तदभेदो वा भासते इति । पूर्वस्मिन् कल्पे पूर्ववत् प्रवृत्त्यभावः । उत्तरस्मिन् विपरीतख्यातिवादः । संवित्ती भिन्ने अभिन्ने भासेते वस्तुनी इति न विशेषः । अथ सत्यरजतबोधतुल्यतां मन्यते न तत्त्वं, न तर्हि तद्भावे तद्व्यवहारः । नहि गवा सदृशं गवयं जानन् गौरयमिति व्यवहरति । व्यवहारविसंवादे च भ्रान्तिहेतावतदर्थिनो व्यवहाराभावाद् भ्रान्त्यभावः । तस्यापि शब्दप्रयोगोऽस्तीति चेद्, न । निर्विकल्पकभ्रान्तौ तददर्शनात् । स्वतन्त्रस्मृतं च रजतमप्रसक्तं कथं शुक्तौ निषिध्यते नेदमिति । प्राप्तिपूर्वको हि प्रतिषेधो भवति । स कथमसत्यां प्राप्तावात्मानं लभते । ननु नात्र किञ्चिद् बाध्यते । किन्त्वनवगतो विवेकोऽवगम्यते नेदं रजतमिति । कोऽर्थः । शुक्तेर्विविक्तं रजतमिति । अहो व्याख्यानकौशलं तत्रभवतां यत् संविदोऽप्यन्यथा व्यवस्थिता अन्यथा व्याख्यायन्ते । रजतव्यवहारो बाध्यत इति चेद्, न । तस्याप्यप्रसक्तेरुक्तत्वात् । अप्रसक्तव्यवहारस्य बाधविरहप्रसङ्गात् । व्यवहारबाधोऽपि न राजाज्ञया । अपितर्हि, प्रसक्ततादूप्यनिवारणेन । अतोऽन्यदन्याकारेण प्रसक्तं बाध्यत इति साम्प्रतम् । अपिच स्पष्टीकृता ताद्रूप्यप्रसक्तिरिदं रजतमिति । नन्वनालम्बनता प्राप्नोतीत्युक्तम् । सत्यम् । यदन्यथासन्तमन्यथा प्रतिपद्यते तन्निरालम्बनं ज्ञानमि-

**यदाभासं हि विज्ञानं तत्संयोगे तदिष्यते ॥ १९ ॥**

**सम्पूर्णलक्षणं ह्येतत् तत्सतोर्व्यत्ययः कृतः ।**

**शोभनार्थस्तु सच्छब्दो यद्वाध्याहारकल्पना ॥ २० ॥**

---

ष्यते । किमिहाद्भुतं बाह्यानालम्बनता हि यत्नतो नः प्रतिषेध्या, सर्वत्र देशान्तरादिगतबाह्यालम्बनताभ्युपगमात् । कथमसन्निहितं ज्ञानमुत्पादयतीति चेत् । किमयं प्रत्यक्षधर्मः सर्वज्ञानेष्वारोप्यते । प्रत्यक्षं हि सन्निहितवर्तमानगोचरं, न ज्ञानान्तराणि । नचेदं प्रत्यक्षमाभासत्वात् । यदप्युक्तं — कथमन्यसम्प्रयुक्तमिन्द्रियमन्याकारस्य ज्ञानस्य हेतुरिति । उक्तमत्र भाष्ये — 'दोषो मिथ्याज्ञानस्य कारणमि'ति । तद्भावे हि मिथ्याज्ञानं भवति । असति तस्मिन् सम्यग्ज्ञानदर्शनात् । ननु दोषाः कार्यं विघ्नन्ति, न कार्यान्तरं जनयन्ति । न । स्वप्ने मनोदोषादवर्तमानस्यापि वर्तमानवद् भानात्, कारणाधीनात्मलाभं हि कार्यं तद्दोषे दुष्यतीति नानुपपन्नम् । एष च ज्ञानस्य दोषो यद्यन्यगोचरस्यान्याकारत्वम् । अतः सन्निहितमसन्निहितरजताकारेणावलम्बते दुष्टकारणजं ज्ञानमित्युभयालम्बनस्य ज्ञानालम्बनत्वम् । आत्मेन्द्रियमनोर्थसन्निकर्षो हि ज्ञानस्य हेतुः । सोऽसत्सु दोषेषु सम्यग्ज्ञानहेतुः, सत्सु तु विपरीतज्ञानहेतुरिति सूक्तो यथार्थायथार्थज्ञानविभाग इति । किं पुनः प्रत्यक्षस्य लक्षणं, येन तद् यथार्थमत आह—यदाभासमिति । यदाकारं ज्ञानं तेनेन्द्रियाणां सम्प्रयोगे यत् पुरुषस्य बुद्धिजन्म तत् प्रत्यक्षमिष्यते । कथं तदयथार्थं भविष्यतीति ॥ १९ ॥

ननु लक्षणपरत्वे सूत्रस्यातिप्रसक्तिरुक्ता । नचाप्येतेन सूत्रेण प्रत्यक्षं लक्ष्यत इति वदता कथमिदानीं लक्षणपरतया सूत्रं वर्ण्यते । अत आह — **सम्पूर्णेति** । यथावस्थितं सूत्रमाभाससङ्करादलक्षणम् । वृत्तिकारमते तु व्यत्यस्तं शक्नोति लक्षणं लक्षयितुमिति, कथं पुनः सम्पूर्णमत आह — तत्सतोरिति । यथाश्रुते हि सूत्रे इन्द्रियसम्प्रयोगजत्वमात्रं प्रत्यक्षलक्षणम् । तच्चाभासेऽप्यविशिष्टमित्यतिप्रसज्यते । व्यत्यस्तेन तु तदा बुद्ध्याकारपरामर्शनाद् भासमानाकारेन्द्रियसम्प्रयोगे या बुद्धिः सा प्रत्यक्षमित्युपस्कारे शुक्तिरजतज्ञाने भासमानेन्द्रियसम्प्रयोगाभावान्न प्रत्यक्षमतिप्रसज्यत इति । उत्कृष्टस्य सच्छब्दस्यार्थमाह — शोभनार्थ इति । ननु पूर्वं

**अर्थापत्त्येतरेषां च प्रत्यक्षाभासलक्षणम् ।**
**बाधकज्ञानलाभो हि पूर्वाबाधे न सम्भवेत् ॥ २१ ॥**
**स चास्तीत्यवबोधत्वे सति नान्योन्यसंश्रयम् ।**
**नचानागतबाधेन पूर्वेणात्मा हि लभ्यते ॥ २२ ॥**

वर्तमानार्थतया सम्प्रयोगविशेषणार्थः सच्छब्दो व्याख्यातः । कथमिदानीं शोभनार्थ इत्युच्यते । युक्तं च सम्प्रयोगविशेषणम् । अविशिष्टे हि तस्मिन्ननागतादिसम्प्रयोगजं योगिप्रत्यक्षमनिराकृतं स्यादिति प्रागेवोक्तम् । तद्वृत्तेनापि व्यवहितपठितेन समासो दुष्प्रतिपादतरः । पुनरपि चेद्दृशं यत्तत्सम्यक्प्रत्यक्षमिति तदपेक्षा विद्यत एवेति व्यत्ययेऽपरितुष्यन् प्रकारान्तरमाह — यद्वेति । द्वयोरपि तत्सतोरत्राध्याहारः । तत्र भासमानाकारपरामर्शार्थोऽध्याहृतस्तच्छब्दः । परस्तु प्रत्यक्षरूपपरामर्शार्थः । सच्छब्दस्तु सम्प्रयोगसन्निधिपठितस्तद्विशेषणार्थ एव । अध्याहृतस्तु शोभनार्थ इति विवेचनीयमिति ॥ २० ॥

ननुच आभासलक्षणाकथनान्न प्रत्यक्षतदाभासविवेको दर्शयितुं शक्यते, अत आह—अर्थापत्त्येति । ईदृशं प्रत्यक्षमित्युक्ते अर्थादनीदृशमाभासं भवतीति । अत्र भाष्यकारेण कथं तदतद्योगजत्वविवेकोऽवगम्यत इत्याशङ्क्योक्तं 'बाधकं हि यत्र ज्ञानमुत्पद्यते नैतदेवमिति तदन्यसम्प्रयोगे । विपरीतिस्तत्सम्प्रयोगे' इति । तदयुक्तम् । किं हि कारण यदुत्तरेण पूर्वं बाध्यते, पूर्वेणैव जघन्यमुत्तरं बाध्यत इति युक्तमत आह -- बाधकेति । तद्धि बाधकं यदन्याबाधकमात्मानमेव न लभते । तथाचोत्तरम् । अतस्तत् पूर्वं बाधत इति युक्तम् । जघन्यमपि पूर्वानपेक्षं बलवदिति षष्ठे वक्ष्यते । यत्र पूर्वापेक्षमुत्तरं, तत्र पूर्वं बलवदिति तृतीय उक्तमिति ॥ २१ ॥

किं पुनरुत्तरेण मिथ्या·सतः पूर्वस्य बाधः प्रमाणस्य वा । प्रमाणस्य बाधेऽतिप्रसङ्गः । मिथ्यात्वं तु नर्ते बाधात् सिध्यति, तदधीनो बाध इति इतरेतराश्रयमत आह — स चेति । नखलु पूर्वमिथ्यात्वावधारणादुत्तरस्य जन्म, अपितर्हि । तन्निरपेक्षमुत्तरं स्वकारणादेवोत्पन्नम् । अतो नोत्पत्तावन्यापेक्षत्वम् । नच कार्यक्लृप्तौ । अवबोधरूपत्वादवबोधस्य । तस्य च स्वगोचरप्रकाशनेऽन्यानपेक्षणात् । अतो नान्योन्याश्रयत्वमिति । यदि तर्हि पूर्वानपेक्षमुत्तरमिति तद् बाधकं, पूर्वं वा किमुत्तरमपेक्षते येन बाध्यते ।

**निमित्तदोषबोधेन पश्चाद् यत्राप्यबाधनम्।**

**भवत्येव हि तत्रापि नरान्तरविपर्ययः॥ २३॥**

**सर्वेषां सर्वदा यत्र धीः स्यात् तत्र न बाधनम्।**

**नहि कारणदुष्टत्वबुद्धिस्तत्र बलीयसी॥ २४॥**

**जात्यादिषु यदा जाता बुद्धिः पश्चादसम्भवात्।**

तदपि हि निरपेक्षमेव, अत आह — नचेति। यद्यपि तदुत्तरानपेक्षं, तथाप्यनागतोत्तरबाधकात्मकत्वेनानवभासान्न बाधकमिति॥ २२॥

यत्र तर्हि नैतदेवमिति न बाधकोदयः, अपितर्हि निमित्तदोषज्ञानं, तत्रेतरेतराश्रयमपरिहार्यम्। निमित्तदोषेण तत्रोत्थाप्यो बाधः। स च पूर्वाप्रमाणत्वे शक्यत उत्थापयितुं, तदुत्थापनाच्च तदप्रमाणमिति नावकल्पते, अत आह — **निमित्तेति**। प्रायेण हि शङ्खादिषु पीतादिविभ्रमाः पित्तादिदोषेभ्यः समुत्पन्नाः पश्चाद् बाध्यन्ते। नेदं पीतं शुक्लोऽयमिति हि सम्प्रतिपत्तिः सम्भवति। अतो न तत्र निमित्तदोषबोधमात्रान्मिथ्यात्वम्। यत्र तु ज्ञातेऽपि निमित्तदोषे तद्रूपप्रत्ययानुवृत्तेः पश्चादबाधनमेव, यथा दिङ्मूढस्य जानतोऽपि निमित्तदोषाद् दिङ्मोहो न निवर्तते। तत्रापि नरान्तरविपर्ययादन्यतः परिच्छेदान्नेतरेतराश्रयमिति॥ २३॥

यत्र तर्हि न नरान्तरादिषु विपर्ययः तत्र कथं यथा जात्यादिविज्ञाने। नच तत् सत्यं, तेषां व्यतिरेकाव्यतिरेकविकल्पाक्षमत्वादत आह— **सर्वेषामिति**। यद्धि देशान्तरादिषु न विपर्येति तदबाध्यं सम्यगेवेति। ननु तत्राप्यनुपपत्तेर्बाधिका धीरुत्पाद्या, कथं सम्यक्त्वमत आह — नहीति। प्रत्यक्षो ह्यविकलकरणस्य पिण्डात् पिण्डान्तरेषु पूर्वरूपावमर्शः। स कथं यौक्तिकेन बाधेन बाध्यते। यस्य ह्यव्युत्पद्यमानस्य बलवता मुखं निरुध्यते न तदात्मानं लभते। उक्तं च स्वयूथ्यैरपि — 'न प्रत्यक्षविरुद्धकारणविषयमनुमानमात्मानं लभते अग्नाविव शैत्यानुमानमि'ति॥ २४॥

अयमसावितरेतराश्रयस्य व्यक्तो विषय इत्याह — **जात्यादिष्विति**। अत्र हि जात्यादिज्ञानमिथ्यात्वाद् बाधकबुद्ध्युदयः। तदुदये तन्मिथ्यात्वम्। नच व्यक्तोदिता शुक्तिरजतज्ञानादिष्विव बाधिका धीरस्तीति।

**नाश्यते युक्तिभिस्तत्र व्यक्तमन्योन्यसंश्रयम् ॥**
**स्वतः प्रामाण्यतश्चात्र निर्णयोऽस्तित्वबोधनात् ।**
**तद्रूपप्रत्ययोत्पत्तेस्तदसद्वादिनामपि ॥ २६ ॥**

इति वृत्तिकारग्रन्थः ।

---

यदि तर्हि बाधकज्ञानमन्तरेण न कारणदोषमात्रान्मिथ्यात्वमवगम्यते, कथमुच्यते 'यस्य च दुष्टं करणं यत्र चं मिथ्येति प्रत्यय इति' भेदेन । तदा हि मिथ्यात्वप्रत्यय एवासमीचीनतायां हेतुरुक्तः स्यात् । तस्माद् वक्तव्यो विषयः । स उच्यते—येन तर्हि प्रागेकश्चन्द्रोऽवधारितः सम्प्रत्यङ्गुलीनिपीडितलोचनो द्वौ पश्यति । तस्य प्राचीनज्ञानानुसारेण जातविचिकित्सस्याधुना च व्यक्तं कारणदोषमवगतवतो भवति निर्णयः । यथा पूर्वंज्ञानमदुष्टकारणजम् । इदं च व्यक्तावगतकारणदोषप्रभवम् ! कारणदोषनियतश्च कार्यदोषः । तस्मादसमीचीनम् । तदिह पूर्वानुभवो विचिकित्सोदयहेतुः । कारणदोषावधारणादेव मिथ्यात्वावधारणम् । एवं बाह्यागमानामपि कारणदोषावधारणादेव मिथ्यात्वावधारणम् । नहि तदर्थाः साक्षाद् बाध्यन्ते । पौरुषेयत्वात् कारणदोषाशङ्कयैव मिथ्यात्वं भवतीति युक्तमेव द्वैविध्यम् ॥ २५ ॥

ननु मा बाधि जात्यादिज्ञानम् । प्रमाणत्वं तु तस्य कथं, प्रमाणतदाभाससाधारणं हि ज्ञानत्वम् । अतो व्यभिचारदर्शनात् संशयो युक्तः । वृत्त्यादिविकल्पाश्चाप्रामाण्यमनापादयन्तोऽपि तद्वत् प्रामाण्यं विघ्नन्ति । अत आह—**स्वत** इति । यदि ज्ञानत्वानुबन्धिनी प्रमाणत्वाप्रमाणत्वे द्वे अपि स्यातां, स्यादेवानिर्णयः । स्वतस्तु प्रमाणमित्युपपादितम् । अतो जात्याद्यस्तित्वबोधादनपोदितो निर्णयो युक्तः । स चायं बोधो न परमस्माकमेव । येऽपि तु जात्यादीनपलपन्ति, तेषामप्यस्ति । तेऽपि हि न तद्बोधमनपलपन्तो जात्यादीनपलपितुमर्हन्तीति ॥ २६ ॥

इत्युपाध्यायसुचरितमिश्रकृतौ काशिकाटीकायां
वृत्तिकारग्रन्थव्याख्या ॥

---

## अथ निरालम्बनवादः ।

**प्रमाणत्वाप्रमाणत्वे पुण्यपापादि तत्फलम् ।**
**विध्यर्थवादमन्त्रार्थनामधेयादिकल्पना ॥ १ ॥**

**सर्वेषु लक्षणेष्वेवं स्वप्रमाणगणैः स्थितिः ।**
**वचनव्यक्तिभेदेन पूर्वसिद्धान्तपक्षता ॥ २ ॥**

**कर्मिभ्यः फलसम्बन्धः पारलौक्यैहलौकिके ।**
**सर्वमित्याद्ययुक्तं स्यादर्थशून्यासु बुद्धिषु ॥ ३ ॥**

---

अत्र भाष्यकारेण 'ननु सर्व एव निरालम्बनः स्वप्नवत् प्रत्ययः' इत्याक्षेपपुरस्सरं 'जाग्रतो हि बुद्धिः सुपरिनिश्चिता कथं विपर्यसिष्यती'ति बाह्यार्थसद्भावः प्रतिपादितः । तस्य प्रकृतवेदार्थविचारोपयोगं दर्शयति— **प्रमाणत्वे**ति चतुर्भिः । सर्वो ह्ययं मीमांसाप्रपञ्चो बाह्यार्थाश्रय एव । यथा तावच्चोदनैव धर्मे प्रमाणं, योगिप्रत्यक्षबुद्धागमाद्यप्रमाणमिति चोदनासूत्रे प्रतिज्ञातं, तदसति बाह्ये चोदनापदार्थे दुःस्थितमेव । प्रमाणत्वोपन्यासेनैव तत्परिकरप्रथमपादोक्तसम्बन्धौत्पत्तिकत्वशब्दनित्यत्ववाक्यार्थप्रतिपत्तिमूलसद्भावापौरुषेयवेदवाक्यरचनादिपरिग्रहः । अप्रमाणत्वोपन्यासेन च प्रत्यक्षसूत्रनिर्दिष्टान्याप्रमाणत्वकारणोपादानमिति दर्शयितव्यम् । तथा यदपि चोदनासूत्र एव श्रुत्यार्थेन च पुण्यपापापरनाम्नोर्धर्माधर्मयोः स्वरूपं प्रतिज्ञातं, तदपि नासति बाह्येऽर्थे शक्यं दर्शयितुम् । तत्र हि विधिनिषेधात्मकचोदनाप्रमाणकं पुण्यपापयोः स्वरूपमिति वर्णितम् । आदिशब्देन पुण्यपापोभयरूपरहितमशुभेभ्यो निवर्तनमुपादत्ते । यदर्थसाधनं वस्तु तद्विपरीतं वा तत् पुण्यपापपदयोरास्पदम् । अशुभेभ्यो निवर्तनं तु न सुखाय न दुःखायेत्युभयरूपरहितम् । एतदपि चोदनासूत्रस्थेनार्थपदेन प्रतिपादितम् । तत्फलमिति च त्रिविधस्य पुण्यपापोदासीनात्मनो वेदप्रमेयस्येष्टानिष्टात्मकं फलमुपादत्ते । एतदपि स्वरूपप्रतिज्ञान्तर्गतमेव । नह्यनाश्रितफलसम्बन्धं धर्मादिस्वरूपमनुभवितुं शक्यमिति । तदेवं

तावद् बाह्यार्थसिद्धेरस्ति प्रथमपादोक्तसमस्तोपयोगः । तथा वक्ष्यमाणोपयोगोऽपि । नहि विध्यर्थवादमन्त्राणां साध्यसाधनसम्बन्धविधिविधेयस्तुतिविहितस्मृतिरूपार्था अर्थवादपादगोचरा बाह्यार्थं विना सिध्यन्ति । औदुम्बराधिकरणे हि 'औदुम्बरो यूपो भवत्यूर्जोऽवरुध्या' इत्यत्र विध्यभावान्न फलपदसम्बन्धः सिध्यत्यौदुम्बरत्वस्येति वक्ष्यते । तथार्थवादाधिकरणेऽर्थवादानां स्तुत्युपयोगो दर्शितः । एवंहि तत्रोक्तम् 'आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम्' (१. २. १) इति । अस्यार्थः—यानि हि क्रियां क्रियासम्बद्धं वा कञ्चिदर्थं प्रतिपादयन्ति, तानि सन्तु प्रमाणम् । यानि त्वक्रियार्थानि 'सोऽरोदीद् यदरोदीदि'त्यादीनि तानि न कञ्चिद्धर्मं प्रमिमते इति पूर्वपक्षिते उक्तं 'विधिना त्वेकवाक्यत्वात् स्तुत्यर्थेन विधीनां स्युः' (१. २. ७) इति । अस्यायमर्थः—विधेयानां स्तुतिरूपेणार्थेनार्थवादाः प्रमाणं स्युरिति । कथं पुनः स्तुत्यर्थता । नह्यनपेक्षिता स्तुतिरर्थवादानामर्थो भवितुमर्हति । न । अपेक्षितत्वात् । अपेक्ष्यते खल्वपि शब्दभावनापरनामधेयेन विधिना स्तुतिः । स हि पुरुषं प्रवर्तयन् प्रवृत्तिविषयप्राशस्त्यज्ञानमपेक्षते । अर्थवादाश्च स्वाध्यायविध्यध्यापितास्तद्बलेनैवाप्रयोजनसम्पदो न पर्यवस्यन्ति । तत्रैव किं कर्तव्यमित्यपेक्षिते तच्छक्तिनिरूपणायामक्षरग्रहणादिक्रमेण कथञ्चित् प्ररोचनायां बुद्धावुत्पन्नायां तत्कार्यत्वमर्थवादानां निश्चीयते । विधिर्हि प्ररोचनामपेक्षते, ते च तां शक्नुवन्ति कथञ्चिदुत्पादयितुमित्यनन्यप्रयोजनतया मनसि विपरिवर्तमानास्त एव तत्प्रयोजनतया निश्चीयन्ते । तदेष शास्त्रार्थो भवत्यर्थवादैरेव प्ररोचितं कर्माभ्युदयाय वटत इति । विधिस्वरूपं च प्रागेवोक्तमिति नेह प्रतन्यते । मन्त्रार्थोऽपि मन्त्राधिकरणे वक्ष्यते । तत्र 'बर्हिर्देवसदनं दामी'त्यादिमन्त्रानुदाहृत्य विचारितं—किममी उच्चारणमात्रादेवादृष्टार्थाः, उतार्थप्रकाशनार्था इति । तत्र 'तदर्थशास्त्रात्' (१. २. ३१) इत्याद्युपपत्तिभिरदृष्टार्थतया पूर्वपक्षितं यमेव ह्यर्थं मन्त्रः प्रकाशयति तत्रैवायं ब्राह्मणेन विनियुज्यमानो दृश्यते । यथा प्रथममन्त्रः 'उरु प्रथस्वे'ति पुरोडाशं प्रथयतीति । यदि चायमर्थपरः, लिङ्गेनैव तत्र विनियोगे सिद्धे विनियोगानर्थक्यम् । अतोऽविवक्षितवचना मन्त्राः इति पूर्वपक्षिते अभिहितम्—'अविशिष्टस्तु

वाक्यार्थः' (१. २. ४०) इति। यथा हि ब्राह्मणवाक्यानामर्थः प्रतीयमानो नाविवक्षितो भवति तथा मन्त्राणामपि। तेऽपि ह्यनुष्ठानौपयिकमर्थं प्रकाशयन्तः किमविवक्षितवचना मन्त्रा भविष्यन्ति। दर्शपूर्णमासादयो ह्यनुष्ठानकालेऽस्मृतांनुष्ठानासम्भवादनु(ति)ष्ठासितस्वपदार्थस्मृतिहेतुमपेक्षन्ते। मन्त्राश्चार्थवादवदेव स्वाध्यायाध्ययनविधिबलप्रतिलब्धाध्ययनसंस्कारसम्बन्धात् किंस्विदस्माभिः कर्तव्यमित्यपेक्षमाणा विलम्बन्ते। तत्राशक्तिके विनियोगासम्भवात् तच्छक्तिनिरीक्षणायां क्रत्वपेक्षितानन्यसाधितविहितस्मृतिप्रयोजना निश्चीयन्ते। यथाहुः —

"अनुष्ठाने पदार्थानामवश्यम्भाविनी स्मृतिः।
अनन्यसाधनानन्यकार्यैर्मन्त्रैर्नियम्यते॥"

इति। यत्तु विनियोगानर्थक्यमुक्तं, तन्न। अर्थवादार्थत्वाद् वाक्यस्य। प्रथनं हि तत्र श्रूयते। ईदृशमिदं प्रथनं प्रशस्तं यत् क्रियमाणमनेन मन्त्रेण क्रियत इति। सोऽयं विध्यर्थवादमन्त्राणामर्थो नासति बाह्येऽर्थे सिध्यति। तथा 'उद्भिदा यजेत पशुकामः' इत्युदाहृत्य विचारितं किमयं गुणविधिः उत कर्मनामधेयमिति संशय्य, प्रवृत्तिविशेषकरतया गुणविधिरिति पूर्वपक्षितम्। गुणं हि विदधतां प्रवृत्तिविशेषकरत्वम्। इतरथा नाममात्रमनर्थकम्। शक्नुवन्ति चोद्भेदनक्रियायोगवशेन किञ्चित् खनित्राद्यर्थमभिधातुमिति गुणविधय इति प्राप्ते उक्तं— न गुणविधयः। कर्मसमानाधिकरणा ह्येते, तृतीयानिर्देशात्। कर्म खल्विह 'उद्भिदा यजेत पशुकामः' इति पशुभावनाकरणत्वेनाभिहितं यजेत पशुकाम इति। किमुक्तं, यागेन पशून् भावयेदिति। अत उद्भिदा यागेनेति व्यक्तमेव सामानाधिकरण्यम्। गुणविधौ तु यागस्योद्भित्त्वाभावादुद्भिद्वता यागेनेति मत्वर्थलक्षणया सामानाधिकरण्यं स्यात्। तत्र च लक्षणैव दोषः। नन्वेवं 'व्रीहिभिर्यजेते'त्येवमादावपि भावनाकरणेन यजिना समभिव्याहृता व्रीह्यादिशब्दाः कर्मनामधेयतां प्रतिपद्येरन्। न। तेषां निरूढार्थत्वात्। अज्ञातसन्दिग्धार्थस्य हि पदस्य प्रसिद्धसामानाधिकरण्यादेवार्थो निश्चीयते। निरूढं तु स्वार्थान्न प्रच्यावयितुं शक्यते। आह च —

"पदमज्ञातसन्दिग्धं प्रसिद्धैरपृथक्श्रुति।
निर्णीयते निरूढं तु न स्वार्थादपनीयते॥"

इति । अतः पशूनामुद्भेदनं प्रकाशनमनेन कर्मणा क्रियते इति योगादुद्भिच्छब्देन कर्माभिधीयते । गुणफलसम्बन्धविधानेनाम्नातानामप्युपयोगोऽस्तीति नानर्थक्यम् । अतः सिद्धं कर्मनामधेयतयैवञ्जातीयकानां क्रियोपयोग इति । चित्रादिशब्दानां नामधेयत्वहेतवो विस्तरभयान्नानुक्रम्यन्ते । क्वचित् कर्मणः प्रापकशब्दान्तराभावाद् गुणविधित्वमेव । यथा आग्नेयोऽष्टाकपाल इत्याग्नेय इति सगुणकर्मविधायिनः शब्दस्य । नहि तत्र द्रव्यदेवतासम्बन्धविधानात् प्राक् कर्मणो रूपमवगम्यते यस्याग्नेयशब्दो नामधेयं भवेदित्येवमादि नामधेयपादोक्तमादिशब्देनानुक्रान्तं वेदितव्यमध्यायान्तम् । यावत्स्मृतिपादोक्तार्थोऽप्यनेनैवानुक्रान्तो वेदितव्यः ।

प्रत्यक्षवेदोपयोगप्रतिपादनप्रसङ्गेन चार्थवादाद्युपयोगानन्तरं नामधेयपादार्थोऽनुक्रान्तः । तत्रादिशब्देनानुक्रान्तः स्मृतिपादार्थः । तथाहि—अश्रूयमाणवेदानष्टकादीनुदाहृत्य तेषां धर्माधर्मत्वसंशये, 'धर्मस्य शब्दमूलत्वादशब्दमनपेक्ष्यं स्यात्' (१. ३. १) इति पक्षं परिगृह्य वेदमूलतया सिद्धान्तितं— सर्वाः स्मृतयो हि नासति पूर्वज्ञाने आत्मानं लभन्ते । पूर्वज्ञानं च मूलभूतं विभ्रमो वा स्यात्, प्रत्यक्षानुभवो वा, पौरुषेयागमजन्यं वा, विप्रलम्भो वा, चोदनाजनितं वा । तत्र तावद् भ्राम्यतामाप्तानां मन्वादीनां स्मृतिनिबन्धनप्रणयनमयुक्तम् । ते हि तावद् ऋषयो भ्राम्यन्तीत्येतदेव दुर्भणम् । भ्राम्यतां तु यन्महाप्रबन्धरचनं तत् स्मृतिभ्यश्चाद्ययावदार्यैः पश्यद्भिः परि(ग्रह?गृह्यते) इति नैतदुत्प्रेक्षितुमपि शक्यम् । अनुभवश्चातीन्द्रियगोचरः प्रत्यक्षसूत्रे निराकृतः । पुरुषवाक्यमप्यसम्भवन्मूलमप्रमाणमेव । विप्रलम्भोऽपि भ्रान्तिवन्निराकार्यः । चोदना तु सम्भवद्वेदसंयोगिनां त्रैवर्णिकानां स्मृतिमूलं भवतीति तत्कल्पनैव लघीयसीति । नन्वेवमग्निहोत्रादिचोदनावदष्टकादिचोदना अपि किं नोपलभ्यन्ते । नेदमनुपपन्नम् । विप्रकीर्णानेकशाखाश्रया हि श्रुतयः क्रतुपुरुषार्थोपदेशसङ्कीर्णाः प्रमाद्यद्भिरयतनैर्न विविच्योपलभ्यन्त इति किं नोपपद्यन्ते । अतो यदश्रूयमाणमप्यष्टकादिधर्मस्य निमित्तं चोदनेति सिद्धमष्टकादयो धर्मा इति । तदेवं प्रत्यक्षश्रुत्यविरुद्धाभ्यः श्रुत्यनुमानम् । प्रत्यक्षश्रुतिविरोधे तु न श्रुतिरनुमातुं शक्यत इति विरोधा-

धिकरणे उक्तम् । उपरिष्टाच्चाचारप्रामाण्यं स्मृत्या च सह बलाबलपरीक्षे-त्यादि दर्शयितव्यम् । सर्वेषु च भेदादिलक्षणेषु स्वप्रमाणगणैः शब्दान्तरा-दिभिः सिद्धान्तस्थिति(:?र)सति बाह्येऽर्थे न सम्भवति । 'सोमेन यजेत' 'दा-क्षिणानि जुहोति' 'हिरण्यमात्रेयाय ददाती'ति यागहोमदानभावनानां शब्द-भेदादेव भेदो वक्ष्यते । तथाच 'समिधो यजती'त्येवमादीनां पञ्चानां प्रया-जानामसत्यपि शब्दभेदेऽभ्यासानर्थक्यप्रसङ्गाद् भेदो दर्शितः । 'तिस्र आहु-तीर्जुहोती'ति पृथक्त्वनिवेशित्वात् संख्याया आहुतीनां भेदो दर्शितः । 'अथैष ज्योतिरेतेन यजेते'ति ज्योतिष्टोमाज्ज्योतिरि ति संज्ञान्तरेण कर्मभेदः । 'वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनमि'ति च उत्पत्तिशिष्टश्रौतामिक्षाविरोधाद् वाजिनं वैश्वदेवे कर्मणि निवेशमलभमानं स्वाश्रयं यागान्तरमुपकल्पयति । सोऽयं वाजिनगुणाद् भेदः । कुण्डपायिनामयने 'मासमग्निहोत्रं जुहोती'ति नैयमिकाग्निहोत्रात् प्रकरणान्तरेण कौण्डपायिनहोमस्य भेदः । तदेवं षोढा कर्मभेदो द्वितीये । अन्यदुपोद्घातादिना ।

तृतीये तु पारार्थ्यलक्षणस्य शेषत्वस्य षोढैव विनियोगसिद्धिरुक्ता । यथा तावदरुणिम्नः तृतीयाश्रुत्या क्रियाङ्गभावे सामान्यतोऽवगते 'अरुणया क्रीणाती'ति क्रियाविशेषलाभो वाक्यात् । लिङ्गविनियोगस्तु— यथाप्रकरणा-म्नानसामर्थ्यावधृतसामान्याङ्गभावस्य बर्हिर्मन्त्रस्य सामर्थ्यापरनाम्नो लिङ्गाद् बर्हिर्लवने विनियोगः । प्रकरणविनियोगस्तु — इष्टिप्रकरणाम्नातानां प्रयाजा-दीनां साध्याकाङ्क्षिणामुपकाराकाङ्क्षिण्या तया सह सम्बन्धः । उभयाका-ङ्क्षालक्षणमेव हि प्रकरणमाचक्ष्महे । क्रमविनियोगस्तु — प्राकृतोपकार-निराकाङ्क्षायां विकृतौ सन्निधिसमाम्नातानामङ्गानाम् । नहि तत्र प्रकरण-विनियोगः सम्भवति । उभयगामिनी ह्याकाङ्क्षा प्रकरणम् । अनाकाङ्क्षा चेह विकृतिः प्राकृतोपकारद्वारपरिप्राप्तपदार्थपरिष्वक्ता वैकृतमेव त्वङ्गानां सन्निहितसमाम्नानमनर्थकं मा भूदिति तत्सन्निधिपाठादेव तेषां तत्र विनि-योगो निश्चीयते । समाख्याविनियोगस्तु — आध्वर्यवसमाख्यातेषु पदार्थे-ष्वध्वर्योरनेनामी कर्तव्या इति ।

चतुर्थेऽपि श्रुत्यादिभिरेवावधृताङ्गाङ्गिभावानां दध्यानयनामिक्षादीनां प्रयोज्यप्रयोजकत्वे वक्ष्येते । यद्धि श्रुत्यादिभिर्यच्छेषतयावगम्यते तत् तेन

प्रयुज्यत इति स्थापितम् । तदिह प्रयुक्तिलक्षणेऽपि श्रुत्यादिरेव प्रमाणगणः, शेषलक्षणेऽपि शेषिणां शेषाणामुभयेषां वा क्रमनियमः किञ्चिन्मात्रविशेषभिन्नश्रुत्यादिभिरेव क्रियते । यथा तावद् 'अध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयति' इति क्त्वाश्रुत्या क्रमनियमः । 'अग्निहोत्रं जुहोति यवागूं पचति' इति पाठादन्यादृशेऽपि क्रमेऽवगम्यमानेऽर्थात् क्रमनियमविपर्ययः । होमोत्तरकालं हि पाकः क्रियमाणोऽनर्थकः स्यात् । होमोऽपि नासति हविषि सं(प्र)वर्तत इत्यर्थात् पाकोत्तरकालमेव निश्चीयते । तदिदं लिङ्गमेवार्थ इति नाममात्रभिन्नं, सामर्थ्यमेव हि भावानां लिङ्गमिति निश्चीयते । इहापि द्रव्यक्रिययोः शक्तिनिरीक्षणादेव क्रमनियमावधारणम् । पञ्चानां तु प्रयाजादीनां 'समिधो यजती'त्येवमादीनां पाठात् क्रमनियमः । बहूनां हि पदार्थानां युगपदेकेन कर्त्रानुष्ठातुमशक्तेरवश्यम्भाविनि क्रमेऽवगमाधीनत्वादनुष्ठानस्य क्रमेण तूच्यमानेषु तथैवावगमादनुष्ठाने क्रमापेक्षायां स एव क्रमो निश्चीयते । प्रतीतहानाप्रतीतोपादानयोरनुपपत्तेः । अयमपि पाठपरनाम्ना स्थानेनैव क्रमनियमः । स्थानात् क्रमनियमो यथा—साद्यस्के कर्मणि 'सह पशूनालभते' इत्यग्नीषोमीयसवनीयानुबन्ध्यानां सवनीयस्थाने सहोपलम्भे चोदिते कः प्रथमं प्रयुज्यतामित्यपेक्षायां स्थानात् सवनीयो बुद्धो भवन् प्रथमं नियम्यते । तस्य तदनुष्ठानस्थानम् । सोऽयमनुष्ठानसादेश्यलक्षणः क्रमः । पूर्वं तु पाठसादेश्यलक्षणः । द्वेधा च तार्तीयक्रमो विभक्तः । यथोक्तं—

> "तत्र क्रमो द्विधैवेष्टो देशसामान्यलक्षणः ।
> पाठानुष्ठानसादेश्याद् विनियोगस्य कारणम् ॥"

इति । प्रवृत्त्या च क्रमनियमो यथा— 'सप्तदश प्राजापत्यान् पशूनालभते' इति चोदितेषु पशुषु चोदकप्राप्तानां प्रोक्षणादीनां यत्रक्वचिदेकस्मिन्नेकस्यानुष्ठाने द्वितीयादिषु किं प्रथमप्रवृत्त्यैव अथानियम इति संशये नियमकारणाभावात् प्रथमप्रवृत्तेश्चानियमात्मकत्वादनियमः इति पक्षं परिगृह्य प्रथमप्रवृत्त्यैव नियमो दर्शितः । प्रयोगवचनबलेन हि पशूनां यौगपद्यमवधारितम् । तच्चावर्जनीयाद् विलम्बनान्न व्यवधानान्तरमङ्गानामनुजानीते । साङ्गेषु हि पशुषु युगपदनुष्ठातव्यतया चोदितेष्वपीश्वरेणापि तथा सम्भा-

वयितुमशक्तेः अवर्जनीयव्यवधानं तु विधेरनुमतं भवति । तत्र च वैषम्यकारणाभावात् सर्वेषां सदृशमेवाङ्गव्यवधानम् । प्रथमपदार्थकर्त्रानुष्ठिते तदैवाङ्गान्तरानुष्ठानाय तेनैव प्रधानेन चोद्यमाने कर्तरि प्रयोगवचनप्रमाणकयौगपद्यबलेन पश्वन्तरैराकृष्यमाणे तत्पदार्थमात्रस्य पश्वन्तरेष्वनुष्ठानं स पशुः प्रतीक्षते । तदन्ते च द्वितीयपदार्थानुष्ठानाय कर्तारमाकर्षति । एवं सप्तदशानां पशूनां षोडशभिरेकैकस्य व्यवधानं विध्यनुमतम् । व्यवधानविशेषस्तु विशेषाग्रहणान्नाश्रयितुं शक्यम् । अतो द्वितीयादीनामप्यनुष्ठानं तत एवारभ्येति सिद्धान्तात् क्रमनियमः । अयं च प्रकरणान्तर्गत एवाकाङ्क्षैकप्रमाणकत्वादेकैकोऽपि पशुरव्यवधानेन पदार्थानुष्ठानमाक्षिपति । पदार्थश्च तत्सन्निधावात्मनोऽनुष्ठानम् । अत उभयाकाङ्क्षया क्रमनियमो जायमानः प्राकरणिको भवति । मुख्यक्रमेण चांशानां क्रमनियमो यथा — 'सारस्वतौ भवत' इति युगपदुत्पन्नयोः स्त्रीपुंदेवतयोः कर्मणोर्याज्याक्रमेणानुष्ठानेऽवगतेऽङ्गेषु क्रमापेक्षायां मुख्यक्रमेणैव क्रमो नियम्यते । नह्यङ्गानां प्रधानकालाद् बहिर्भावोऽस्ति । 'साङ्गं प्रधानमेकशब्दादि'ति वक्ष्यति । सोऽयं वाक्येनैव क्रमनियमः । साङ्गं हि प्रधानमेकवाक्यचोदितमेकोपक्रमावसानमिति प्रधानक्रमेणैवाङ्गानां क्रमनियमो जायते । अत्रापि श्रुत्यादिरेव प्रमाणगणः ।

एवमधिकारविचारादावपि शेषशेषिप्रपञ्चार्थत्वात् शेषलक्षणोक्तान्येव श्रुत्यादीनि सिद्धान्तस्थितिहेतुतया दर्शयितव्यानीति । यथा तावदाद्य एव 'स्वर्गकामो यजेते'ति यागस्वर्गयोः कः शेषः को वा शेषीति चिन्तायां 'द्रव्याणां कर्मसंयोगे गुणत्वेनाभिसम्बन्धः' (६. १. १) इति स्वर्गस्य यागशेषतया लिङ्गबलेन पूर्वपक्षः परिगृहीतः । तद्धि भूतस्य द्रव्यस्य सामर्थ्यं यद् भाव्यं कर्म निष्पादयति । द्रव्यं च स्वर्गः, स्रक्चन्दनवासस्सु तत्प्रयोगात् सूक्ष्माणि वासांसि स्वर्ग इति यथा । अतो द्रव्यमेव कर्मार्थं, कामपदसम्बन्धश्च साधनविषयतया दर्शयितव्यः । यो हि यदर्थी स तत्साधनमपि कामयत एवेति लिङ्गबलेन पूर्वपक्षिते विधिश्रुतिबलात् सिद्धान्तितम् । विधिर्हि चेतनप्रवर्तनात्मकः । नचानर्थे पुरुषः प्रवर्तयितुं शक्यते इति यागार्थे स्वर्गे कर्मासाधकमापद्यते । यथोक्तम् 'असाधकं तु तादर्थ्यात्' (६. १. २) इति । अतो विधेः प्रवर्तनाशक्तिर्मा व्याघानीति कर्मैव स्वर्गा-

र्थम् । नच द्रव्यं स्वर्गः । अन्वयव्यतिरेकाभ्यां प्रीतिवचनत्वावगमात् । तदेव हि द्रव्यमप्रीतिकरं न स्वर्गशब्देनोपचरन्तो दृश्यन्ते इति प्रीत्यन्वयव्यतिरेकानुविधायित्वात् स्वर्गपदं तद्वचनमिति निश्चीयते । नच सर्वस्येष्टतमा प्रीतिरन्यनिष्पत्तये भवतीति साम्प्रतम् । अतो यदेव किञ्चित् प्रीत्या समभिव्याहृतं तत् तदर्थमेवेति लिङ्गमपि विपरीतम् । अतः सिद्धं यागः स्वर्गार्थं इति सिद्धश्चाधिकार इति । परस्तादपि शेषभूतस्यैव कर्तुस्तत्राधिकारो दर्शयिष्यत इति श्रुत्यादिबलेनैवाधिकारलक्षणेऽपि सिद्धान्तस्थितिः ।

उत्तरषट्के तु शेषा एव किं सर्वत्रोपदेशेनैव सम्बध्यन्ते, अथ यथाप्रकृति व्यवतिष्ठन्त इति श्रुत्यादिबलेनैव निर्णेष्यन्ते । औपदेशिके हि धर्मसम्बन्धे नातिदेशः सिध्यति, पारिप्लवा हि तदा धर्मा भवेयुः । तदिहातिदेशोपोद्घातेनैव सप्तमाद्ये यज्यपूर्वप्रयुक्तत्वं विचारितं यज्युद्देशेन धर्मविधानात् यजेश्च सामान्यवचनत्वात् सर्वत्रेति प्राप्तम्, नच दर्शपूर्णमासपदं नियामकं, परिसंख्यानाद् विशिष्टोद्देशेन विशिष्टानुवादादिति प्राप्ते निरूपितं — नात्र 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेते'ति यागोद्देशेनाङ्गानि विधीयन्ते, किं तर्हि, साङ्गप्रधानविशिष्टापूर्वभावनैव चोद्यते । पश्चात् त्वेकभावनापरिगृहीतानामङ्गानां प्रधानानां चारुणैकहायनीवत् परस्परान्वयसिद्धिः । भिद्यन्ते च शब्दान्तरादिभिः प्रतिप्रकरणमपूर्वभावनेति कुतो धर्मसङ्करः । सेयं श्रुत्यादिप्रमाणकविनियोगपरामर्शादेव व्यवस्था सिध्यति । यदा ह्यपूर्वभावनान्वयगर्भो विनियोगो धर्माणां न यागसामान्योद्देशेनेति सिद्धं भवति, तदा व्यवस्था सिध्यति । तत्सिद्ध्या चाश्रुतेतिकर्तव्यताकेषु सौर्यादिषु विध्यन्तापेक्षायां सामान्यातिदेशसिद्धौ प्रत्यक्षवचननामाव्यक्तचोदनातदवयवद्रव्यदेवतासामान्यबाहुल्येन विशेषातिदेशसिद्धिः । यथेष्टौ 'समानमितरत् श्येनेने'ति श्येनवैशेषिकाणां वाचनिकोऽतिदेशः । 'मासमग्निहोत्रं जुहोती'ति कुण्डपायिनामयने होमनाम्ना नित्याग्निहोत्रधर्मातिदेशः । एकाहाहीनसत्राणामव्यक्तचोदनाचोदितत्वेन सोमसादृश्यात् तद्धर्मातिदेशः इत्यादि दर्शयितव्यम् । सर्वश्चायमतिदेशः श्रुत्या विनियोगानुसारेणैव शेषाणां सिध्यतीति तत्प्रमाणगणकारित एव । ऊहोऽपि षोढा विभक्तः । प्राकृतोपदेशानुसारेणैव मन्त्रादीनां सिध्यतीति सोऽपि श्रुत्यादिप्रमाणक एव । सोऽपि ह्यपूर्वार्थो धर्मविनियोग इति सिद्धे सेत्स्यति । अत

**तस्माद् धर्मार्थिभिः पूर्वं प्रमाणैर्लोकसम्मतैः ।**
**अर्थस्य सदसद्भावे यत्नः कार्यः क्रियां प्रति ॥ ४ ॥**

एवापूर्वप्रयुक्तिरग्ये साधिता । बाधोऽपि श्रुत्यादिप्रमाणानुसारेणैव । तत्रापि प्राकृतशास्त्रातिदेशात् सर्वानुष्ठानेन पूर्वपक्षिते उपकारप्रधानत्वादतिदेशस्य तदभावेऽन्यतो वा तल्लाभे प्रतिषेधेन वा बाधो वक्ष्यते । यथा कृष्णलचरावववघातस्य, खलेवालीशराभ्यां यूपबर्हिषोरित्यादि दर्शयितव्यम् । एतदपि प्रकृतावेवोपकारपर्यन्तश्रुत्यादिविनियोग इति निर्णीयते । (सिध्यति ?) एतावांस्तु विशेषः प्रकृतौ पदार्थपरिग्रहपुरस्सर्युपकारकल्पना, प्राक् तदसिद्धेः । विकृतौ तु प्रकृतिपरिकल्पितोपकारसन्दर्शनेन तत्परिग्रहपुरस्सरं पदार्थपरिग्रहः । स एव हि विधिनापेक्ष्यते । स तु प्रकृतावसिद्धो(ऽपि) कल्पयित्वा गृह्यते । विकृतौ च प्रकृतिसिद्ध एवोपादीयत इति । अत एव शास्त्रपदार्थयोरनतिदेशः, तयोर्विध्यनपेक्षितत्वादिति । तन्त्रावापलक्षणेऽपि विशेषा एव प्रधानानां किं तन्त्रेणोपकारका उतावृत्त्येति शेषाणामेव विचार्यमाणत्वात् तत्प्रमाणगणानुसारी निर्णयो दर्शयितव्यः । तत्र हि देशकालफलादीनां तन्त्रसम्बन्ध आग्नेयादीन् प्रति प्रयाजादीनां तन्त्रानुष्ठाने हेतुर्भविष्यति । स च श्रुत्यादिप्रमाणक एवेति तत्रापि स एव प्रमाणगणः । प्रसङ्गलक्षणेऽपि पश्वर्थानुष्ठितानां प्रयाजादिशेषाणां पशुतन्त्रमध्यपातिपुरोडाशोपकारकत्वं देशादितन्त्रनिबन्धनमेवेति पूर्ववत् प्रमाणगणः । अतएव भाष्यकारेण प्रथमसूत्रे दशाध्याय एव शेषलक्षणशब्दः प्रयुक्तः । योऽपि वचनव्यक्तिभेदेन पूर्वपक्षसिद्धान्तविभागः यथा 'स्वर्गकामो यजेते'ति स्वर्गकामो यागं कुर्यादिति पूर्वः पक्षः यागेन स्वर्गं कुर्यादिति सिद्धान्त इति, सोऽपि नार्थशून्यासु बुद्धिषु सिध्यति । कर्मभ्यश्च दर्शपूर्णमासकारीर्यादिभ्यः परलोके इहलोके भवत्स्वर्गवृष्ट्यादिफलसम्बन्धो बाह्याश्रय एव, असति तस्मिन् द्वैविध्यानुपपत्तेः । अतः सर्वमिदं बाह्यार्थसिद्धावसत्यामयुक्तमापद्येतेति तदुपपादनाय धर्मार्थिभिर्मीमांसकैर्लोकप्रसिद्धैः प्रत्यक्षादिभिः प्रमाणैः पूर्वोत्तरपक्षविभागेनार्थस्य सदसद्भावयोर्यत्नः कार्यः । पूर्वपक्षविशुद्धा हि बुद्धिः सिद्धान्तकरी भवति । अतोऽनुमानेनैवार्थापह्नवपूर्वपक्षं कृत्वा प्रत्यक्षेण तत्सद्भावसिद्धान्तो दर्शयितव्यः । सर्वश्चायं प्रयासः सकललौकिक-

**यदा संवृतिसत्येन सर्वमेतत् प्रकल्प्यते ।**
**ज्ञानमात्रेऽपि कस्माद् वो वृथाग्रहोऽर्थकल्पने ॥ ५ ॥**
**संवृतेर्नतु सत्यत्वं सत्यभेदः कुतोन्वयम् ।**
**सत्यं चेत् संवृतिः केयं मृषा चेत् सत्यता कथम् ॥**
**सत्यत्वं नच सामान्यं मृषार्थपरमार्थयोः ।**
**विरोधान्नहि वृक्षत्वं सामान्यं वृक्षसिंहयोः ॥ ७ ॥**

---

वैदिकक्रियां प्रति तत्सिद्ध्यर्थमिति यावत् । अन्यथा सर्वार्थक्रियाणामुच्छेदो भवेत् । अतः प्रयोजनवद् बाह्यार्थप्रतिपादनम् । अक्रियाङ्गस्य तु प्रतिपादितस्याप्यनर्थ(त्व)मेवेति क्रियां प्रतीति युक्तमेवेति ॥ ४ ॥

अत्र चोदयति—यदेति । ज्ञानमात्रपक्षे हि बौद्धानामिव सर्वोऽयं प्रमाणादिव्यवहारः सिध्यत्येव । ते हि वदन्ति—

"द्वे सत्ये समुपाश्रित्य बुद्धानां धर्मदेशना ।
लोके संवृतिसत्यं च सत्यं च परमार्थतः ॥"

इति । अतस्तद्वदेव व्यवहारसिद्धौ किं पारमार्थिकार्थप्रतिपादनव्यसनेनेति॥५॥

अत्र दूषणमाह—**संवृतेरिति** । सत्यम् । संवृतिसत्येन सर्वमिदं बौद्धैराश्रीयते । नत्वेतद् युक्तम् । सत्यभेदानुपपत्तेः । यः खल्वयं सत्यभेदो बौद्धैराश्रितः संवृतिसत्यं परमार्थसत्यमिति, नायमुपपद्यते । संवृतेः सत्यत्वाभावात् । मिथ्यापर्यायो हि संवृतिशब्दः । कथं तस्य सत्यशब्दसमभिव्याहारः । नह्ययमक्षशब्द इव विभीतकादीनां संवृतिपरमार्थयोः साधारणः सत्यशब्दः । अतः सत्यभेदानुपपत्तिरिति । विरोधमेव व्यनक्ति—सत्यं चेदिति ॥ ६ ॥

विरोधादेव च मृषार्थपरमार्थयोः सामान्यमपि सत्यत्वं नाभ्युपगन्तुं शक्यम् । समानानां भावः सामान्यम् । कुतस्तस्य विरोधिनोरवकाशः । नहि भवति धर्माधर्मयोर्धर्मत्वमधर्मत्वं वा सामान्यमित्याह—**सत्यत्वमिति** विरोधादन्तेन । अन्यमात्रयोरपि तत्परामर्शाभावाद् दुरुपगमं सामान्यं वृक्षसिंहयोरिव वृक्षत्वम् । किं पुनर्विरोधिनोस्तत् स्यादित्याह—

**तुल्यार्थत्वेऽपि तेनैषां मिथ्यासंवृतिशब्दयोः ।**
**वञ्चनार्थ उपन्यासो लालावक्रासवादिवत् ॥ ८ ॥**
**नास्तिक्यपरिहारार्थं संवृतिः कल्पनेति च ।**
**कल्पनापि त्वभिन्नस्य नैव निर्वस्तुके भवेत् ॥ ९ ॥**
**तस्माद् यन्नास्ति नास्त्येव यत् त्वस्ति परमार्थतः ।**
**तत् सत्यमन्यन्मिथ्येति न सत्यद्वयकल्पना ॥ १० ॥**

---

नहीति । अत्र चाक्षादिवत् साधारणशब्दता पूर्वं सत्यशब्दस्य निराकृता इह गवादिवत् सामान्यशब्दतेति विवेचनीयमिति ॥ ७ ॥

अतो लोकं वञ्चयितुं मिथ्यापर्यायोऽपि संवृतिशब्दो बौद्धविदग्धै-रनुद्वेगकरतया मिथ्यात्व एव विवक्षिते स्वनास्तिक्यपरिजिहीर्षया प्रयुक्तो लालायामिव वक्रासवशब्द इत्याह — **तुल्यार्थत्व** इति संवृतिरन्तेन । वक्ष्यमाणेनेतिकरणेन सम्बन्ध इति । कल्पनावाचोयुक्तिरपि स्वनास्तिक्य-परिहारार्थमेव तैराश्रितेत्याह — कल्पनेति चेति । कल्पनामात्रकल्पितेन बाह्येन सर्वलौकिकव्यवहार इत्यपि निर्वस्तुके जगत्यभिन्नस्य चिन्मात्रस्य कल्पनाया भेत्तुमशक्यत्वाद् दुर्भणम् । क्वचिद्धि भिन्नमेव किञ्चिद् रूपा-न्तरं कल्पनास्पदं भवति शुक्ताविव रजतरूपम् । यस्य तु न किञ्चिद् भिन्नमस्ति, तत् केन रूपेण कल्प्यताम् । तदेतदाह कल्पनापीति ॥ ९ ॥

ननु त्रिधैव तत्त्वं विभजामहे सत्यमसत्यं संवृतिसत्यं चेति । संवृतं हि नात्यन्तमसद् भवति, व्यवहाराविसंवादात् । नापि सदेव, प्रमाणा-न्तरविरोधाज्जात्यादिवत् । अतो न संवृतिः प्रमाणं नाप्रमाणमिति विधा-न्तरमेवेदमिति युक्तस्तदाश्रयतया व्यवहार इत्यत आह — **तस्मादिति** । यतः खलु संवृतिर्मिथ्याज्ञानं न वस्तुक्लृप्त्यै प्रभवति, तस्माद् यत् परमा-र्थतो नास्तीति निरूप्यते न तत् संवृत्या तद्रूपं भवितुमर्हति । नास्त्येव तत् । यत् तु तावद् व्यवहाराविसंवादि तदस्त्येव, नह्यसतः सर्वदा व्यव-हारहेतुभावः सम्भवति । यदेवार्थक्रियाकारि तदेव च परमार्थसदिति वः सिद्धान्तः । अतः कथमर्थक्रियाकारित्वे सत्यपि जात्यादीनामसत्यत्वम् । तस्माद् यदि व्यवहाराङ्गतया बाह्यमस्ति, तत् तर्हि परमार्थत एवास्ति ।

**स्वप्नादिभोगवच्चापि योपभोगत्वकल्पना ।**
**तन्निवृत्त्यर्थमेवेह परमार्थे प्रयस्यते ॥ ११ ॥**
**नहि स्वप्नसुखाद्यर्थं धर्मे कश्चित् प्रवर्तते ।**
**यादृच्छिकत्वात् स्वप्नस्य तूष्णीमास्येत पण्डितैः ॥**
**परमार्थफलावाप्तिमिच्छद्भिस्तेन यत्नतः ।**
**प्रतिपत्तिर्विधातव्या युक्तिभिर्बाह्यवस्तुषु ॥ १३ ॥**
**तत्रार्थशून्यं विज्ञानं योगाचाराः समाश्रिताः ।**

---

तदेव सत्यमित्युच्यते । अन्यत्तु संवृतिर्मिथ्येति । नतु सत्यद्वयकल्पनात्मानं लभते। तन्त्रेण तद्वृत्तस्य पूर्वापराभ्यां सम्बन्धः । परमार्थत इति च नास्तीति पूर्वेण सम्बध्यत इति ॥ १० ॥

अपिच स्वप्नावगता अप्यर्थाः केचिच्छोकहर्षादिव्यवहारहेतवो दृश्यन्ते । अतस्तेऽपि सांवृता एव । तद्वच्च बाह्यार्थाभ्युपगमे स्वप्नादिभोगतुल्य एव शुभाशुभकर्मफलोपभोगो भवेत् । अतस्तन्निवृत्त्यर्थमपि परमार्थसत्ये बाह्ये प्रयस्यते इत्याह — **स्वप्नादीति** ॥ ११ ॥

कः पुनः स्वप्नतुल्यत्वे दोषः, अत आह — **नहीति** । किमिति न प्रवर्तते अत आह — यादृच्छिकत्वादिति । नहि स्वप्नसुखं मे भवतीति विद्वांसः प्रयस्यन्ति । यादृच्छिकं हि स्वप्नसुखमगणितसाम्परायिकैहिकानिमित्तं, न तत् प्रयस्यतो भवतीति बुद्ध्वा विद्वद्भिस्तूष्णीमुदासीनैरेवास्येत, न क्वचित् प्रयत्नः क्रियेतेत्यर्थः ॥ १२ ॥

अतोऽवश्यं पारमार्थिकीं फलप्राप्तिमिच्छद्भिरुपपत्त्या बाह्यवस्तुविषया प्रतिपत्तिर्विधातव्येत्यस्ति विचारस्य प्रयोजनमित्युपसंहरति — **परमार्थेति** ॥ १३ ॥

अत्र भाष्यकारेण बाह्यार्थसद्भाव एव पूर्वपक्षपुरस्सरं प्रतिपादितः, नतु ज्ञानसद्भावः । तत् कस्य हेतोः । अस्ति हि तत्सद्भावविप्रतिपत्तिरपि । माध्यमिका हि ज्ञानमप्यपलपन्ति । अतस्तन्निराकरणमपि युक्तम् । यत्

**तस्याप्यभावमिच्छन्ति ये माध्यमिकवादिनः ॥ १४ ॥**
**तत्र बाह्यार्थशून्यत्वं तुल्यं तावद् द्वयोरपि ।**
**निवृत्त्यास्य ततो ज्ञाने तद्वत् संवृतिकल्पना ॥ १५ ॥**
**तस्मात् साधारणत्वेन तन्मूलत्वेन चाप्ययम् ।**
**बाह्यार्थसदसद्भावे यत्नो भाष्यकृता कृतः ॥ १६ ॥**
**बाह्यार्थापह्नवे द्वैतमेकोऽर्थस्य परीक्षणात् ।**
**प्रमाणमाश्रितश्चैकस्तत्रास्तां यः प्रमेयतः ॥ १७ ॥**
**प्रमाणस्थस्तु मूलत्वादिहेदानीं परीक्ष्यते ।**

---

पुनस्तदुपेक्ष्यैव बाह्यार्थापलापो निराक्रियते, तत्र कारणं वक्तव्यमत आह— **तत्रेति** त्रयेण । अस्यार्थः— योगाचारा हि ज्ञानमात्रमर्थशून्यं पारमार्थिकं मन्यन्ते । माध्यमिकास्तु ज्ञेयाभावादकर्मकज्ञानानुत्पत्तेर्ज्ञानस्याप्यभावमिच्छन्ति । तत्र द्वयोरपि वादिनोस्तावद् बाह्यार्थशून्यत्वं साधारणम् । अर्थनिवृत्त्यधीनत्वात् ज्ञाननिवृत्तेः । अतो द्वयोरपि साधारणो बाह्यार्थापलाप इति स एव निराक्रियते । अपिच तन्मूलो ज्ञानापह्नवः । ततस्तस्मिन् निराकृते निराकृत एवेति बाह्यार्थसद्भावे पूर्वोत्तरपक्षविभागेन भाष्यकृता प्रयत्नः कृतः । आद्यस्तत्रशब्दो वाक्योपन्यासार्थः । द्वितीयस्तु पूर्वोक्तदर्शनभेदपरामर्शार्थः । तत्र मतभेदे इत्यर्थः ॥ १६ ॥

ननु बाह्यार्थापह्नवो द्विधैव बौद्धैराश्रितः प्रमाणतः प्रमेयतश्च । तथाहि—एवं तैरुक्तं— न तावदणवोऽतीन्द्रियाः प्रमाणविषयाः । न तत्समूहः, तस्य तदतिरेकिणोऽभावात् । नावयवी । तस्यावयवव्यतिरेकेणानुपलम्भात् । अव्यतिरेके च तन्मात्रापातात् । एवमान्त्यावयवेभ्यो विकल्प्य अवयवी निराकार्यः । ते त्वतीन्द्रिया एव । अतो न किञ्चन ग्राह्यमवतिष्ठते इति । तदेतत्परित्यागे किं कारणं, यत् प्रमाणत एव बाह्यापह्नव उपन्यस्यते निरस्यते चेति । अत आह—**बाह्यार्थे**ति सार्धेन । अयमर्थः—यद्यपि द्वेधा बाह्यार्थापह्नवो बौद्धैराश्रितः, तथापि प्रमाणाश्रित एव मूलभूतत्वादिह विचार्यते । प्रमाणमूला हि प्रमेयस्थितिः । तद् यदि प्रमाणमनुगुणं, किं वस्तुविकल्पैः । न तद्बलेन तदनुपपत्तिं परिहृत्यार्थो व्यवस्थाप्यते । अथतु

**प्रस्तुतः स द्विधा चात्र प्रथमं त्वनुमानतः ॥ १८ ॥**
**प्रत्यक्षबाधने चोक्ते पश्चात् तच्छक्त्यवेक्षणात् ।**
**तत्रानुमानमाहेदं नत्वित्यस्य च सङ्गतिः ॥ १९ ॥**
**तत्सम्प्रयोगजं नाम प्रत्यक्षमिति भाषितम् ।**
**तत्रेन्द्रियार्थसम्बन्धभेदो न परमार्थतः ॥ २० ॥**
**कल्पितः सम्प्रयोगस्तु स्वप्नादावपि विद्यते ।**
**तदतद्योगजन्यस्य विभागस्तेन दुर्लभः ॥ १२ ॥**

---

प्रमाणमेवार्थं प्रत्याचष्टे, किं प्रमेयविकल्पैः कृतकैरिति । इह शाबरे तन्त्रे । इदानीम् अस्मिन्नवसरे । प्रमाणस्थ एव बाह्यापह्नवो विचार्यत इति ॥ १७½ ॥

ननु यदि प्रमाणस्थो विचारयितव्यः, ततः प्रत्यक्षस्य मुख्यत्वात् तदनुसारेणैव विचारो युक्तः । बौद्धैरपि प्रत्यक्षसामर्थ्यादेवैकं तत्त्वमाश्रितम् । नैकस्मिन्नाकारे भासमाने द्वैतमात्मानं लभते इति हि मन्यन्ते । अनुमानं तु भ्राम्यतः प्रत्युक्तमिति किं तत्पुरस्सरीक्रियते अत आह — प्रस्तुत इति । एवंहि मन्यते— यद्यपि प्रत्यक्षशक्तिनिरूपणमेव बाह्यार्थसदसद्भावयोः प्रधानं, तथापि परैरनुमानमपि बाह्यापह्नवे दर्शितमिति तदपि निराकार्यम् । अनिराकृते हि तस्मिंस्तत्रैव केचिदास्थां प्रतिबध्नीयुः । अत्र चायमेवोपन्यासक्रमो युक्तः यत् प्रथममनुमानमुपन्यस्यते, ततस्तस्य प्रत्यक्षेण बाधमुपन्यस्य तस्मिंश्चोक्ते पुनः प्रत्यक्षशक्त्यपेक्षणेन पूर्वोत्तरपक्षावा(दावे ? द ए)व प्रत्यक्षशक्तिनिरूपणेन निर्णये कृतेऽनुमानस्योपन्यासोऽनवसर एव स्यादिति ॥ १८½ ॥

अनुमानभाष्यमिदानीं प्रकृतसङ्गतिदर्शनार्थमवतारयति — तत्रेति इत्यन्तेन । सङ्गतिमाह— अस्येति दुर्लभ इत्यन्तेन । अयमर्थः — यत् सूत्रकारेण तत्संयोगजं प्रत्यक्षमुक्तं तदाक्षेपेणैव सङ्गच्छते । काल्पनिको ह्ययमिन्द्रियार्थसम्प्रयोगः, इन्द्रियादेरभावात् । काल्पनिकश्च सकलमिथ्याज्ञानसाधारण इति तदतद्योगजत्वविभागो न युक्त इति सूत्रोक्ताक्षेप इति ॥ २१ ॥

**मिथ्यात्वं यद् द्विधैवोक्तं नान्यथेत्यत्र चोच्यते ।**
**सर्वस्यैव च मिथ्यात्वे किं विशिष्याभिधीयते ॥**
**स्तम्भादिप्रत्ययो मिथ्या प्रत्ययत्वात् तथाहि यः ।**
**प्रत्ययः स मृषा दृष्टः स्वप्नादिप्रत्ययो यथा ॥ २३ ॥**
**सिद्धसाधनभावांशे दृष्टान्ताभाव एव च ।**
**मा भूतामेवशब्दश्च व्यर्थोऽशेषप्रसाधने ॥ २४ ॥**
**सर्व एवेति तेनात्र जाग्रद्बुद्धिपरिग्रहः ।**
**स्वांशाभ्युपगमाच्चापि बाह्यग्राह्यनिवारणम् ॥ २५ ॥**

---

स्वोक्ताक्षेपेण वा सङ्गतिरित्याह — **मिथ्यात्वमिति** । यदेतद्वृत्तिकारग्रन्थान्त उक्तं — 'यस्य च दुष्टं करणं यत्र च मिथ्येति प्रत्ययः स एवासमीचीनप्रत्ययः नान्यः' इति तदनेनाक्षिप्यते । सर्वमिथ्यात्वे विशेषणोपादानवैयर्थ्यमिति ॥ २२ ॥

भाष्यतिरोहितमनुमानमिदानीं विस्पष्टमुपन्यस्यति— **स्तम्भादी**ति । स्तम्भादिप्रत्यय इति धर्मिनिर्देशः । मिथ्येति धर्मवचनं, प्रत्ययत्वादिति हेतुः । तथाहीति दृष्टान्तवचनमिति ॥ २३ ॥

अत्र भाष्यं 'सर्व एव निरालम्बनः स्वप्नवत् प्रत्ययः' इति । तद् यथाश्रुतं सर्वेषामनालम्बनत्वं साधयति । तत्र चांशे सिद्धसाधनता स्यात्, विभ्रमाणामनालम्बनत्वात् । यद्विज्ञानमन्यथा सन्तमन्यथा बुध्यतेऽर्थं तन्निरालम्बनमिष्यत एव । तथा सर्वस्मिन् पक्षीकृते स्वप्नज्ञानस्यापि तदन्तर्भावाद् दृष्टान्ताभावः । सर्व एवेति चैवशब्दानुपपत्तिश्च । स हि विभक्तप्रतिषेधे दृष्टः । यथेदं देवेभ्य इदं ब्राह्मणेभ्य इति विभक्ते भवति वचनं सर्वमेवेदं ब्राह्मणेभ्य इति । तत्र विभागप्रतिषेधपर एवकारो दृश्यते । सर्वस्मिंस्तु पक्षे सर्व इत्याचक्षीत, नैवकारं प्रयुञ्जीत । अतो जाग्रद्बुद्धिविवक्षयैव भाष्यं व्याख्यातव्यमित्याह — **सिद्धसाधने**ति सार्धेन । नन्वेवमप्यविशेषितनिरालम्बनत्वोपादानेऽभ्युपगमविरोधः । स्वांशालम्बनत्वं ज्ञानानां बौद्धैरिष्यत एवात आह — **स्वांशे**ति । अतएव कारणाद् बाह्यविशेषणविशिष्टमनालम्बनत्वं साधनीयमित्यर्थः ॥ २५ ॥

**प्रत्ययस्येति साध्यांशव्याप्तहेतुर्निदर्शनम्।**
**हेतुश्चोपनयेनात्र जाग्रतोऽपीति दर्शितः॥ २६॥**

---

अपरमपि भाष्यं 'प्रत्ययस्य हि निरालम्बनतास्वभाव उपलक्षितः स्वप्ने। जाग्रतोऽपि स्तम्भ इति वा कुड्य इति वा प्रत्यय एव भवति, तस्मात् सोऽपि निरालम्बनः' इति। तस्यार्थमाह — **प्रत्ययस्येति**। प्रत्ययस्य हि निरालम्बनतास्वभाव उपलक्षितः स्वप्ने इत्येतावता भागेन तावत् साध्येन निरालम्बनत्वेन व्याप्तं प्रत्ययत्वं हेतुर्निर्दिश्यते। दृष्टान्तवचनमिति यावदिति। ननु न प्रत्ययत्वादिति हेतुरुपात्तः, कस्य व्याप्तिर्निर्दिश्यते। अत आह — **हेतुश्चेति**। यद्यपि प्रत्ययत्वस्य न व्यक्तं पञ्चम्या हेतुत्वमुपात्तं, तथापि उपनयनाख्येन साधनवाक्यावयवेन जाग्रतोऽपीत्यादिना हेतुः प्रदर्शित एव। यदेव हि साध्यान्वितं प्रदर्शितं प्रत्ययत्वं पुनः प्रतिज्ञार्थ उपनीयते, तदेव तदत्र हेतुरिति प्रदर्शितं भवत्येव। साध्यान्वितस्यैव पक्षस्थस्य हेतुत्वादिति। कः पुनरयमुपनयः। साधनवाक्यावयवविशेषः। पञ्चावयवं हि साधनवाक्यं प्रतिज्ञा हेतुरुदाहरणमुपनयो निगमनं चेति। तत्र साध्यनिर्देशः प्रतिज्ञा। यथा अनित्यः शब्द इति। उत्पत्तिधर्मकत्वादिति हेतुः। उत्पत्तिधर्मकं स्थाल्यादि द्रव्यमनित्यं दृष्टमित्युदाहरणम्। तथा चोत्पत्तिधर्मकः शब्द इत्युपनयः। स ह्युदाहरणापेक्षस्तथेत्युपसंहारो न तथेति वा साध्यस्योपनय इति वर्णितम्। किमुक्तं भवति। द्वेधा हि हेतुः साध्यं साधयति उदाहरणसाधर्म्याद् वैधर्म्याद् वा। तत्र साधर्म्यं प्रदर्शितम्। वैधर्म्यं तु यथा — तस्यामेव प्रतिज्ञायां तस्मिन्नेवोत्पत्तिधर्मकत्वादिति हेतौ अनुत्पत्तिधर्मकमात्मादि द्रव्यं नित्यं दृष्टम्। न च तथा शब्दोऽनुत्पत्तिधर्मक इति। तत्र योऽयं द्विविधोदाहरणापेक्षः साधर्म्योदाहृते तथेति वैधर्म्योदाहृते न तथेति साध्यस्य शब्दस्य सम्बन्धितयोत्पत्तिधर्मकत्वस्योपसंहारवचनमुपनयः, स चोदाहरणापेक्ष एव। उदाहरणद्वैतादेव तदुपसंहारद्वैतं भवति। वैधर्म्योदाहरणेन च विरुद्धनिवृत्त्या साध्यसम्बन्धित्वेन हेतोरुपसंहारः। यथात्मादि द्रव्यं नित्यमनुत्पत्तिधर्मकम्, न च तथा शब्दः इत्यनुत्पत्तिधर्मकत्वप्रतिषेधेनोत्पत्तिधर्मकत्वमुपसंह्रियते। प्रकृते तु साधर्म्यो-

**विपक्षाभावतश्चात्र व्यतिरेको न कथ्यते ।**
**सामान्यस्य च हेतुत्वान्न स्यात् पक्षैकदेशता ॥**
**जाग्रज्ज्ञाने विशेषोऽयं यतः सुपरिनिश्चयः ।**
**बाह्यालम्बनसम्बन्धो न प्रसिद्धः परं प्रति ॥ २८ ॥**
**तस्माद् यद् भाष्यकारेण दत्तमुत्तरमत्र तु ।**
**विकल्पसमता वा स्याद् वैधर्म्यसमतापि वा ॥ २९ ॥**

दाहरणे तथैवेति हेतोरुपसंहार उपनयो वेदितव्यः । निगमनं तु हेत्वपदेशात् प्रतिज्ञायाः पुनर्वचनम् । तस्मादुत्पत्तिधर्मकत्वादनित्यः शब्द इति । निगम्यन्तेऽनेन प्रतिज्ञाहेतूदाहरणोपनया एकत्रार्थ इति निगमनम् । समर्थ्यन्ते सम्बध्यन्ते इति यावत् । असति हि तस्मिन्ननभिव्यक्तसम्बन्धानामर्थप्रतिपादकत्वं न स्यात् । सति तु तस्मिन् सर्वेषामवयवानां तात्पर्यदर्शनात् परस्परसम्बन्धः स्फुटो भवति । निगमनं सङ्गमनं सम्बन्धनमिति यावदिति ॥ २६ ॥

ननु नाव्यावृत्तो विपक्षाद्धेतुर्भवतीति वैधर्म्यदर्शनेन हेतोर्व्यतिरेको दर्शयितव्यः । नचात्र तथा दर्शितः, साधर्म्यमात्रवचनात् । अत आह— **विपक्षेति** । निरालम्बनत्वे हि साध्यमाने सालम्बनत्वं विपक्षः । नच सर्वानालम्बनत्ववादिनस्तदस्तीति किं तद्व्यतिरेकप्रदर्शनेनेति । ननु प्रत्यये पक्षीकृते तस्मिन्नेव हेतौ प्रतिज्ञार्थैकदेशो हेतुरत आह—सामान्यस्येति । सामान्यविशेषात्मका हि प्रत्ययाः । तत्र विशेषे पक्षीकृते सामान्यं हेतुरिति न प्रतिज्ञार्थैकदेशतेति ॥ २७ ॥

अत्र सिद्धान्तभाष्यं 'जाग्रतो हि बुद्धिः सुपरिनिश्चिता कथं विपर्यसिष्यती'ति । अनेन किल सुपरिनिश्चितत्वेन जाग्रद्धियां सालम्बनत्वं साध्यते । नच सुपरिनिश्चितत्वं बाह्यालम्बनसम्बद्धं परान् प्रति प्रसिद्धम् । अतो नानेनासिद्धावयवेनानालम्बनानुमानं पराणुद्यते, सप्रतिसाधनं वा भवति । तस्योभयप्रसिद्धावयवत्वात् । अस्य च तद्विपरीतत्वात् । अतो

**दुष्टत्वात् पूर्वपक्षस्य जात्युक्तिः कैश्चिदाश्रिता ।**
**प्रतिज्ञादोषमेवाहुः केचित् प्रत्यक्षबाधनम् ॥ ३० ॥**

जात्युत्तरमेवेदं भाष्यकारेण दत्तमित्याक्षिपति जाग्रज्ज्ञान इति द्वयेन । वैधर्म्यविकल्पसमयोश्च स्वरूपं शाब्दे वक्ष्यामः । सत्येव प्रत्ययत्वे सुपरिनिश्चितासुपरिनिश्चितधर्मान्तरविकल्पनात् साध्यधर्मविकल्पापादनेन विकल्पसमता । तथा साधर्म्ये वादिना प्रयुक्ते निरालम्बनानां स्वप्नज्ञानानामसुपरिनिश्चितत्वदर्शनात् साध्येषु जाग्रज्ज्ञानेषु सुपरिनिश्चितत्वेन वैधर्म्यात् प्रत्यवस्थानेन वैधर्म्यसमता । प्रपञ्चस्तु पश्चाद् भविष्यतीत्युक्तमिति ॥ २८, २९ ॥

एवमाक्षिप्तं भाष्यमेकेन मतेन समादधाति — दुष्टत्वादिति । एवं हि मन्यन्ते — दुष्टसाधनप्रयोगे दुष्टमेवोत्तरं देयमिति, एवं हि तदा वादी प्रतिबोधितो भवति यथा भवान् मदीयं दूषणं दुष्टं मन्यते तथाहमपि त्वत्साधनम्, अतोऽसौ स्वसाधनान्निवर्तते इति । इदं तु समर्थनं नोपपद्यते । निग्रहस्थानद्वयप्रसक्तेः । पर्यनुयोज्योपेक्षणनिरनुयोज्यानुयोगात्मकनिग्रहस्थानद्वयमेवंवादिनो भवेत्, यः सन्तं दोषमनुक्त्वान्यमसन्तं जल्पति । नचैवंवादिनः स्वसाधनदूषणावगमो भवति । परमेव तु दुष्टदूषणप्रयोगेणोपालभते । अतः पाशुपतोत्तरतुल्यमेकजातीयकं वर्जनीयमित्यन्यथा समाधानमाह — प्रतिज्ञेति । नानेनानुमानमुपन्यस्यते । किन्तु परोक्तानुमानस्य प्रत्यक्षविरोधो वर्ण्यते । असन्निकृष्टेऽर्थेऽनुमानं प्रमाणम् । इह तु सुपरिनिश्चिताभिर्जाग्रद्बुद्धिभिर्निश्चितसद्भावस्य बाह्यस्य प्रत्याख्यानानुमानं प्रत्यक्षेण मुखनिरोधान्न जायत एवाग्नाविव शैत्यानुमानम् । यदि परं बाह्यस्य प्रयोगमात्रपर्यवसितमेव साधनवचनम्, अनुमिमानस्यापि स्फुटो बहिर्विषयबो(धे? धो) जायत एव । तथाविधस्यापि मिथ्यात्वे कः समाश्वासः । नन्वेवमनुमानमनाश्वासनीयमेव. न । तदभावात्. उक्तमेतत् प्रत्यक्षे परिपन्थिनि न तत्प्रतिपक्षमनुमानमात्मानं लभेत शीत इव विनियोगे लैङ्गिकः । साधनवाक्ये त्वयोग्यान्वयपदसान्निकर्षाद् वन्ध्यासुतवाक्यवत् संसर्गज्ञानं भ्रान्तिरेव । नतु कस्यचिद् लैङ्गिकं स्तम्भादिष्वभावज्ञानमुत्पद्यते । ननु व्याप्तं प्रत्ययत्वमनालम्बनत्वेन । व्याप्याच्च ज्ञातसम्बन्धस्य व्यापकज्ञानं नोत्पद्यत इति

१. 'केषां म', २. 'त' ख. पाठः.

**शक्ष्यामो यदि विस्पष्टं स्वांशग्राह्यनिवारणम् ।**
**तदा ते शुद्ध एव स्यात् पक्षो ग्राह्यनिवारणः ॥**
**प्रत्यक्षादेश्च विषयो बाह्य एवावशिष्यते ।**
**तन्निषेधकृतस्तस्य तैर्भवेत् पक्षबाधनम् ॥ ३२ ॥**
**सुनिश्चयेन चैतेषां बाधकप्रत्ययादृते ।**
**प्रमाणाभासता नास्तीत्यतस्मात् कथ्यते बलम् ॥**

हठ एवायम् । न । व्याप्तिभङ्गात् । संविदन्नेव हि व्याप्तिमबाधितेन प्रत्यक्षेण सर्वदेशकालादिभाविना न प्रत्ययत्वप्रयुक्तं मिथ्यात्वम्, अपितु पूर्वोक्तहेतुद्वयप्रयुक्तमिति निश्चिनोति । तदिदमुक्तम्—'अन्यतस्तु स्वप्नप्रत्ययस्य मिथ्याभावो विसंवादादवगम्यते' इति ॥ ३० ॥

कथं पुनरत्र प्रत्यक्षबाधः । प्रत्यक्षं हि ग्राह्यमन्तरेणात्मानमलभमानं तन्मात्रमवस्थापयति न बाह्यम् । किं हि तस्य बाह्येन विना न सिध्यति । ग्राह्यश्च स्वांशो बौद्धैरभ्युपगत एव । अतो न बाह्यापह्नवे प्रत्यक्षत्वादिविरोधः । अत आह—**शक्ष्याम** इति द्वयेन । अयमभिप्रायः—शून्यवादे हि प्रत्यक्षस्य स्वांशगोचरत्वं निराकरिष्याम एव । तन्निराकरणे च बाह्यविशेषणोपादानमनर्थकमेव, तद्व्यतिरिक्तग्राह्यान्तरासम्भवात् । अतोऽनालम्बनपक्षो ग्राह्यमात्रनिवारण एव भवति । प्रत्यक्षादेः स्वांशनिराकर(णा)द् बाह्य एव विषयोऽवशिष्यते । अतो बाह्यविशेषणेन विना ग्राह्यमात्रापह्नवे भवति प्रत्यक्षादिभिः पक्षबाधः । सत्यपि कथञ्चिद् बाह्यविशेषणे प्रत्यक्षादेरपि बाह्यविषयावशेषात् तन्निषेधं कुर्वाणस्य वादिनस्तैः प्रत्यक्षादिभिः पक्षबाधनं भवेत् । पूर्वं तु प्रत्यक्षग्रहणमुपलक्षणार्थं सर्वप्रत्यक्षादिविरोध एव त्वनालम्बनानुमानस्य दर्शयितव्य इति ॥ ३२ ॥

यत्तु सुपरिनिश्चयेन बाह्यालम्बनसम्बन्धः प्रसिद्धः । किं तदुपन्यासेनेत्युक्तम्, अत आह—**सुनिश्चयेने**ति । उक्तमिदमस्माभिर्नायमनुमानप्रयोग इति, किन्त्वनुमानेन जाग्रत्प्रत्यक्षधियां स्वप्नधीसामान्यं मन्यमानस्य तद्वैषम्यप्रदर्शनार्थं सुपरिनिश्चितत्वाभिधानम् । सुपरिनिश्चिता एते

दुष्टज्ञानगृहीतार्थप्रतिषेधो हि युज्यते ।
गृहीतमात्रबाधे तु स्वपक्षोऽपि न सिध्यति ॥ ३४ ॥

अग्राह्यत्वाच्च भेदेन विशेषणविशेष्ययोः ।
अप्रसिद्धोभयत्वं वा वाच्यमन्यतरस्य वा ॥ ३५ ॥

वक्तृश्रोत्रोश्च यज्ज्ञानं विशेषणविशेष्ययोः ।
तन्निरालम्बनत्वेन स्ववाग्बाधो द्वयोरपि ॥ ३६ ॥

---

प्रत्यया बलीयांसः । नैषु परिपन्थिष्वनुमानमात्मानं लभते । एतस्माद् अनुमानादित्यर्थः ॥ ३३ ॥

एतदेव प्रपञ्चयति — दुष्टज्ञानेति । दुष्टनासुपरिनिश्चितेन गृहीतोऽर्थः प्रतिषेधमर्हति नेतर इति । गृहीतमात्रबाधे तु बहवः साधनदोषा भाष्यकारेणान्तर्णीताः । तान् प्रतिपादयिष्यन् पक्षाभावं तावदाह — गृहीतेति । यदि गृहीतमात्रं मिथ्येत्युच्यते, तदा योऽयं निरालम्बनाः प्रत्यया इति स्वपक्षः सोऽपि गृहीतत्वान्मिथ्या स्यात् । अतः शक्यं वक्तुं पक्ष एवास्मिन् भवत्साधने नास्तीति ॥ ३४ ॥

अपिच, निरालम्बनत्वेन विशिष्टाः प्रत्ययाः साध्यन्ते । तादिह विशेषणविशेष्यभेदावग्रहस्यापि मिथ्यात्वान्न विशेषणविशेष्ययोर्विवेकः सिध्यति, तदभावाच्च वक्तुं शक्यमप्रसिद्धविशेषणविशेष्यः पक्षोऽप्रसिद्धान्यतरो वेति । तदेतदाह—अग्राह्यत्वाच्चेति । अन्यतरस्य वा असिद्धिर्वक्तव्येत्यर्थः ॥

दूषणान्तरमाह — वक्तृश्रोत्रोरिति । पञ्चधा स्ववाग्विरोधः । अभिधोच्चारणधर्मधर्म्युभयोक्तिभिः । तदिदमुभयोक्त्या स्ववाग्विरोधः । द्वयोरपि विशेषणविशेष्ययोर्निरालम्बनत्वप्रत्यययोर्यद् वक्तुः श्रोतुश्च ज्ञानं जायते, तदपि प्रत्ययत्वादनालम्बनमिति पक्षो न सिध्यतीति, तत्सालम्बनत्वे चानैकान्तिकत्वान्न प्रत्ययानामनालम्बनत्वं भवेत् । सोऽयमुभयोक्त्या स्ववाग्विरोध इति ॥ ३६ ॥

सम्भवो नच भेदस्य विशेषणविशेष्ययोः ।
तस्मान्निरूपणं नास्ति प्रतिज्ञार्थस्य शोभनम् ॥
निरालम्बनता नाम न किञ्चिद् वस्तु गम्यते ।
तेन तद्व्यतिरेकादौ प्रश्नो नैवोपयुज्यते ॥ ३८ ॥
यद्यवस्तु कथं त्वस्मांस्त्वं बोधयितुमिच्छसि ।
बुध्यसे वा स्वबुद्ध्या त्वं कल्पिता त्वथ साध्यते ॥

---

दूषणान्तरमाह— सम्भवो नचेति । एवं हि विकल्पनीयम् । किं निरालम्बनत्वं धर्मिणो भिन्नमभिन्नं वा । न तावदभिन्नं विशेषणमर्हति । नच भेदग्राहिणो ज्ञानस्य मिथ्यात्वाद् भेत्तुमर्हतीति । उपसंहरति—तस्मादिति ॥ ३७ ॥

बौद्धानां प्रत्यवस्थानमाह — निरालम्बनतेति । एवं हि मन्यन्ते -- वस्तुनि व्यतिरेकादिविकल्पो युक्तः नावस्तुनि । यथाहुः -- ''वस्तुन्येष विकल्पः स्यादि''ति । नचालम्बनप्रतिषेधो वस्तुनः किं तद्व्यतिरेकादिप्रश्नेनेति ॥ ३८ ॥

दूषणान्तरमाह—यदीति त्वथन्तेन । यदि तावदवस्तु, कथं तदस्मान् प्रतिबोधयितुमिच्छा भवतः । स्वयं वा तद्विषया बुद्धिः । न ह्यवस्तु बुद्धिविषयो भवति । तद्विषयत्वे च वस्तुत्वापातात् । अर्थक्रियालक्षणत्वाच्च सत्त्वस्य । तल्लक्षणत्वाच्च वस्तुत्वस्येति । यदितूच्यते— यद्यपि निरालम्बनत्वं नाम न किञ्चित् परमार्थतोऽस्ति । तथापि तत्सत्त्वं कल्पयित्वानुमानव्यवहारः क्रियते प्रतिमायामिव देवतात्वमाराधनादिव्यवहार इति । तदयुक्तम् । असतः कल्पनायोगात् । अन्यत्र प्रसिद्धसद्भावा हि विष्ण्वाद्या देवता युक्तं यदन्यत्र कल्प्यन्ते । अत्यन्ताप्रसिद्धसद्भावं त्वनालम्बनत्वं न गगनकुसुमादिवत् कल्पनामर्हति । तदेतदाशङ्कया सहाह— कल्पितेति । ॥ ३९ ॥

१. 'णमा'. २. 'क्ता' ख. पाठः.

असतः कल्पना कीदृक् क्लृप्तौ वस्तु प्रसज्यते ।
कथमिष्टमभावे चेद् वस्तु सोऽपीति वक्ष्यते ॥ ४० ॥

तथा प्रत्यय इत्येष कर्म भावादि वा भवेत् ।
भावादिषु विरोधः स्यात् कर्म चेत् सिद्धसाधनम् ॥

प्रत्याय्यस्य हि रूपादेर्निरालम्बनतेष्यते ।
अविज्ञानात्मकत्वेन किञ्चिन्नालम्बते ह्यसौ ॥ ४२ ॥

अपिच केयं कल्पना । यदि ज्ञानं, किं तेन ज्ञायते । यदि निरालम्बनत्वम्, तत् तर्हि कल्पना ज्ञानोत्पत्तौ व्याप्रियमाणा कथमवस्तु भविष्यति । अर्थक्रियाकारित्वमेव हि वस्तुत्वं, ज्ञानोत्पादनमपिचार्थक्रियेत्यभिप्रायेणाह—क्लृप्ताविति । अत्र चोदयति — कथमिति । यद्यवस्तु न साध्यं, कथं तर्हि भवतामपि मेघाभावेन वृष्ट्यभावः साध्यत इति । परिहरति — वस्त्विति । भवेदेवं यद्यभावो न वस्तु स्यात् । स वस्त्वित्यभावपरिच्छेदे वक्ष्यते । यद्यपि चाभावो न वस्तुशब्दवाच्यः लोकविरोधात्, तथापि नासौ निस्स्वभावः । प्रख्यायते ह्यसौ स्वसंवेद्येन भावातिरेकिणा रूपेण । अतोऽर्थक्रियाया एव घटिष्यत इति न किञ्चिदनुपपन्नमिति ॥ ४० ॥

किञ्चेदमपि चात्र विकल्पनीयं — योऽयं धर्मिणो निर्देशकः प्रत्ययशब्दः स किं भावे कर्तरि करणे वा व्युत्पद्यते, कर्मणि वा । पूर्वोक्तेषु तावत् कल्पेषु विरोधः, अकर्मकप्रत्ययासम्भवात् । नहि प्रतीतिरस्ति प्रत्येतव्यं नास्तीति सम्भवति । तदनवष्टब्धस्य (कु? न)द्रूपस्याप्रकाशात् । एवमेव कर्तृकरणयोरपि वाच्यम् । यदि ज्ञानमेवार्थप्रकाशे तज्जन्मनि वा कर्तृत्वेनोपचर्यते करणत्वेन वा विवक्षाधीनत्वात् कारकाणां, तथापि तयोः प्रत्याय्येन कर्मकारकेण विनानुपपत्तिः । सोऽयं स्ववाग्विरोधः । प्रत्यय इत्युक्तमात्र एव तत्स्वभावपरामर्शात् प्रत्येतव्याभावः प्रतिषिध्यते माता मे वन्ध्येतिवन्मातृत्वेन वन्ध्यात्वम् । अतो न प्रत्यये पक्षीकृते निरालम्बनत्वं साधयितुं शक्यम् । कर्मव्युत्पत्तौ सिद्धसाधनमेव । तदेतत् सर्वमाह — तथेति ॥

सिद्धसाधनं विवृणोति — प्रत्याय्यस्येति । न खलु जडो रूपादिः किञ्चिन्नालम्बत इति ॥ ४२ ॥

कर्तृत्वे करणत्वे वा पक्षत्वं शब्दयोरपि ।
तन्निरालम्बनत्वेन पक्षाभावः प्रसज्यते ॥ ४३ ॥
प्रत्याय्येन च भिन्नेन विना कर्त्राद्यसम्भवः ।
प्रत्यये तन्निमित्ते वा बाधः स्ववचनेन ते ॥ ४४ ॥
अथापि रूढिरूपेण प्रत्ययः स्यात् तथापि तु ।
ग्राहकं वस्तु सिद्धं नः प्रत्ययोऽन्यस्य वस्तुनः ॥ ४५ ॥
तमभ्युपेत्य पक्षश्चेदभ्युपेतं विरुध्यते ।
विशेष्यस्याप्रसिद्धिश्च तवास्माकमतादृशे ॥ ४६ ॥

---

कर्तृकरणपक्षे त्वयमपरो दोषः यद्धर्मधर्मिवचनयोः शब्दयोरपि निरालम्बनत्वं प्रतिज्ञायेत । प्रतीते हि कर्ता करणं वा प्रत्ययः । यथाच कर्तृकरणत्वे विवक्षावशाद् ज्ञाने भवतः, तथा शब्द इति । अत एव वक्ष्यति—

"शब्दानां करणत्वं वा कर्तृत्व वा निरूपितम् ।"

इति । किञ्चेदं शब्दयोरनालम्बनत्वम् अन्यदतोऽभिधेयाभावात् । तदभावे च पक्षाभावः प्रसज्यत इत्याह — **कर्तृत्व** इति ॥ ४३ ॥

'भावादिषु विरोधः स्यादि'ति यदुक्तं तद् विवृणोति — **प्रत्याय्येन चेति** । कर्त्रादिभावो हि न प्रत्याय्यभेदमन्तरेण सम्भवति । अतस्तत्प्रवृत्तिनिमित्ते प्रत्ययशब्दे स्ववचनविरोधः । स चायमस्माभिः प्रागेव विवृतः । वाशब्दोऽनन्तरविवृतकर्मव्युत्पत्त्यपेक्षयेति ॥ ४४ ॥

यदि त्वविभक्तावयवो रूढिरूपेण प्रत्ययशब्द उपादीयते, तदर्थश्च पक्षीक्रियते, तथापि वस्त्वन्तरग्राहकस्यैव वस्तुतोऽस्माकं प्रत्ययत्वेन प्रसिद्धेः स्ववचनविरोध एव भवेत्, तदेतदाह—**अथापीति** । तथापीति । तथापि स्ववचनविरोध इति पूर्वेण सम्बन्ध इति । कथं स्ववचनविरोधः । अत आह — **ग्राहकमिति** ॥ ४५ ॥

वस्त्वन्तरस्यैव हि ग्राह्यस्य ग्राहकमात्मधर्माख्यं वस्त्वेव प्रत्यय इति नः प्रसिद्धम् । अतः कथं तस्यासति ग्राह्ये सिद्धिरिति दूषणान्तरमाह — **तमभ्युपेत्येति** । एवमयमसाधनवादी वक्तव्यः किं यादृशोऽस्माभिः प्रत्यय

आत्मधर्मस्वतन्त्रत्वकल्पनेऽपि तथा भवेत् ।
नच प्रत्ययमात्रत्वं किञ्चिदस्त्यनिरूपणात् ॥ ४७ ॥

शब्दार्थमात्ररूपेण यथान्येषां निरूपणम् ।
तथाच भवतो न स्याद् वाच्यभेदमनिच्छतः ॥

निरालम्बनता चापि सर्वथा यदि साध्यते ।
विशेषणप्रसिद्धिश्च दृष्टान्तश्च न विद्यते ॥ ४९ ॥

इष्यते स तथाविध एवाभ्युपेत्य भवता पक्षीक्रियते, न वा । तत्राभ्युपगमे तावदभ्युपेतविरोध इति । अपि चैवं सति चाप्रसिद्धविशेष्यः पक्षो भवति, त्वन्मते बाह्यार्थग्राहिप्रत्ययानभ्युपगमादित्याह — विशेष्यस्येति । अतादृशे तु स्वाभिमते पक्षेऽस्माकमप्रसिद्धविशेष्यः पक्ष इत्याह — अस्माकमिति ॥ ४६ ॥

किञ्च यादृगात्मधर्मः प्रत्ययोऽस्माकमभिमतः, स पक्षो भवदभिमतोऽथवा स्वतन्त्रः । पूर्वस्मिन् कल्पे भवतोऽप्रसिद्धविशेष्यता । उत्तरस्मिन्नस्माकमिति पूर्ववदेव दर्शयितव्यमित्याह — आत्मधर्मेति । यदि त्वनिर्धारितविशेषं प्रत्ययमात्रं पक्षीक्रियत इत्युच्यते, तन्न । तथाविधस्यानिरूपणादित्याह — नचेति ॥ ४७ ॥

ननु शक्यमिदमन्येष्वपि पक्षीकृतेषु वक्तुं यथा — किमाकाशगुणः शब्दः स्वतन्त्रं वा द्रव्यं पौद्गलाख्यं वा नित्यतया पक्षीक्रियत इति । अथ तत्राविवक्षितविशेषं शब्दार्थसामान्योपलक्षितं रूपं पक्ष इत्युच्यते, तदिहापि समानमित्यत आह — शब्देति । यथा शब्दार्थसामान्यरूपेणान्येषां पक्षाणां निरूपणं भवति, नैवमिह भवतः सम्भवति । असाधारणरूपातिरेकिणः सामान्यात्मनो वाच्यस्य भवतामनिष्टत्वादिति ॥ ४८ ॥

एवं तावद् धर्मी विकल्प्य दूषितः । धर्ममिदानीं निरालम्बनत्वं विकल्प्य दूषयति — निरालम्बनतेति । सर्वथा निरालम्बनत्वे साध्येऽप्रसिद्धविशेषणः पक्षो भवति । नहि सर्वथा निरालम्बनत्वं नाम किञ्चि-

केनचिच्चेत् प्रकारेण निरालम्बनतोच्यते ।
रसज्ञानस्य रूपादिशून्यत्वात सिद्धसाधनम् ॥ ५० ॥

अथ बुद्धिर्यदाकारा तदालम्बनवारणम् ।
स्वाकारस्याभ्युपेतत्वात् तदभावो विरुध्यते ॥ ५१ ॥

बाह्यानालम्बनत्वेऽपि बाह्य इत्याग्रहो यदि ।
स्तम्भादौ नैव तद्बुद्धिरित्येवं सिद्धसाधनम् ॥ ५२ ॥

दस्ति । सर्वत्र देशकालान्तरावस्थितबाह्यालम्बनाभ्युपगमात् । यश्च स्वप्न-प्रत्ययो दृष्टान्ततयोक्तः, सोऽपि न सर्वथा निरालम्बनः । सर्वत्र यथा-कथञ्चिदालम्बनसिद्धेर्वक्ष्यमाणत्वात् । अतो दृष्टान्ताभावोऽप्येवं सत्यापद्ये-तेति ॥ ४९ ॥

यदि तु न सर्वथा निरालम्बनत्वं साध्यते । किन्तु सालम्बनस्यैव केनापि प्रकारेण निरालम्बनत्वमपीत्युच्यते, तदा रसादिज्ञानानां रूपाद्या-लम्बनशून्यतया सिद्धसाधनमित्याह — केनचिदिति ॥ ५० ॥

ननु यदाकारा बुद्धिस्तन्नालम्बते इति साधयिष्यामः न सिद्ध-साधनं भविष्यतीति, तदेतदाशङ्कते — अथेति । एतदपि निराकरोति — स्वाकारस्येति । अभ्युपगतो हि भवद्भिः स्वाकारो बुद्धेरालम्बनं यदाभासं प्रमेयं तदिति वदद्भिः । अतस्तदालम्बनाभावोऽभ्युपेतेनैव विरुध्यत इति ॥ ५१ ॥

ननु किमापाद्य दूषणोद्भावनम् । बाह्यानालम्बनत्वं हि नः पक्षः । तथाच भाष्योपस्कारे वर्णितमेव । अतो नाभ्युपेतबाध इत्यत आह — बाह्येति । अयमभिप्रायः — विकल्पनीयमिदं बाह्यानालम्बनत्वम् । किं बाह्यमित्यनेन रूपेण नालम्बत इत्येवं साध्यते, वस्तुतो वा बाह्यं नालम्बत इति । पूर्वस्मिन् पक्षे सिद्धसाधनम् । परस्मिन् दोषो वक्ष्यते । स्तम्भादि-धियो हि स्तम्भाद्याकारतयैव स्वविषयमालम्बन्ते न बाह्यतयेति ॥ ५२ ॥

१ 'कारं म' ख. पाठः

**तथा स्तम्भादिरूपेण निरालम्बनतोच्यते ।**
**संवेदनस्य दृष्टत्वात् तद्विरोधः प्रसज्यते ॥ ५३ ॥**
**द्विचन्द्रादिषु तुल्यश्चेन्नेन्द्रियाप्राप्तितो हि नः ।**
**तत्रानालम्बनोक्तिः स्यान्नार्थसंवित्त्यभावतः ॥ ५४ ॥**
**सर्वत्रार्थेन्द्रियाणां नः संयोगसदसत्तया ।**
**संवित्तौ विद्यमानायां सदसद्ग्राह्यतास्थितिः ॥ ५५ ॥**

---

यदि तु स्तम्भानालम्बनत्वमेव साध्यते, ततस्तद्रूपसंवेदनस्य दृष्टत्वात् संविद्विरोध एवेत्याह — तथेति ॥ ५३ ॥

अत्र चोदयति — द्विचन्द्रादिष्विति । एवं हि मन्यन्ते — समानोऽयमनालम्बनत्वाभिमतेषु द्विचन्द्रादिबोधेषु संविद्विरोधः । तत्रापि द्वावेव चन्द्रौ भासेते । तदपह्नवे स्फुट एव संविद्विरोधः । अतः केन प्रकारेण तेषामनालम्बनत्वं भविष्यतीति । परिहरति — नेन्द्रियेति । अयमभिप्रायः — यदि वयं प्रतिभासविपर्यासादन्यथात्वं ब्रूमः, तत एवमुपालभ्येमहि । न त्वेवम् । यदेव विज्ञानमिन्द्रियाप्राप्तमर्थं प्रकाशयति तदनालम्बनमिति नः सिद्धान्तः । तथाच द्विचन्द्रादिज्ञानम् । ततोऽनालम्बनमित्युच्यते । न पुनर्द्विचन्द्रादिप्रतिभासापह्नवेन, अतो न नः संविद्विरोधः, नचानालम्बनत्वस्याप्रसिद्धिरिति ॥ ५४ ॥

नन्वेवं संवेदनानपह्नवे यथावभासमर्थस्य सत्त्वात् सदसद्विवेको न स्यादत आह — सर्वत्रेति । अस्यार्थः — इदं सद् ग्राह्यमिदमसद् ग्राह्यमिति नायमर्थ इदमर्थं प्रकाशयति इदं नेति । किन्तर्हि । जायमानायामेवार्थगोचरायां संवित्ताविन्द्रियार्थसंयोगसदसत्त्वतोऽयं विभागः । यदिन्द्रियसम्प्रयुक्तमर्थं प्रकाशयति तत् सद् ग्राह्यम् । विपरीतमन्यत् । नच यथावभासमर्थस्य सत्त्वम् । बाधकदर्शनात् । अतो यद् देशान्तरस्थमिन्द्रियाप्राप्तमर्थं गृह्णाति तद् असद् ग्राह्यम् । तस्यार्थो नास्तीत्युच्यते । क्वचिद्धि किञ्चित् प्रतिषिध्यते । न स्वरूपेणैव किञ्चित् । नेदं रजतमिति नायमर्थः

**भवतस्त्विन्द्रियादीनामभावाद् ग्रहणादृते ।**
**नालम्बनत्वहेतुः स्यान्निषेधोऽतो न युज्यते ॥ ५६ ॥**
**बहिर्भावाप्रसिद्धत्वात् तेनानालम्बना मतिः ।**
**कथञ्चित् साध्यते नैष पक्षो हि ज्ञायते तदा ॥ ५७ ॥**
**यथान्यबोधनाशक्तेर्नाप्रसिद्धे विशेषणे ।**
**पक्षसिद्धिस्तथैव स्याद् विशेषणविशेषणे ॥ ५८ ॥**
**नाप्रसिद्धे पदार्थे हि वाक्यार्थः सम्प्रतीयते ।**

---

रजतं नास्तीति । अस्ति हि तद् देशान्तरादिषु । किन्तु इह नास्तीति यत्रेन्द्रियेण न प्राप्यते, इदमस्तीत्यपि यदेव यत्रेन्द्रियेण प्राप्यते तदुच्यते । इह घटोऽस्तीति प्रतीतिः न पुनर्घटोऽस्तीति ॥ ५५ ॥

नचैष विभागो बौद्धस्य सम्भवतीत्याह — **भवत** इति । नच बौद्धस्येन्द्रियादीनि सन्ति यत्प्राप्त्यप्राप्तिनिबन्धनं भावालम्बनालम्बनप्रतिषेधौ युज्येते इति ॥ ५६ ॥

दूषणान्तरमाह — **बहिर्भावेति साध्यतेन्तेन** । न ह्यनालम्बनज्ञानवादिनां बहिर्भावो नाम कश्चित् सिद्धः, येन विशिष्टमनालम्बनत्वं बुद्धेः साध्यत इति । किमिति न साध्यते, अत आह — नैष इति । पक्षप्रज्ञापनार्थं हि साधनवचनं, नचाप्रसिद्धपदार्थविशिष्टः पक्षो ज्ञापयितुं शक्यत इति ॥ ५७ ॥

किं पुनः पक्षो न ज्ञायते । अज्ञाते विशेषणविशेष्ये च विशिष्टो न ज्ञायते । तच्चोभयमपि प्रसिद्धमेवेति किं विशेषणविशेषणाप्रसिद्ध्या, अत आह — **यथेति** । विशेषणाप्रसिद्धावेव किम् । न तावत् पक्षसिद्धिः, तथाविधमन्यो बोधयितुं न शक्यत इति चेत्, समानमिदं तद्विशेषणाप्रसिद्धावपीति तद्विशेषणाप्रसिद्धौ पक्षो न ज्ञायत इति सूक्तमिति ॥ ५८ ॥

एतदेव प्रपञ्चयति — **नाप्रसिद्ध** इति । प्रतिज्ञावाक्यार्थो हि

**तत्पूर्वकत्वात् पक्षश्च वाक्यार्थः स्थापयिष्यते ॥ ५९ ॥**
**पर्युदासे निषेधे वा व्यतिरिक्तस्य वस्तुनः ।**
**प्रमेयत्वाद्यभेदेन जगतः सिद्धसाधनम् ॥ ६० ॥**
**यदि चात्यन्तभेदेन निरालम्बनतोच्यते ।**
**कथञ्चिच्चेद् विरुध्येत प्राक्पक्षः कल्पितेन ते ॥**
**वस्त्वाद्याकारतश्चापि धीर्निरालम्बनेष्यते ।**
**ग्राहकाच्चेदभिन्नत्वं शक्तिभेदो विरुध्यते ॥ ६२ ॥**

---

पक्षः, स च पदार्थपूर्वकः । अतो बाह्यादिपदार्थासिद्धौ पक्षो न सिध्यतीति ॥ ५९ ॥

दूषणान्तरमाह — **पर्युदास** इति । (न ? ना)व्यतिरिक्तालम्बनः प्रत्ययः, (व्यतिरिक्तं नालम्बते) इति हि द्वावर्थौ सम्भवतः पर्युदासप्रतिषेधाभ्याम् । पर्युदासे हि नामयोगान्नञोऽव्यतिरिक्तालम्बनः प्रत्यय इत्यर्थो भवति । निषेधे तु आख्यातयो(गाद्) व्यतिरिक्तं नालम्बत इति । उभयथा हि सिद्धसाधनम् । प्रमेयत्वादिना हि जगतो न भेदमातिष्ठामहे । अतः स्तम्भादिज्ञानात् प्रमेयत्वादिनाव्यतिरिक्तं भवति । अतएवाभेदाद् व्यतिरिक्तं च न भवतीति सिद्धसाधनमिति ॥ ६० ॥

किञ्च, इदमपि चात्र विकल्पनीयं किमत्यन्तभिन्नेन स्तम्भादिना निरालम्बनत्वं साध्यते, कथञ्चिद् भिन्नेन वा । पूर्वस्मिन् कल्पे तावत् सिद्धसाधनमेवेत्याह — **यदी**ति । सिद्धसाधनमित्यतीतेन सम्बन्ध इति । कथञ्चिद् भिन्नेन तु निरालम्बनत्वे साध्यमाने प्राक् कल्पितेन पक्षविरोधः । इष्यते हि कथञ्चित् कल्पनामात्रकल्पितं भवद्भिरपि बाह्यालम्बनम् । अतस्तन्निषेधे भवति प्राक्कल्पितेन पक्षबाधः । तदेतदाह — **कथञ्चि**दिति ॥ ६१ ॥

अन्यथा सिद्धसाधनं दर्शयति — **वस्त्वि**ति । बुद्धिर्हि वस्त्वाद्याकारेण जडरूपा न किञ्चिदालम्बत इति सिद्धमेव । असाधारणेन तु प्रका-

**निरालम्बनबुद्धेश्च यद्युत्पत्तिः प्रसाध्यते।**
**दृष्टत्वात् सेष्यतेऽस्माभिर्बाह्यग्राह्यविवर्जिता॥ ६३॥**
**सम्यक्त्वं पुनरेतस्यास्त्वं नेच्छसि कथञ्चन।**
**आत्मांशेऽवसिता ह्येषा मृगतृष्णादिबुद्धिवत्॥**
**चैत्रादिप्रत्ययानां च निरालम्बनता यदि।**
**धर्मभूता न गृह्येत साधनोत्थितया धिया॥ ६५॥**

---

शात्मना बाह्यमालम्बते। तत्राविशेषितोपादाने शक्यं सिद्धसाधनं दर्शयितुमिति। ननु ग्राहकाद् ग्राह्यमभिन्नमितीदमत्र नः साध्यं, तत्र किं नानाविकल्पैः। अत आह— ग्राहकादिति। न तावन्निरालम्बनाः प्रत्यया इत्ययमर्थः ग्राहकाद् ग्राह्यमभिन्नमिति। एवं सत्यपि यद् द्विशक्तिकत्वं ज्ञानस्येष्टं ग्राह्यग्राहकशक्तिकं ज्ञानमिति तद् विरुध्यते, ग्राह्यापलापात्। यद्यपि न बौद्धैराश्रयातिरेकिणी शक्तिरिष्यते, तथापि शक्तिभेदद्वारेण द्व्यात्मकत्वमेव दर्शयतीति द्रष्टव्यमिति॥ ६२॥

यदि तु सर्वप्रकारासम्भवान्निरालम्बनबुद्ध्युत्पत्तिमात्रमेव प्रसाध्यते, तत्रापि च सिद्धसाधनमेव। उत्पद्यते हि निरालम्बनाः प्रत्यया इत्युक्ते निरालम्बनत्वबुद्धिः। न त्वियमर्थक्रियायै समर्था, अनर्थकत्वादित्यभिप्रायेणाह— **निरालम्बनेति**॥ ६३॥

नचानर्थकत्वमेवास्या न सिद्धमिति वाच्यम्। तत्सत्त्वे हेतोरनैकान्तिकत्वप्रसङ्गात्। अतो मृगतृष्णादिज्ञानवदेवात्मांशपर्यवसायिनी बुद्धिरियमभ्युपगन्तव्या। अस्माकमपि सर्वमिथ्यात्वग्राहिप्रत्ययमिथ्यात्वं सिद्धमेवेत्यावयोरविवादात् सिद्धमनालम्बनबुद्धेरनर्थकत्वमित्याह— **सम्यक्त्वमिति**॥ ६४॥

एवं चोत्पन्नायामप्यर्थशून्यायामात्मांशपर्यवसायिन्यामनालम्बनबुद्धौ चैत्रादिप्रत्ययानां पक्षीकृतानां धर्मतया निरालम्बनता न गृहीता साधनोत्थितया धियेति, नानाविषयत्वात् प्रतियोगिना निरालम्बनत्वेनानिराकृता

ततो विषयनानात्वात् प्रतियोग्यनिराकृता ।
रूपात् सालम्बनप्राप्तिः सती केन निवार्यते ॥ ६६ ॥

यदि प्रत्ययशब्दोऽपि प्रत्ययत्वेन गृह्यते ।
संवित्त्यालम्बनत्वेन वार्यते सिद्धसाधनम् ॥ ६७ ॥

बुद्ध्युत्पादनशक्तिश्चेद् वार्या साध्यं न सिध्यति ।
साधनस्य प्रयोगोऽत्र बोधकत्वाद् विना न ते ॥ ६८ ॥

---

सती चैत्रादिस्वरूपपर्यालोचनयालम्बनप्राप्तिः केन वारयितुं शक्या । समानविषयोपनिपातिनोर्हि विरुद्धार्थगोचरयोः प्रत्यययोर्बाध्यबाधकभावो भवति, यथेदं रजतं नेदं रजतमिति चानयोः । नचेह तथा । चैत्रादिप्रत्यया हि स्वविषयं स्थापयन्ति । नच तन्निरालम्बनबुद्धिः प्रतिक्षिपति, अर्थाभावात् । स्वांशगोचरा हि सा । अतोऽस्याः स्वांशो विषयः । चैत्रादिप्रत्ययानां च चैत्रादय इति स्पष्टो विषयभेद इति किं केन बाध्यत इत्युच्यते । तदेतदाह — चैत्रादीति द्वयेन ॥ ६५,६६ ॥

किञ्च यत् तत् पूर्वमुक्तं कर्तृत्वे करणत्वे वा प्रत्ययत्वं शब्दोऽपि प्रत्ययशब्दवाच्य इति, तद् यदि तथैव प्रत्ययशब्दोऽप्यत्र प्रतीतिकर्तृकरणत्वात्मना प्रत्ययत्वेनोपादीयते, तत्संवित्त्यालम्बनत्वं चैत्रादीनां वार्यते, चैत्रादयः प्रत्ययशब्दसंवित्त्यालम्बना न भवन्तीति । ततस्तस्याचेतनत्वेन तत्संवित्त्यालम्बनत्वं चैत्रादीनां नास्ति अंशे सिद्धसाधनमेवेत्याह — यदीति ॥ ६७ ॥

अथ तु बुद्ध्युत्पादनशक्तिविरहस्तस्यानालम्बनत्वमित्युच्यते प्रत्ययशब्दो निरालम्बन इति, किमुक्तं भवति । न किञ्चिद्विषयां बुद्धिमुत्पादयितुं शक्यत इति । ततस्तेनाशक्तेन पक्षो न बोधित इति साध्यं न सिध्यतीत्याह — बुद्ध्युत्पादनेति । साध्यासिद्धौ कारणमाह—साधनस्येति ॥

नचाभिधार्थसम्बन्धादृते भेदाच्च नास्त्यसौ ।
नचासौ तद्गतं भेदं बोधयन्त्या धिया विना ॥ ६९ ॥
प्राश्निकैर्नागृहीते च वाक्ये सावयवे पृथक् ।
पक्षे हेतौ च दृष्टान्ते वादिनि प्रतिवादिनि ॥ ७० ॥
साधनस्याप्रयोगः स्यादभ्युपेत्योच्यते यदि ।
पूर्वाभ्युपगमेनैव प्रतिज्ञा साध्यते ततः ॥ ७१ ॥
धर्माधर्मादिभेदे च नासिद्धे परमार्थतः ।
शिष्यात्मनोश्च धर्मादेरुपदेशोऽवकल्पते ॥ ७२ ॥
तदनुष्ठानतो बुद्धेरिष्टो भेदः स्फुटं च तैः ।
सूत्रान्तरेऽभ्युपेतत्वाद् भवेदागमबाधनम् ॥ ७३ ॥

---

पूर्वाभ्युपगमविरुद्धोऽप्ययं पक्ष इत्याह — **नचेति** त्रयेण । न तावदनभिधायकेषु पदेषु साधनवाक्यं प्रयोगमर्हति । नचाभिधानमर्थसम्बन्धादृते पदानां सम्भवति । नच सम्बन्धो भेदमन्तरेण । नच भेदः शब्दार्थगतभेदं बोधयन्त्या धिया विना (न?) सम्भवति । तदत्र साधनं प्रयुञ्जानेन भिन्नौ शब्दार्थावभ्युपगन्तव्यौ । तथा सति प्राश्निकाः सभ्या गृह्णन्ति च सावयवं साधनवाक्यं पृथक् च पक्षहेतुदृष्टान्तान् वादिप्रतिवादिनौ चेति । यावदिदं नावस्थाप्यते न तावद् व्युत्थित प्रतिपादनाय साधनस्य प्रयोगो भवति । एतच्च सर्वमभ्युपेत्य निरालम्बनत्वे साध्यमाने भवति पूर्वाभ्युपगतविरोध इति ॥ ६९—७१ ॥

आप्ततमत्वाभिमतबुद्धाभिप्रायविरुद्धोऽप्ययं पक्ष इत्याह — **धर्मेति भेदोन्तेन** । यावद्धि धर्माधर्मौ भिन्नौ परमार्थौ न सिध्यतः शिष्यश्चोपदेश्यः आत्मा चोपदेष्टा, तावन्न धर्माधर्मोपदेशो घटत इति । उपदिष्टाश्च चैत्यवन्दनादयः शिष्येभ्यो धर्मत्वेन बुद्धैः । अतश्चेष्टादर्शनेन सर्वमनुमतं बुद्धानामिति तेषामाशय उन्नीयते । अतस्तद्विपरीतवचने भवति तदभिप्राय-

**सर्वलोकप्रसिद्ध्या च पक्षबाधोऽत्र ते ध्रुवम् ।**
**कृत्स्नसाधनबुद्धिश्च यदि मिथ्येष्यते ततः ॥ ७४ ॥**
**सर्वाभावो यथेष्टं वा न्यूनता वाभिधीयते ।**
**तेषां सालम्बनत्वे वा तैरनैकान्तिको भवेत् ॥ ७५ ॥**
**तदन्यस्य प्रतिज्ञा चेत् तदन्यप्रत्ययो मृषा ।**
**तन्मिथ्यात्वप्रसङ्गे च सर्वं पूर्वं न सिध्यति ॥ ७६ ॥**
**स्तम्भादिसाधनज्ञानभेदो नाहि यथा भवेत् ।**
**यावद् यावत् प्रतिज्ञेयं तदन्यस्य प्रतीयते ॥ ७७ ॥**

---

विरोध इति । अपिच क्वचित् सूत्रविशेषे स्फुटमेव तैर्बाह्यार्थोऽभिमतः यदाश्रित्य सौत्रान्तिकेन बाह्यार्थसद्भावोऽङ्गीकृतः, अतस्तदीयागमविरुद्धोऽप्ययं पक्ष इत्याह — स्फुटमिति ॥ ७२, ७३ ॥

तथा सर्वलोकप्रसिद्धमहीमहीधरोदधिनिषेधाल्लोकविरुद्धोऽपीत्याह — **सर्वेति** । अपिच सर्वज्ञानानामनालम्बनत्वे कृत्स्नसाधनज्ञानमिथ्यात्वात् सर्वसाधनाभावो वा यथेष्टं पक्षादिन्यूनत्वं वा शक्यमापादयितुमित्याह — कृत्स्नेति । यदि तु न साधनज्ञानं मिथ्येत्युच्यते, ततः पक्षादिप्रत्ययैरेव हेतोरनैकान्तिकत्वमित्याह — तेषामिति ॥ ७४, ७५ ॥

यदि पक्षादिग्राहिव्यतिरिक्ता एव प्रत्यया निरालम्बनत्वेन प्रतिज्ञायन्ते, ततस्तद्व्यतिरेकग्राहिणः प्रत्ययस्य पक्षाद्यविषयत्वान्मृषात्वमापद्यत इत्याह — **तदन्यस्येति** । अभ्युपगमे दोषमाह — तन्मिथ्येति । तदन्यप्रत्ययमिथ्यात्वे हि यत् तेन पक्षादिप्रत्यय-व्यतिरेकग्राहिणा गृहीतं तन्मिथ्येति सर्वमिथ्यात्वमापद्यत इति ॥ ७६ ॥

कथं न सिध्यत्यत आह — **स्तम्भेति** । व्यतिरेकग्राहिप्रत्ययमिथ्यात्वे हि न स्तम्भादिज्ञानेभ्यः साधनज्ञानस्य कश्चिद् विशेषः । तद्वदेव तु साधनज्ञानमपि मिथ्या भवेदिति । एतद्दोषपरिहारार्थं तु व्यतिरेकग्राहि-

---

१. 'कि' क. पाठः.

**तावत् तावत् परेषां स्यान्मिथ्यात्वादन्यबाधनम् ।**
**विरुद्धाव्यभिचारित्वं बाधो वाप्यनुमानतः ॥ ७८ ॥**
**इत्थं सर्वेषु पक्षेषु वक्तव्यं प्रतिसाधनम् ।**
**बाह्यार्थालम्बना बुद्धिरिति सम्यक् च धीरियम् ॥**
**बाधकापेतबुद्धित्वाद् यथा स्वप्नादिबाधधीः ।**
**सापि मिथ्येति चेद् ब्रूयात् स्वप्नादीनामबाधनात् ॥**
**तस्मात् साधर्म्यदृष्टान्तो भवतः साधनेऽधुना ।**
**विज्ञानास्तित्वभिन्नत्वक्षणिकत्वादिधीस्तथा ॥ ८१ ॥**

---

प्रत्ययव्यतिरिक्ता एव प्रत्यया यदि पक्षीक्रियन्ते, ततो व्यतिरेकग्राहिप्रत्यय-व्यतिरेकग्राहिणस्तद्व्यतिरेकान्मिथ्यात्वप्रसक्तौ सर्वपूर्वासिद्धिः, पुनरपि तदन्य-विशेषणेऽनवस्था । यत्रैव तु परः क्वचिदवतिष्ठते तन्मिथ्यात्वात् पूर्वपूर्वा-भावो दर्शयितव्य इत्याह — यावदिति । किञ्चाद्यपक्षात् प्रभृति य एते तदन्यप्रतिज्ञादिभिः पक्षा दर्शिताः, तेषु सर्वेषु विरुद्धाव्यभिचारित्वमनुमान-विरोधो वेत्याह — विरुद्धेति ॥ ७७,७८ ॥

कथमेतदुभयमित्याह — इत्थमिति । इत्थं वक्ष्यमाणप्रकारेण । अत्र प्रतिसाधनं वक्तव्यमिति । तदेव प्रतिसाधनं दर्शयति — बाह्येति । बाह्यार्थालम्बना बुद्धिरिति धीर्धर्मिणी । सम्यगिति साध्यो धर्मः, बाधका-पेतबुद्धित्वात्, स्वप्नज्ञानादिबाधबुद्धिवत् । इदं च प्रसिद्धावयवत्वेन निरा-लम्बनानुमानाद् बलवदिति तस्यानुमानबाधो भवति । यदि तुल्यबलत्व-मेव मन्यते, ततो विरुद्धाव्यभिचारित्वमिति विवेको दर्शयितव्यः । (स्वा-र्थिकस्त्विति ?) यदि तु स्वप्नादिबाधबुद्धिरपि मिथ्येति ब्रूयात्, ततस्तेषा-मबाधितत्वादसत्यत्वे दृष्टान्ताभाव इत्याह — सापीति ॥ ७९-८०$\frac{1}{2}$ ॥

किञ्च भिन्नं ज्ञानमात्रं क्षणिकमिति या बुद्धयः ताः सम्यङ् मिथ्या वा, सत्यत्वे तावदनैकान्तिकत्वमित्याह — विज्ञानेति । तन्मिथ्यात्वाभ्युपगमे

सम्यक् चेदभ्युपेयेत तथा नैकान्तिको भवेत्।
तन्मिथ्याभ्युपपत्तौ च पक्षबाधः प्रसज्यते॥ ८२॥
तथाच बद्धमुक्तादिव्यवस्था न प्रकल्पते।
ततश्च मोक्षयत्नस्य वैफल्यं वः प्रसज्यते॥ ८३॥
विकल्पोत्पद्यमाना च ज्ञानास्तित्वादिधीर्यदि।
मृषेष्टा नच दृष्टात्र प्रमाणान्तरतो गतिः॥ ८४॥
प्रमाणाभावतस्तेन ज्ञानास्तित्वादि दुर्लभम्।
सर्वं चाप्यस्मदादीनां मिथ्याज्ञानं विकल्पनात्॥८५॥
सान्निध्यविप्रकृष्टत्वे सत्त्वासत्त्वे च दुर्लभे।
मिथ्याज्ञानाविशेषेऽपि साङ्ख्यादिपरिवर्जनात्॥

---

तु सविशेषणपक्षीकृतज्ञानाभावात् पक्षबाध इत्याह— तन्मिथ्येति॥ ८२॥

एवंचासति ज्ञाने शून्यताप्रमाणार्थं इते को बद्धः को वा मुक्तो भवेत्। तदेतदाह — तथेति। मोक्षयत्नोऽपि प्रव्रज्यादिरेवं सति विफलस्तपस्विनामित्याह — तत इति॥ ८३॥

यदितूच्यते — सविकल्पकेन ज्ञानमात्रपक्षो व्यवस्थाप्यते सर्वविकल्पानां मिथ्यात्वाद्, निर्विकल्पकेन त्वात्मानं लभत इति। तदयुक्तम्। नहि ज्ञानमात्रं विश्वं क्षणिका भावा इत्यादि निर्विकल्पकेन कस्यचित् प्रतिभाति। अनुमानेन त्वेवञ्जातीयका अर्थाः साध्यन्ते। तच्च सविकल्पकत्वान्मिथ्यैवेति ज्ञानास्तित्वादिपक्षो दुर्लभः। अतो युक्तं मोक्षयत्नस्य वैफल्यमित्याह — विकल्पेति सार्धेन। अत्र च निर्विकल्पकसत्यत्वे स्तम्भादिधियामपि तथाविधानां सत्यत्वापत्तेर्न बाह्यार्थाभावः सिध्यतीति वक्तव्यम्। तदुपेक्ष्यैवोत्तरविभवात् परिहारान्तरमुक्तमिति॥ ८४$\frac{1}{2}$॥

अपिच योगिभ्योऽर्वाचामस्मदादीनां सर्वमेव ज्ञानं कल्पनास्पदमिति मिथ्याज्ञानमेव। नहि प्रधानं जगत्कारणं पञ्चविंशतितत्त्वमित्यादिज्ञानेभ्यो ज्ञानमात्रं जगत् क्षणिकाः सर्वे भावा इत्यादिप्रत्ययानां कश्चिद्विशेषो दृश्यते।

**बौद्धदर्शन एकस्मिन् पक्षपातो न युज्यते ।**
**मृषात्वं यदि बुद्धेः स्याद् बाधः किं नोपलभ्यते ॥ ८७ ॥**
**बाधाद् विनापि तच्चेत् स्याद् व्यवस्था न प्रकल्पते ।**
**प्रतियोगिनि दृष्टे च जाग्रज्ज्ञाने मृषा भवेत् ॥ ८८ ॥**
**स्वप्नादिबुद्धिरस्माकं तव भेदोऽपि किङ्कृतः ।**
**नचान्यत् प्रतियोग्यस्ति जाग्रज्ज्ञानस्य शोभनम् ॥**
**यद्दर्शनेन मिथ्यात्वं स्तम्भादिप्रत्ययो व्रजेत् ।**

---

सर्वस्य सविकल्पकत्वेन मिथ्याभ्युपगमात् । अतो गृह्यमाणविशेषेषु तीर्थकरप्रवादेषु योऽयं साङ्ख्यादिसिद्धान्तपरिवर्जनेन बौद्धसिद्धान्त एकस्मिन् पक्षपातः, तत्र न कश्चिद्धेतुरुपलभ्यते । नच कल्पनास्पदत्वाविशेषेऽपि अर्थसदसद्भावकृतमिन्द्रियसान्निध्यविप्रकृष्टकृतं वा सम्यङ्मिथ्यात्वं सम्भवति । सर्वकल्पनानामसदर्थत्वात् । सर्वबाह्यापलापे चास्य विभागस्य दुर्लभत्वात् । तदेतदाह — **सर्वं** चेति द्वयेन ॥ ८६$\frac{1}{2}$ ॥

अपिच बुद्धीनां मिथ्यात्वं मृगतृष्णादिज्ञानेषु बाधकेन व्याप्तमुपलब्धम् । नच जाग्रद्बुद्धयो बाध्यन्ते । अतो व्यापकनिवृत्त्या व्याप्यनिवृत्तिरित्यभिप्रायेणाह — **मृषात्वमिति** ॥ ८७ ॥

विनापि बाधकं मृषात्वाभ्युपगमे क्षणभङ्गादिप्रत्ययमिथ्यात्वादव्यवस्थेत्याह — **बाधादिति** । अपिच सम्यङ् मिथ्येति च प्रतियोगिसापेक्षम् । किञ्चिद्धि सम्यगपेक्ष्येतरन्मिथ्या भवति, मिथ्या च किञ्चिदपेक्ष्य परं सत्यम् । तव तु सर्वमिथ्यात्वाभ्युपगमे किंकृतः सम्यङ्मिथ्यात्वविभागः । अस्माकं तु जाग्रज्ज्ञानमेव सत्यं प्रतियोग्यपेक्ष्य स्वप्नादिज्ञानं मिथ्या भवतीति युक्तं, तदेतदाह — **प्रतीति** ॥ ८८$\frac{1}{2}$ ॥

न केवलं स्वप्नादिज्ञानानां प्रतियोग्यभावान्मिथ्यात्वं न सिध्यति, जाग्रज्ज्ञानानामपि शोभनाभिधानसत्यप्रतियोग्यभावान्मिथ्यात्वं न सिध्यतीत्याह — **नचेति** ॥ ८९$\frac{1}{2}$ ॥

१. 'त्व' ख. पाठः.

स्वप्नादिप्रतियोगित्वं सर्वलोकप्रसिद्धितः ॥ ९० ॥
तदीयधर्मवैधर्म्याद् बाधकप्रत्ययो यथा ।
योगिनां जायते बुद्धिर्बाधिका प्रतियोगिनी ॥
जाग्रत्स्तम्भादिबुद्धीनां ततः स्वप्नादितुल्यता ।
प्राप्तानां तामवस्थां च सर्वप्राणभृतामपि ॥ ९२ ॥
बाधोऽयं भविता तेन सिद्धा सप्रतियोगिता ।
इह जन्मनि केषांचिन्न तावदुपलभ्यते ॥ ९३ ॥
योग्यवस्थागतानां तु न विघ्नः किं भविष्यति ।

---

जाग्रज्ज्ञानप्रतियोग्यपेक्षया स्वमते स्वप्नादिधियां मिथ्यात्वमुक्तम् । तत्रैवोपपत्तिमाह — **स्वप्नेति** । स्वप्नादिप्रत्ययविधर्माणो हि जाग्रत्प्रत्ययाः । सर्वलोकप्रसिद्धा हि ते । स्वप्नस्तु कस्यचिदेव निद्राक्रान्तान्तःकरणस्य भवति । अतो यथा तद्बाधके प्रत्यये सार्वलौकिके स्वप्नादिप्रतियोगित्वमेवमन्येषामपि जाग्रत्स्तम्भादिज्ञानानां तत्प्रतियोगित्वं, तदपेक्षया च स्वप्नादिधियां मिथ्यात्वमिति ॥ ९०$\frac{1}{2}$ ॥

अत्र चोदयति — **योगिनामिति** । सत्यं प्रतियोगिसापेक्षं मिथ्यात्वं, जाग्रद्बुद्धीनामपि भावनाबलनिष्पन्नप्रतियोगिज्ञानापेक्षया मिथ्यात्वं भविष्यति । सत्या हि सा विगलितनिखिलकल्मषस्य स्फुटाविकल्पप्रकाशा जायते । अतो युक्तं तदपेक्षया सांसारिकज्ञानानां मिथ्यात्वमिति ॥ ९१$\frac{1}{2}$ ॥.

ननु कस्याचिदेव भावनाप्रकर्षकाष्ठाप्राप्तस्य योगिनो जाग्रद्बुद्धिपरिपन्थिनी बुद्धिराविर्भवति । तास्तु सर्वलोकप्रसिद्धा एवेत्युक्तम् । अतः कथमेकदेशभुवा ज्ञानेन सार्वलौकिकाः प्रत्यया बाध्यन्ते, अत आह — **प्राप्तानामिति** । अयमभिप्रायः — तावदेव हि संसारिणो न बाधं मन्यन्ते, यावन्न बुद्धभूमिमधिरोहन्ति । प्राप्ततद्भूमयस्तु सर्वे एव प्राणभृतो बाधं मन्यन्ते । अतो न बह्वल्पविषयतया कश्चिद् विशेष इति सिद्धं योगिज्ञानेन प्रतियोगिना जाग्रद्बुद्धीनां मिथ्यात्वमिति ॥ ९२$\frac{1}{2}$ ॥

अत्र दूषणमाह — **इहेति** ॥ ९३$\frac{1}{2}$ ॥

**योगिनां चास्मदीयानां त्वदुक्तप्रतियोगिनी ॥९४॥**
**त्वदुक्तविपरीता वा बाधबुद्धिर्भविष्यति ।**
**ईदृक्त्वे योगिबुद्धीनां दृष्टान्तो न तवास्ति च ॥९५॥**
**दृष्टान्तस्त्वस्मदादीनां यो गृहीतः स विद्यते ।**
**अथ स्तम्भादिबुद्धीनां वदेत् सप्रतियोगिताम् ॥९६॥**
**बाध्यत्वं चापि बुद्धित्वान्मृगतृष्णादिबुद्धिवत् ।**
**इष्टं सप्रतियोगित्वं मृगतृष्णादिबुद्धिभिः ॥ ९७ ॥**

---

न तावद् वयमद्यत्वे कस्यचिज्जाग्रद्बुद्धिपरिपन्थिनं प्रत्ययमुपलभामहे । योगिनस्तु किं भविष्यति न वेति न नः प्रमाणं क्रमत इति । विनैव तु प्रमाणेन योगिज्ञाने प्रतियोगिनीष्यमाणे शक्यमस्माकमपि वक्तुम् । अस्मदीयानां योगिनां त्वदुक्तप्रतियोगिनी विपरीता वा बाधबुद्धिर्भविष्यति स्वाच्छन्द्ये हि नियामकाभावादित्याह— **योगिनामिति** ॥ ९४½ ॥

बौद्धोक्तज्ञानमात्रपक्षविधर्मविविधविषयोपदर्शनेन प्रतियोगिनी साक्षादेव वा नैतदेवमिति प्रतिक्षेपात् तद्विषयविपरीतेति । नचैवमावयोरविशेष इति वक्तव्यम् । अनुमानेन हि वयं योगिबुद्धीनामीदृशत्वमुपपादयामः । य एव हि कश्चित् प्रमाता गृहीतस्तेनैव दृष्टान्तेन योगिनामपि बहिर्विषयबोधोऽनुमीयते । सर्वस्याद्यतनस्य ग्रहीतुर्बहिर्विषयबोधात् । ज्ञानमात्रं तु निर्मुक्ताखिलनीलादिविभागमवयन्ति योगिन इत्यदृष्टान्तः, तदेतदाह — **ईदृक्त्वेति** । भवति चात्र (प्रयोगः ।) योगिनस्त्वदुक्तविपरीतबुद्धिमन्तः, बोद्धृत्वाद् अद्यतनबोद्धृवदिति ॥ ९५½ ॥

ननु योगिनां जाग्रद्बुद्धिप्रतियोगिनी बुद्धिरुत्पद्यत इति न प्रमाणं क्रमत इति यदुक्तं[1] तदयुक्तम्, कथमनुमाने जीवति तदप्रमाणकमिति शक्यमभिधातुम् । एवंह्यत्रानुमीयते — जाग्रद्बुद्धयः सप्रतियोगिन्यो बाध्या वा, बुद्धित्वान्मृगतृष्णादिबुद्धिवदिति, तदेतदाह— **अथेति** । प्रतियोगिताबाध्यत्वे प्रागेव व्याख्याते इति ॥ ९६½ ॥

एतदपि दूषयति — **इष्टमिति** (बाध्य)त्वमन्तेन । सत्यं जाग्रद्बुद्धीनां हि मृगतृष्णादिबुद्धयः प्रतियोगिन्यः, एतदपेक्षयासां सत्य-

---

१. 'नु' क. पाठः. २. 'क्तं क' ख. पाठः.

तदात्मना च बाध्यत्वं ग्राह्यान्तरतयापि च ।
बाधकैश्चाप्यनेकान्तस्तदन्यत्वे च पूर्ववत् ॥ ९८ ॥

मिथ्याधीप्रतियोगित्वं स्वप्नादाविव ते भवेत् ।
रागादिक्षययोगित्वनिमित्ताधिगतिस्तथा ॥ ९९ ॥

यावान् विशेष इष्टश्चेत् सर्वबाधाद् विरुद्धता ।
महाजनस्य वाबाधादिदानीं बाधबुद्धिवत् ॥ १०० ॥

---

त्वावगतेः । अतः सिद्धसाधनं, बाध्यत्वमपि सिद्धम् । बुद्धिरूपेण हि सत्यबुद्धयोऽपि न मिथ्याबुद्धिभ्यो भिद्यन्ते । अतः तासु बाध्यासु ता अपि बाध्या भवन्तीति वाक्प्रवृत्तिरिति । अन्यथा सिद्धसाधनं दर्शयति — ग्राह्येति । सत्यबुद्धीनां ग्राह्यादन्यद् ग्राह्यान्तरं मिथ्याबुद्धीनां, तस्मिन् बाध्यमाने सर्वेषां ग्राह्यत्वेनाभेदात् सत्यधीग्राह्यमपि बाधितमेव भवति । अपिच यान्येव योगिज्ञानानि जाग्रद्धियां बाधकानीष्यन्ते, तैरेव हेतोरनैकान्तिकत्वमित्याह — बाधकैरिति । तदन्यविशेषणोपादाने च पूर्ववदनवस्था वाच्येत्याह — तदन्यत्व इति ॥ ९८ ॥

विशेषविरुद्धश्चायं हेतुरित्याह — मिथ्येति सार्धेन । स्वप्नादिबुद्धीनां हि मिथ्याभूताः संसारिबुद्धयः प्रतियोगिन्यो दृष्टा इति प्रतिबन्धबलेन बुद्धित्वेन हेतुना जाग्रद्बुद्धीनां मिथ्याधीप्रतियोगित्वमेव साध्यते । तत्र यः प्रतियोगिनीनां धियां सत्यत्वं विशेष इष्टः, स बाध्यते । तथा रागादिक्षयनिमित्तासौ योगिनामधिगतिरिति यः प्रतियोगिन्या योगिबुद्धेर्विशेष इष्टः, तस्य सर्वस्य बाधाद् भवति विशेषविरुद्धो हेतुरिति । अयं च धर्मविशेषबाधाद् विरोधोऽनुसन्धातव्य इति ॥ ९९$\frac{1}{2}$ ॥

दूषणान्तरमाह — महाजनस्येति । अयमभिप्रायः — शक्यते हि प्रतिसाधनं वक्तुं, जाग्रद्बुद्धयः सत्याः इदानीं महाजनस्याबाधात् पराभिमतयोगिबाधबुद्धिवदिति । इदं च यदि बाध्यत्वानुमानेन तुल्यबलं ततः सप्रतिसाधनम् । अथ तु प्रसिद्धावयवत्वेन बलवत् ततोऽनुमानबाध

वाच्योऽनुमानबाधो वा यदि वा प्रतिसाधनम् ।
पूर्वसाधनदोषाश्च सन्धेयास्तस्य चाधुना ॥ १०१ ॥

साध्याभेदादवाच्यत्वाद्धेतोर्नोभयसिद्धता ।
प्रत्ययत्वं च सामान्यं भिन्नाभिन्नं न विद्यते ॥१०२॥

भवतोऽत्यन्तभिन्नं च मत्पक्षेऽपि कथञ्चन ।
सारूप्यान्यनिवृत्ती च नेत्येतत् साधयिष्यते ॥१०३॥

तस्माद्धेतुर्न सामान्यमस्ति सिद्धं द्वयोरपि ।
विशेषयोश्च हेतुत्वं पक्षतत्तुल्यसंस्थयोः ॥ १०४ ॥

---

इति प्रागप्युक्तमेव । सर्वथा तावत् परसाधनं प्रतिबध्नातीत्यत्र तात्पर्यम् । योगिज्ञानेन बाधाद्धेतोरसिद्धिर्मा भूदिति इदानीमित्याह । योगिनां बाधबुद्धेरप्यनागताया महाजनेनाबाधाद् व्याप्तिसिद्धिरिति ॥ १००½ ॥

मूलसाधने च ये धर्मादिविकल्पैर्दोषा उक्ताः, तेऽप्यत्रानुमानेऽनुसन्धातव्या इत्याह — पूर्वेति । एवं पुनस्तत्पातनिकां कृत्वा तत्रैव दूषणान्तरमाह — तस्य चेति । तस्य च पूर्वसाधनस्याधुना दोषान्तरमभिदध्महे । धर्मधर्मिणौ विकल्प्य दूषितौ । हेतुरपि तस्योभयसिद्धो नास्ति, साध्याभेदात् । नहि प्रत्यय एष साध्ये स एव हेतुर्वाच्यो भवति, प्रतिज्ञार्थैकदेशत्वात् । अतो हेतुशून्यं साधनमिति । ननु सामान्यस्य हेतुतया पक्षैकदेशत्वं प्रतिक्षिप्तमत आह — सामान्यमिति । उक्तमिदमस्माभिरुभयसिद्धो हेतुर्नास्तीति । भिन्नाभिन्नं हि प्रत्ययत्वं तवासिद्धम्, अत्यन्ताभिन्नं च न नः किञ्चिदस्तीति सिद्धं नोभयसिद्धो हेतुरस्तीति ॥ १०२½ ॥

सारूप्यान्यनिवृत्तिरूपं तु सामान्यमुपरिष्टान्निषेत्स्यत इत्याह — सारूप्येति ॥ १०३ ॥

उपसंहरति — तस्मादिति । यदि तु मा भूत् सामान्यं, विशेष एव

**न स्यादन्वयहीनत्वादतद्धर्मतयापि च ।**
**नचार्थहीना तद्बुद्धिर्हेतुत्वेन भविष्यति ॥ १०५ ॥**

**आश्रयासिद्धिता चोक्ता विशेष्यस्याप्रसिद्धितः ।**
**तथा हेतोर्विरुद्धत्वं दृष्टान्ते साध्यहीनता ॥ १०६ ॥**

**विशेषणाप्रसिद्ध्यर्थविकल्पेनैव बोधिते ।**
**स्वप्नादिप्रत्यये बाह्यं सर्वथा नहि नेष्यते ॥ १०७ ॥**

---

हेतुरुच्यते, तदयुक्तम् । अपक्षधर्मत्वादन्वयाभावाच्चेत्याह— विशेषयोरिति । द्वावत्र विशेषौ परिप्लवेते पक्षस्तत्तुल्यापरनामा सपक्षश्च । पूर्वत्र हेतोरन्वयाभावः । परत्रापक्षधर्मत्वम् । पूर्वं तु विशेषस्यैव हेतुत्वे साध्याभेदादवाच्यत्वमुक्तम् । इदानीं विकल्प्य दूषणान्तराभिधानमिति । ननु माभूत् सामान्यविशेषात्मको हेतुः, बुद्धिरेव त्वर्थशून्या हेतुर्भविष्यति । उत्पद्यते हि नः प्रत्ययत्वादित्युक्तेऽनर्थिका काचिद् बुद्धिः । सर्व एवायं हेत्वादिव्यवहारो बुद्धिमात्रप्रभावित एवेति सौगता मन्यन्ते । अत आह — नचेति ॥ १०५ ॥

अतएव दोषद्वयान्नार्थशून्या बुद्धिर्हेतुर्भवति । नहि सा बुद्ध्यन्तरं धर्मः । नहि क्षणिका साध्यान्वयभाजनमित्यप्रसिद्धाश्रयश्चायं हेतुर्विशेष्यग्राहिप्रत्ययनिरालम्बनत्वेन तदप्रसिद्धेरित्याह —आश्रयेति । अप्रसिद्धविशेष्यं पक्षमाचक्षाणैरेवास्माभिर्हेतोराश्रयासिद्धताप्युक्तप्रायैवेत्यर्थः । तथा 'निरालम्बनता चेह सर्वथा यदि साध्यते' विशेषणाप्रसिद्ध्यर्थं यो विकल्पः कृतः, तेनैव हेतोर्विरुद्धत्वं दृष्टान्ते च साध्यहीनता द्वे एते बोधिते । सर्वथा निरालम्बनत्वे हि साध्ये तथाविधस्य कस्यचिदसिद्धेर्व्याप्तिबलेन यथाकथञ्चिन्निरालम्बनत्वं सिसाधयिषतः सर्वथा निरालम्बनत्वविरुद्धं प्रत्ययत्वहेतुः साधयतीति विरुद्धत्वं, स्वप्नादिज्ञानानामपि सर्वथा निरालम्बनत्वाभावात् साध्यहीनो दृष्टान्तः । तदेतदाह — तथेति । साध्यहीनतां प्रपञ्चयति — स्वप्नेति ॥ १०७ ॥

सर्वत्रालम्बनं बाह्यं देशकालान्यथात्मकम् ।
जन्मन्येकत्र भिन्ने वा तथा कालान्तरेऽपिवा ॥
तद्देशो वान्यदेशो वा स्वप्नज्ञानस्य गोचरः ।
अलातचक्रेऽलातं स्याच्छीघ्रभ्रमणसंस्कृतम् ॥ १०९॥
गन्धर्वनगरेऽभ्राणि पूर्वज्ञातं गृहादि च ।
पूर्वानुभूततोयं च रश्मितप्तोषरं तथा ॥ ११० ॥

---

किमिति नेष्यते, अत आह — सर्वत्रेति । अस्ति हि सर्वज्ञानेष्वेव देशान्तरादिस्थमालम्बनम् । यदेव हि क्वचिद् देशे काले वा दृष्टं तदेव देशान्तरादौ प्रतीयत इत्येतदेवानालम्बनत्वम् । नतु सर्वथा ग्राह्याभाव इति । ननु यदेव क्वचिद् देशे काले वाननुभूतपूर्वं, तदपि स्वप्नज्ञाने प्रकाशते । अतः कथं तस्य देशान्तरादिस्थबाह्यालम्बनत्वमत आह — जन्मनीति । अयमभिप्रायः — पूर्वानुभूतगोचरा हि मनोमात्रसहाया स्वप्नस्मृतिः । दोषवशाच्च प्रत्युत्पन्नबोधः । नचेह प्रतिनियमः यदेकत्र जन्मन्यनुभूतमेव स्वप्नेऽवसीयत इति, जन्मान्तरानुभूतमपि कुतश्चिददृष्टाद् मनसि विपरिवर्तमानमलमेव भवितुं गोचरः स्वप्नादिधियाम् । अतोऽस्ति तावद् विभ्रमाणामपि कथञ्चिदवस्थितं बाह्यालम्बनम् । एकत्रापि जन्मनि कालान्तर इत्यर्थः ॥ १०८$\frac{१}{२}$ ॥

एवमन्तःकरणजन्मनः स्वप्नविभ्रमस्यालम्बनमुक्तम् । बाह्येन्द्रियजन्मनां विभ्रमाणामिदानीं बाह्यमालम्बनं दर्शयति — अलातेति श्रियोऽन्तेन । अलातचक्रज्ञाने शीघ्रभ्रमणदूषितमलातमेवालम्बनम् । गन्धर्वनगरविभ्रमे तु सन्निवेशविशेषावस्थितान्यभ्राण्येव दूरत्वात् पूर्वावगतगृहाकारेणालम्ब्यन्ते । तदिह पूर्वदृष्टगृहाण्यभ्राणि च तत्सन्निवेशविशेषभाञ्ज्यालम्बनम् । तदिह द्विप्रकारो विषयदोषो विभ्रमे कारणम् । मृगतोयज्ञाने पूर्वानुभूततोयमूषरं च सूर्यरश्मितप्तमेवालम्बनम् । उभयं हि विगाह्य भ्रान्तिरात्मानं लभते, तदन्यतरापाये ह्यभावात् । इह चान्तःकरणविषयदोषाभ्यां विभ्रमः । पिपासादूषितान्तःकरणस्य हि सूर्यरश्मितप्तमूषरं तोयसदृशं तद्वद्भाति । शशविषाणबुद्धेस्तु मानसादेव कुतश्चिद् भ्रमनिमित्ताज्जाय-

मृगतोयस्य विज्ञाने कारणत्वेन कल्प्यते ।
द्रव्यान्तरे विषाणं च शशस्यात्मा च कारणम् ॥
शशशृङ्गधियो मौण्ड्यं निषेधे शिरसोऽस्य च ।
वस्त्वन्तरैरसंसृष्टः पदार्थः शून्यताधियः ॥ ११२ ॥
कारणत्वं पदार्थानामसद्वाक्यार्थकल्पने ।
अत्यन्ताननुभूतोऽपि बुद्धया योऽर्थः प्रकल्प्यते ॥

---

मानाया गवादिद्रव्यान्तरगतं विषाणमात्मा च शशस्य कारणम् । उभय-भावभावित्वादेकतरापायेऽपि चापायादिति । ननु शशविषाणं नास्तीति बुद्धेर्न किञ्चिदालम्बनं, न तावत् शशो विषाणं वा तत्संयोगो वास्याल-म्बनम् । प्रतिषेधरूपत्वान्नाभावः । स्वतन्त्रानिर्भासात् । तथाहि — न वयं शशविषाणं नास्तीत्युक्ते स्वतन्त्रमभावमवगच्छामः । अतोऽवश्यमा-त्मालम्बनमेवेदं नास्तीति ज्ञानं वक्तव्यम्, अत आह — मौण्ड्यमिति । अस्य शृङ्गस्य निषेधे शशशिरोमौण्ड्यं कारणम् । एतदुक्तं भवति— यद्यपि स्वतन्त्रोऽभावो न प्रतीयते, भावाश्रयस्तु प्रतीयत एव । अतः शशमूर्ध-वर्तिनोऽवयवा उपर्युपरि हीयमाना दीर्घदृढसन्निवेशरूपे(णा ? ण)परिणता मौण्ड्यापरनामानः शृङ्गाभावात्मना ज्ञायन्ते । यद्धि यथा निर्भासते तत्तथैवा-लम्बनम् । अभावोऽपि पराधीन एवानुभूयमानस्तथैवालम्बनं भविष्यति । ज्ञानं तु सद्रूपं नास्या नास्तीतिबुद्धेरालम्बनं भवितुमर्हति । आह च —

"भावरूपं च विज्ञानं नास्तीति कथमुच्यते ।"

इति । यत्तर्ह्यनाश्रितविषयं शून्यशब्दाज्ज्ञानमुत्पद्यते तदनालम्बनं भवेत्, सर्वाभावस्य प्रत्येतुमशक्यत्वाद्, विशेषाप्रकाशाच्च । अत आह — व-स्त्विति । अयमभिप्रायः — न स्वतन्त्रं शून्यज्ञानमुत्पद्यते किञ्चिद्धि केन-चित् शून्यमवसीयते । गृहं चैत्रेण जगद् वन्ध्यासुतेन । अतः केवलगृहा-द्यालम्बनमेव शून्यज्ञानं नानालम्बनं स्वांशालम्बनं वेति ॥ ११२ ॥

एवमङ्गुल्यादिवाक्यजनितशाब्दविभ्रमाणामपि सन्निधिदोषदूषिता एव पदार्थाः कारणमित्याह — कारणत्वमिति । यस्त्वर्ह्यत्यन्ताननुभूत-

**तस्योत्पत्तौ कथञ्चित् स्युः पृथिव्यादीनि कारणम् ।**
**एष प्रत्यक्षधर्मश्च वर्तमानार्थतैव या ॥ ११४ ॥**
**सन्निकृष्टार्थवृत्तिश्च न तु ज्ञानान्तरेष्वियम् ।**
**कथमुत्पादयेज् ज्ञानं तत्रासंश्चेत् कुतो न्वियम् ॥**

---

पूर्वः प्रधानादिरर्थो बुद्ध्या साङ्ख्यादिभिः कल्प्यते, तत्र न किञ्चिज्ज्ञानस्यालम्बनमुपलभ्यते । विषाणादिर्हि क्वचिददृष्टः क्वचित्तूपलभ्यत इति युक्तम् । स्वरूपासतस्तु कथं कुत्र वा कल्पनमत आह — अत्यन्तेति । पृथिव्यादि सूक्ष्ममेव हि तैः प्रधानमिति कल्प्यते । स्थूलस्य हि जगतो नाकस्मान्निष्पत्तिरुपपद्यत इति प्रधानं कल्प्यते । नच तदन्यत् परमाणुभ्यो घटत इति कथञ्चित् सूक्ष्मरूपावस्थिताः पृथिव्यादय एव प्रधानबुद्ध्या गृह्यन्ते । सोऽयं सूक्ष्मरूपतया तेषामग्रहणात् तद्व्यतिरिक्तः प्रधानभ्रमः । परमार्थतस्तु तत्स्थाने प्रधानपरिकल्पनादेव तदालम्बनं प्रकल्प्यत इति । अतः प्रकृतं विपरिणतं प्रकल्पनं तस्येति परामृश्यत इति ॥ ११३½ ॥

नन्वत्र प्रकरणे वर्तमान एवार्थो बुद्ध्या विषयीक्रियत इत्युक्तम् । तदयुक्तं, कथं हि वर्तमानाया बुद्धेरवर्तमानमालम्बनं भविष्यति । नह्यवर्तमानघटविषयं वर्तमानघटज्ञानमुपलब्धम् अत आह — एष इति । यदेव तद् वर्तमानार्थत्वमिन्द्रियसन्निकृष्टार्थविषयत्वं च । अयं प्रत्यक्षप्रमाणधर्मो न ज्ञानान्तराणाम् । न तु विभ्रमाः प्रत्यक्षं, तदाभासत्वादिति ॥ ११४½ ॥

ननु किमिदं प्रत्यक्षधर्म इति । नह्यत्र वैदिको विधिरस्त्येवन्धर्मेणा प्रत्यक्षेण भवितव्यमिति । यथा त्ववर्तमानं न ज्ञानं जनयितुं क्षममिति प्रत्यक्षं वर्तमानविषयम्, एवमाभासमपि तथा भवितुमर्हति । कथं हि तत्रावर्तमानेन ज्ञानमुत्पादयितुं शक्यमसतः करणत्वायोगात् । तदेतदाशङ्कते तावत् — कथमिति । परिहरति — कुत इति । अवर्तमानं ह्यर्थक्रियान्तरेष्वसमर्थं दृष्टं, ज्ञानं तु जनयत्येव । भूतभविष्यन्त्योरपि वृष्ट्योरनुमानोदये कारणभावात् । प्रत्यक्षं त्विन्द्रियसन्निकर्षानुविधायि । नचात्रावर्तमानेनेन्द्रियं सन्निकृष्यत इति भवति वर्तमानविषयम् । दोषसहायेभ्यस्त्विन्द्रियेभ्यः प्राचीनानुभवजनितसंस्कारवशेनावर्तमानमेव वर्तमानमिव भासत इति न नोपपन्नम् । ननूक्तमसतः कारणत्वानुपपत्तिरिति । शक्तिमद्धि

---

१. 'णा' ख. पाठः.

**अर्थस्याविद्यमानस्य विज्ञानोत्पत्त्यशक्तता ।**
**बाह्यालम्बनतायां नौ विवादोऽर्थस्य सन्निधिः ॥११६॥**
**यदि नास्ति किमेवं स्यादस्मत्पक्षनिवर्तनम् ।**

कारणम् । नचासतः शक्तिसमवायः सम्भवति । न । सत्त्वात् । यदि तदकान्तमसद् भवेद्, न ज्ञानं जनयेत् । अस्ति तद् देशान्तरादिषु रजतादीति न तस्य शक्तिसमवायोऽनुपपन्नः । सन्निधानं तु तस्य नास्तीति क्वचिदेवावर्तमानमाख्यायते । यत् तर्हि नास्त्येव स्वरूपतः यथा वृष्ट्यादि, तत् कथं ज्ञानस्य कारकमतीतमनागतं वा । तत्रापि सामान्यानुमानात् । तेनात्मना सत एव कारकत्वम् । अथवा यदा तावत् तदासीत् यदा तावच्छक्तिमता कारकीभूतेनात्मनि ज्ञानं जनितं, तेनापि संस्कारः, तदेवं परम्परया विषयशक्तिरात्मनि सङ्क्रान्ता । स चात्मा नित्य इति सदाश्रया शक्तिः कार्याण्यारभते । तयैव चात्मसमवायिन्या शक्त्या स्मृत्यादिज्ञानेषु जायमानेष्वतीतानागतार्थाः कारणमित्युच्यते याग इव विनष्टोऽपि शक्तिद्वारेण । भवतु तावदतीतस्मरणे, अनागता(व)बोधे तु कथम् । तत्राप्यगृहीतपूर्वस्य सम्बन्धाग्रहणेनानुमातुमशक्यत्वादवश्यं पूर्वानुभवोऽभ्युपगन्तव्यः । अतस्तत्रापि परम्परया कार्यशक्तिसङ्क्रान्तेरुपपन्नं कारकत्वम् । नन्वन्य एव पूर्वानुभूतो विशेषोऽन्यश्चायं यः सम्प्रति भविष्यत्तया ज्ञायते । अतः कथमन्याहितशक्त्यान्यस्य कारकत्वम् । न । सामान्यात्मनैकत्वात् । तस्यैव च रूपस्यानुमेयत्वादिति ॥ ११५३ ॥

नन्वेवमपि न तावद् यथाप्रतिभासं भवद्भिरर्थोऽभ्युपगतः । सन्निहितो हि प्रतिभासविषयः । नचासौ तथेष्यते । प्रतिभासविसंवादिवस्त्वभ्युपगमे न किञ्चित् प्रमाणं पश्यामः । तथा सति हि स्वांशालम्बनत्वं कल्पितं बाह्यालम्बनत्वं वा न कश्चिद् विशेषः, अत आह — **बाह्येति** । अयमभिप्रायः— ज्ञानस्य बाह्यविषयसदसद्भावगोचरोऽयमावयोर्विवादः । न च बाह्यसद्भावे प्रतिभासविसंवादः । भ्रान्तिज्ञानेष्वपि बहिरेव विषया भासन्ते । इदं तोयमिति मृगजलज्ञानं नाहं तोयमिति । अस्ति च तद्देशान्तरे ।

---

१. 'स्थ' ख. पाठः.

तस्माद् यदन्यथासन्तमन्यथा प्रतिपद्यते ॥ ११७ ॥
तन्निरालम्बनं ज्ञानमभावालम्बनं च तत् ।
भावान्तरमभावोऽन्यो न कश्चिदनिरूपणात् ॥ ११८॥
भवतां द्वयमप्येतद् दुर्निरूपं सहेतुकम् ।

---

नहि बाधकेनापि बहिर्विदितस्तोयसद्भावो बाध्यते । नहि तत् तोयं नास्तीति भवति मतिः । किन्तु इदं न तोयमिति । किमुक्तं भवति । इह तोयं नास्तीति । तदिह क्वचिदेव तोयसंयोगो वार्यते न तोयम् । अतः सन्निधिबाधे कः प्रतिभासविरोधः । नन्वेवमपि सन्निधिज्ञानमेवासत्सन्निध्यालम्बनत्वेनं निरालम्बनं भवेत् । न । सन्निधिरित्यूषरसंयोगस्तोयस्यापदिश्यते सोऽपि क्वचित् प्रसिद्ध एवेह प्रतिषिध्यत इति न किञ्चिदनालम्बनम् । अतो यथाप्रतिभासमेव सर्वमिदमुपदर्शितमिति न क्वचित् प्रतिभासविसंवाद इति ॥ ११६½ ॥

किमिदानीमनालम्बनं नाम, न किञ्चित् तत्रभवतां, यद्येवमपह्नुतः सत्यमिथ्यात्वविभागः । अत आह — तस्मादिति ज्ञानमन्तेन । बाध्यमेवान्यथासन्तमन्यथाप्रतिपद्यमानमनालम्बनं ज्ञानमाचक्ष्महे । नासद् ग्राह्यम् । तदेवं मिथ्योच्यते इति । अभावालम्बनस्य तर्हि ज्ञानस्य किमालम्बनं, न तावद् भावः, विरोधात् । नाभावः, तस्य भावाद् विविक्तस्यास्वतन्त्रस्यानिर्भासात् । अतो बलादनालम्बनमेवापतितमत आह — अभावेति ॥ ११७½ ॥

अत्र कारणमाह — भावेति । सत्यं न स्वतन्त्रोऽभावोऽवसीयते, भावधर्मो ह्यसौ कथं स्वतन्त्रोऽपनीयेत । अतस्त्वदुक्तादेव स्वतन्त्रानिरूपणात् कारणात् सदात्मनावस्थिते गवादौ वस्त्वन्तराभावात्मना यज् ज्ञानमुत्पद्यते तदभावालम्बनमुच्यत इति, इदं च प्रागप्युक्तमधुनोपपादितमिति विवेकः । बौद्धानां तु सर्वसंविदामात्मपर्यवसायित्वादर्थसन्निध्यसन्निधिकृतविशेषाभावाच्च द्वयमपि निरालम्बनत्वमभावालम्बनत्वं च दुर्निरूपं, द्वयहेतोरभावात् । सति हि हेतौ सहेतुकं सदेतन्निरूपयितुं शक्यते, न त्वेतदस्तीत्याह — भवतामिति । भवन्मत इत्यर्थः ॥ ११८½ ॥

प्रतिज्ञादोषवच्चापि योज्या हेतोर्विरुद्धता ॥ ११९ ॥
समस्तव्यस्तधर्मादिस्वरूपादिविपर्ययात् ।
दृष्टान्तदोषाः सर्वे च योज्या न ह्येकवस्तुनि ॥
तत्र साध्यांशहेत्वंशव्याप्तधर्मादिसम्भवः ।
केचिद् वैधर्म्यदृष्टान्तो नास्तीत्यप्यनुयुञ्जते ॥ १२१ ॥
तदभावादवृत्तेश्च नास्त्यत्रावसरस्तव ।

---

तदेवं तावद् दृष्टान्ते साध्यहीनता विवृता । इदानीं विरुद्धो हेतुरिति दूषणान्तरमाह — **प्रतिज्ञेति** । यथा धर्मधर्मिबोधकप्रत्ययनिरालम्बनत्वान्न धर्मो धर्मी नोभयमिति प्रतिज्ञादिदोषोऽभिहितः, तथा समस्तव्यस्तयोर्धर्मधर्मिणोर्व्याप्तिबलेन स्वरूपस्वविशेषौ विघ्नन् विरुद्धोऽपि प्रत्ययत्वं हेतुरिति ॥ ११९½ ॥

दृष्टान्तोऽपि न केवलं साध्यहीनः सर्व एव तु दृष्टान्तदोषास्तद्वचनाभावप्रभृति योजयितव्याः । नह्येकस्मिन् ज्ञानमात्रे वस्तुनि दृष्टान्तवच(सः) साध्यांशो निरालम्बनत्वं, हेत्वंशः प्रत्ययत्वं, तस्य चासाध्यांशेन व्याप्तिः दृष्टान्तधर्मितद्धर्मता च साध्यसाधनयोरिति सर्वमिदमुपपद्यते । अतो यथेष्टमेव दृष्टान्तस्य तेन तेन वचनादिना न्यूनत्वं शक्यं वक्तुमित्यभिप्रायेणाह — **दृष्टान्तेति** ॥ १२०½ ॥

वैधर्म्यदृष्टान्तन्यूनश्चायं प्रयोग इति केचिदनुयुञ्जत इत्याह — **केचिदिति** । द्वेधा हि दृष्टान्तवचनसमयः । केचिद् व्याप्त्या साधर्म्य उक्तेऽपि वैधर्म्यवचनं कार्यमिति मन्यन्ते । तदिदमेकेषां मतेन परिचोदितमिति केचिदित्युक्तमिति । ननु च विपक्षाद् हेतुं व्यावर्तयितुं वैधर्म्यवचनं, नचेह विपक्षानुवृत्तिः सम्भवति । साधनभाष्यस्य तदन्तरेण हेतोर्विपक्षाद् व्यावृत्त्यसिद्धेः । अ(न्यें तु ? न्यैस्तु) हेतोः साध्येन व्याप्तिं दर्शयितुं दृष्टान्तवचनम् । तद् यदि सम्यक् साधर्म्यवचनादेव व्याप्तिरवगता, न सहभावमात्रं, नच विपरीतान्वयः, तदा किं वैधर्म्यवचनेनेति साधनभाष्यव्याख्यानावसरे वर्णितम् । उक्तं च परैरपि 'न वा तदभावात् तत्रावृत्तेरि'ति । अतो वैध-

विधिरूपप्रतिज्ञायामेतद् वक्तुं हि शक्यते ॥ १२२ ॥
तत्रावस्तुविपक्षेऽपि प्रयोगस्य हि सम्भवः ।
यस्मिन्ननित्यता नास्ति कार्यतापि न विद्यते ॥१२३॥
तस्मिन् यथा खपुष्पादाविति शक्यं हि भाषितुम् ।

र्म्यस्यावचनमित्यदोषः । अत आह — तदभावेति । तदभावादवृत्तिरिति यदेतत् तवाभिधानं तस्यात्र प्रकृतसाधनेऽवसरो नास्तीति ॥ १२१½ ॥

कथमनवसरोऽत आह—विधिरूपेति । तदभावादवृत्तेरिति यदुक्तं तस्यायमर्थः — भावे प्रतिज्ञाते विधिरूपेणाभावो विपक्षो भवति । तदभावे च विपक्षेऽभावस्य निस्स्वभावत्वान्न तत्र हेतोर्वृत्तिः सम्भवतीति न वैधर्म्यं वचनीयमिति । एतदपि बौद्धा वक्तुमशक्ता एव । नहि तेषां क्वचिदपि प्रत्यक्षवद् विधिरूपेण हेतुः प्रकाशकः । व्यतिरेकप्रधानवादिनो हि ते । सर्वत्र साध्यान्वितहेतुसंविदो दुर्लभत्वात् । अतो विपक्षव्यावृत्तिमुखेनैव सर्वत्र हेतोर्गमकत्वमाश्रितम् । नचासति वैधर्म्यवचने विपक्षव्यावृत्तिः शक्यते दर्शयितुम् । अतः सर्वत्रैव त्वन्मते वैधर्म्यदृष्टान्त एव वाच्यः । तदेतदुपेत्यापि तावदुच्यते । भवतु विधिरूपप्रतिज्ञास्वभावस्य विपक्षत्वात् तदभावादवृत्तिः । आलम्बनाभावात्मकत्वे तु निरालम्बनत्वे वस्तुनि साध्ये प्रतिज्ञाते वस्त्वात्मकं सालम्बनमेव विपक्षः । तत्र च हेतोर्वृत्तिसम्भावनायां व्यतिरेको[1] वक्तुमुचित एव । अतो वैधर्म्यन्यूनता सूक्तेति ॥ १२२ ॥

विधिरूपप्रतिज्ञायामपि वैधर्म्यस्य प्रयोजनाभावमात्रम् । अवस्त्वात्मके तु विपक्षे वैधर्म्यस्य प्रयोगः सम्भवत्येव । क्रियते चानुमानकुशलैः । अतोऽवश्यं वाच्यं वैधर्म्यं, यन्नोच्यते तन्नोचितमित्याह—तत्रेति । तद्वृत्तेन विधिरूपप्रतिज्ञा परामृश्यते । हिशब्दो हेतौ । यस्मादवस्तुविपक्षे प्रयोगः सम्भवति, तस्मात् सर्वत्रैव वैधर्म्यं वाच्यम् । तदिहानवसरं प्रतिज्ञायोत्तरश्लोके पूर्वोत्तरार्धाभ्यां हिशब्दद्वयेन हेतुद्वयमुक्तमिति प्रयोगसम्भवमेव दर्शयति — यस्मिन्निति । शब्दोऽनित्यः कृतकत्वादित्युक्ते यदनित्यं न भवति तत्कार्यमपि न भवति यथा खपुष्पमिति शक्यमेव वैधर्म्यवचनम् । सर्वा-

१. 'के' ख. पाठः.

अत्र त्ववस्तुसाध्यत्वं वस्तुनश्च विपक्षता ॥ १२४ ॥
तेन स्याद् व्यतिरेकोऽस्य वाच्यो यश्चापि दर्शयेत्।
प्रतिषेधद्वयात् तेन विधिरेव प्रदर्शितः ॥ १२५ ॥
नच शक्यो विधिर्वक्तुं वस्तुन्यसति केनचित्।
एवं स्थिते च सर्वज्ञनिषेधादावियं गतिः ॥ १२६ ॥
प्रत्यक्षादेरसामर्थ्यं तदीयस्यास्मदादिवत्।

---

भावस्यावस्तुनि शक्यनिदर्शनत्वात्। भावो हि तत्र निदर्शयितुमशक्यः। विनाशाख्यक्रियासामान्यं चानित्यत्वमिति विधिरूपप्रतिज्ञा दर्शयितव्येति ॥ १२३$\frac{1}{2}$ ॥

तदेवं तावदवस्तुविपक्षेऽपि प्रयोगसम्भवो दर्शितः। अत्र तु प्रकृतसाधने वस्तुन आलम्बनाभावस्य साध्यत्वं वस्तुनश्च सालम्बनस्य विपक्षता। वस्तुनि च हेतुवृत्तेः सम्भवाद् विपक्षाद् व्यतिरेकः प्रयोजनवत्त्वाद् वाच्य एवेत्याह—अत्र त्विति वाच्योन्तेन। यस्त्वत्रापि व्यतिरेकं दर्शयति तेनावश्यं यन्निरालम्बनं न भवतीति नञात्मनः प्रतिषेधद्वयात् सालम्बनविधिरेव प्रदर्शितो भवति। नच सर्वस्मिन्नेवासति वस्तुन्यालम्बनविधिः शक्यो वक्तुम्। सेयमुभयतःपाशा रज्जुः। वैधर्म्यवचने वस्तुत्वापातः। अवचने वाच्यावचनमिति। तदेतदाह—यश्चेति चिदन्तेन ॥ १२५$\frac{1}{2}$ ॥

यदि तर्हि सर्वथैव वैधर्म्यं वाच्यं सर्वज्ञनिषेधे का वार्ता। तत्रापि ह्यवस्तुनि साध्ये वस्त्वात्मनः सर्वज्ञविपक्षाद्धेतुर्व्यावर्त्यः। तथाच तदभ्युपगमप्रसक्तिरत आह—एवमिति। एवंहि तत्र साध्यते बुद्धप्रत्यक्षमसर्वविषयं, प्रत्यक्षत्वादस्मदादिप्रत्यक्षवत्। सर्वविषयं तु न प्रत्यक्षं शब्दवदिति। एवंतावद् व्यापकं वैधर्म्यं मन्वानानामनुयोगो दर्शितः। न त्वेवं मन्यामहे। वक्ष्यति हि—

"व्याप्त्या साधर्म्य उक्ते च न वैधर्म्यमपेक्ष्यते।"

इति ॥ १२६$\frac{1}{2}$ ॥

---

१. 'इयं निरा' ख. पाठः.

वैधर्म्यासम्भवेऽप्येतदन्ये त्वाहुरदूषणम् ॥ १२७ ॥
विनैव तत्प्रयोगेण हेतुरैकान्तिको यतः ।
सर्वथा सदुपायानां वादमार्गः प्रवर्तते ॥ १२८ ॥
अधिकारोऽनुपायत्वान्न वादे शून्यवादिनः ।
ननु सत्रं भवत्सिद्धं मयेदं साधनं कृतम् ॥ १२९ ॥
किमर्थं तदसिद्ध्या त्वं विकल्प्यात्रात्थ दूषणम् ।
विप्रलिप्सुरिवाहैवं किमर्थं न्यायविद् भवान् ॥१३०॥
नाश्रौषीः साधनत्वं किं प्रसिद्धस्य द्वयोरपि ।

---

अनैकान्तिकाशङ्कानिराकरणं तु तदुक्तेः प्रयोजनमिह विपक्षाभावादेव तन्न सम्भवतीति किं तद्वचनेनेत्याह — **वैधर्म्येति** । एतदिति । प्रकृतसाधनम् । अदूषणम् । अविद्यमानदूषणमित्यर्थः ॥ १२७½ ॥

साधु तर्हि साधनमापन्नं सम्प्रतिपत्तिरेवोत्तरमत आह — **सर्वथेति** । येषां हि साध्यसिद्धावुपायान्तराणि प्रतिज्ञाहेतुदृष्टा(न्तानि ? न्ताः) सन्ति, ते वादमार्गेष्वधिकृताः । सौगतास्तु न कथात्रये । अतो न नाम वैधर्म्यवचनन्यूनता दूषणम् । अनुपायस्य हि कथं साध्यसिद्धिर्भविष्यति । वयं हि साधर्म्यात् साध्यासिद्धिं मन्वाना वैधर्म्यं नाद्रियामहे । सर्वापलापवादी तु वादे नाधिकृत एव । प्रदर्शनमात्रं हि वादग्रहणम् । तिस्रो हि कथा भवन्ति । वादो जल्पो वितण्डा चेति । शिष्यविषयो हि वादः । व्युत्थितं तु शिष्यमाणमर्थं प्रतिपादयितुं जल्पवितण्डे । तयोः स्वपक्षस्थापनाहीनं वचनं वितण्डा । तदत्र त्रयेऽपि शून्यवादिनोऽनधिकृता इति ॥ १२८½ ॥

सर्वपूर्वोक्तदोषपरिहारेणेदानीं बौद्धः प्रत्यवतिष्ठते — **नन्विति** । सालम्बनवादिनं हि भवन्तं प्रतिबोधयितुमिदं साधनम् । ततस्त्वं प्रसिद्धैरेव हेत्वादिभिः साध्यं बुध्यमानः किं मां प्रति बहुप्रकारं प्रतिज्ञादि विकल्प्य दूषणमात्थ ब्रवीषीति ॥ १२९½ ॥

मीमांसकः प्रक्षीणनिखिलकुहेतुजालमेवंवादिनमपहसति — **विप्रलिप्सुरिति** । न्यायवित् किलासि । किमस्मान् विप्रलब्धुमेवंविधं भाषसे । किं खलु कथास्वप्युभयसिद्धस्य साधनत्वमितिं नाश्रौषीरिति ॥१३०½ ॥

योऽपि तावत् परासिद्धः स्वयंसिद्धोऽभिधीयते ॥
भवेत् तत्र प्रतीकारः स्वतोसिद्धे तु का क्रिया ।
तं साधयन् विरुन्ध्याद्धि पूर्वाभ्युपगतं नरः॥ १३२ ॥
असाधिते तु साध्यार्थो न तेन प्रतिपद्यते ।
परासिद्धो न पर्याप्तः परेषां प्रतिपत्तये ॥ १३३ ॥
तेनासाधनता युक्ता स्वतोसिद्धे तु किंकृता ।
द्वयोः सिद्धस्य हेतुत्वं नादृष्टायोपदिश्यते ॥ १३४ ॥
प्रत्येष्यन्ति स्वसिद्धेन साधनेन स्वयं यतः ।
वदेत् कथमसिद्धं चेदित्यनेनापि किं तव ॥ १३५ ॥

---

ननु परासिद्धस्तावद् हेतुः प्रयुज्यमानो दृष्टः । शब्दोऽनित्यः कार्यत्वादिति । नहि मीमांसकस्य शब्दकार्यत्वं सिद्धम् । अथासिद्धमपि व्यापारानन्तरदर्शनादिभिः साध्यत इत्युच्यते, स्वासिद्धेऽपि तथाकरणे को दोषः, अत आह — योऽपीतिद्वयेन । परासिद्धे हि स्वयंसिद्धे प्रसाधनं प्रतीकारो भवति । स्वतोसिद्धे तु प्रतिक्रियैव नास्ति । तस्मिन् साध्यमाने पूर्वाभ्युपगमविरोधो भवति । असाधितेन त्वसता न साध्यं साध्यत इति ॥ १३२½ ॥

अत्र चोदयति — परेति । परप्रतिपादनार्थं हि साधनवचनम् । नचासौ परोऽसिद्धेन प्रतिपादयितुं शक्यते । अतः परासिद्धो न साधनमिति युक्तम् । स्वासिद्धस्य तु किंकृतमसाधनत्वमिति न विद्म इति ॥ १३३½ ॥

ननूभयसिद्धो हेतुरिति भवद्वृद्धैरपि भाषितं तत् परित्यक्तम्, अत आह — द्वयोरिति । नायमदृष्टाय वृद्धोपदेशो दृष्टानुसारेण परासिद्धप्रतिषेधपरत्वमेवास्य निश्चीयते इत्याह — प्रत्येष्य(न्ती)ति । स्वसिद्धैर्हेत्वादिभिः परः साध्यं वक्ता तु स्वयमसिद्धं कथं वक्तुं शक्नोत्यत आह — वदेदिति ॥ १३५ ॥

---

१. 'चासिद्धौ प' क. पाठः.

गृहीतमगृहीतं वा साध्यं वा साधनापि वा ।
मयोच्यते चेत् त्वसिद्धं किं त्वं न प्रतिपद्यसे ॥
यत्र स्यात् पुरुषाधीना बुद्धिस्तत्रेदमुच्यते ।
कुतोऽस्य पूर्वविज्ञानमित्यत्रैतन्न युज्यते ॥ १३७ ॥
यदि चैवं भवेदत्र प्रतिज्ञामात्र एव हि ।
मद्दोषाज्ञानमात्रेण प्रतिपत्तिर्भवेत् तव ॥ १३८ ॥
यतस्तु साधनापेक्षा तेनास्यैव प्रमाणता ।
तत्स्मृत्युत्पत्तिमात्रे तु वाक्यव्यापार इष्यते ॥१३९॥
तस्माद् यथैव साध्यांशव्याप्तहेतुनिदर्शनात् ।
साध्यं गृह्णन् न वक्तारमपेक्षेत तथा भवान् ॥१४०॥

---

प्रत्यक्षपरिदृष्टं हि साधनवाक्यं वक्तृप्रयुक्तं तद्दर्शनेन भवति काचित् प्रयुक्तिशक्तिकल्पना । किं तद्विशेषावधारणेन । तव तु साप्यप्रतिज्ञानार्थिनः साधनशक्तिपरीक्षैव युक्ता किमनेन कथं वक्त्रा साधनं प्रयुक्तमिति । एतदेव प्रपञ्चयति — **गृहीतमिति** ॥ १३६ ॥

पुरुषाधीने हि निर्णये तत्प्रत्ययानुसारित्वान्निर्णयस्य तज्ज्ञानकारणानुसरणमुचितं, नात्रानुमान इत्याह — **यत्रेति** ॥ १३७ ॥

अत्रापि तु पुरुषाधीने निर्णये प्रतिज्ञामात्रादेव तदनुसारी निर्णयो भवेत्, न साधनापेक्षा स्यादित्याह — **यदि चैवमिति** ॥ १३८ ॥

न त्वेतदस्तीति व्यतिरेकेण दर्शयति — **यतस्त्विति** । अस्यैव साधनस्यैवेत्यर्थः । किमिदानीं वाक्यमनपेक्षितार्थमेव, नेत्याह — **त(त्स्मृतीति)** । साधनस्मरणार्थमेव वाक्यम्, अतस्तच्छक्तिरेव चिन्तनीया । किं पुरुषनिरूपणेन । नह्ययमप्राप्तप्रत्ययानुसारी निश्चय इति ॥ १३९ ॥

अतो यथा स्वार्थानुमाने न वक्तारमपेक्षते, एवमिहापि भवान् नापेक्षेतैवेत्याह — **तस्मादिति** । यतः स्मारकं वाक्यमित्यर्थः ॥ १४० ॥

१. 'प्रज्ञा' ख. पाठः.

यच्चापि भवतो ज्ञानं प्रत्यक्षादिः किमत्र ते ।
मत्प्रसिद्धास्ति युक्तिर्वा साध्यं वात्र यथेच्छसि ॥

तस्मान्न विदुषामेतदुत्तरं युज्यते यतः ।
तव हेतुरसिद्धोऽयं मम तेन न साधनम् ॥ १४२॥

सत्यं यदि ममैवात्र प्रतिपत्तिः फलं भवेत् ।
तदा त्वदप्रसिद्धेऽपि हेतौ मां प्रति हेतुता ॥ १४३ ॥

यदा तु ज्ञानमात्रत्वप्रतिपत्तौ भवान् मया ।
पृष्टः को हेतुरत्रेति तदैवं नोपपद्यते ॥ १४४ ॥

स्वयं नह्यगृहीतेन मत्प्रसिद्धेन वा भवान् ।
हेतुना साध्यमेतत् तु प्रतिपन्नः कथञ्चन ॥ १४५ ॥

---

यदि तु सर्वप्रमाणेष्वेव पुरुषापेक्षेष्यते सा तर्हि प्रत्यक्षेणार्थमुपल-(भ्य ? भ)मानस्य प्राप्नोति । नच मत्प्रसिद्धा युक्तिः साध्यं वा यत् प्रत्यक्षेण परिच्छिद्यते । तत्रास्ति यथात्र साध्यस्य निरालम्बनत्वस्य प्रत्ययत्वस्य हेतोः सिद्धिमिच्छसीत्याह — **यच्चेति** ॥ १४१ ॥

तस्मात् स्वयंसिद्धेनापि परासिद्धेन साध्यार्थप्रतिपत्तिर्न साहसास्पद-मित्याह — **तस्मादिति** ॥ १४२ ॥

परिहरति — **सत्यमितिद्वयेन** । अयमभिप्रायः — स्यादेतदेवं यदि मत्प्रतिपत्तिमात्रफलमेव साधनवचनं भवेत् । तथाहि — किं साधन-वचनेनापि अवधायकत्वं बुध्यध्वमित्येतावदुपदिश्येत, सिद्धश्चायं भवतां ज्ञानमात्रं जगदिति, तदा कुतः पुनरिदमवगतमिति पर्यनुयुक्ते त्वमेव जाना-सीति नैवंविधमुत्तरमुपपद्यत इति ॥ १४४ ॥

कथं नोपपद्यते अत आह — **स्वयमिति** । ज्ञानकारणमनुयुक्ते तदेव वक्तव्यं न मत्प्रसिद्धिः । एवं हि मत्प्रसिद्धिवचनमुपपद्यते यद्यगृही-तेन मत्प्रसिद्धेन वा हेतुना साध्यमेतद् भवान् स्वयं प्रतिपन्नः । प्रतिपन्न इति कर्तरि रूपम् । नत्वेतदुभयमप्यस्तीति ॥ १४५ ॥

नच व्याप्रियतेऽन्यत्र वचनं प्राश्निकान् प्रति ।
स्वनिश्चयाय यो हेतुस्तस्यैव प्रतिपादनात् ॥ १४६ ॥
मत्प्रसिद्धत्वमेतस्य कुतश्चावगतं त्वया ।
कथं चेत्थं विवक्षा ते स्वयमर्थमजानतः ॥ १४७ ॥
मयि जिज्ञासमानेऽपि बुद्धिपूर्वाभिधायिनः ।
इति ज्ञात्वा च वो वृद्धैर्भाषितोभयसिद्धता ॥ १४८ ॥
तेन यद्वन्ममैतेन त्वमाधित्ससि हेतुना ।
साध्यज्ञानं तथैवाहमज्ञानं तव दूषणैः ॥ १४९ ॥

---

किञ्च भवदीयपरार्थानुमानलक्षणानुसारेणापि स्वप्रतिपत्तिप्रकाशनफलमेव साधनवचनं येनैवमुक्तम् । परानुमानं तु स्वदृष्टार्थप्रकाशनमिति, अतोऽवश्यं स्वज्ञानकारणमवस्थापनीयमित्यभिप्रायेणाह — नचेति । स्वनिश्चयहेतोः प्रतिपादनादन्यत्र साधनवचनं न प्राश्निकान् सभ्यान् प्रति व्याप्रियते । ते हि प्रतिपाद्याः । व्युत्थितस्तु यदि वैयात्यादुपपादितमपि न बुध्यते, किमत्र विधेयम् । प्राश्निकप्रश्ननिश्चयात् तु तत्त्वमित्यनादृत्य प्रतिवादिनं प्राश्निकपदं प्रयुक्तवानिति ॥ १४६ ॥

अपिच परबुद्धेरप्रत्यक्षत्वान्मत्प्रसिद्धत्वमपि भवतां दुरधिगममेवेत्याह — मत्प्रसिद्धत्वमिति । किञ्च विदितपूर्वमर्थं विवक्षित्वा साधनवाक्यं प्रयुज्यते । तव त्वजानतः किंकृता विवक्षा । नचातत्पूर्वा वाक्यनिष्पत्तिः सम्भवतीत्याह — कथमिति । जिज्ञासमानेऽपीति । न तावदहं जिज्ञासमानः व्युत्थितत्वात् । अतस्त्वन्निग्रह एव मम सर्वथा विधेयः । यद्यपि जिज्ञासुरहं, तथापि भवतो विवक्षाकारणं नोपलभ्यते पूर्वविज्ञानाभावादिति । यत एव स्वासिद्धं वक्तुमशक्यम्, अत एव वृद्धैरपि भवदीयैरुभयसिद्धहेतुत्वं भाषितं न परसिद्धिपरमित्याह — इतीति ॥ १४८ ॥

यदि तु मत्प्रसिद्धिमात्रेण हेतुत्वं भवेत्, तेन तर्हि यथा त्वं मत्प्रसिद्धेन हेतुना मम साध्यज्ञानमाधातुमिच्छसि । एवमहं मत्प्रसिद्धैरप्यमीभिर्भवदसिद्धैर्हेत्वादिभिस्तत्तन्न्यूनतोद्भावनेन नानाविधैर्दूषणैस्तवाज्ञानमाधातुमिच्छामि । मत्प्रसिद्धा अपि हेत्वादयः तवासिद्धा इति ते भवति दूषणम् ।

यथैव च भवानीदृक् साध्यमुक्त्वास्य साधनम् ।
साध्यानुरूपमज्ञात्वा विहतः प्रतिपादनात् ॥ १५० ॥
तथैव प्रतिपाद्योऽपि तादृक् साध्यबुभुत्सया ।
मन्वानः साधनं दुष्टं ततः साध्यं न बुध्यते ॥ १५१ ॥
संवित्त्या साधनं मत्वा तत्सद्भावे दृढे स्थिते ।
साध्यस्यासम्भवादेव त्वदुक्तं नावबुध्यते ॥ १५२ ॥
तेनाशेयं न कर्तव्या मोहादपि मयेरिते ।
साधने साधनं ज्ञात्वा पर एवावभोत्स्यते ॥ १५३ ॥
विस्पष्टश्चाक्षपादोक्तो विरोधो हेतुसाध्ययोः ।
यमदृष्ट्वा परैरुक्तमदूषणमिदं किल ॥ १५४ ॥

---

को विशेषः यत् स्वयमसिद्धं साधनमुच्यते न दूषणम् । अतोऽनभिज्ञस्य परार्थानुमानप्रयोगानुपपत्तिरित्यभिप्रायेणाह — तेनेति ॥ १४९ ॥

या चेयं भवतो मृष्टाशा स्वासिद्धैर्हेत्वादिभिः किल मया साध्यं बोद्धव्यमिति, साप्ययुक्ता । तवैव ह्यतत्साधनात् । साध्यं बुध्यमानस्य ममापि प्रतिघातो भवेत् । साध्यसाधनयोरितरेतरप्रतिघातावगमादित्याह— यथेति चतुर्भिः । निगदव्याख्यानाः श्लोका इति ॥ १५३ ॥

हेतुप्रतिज्ञाविरोधाख्यमपि निग्रहस्थानमापद्यत इत्याह — विस्पष्टश्चेति । अक्षपादेन हेतुप्रतिज्ञाविरोधो निग्रहस्थानमित्युक्तम् । उदाहृतं च, शब्दो नित्यः सर्वस्यानित्यत्वादिति । नित्ये हि शब्दे न सर्वानित्यत्वं सर्वानित्यत्वे वा न तदन्तर्गतस्य नित्यत्वमिति हेतुप्रतिज्ञयोरितरेतरविरोधो निग्रहाधिकरणमिति, तदिदं भिक्षुणा दूषितम् । उक्तं च 'नायं हेतुः वैधर्म्यवचनत्वात्' । यदाह —

"दृष्टान्तोऽभिहितो ह्येष वैधर्म्येणासुशिक्षितैः ।"

इति । हेतुर्हि पक्षधर्मो भवति । नच सर्वस्यानित्यता शब्दधर्मः, कथमसौ हेतुः वैधर्म्यदृष्टान्तस्त्वसौ नित्यत्वस्य । नहि ततोऽन्यः साध्यविपक्षभाग्

१. 'ध्रे' ग. पाठः.

**ननु लोकप्रसिद्धेन पूर्वमेतेन हेतुना ।**
**साध्यसिद्धिर्ममाप्यासीत् परमार्थोऽस्य नास्तिता ॥**

**योऽधुना परमार्थेन नास्तीत्येवं प्रकाशते ।**
**कथं पूर्वमसावासीदसंश्चेत् साधनं कथम् ॥ १५६ ॥**

---

भवति । इह च नित्यता साध्या, तद्विपक्षोऽनित्यता । तद् युक्तं सर्वं वैधर्म्य-दृष्टान्त एवेति । तदत्रेदमाकूतं — यन्नित्यं न भवति तत् सर्वं, नायं सर्व-मतोऽसर्वत्वान्नित्यः शब्द इति । असर्वत्वं हेतुः, अतः सर्वस्यानित्यत्वमहेतु-रिति न हेतुसाध्ययोर्विरोध इति । पुनश्चोक्तं — वैधर्म्यवचनमपि नेदं सम-ञ्जसमभावनियमस्य विपरीतत्वात् हेत्वभावे ह्यत्र सर्वत्वे साध्याभावस्यानि-त्यत्वस्य प्रदर्शनं कृतम् । साध्याभावे तु वैधर्म्यदृष्टान्ते हेत्वभावो दर्शयि-तव्यः । व्याप्तिविपर्ययस्यानुमाने वक्ष्यमाणत्वात् । तदिहानित्यत्वस्य सर्व-त्वादिति वक्तव्ये सर्वस्यानित्यत्वादिति वचनं सुशिक्षितत्वाद् वैधर्म्यवचन-स्येति । तदेतदयुक्तं, हेतावस्मिन् विवक्षितेऽक्षपादेन हेतुसाध्ययोर्विरोधोऽभि-हितः । यत्त्वपक्षधर्मत्वान्न हेतुरिति, तद् दूषणान्तरं भविष्यति । असर्वत्वं वा कथं हेतुः, तदपीह सर्वान्तर्गतेरसिद्धमेव । अतः कृत्वाचिन्तामात्रेणेदं नैयायि-कैरुक्तं हेतावस्मिन् विवक्षिते हेतुप्रतिज्ञयोर्विरोध इति । मा भूद् वा तदुदा-हरणम् । इह तु विस्पष्टो विरोधः, यमेतमदृष्ट्वा परैर्बौद्धैरुक्तं न प्रतिज्ञाहेतुर्वि-रोधो दूषणमिति । किलशब्दोऽरुचौ । अत्रोदाहरणं विस्पष्टत्वाद् विरोधस्येति ॥ १५४ ॥

अत्र चोदयति — नन्विति । संसारावस्थायामनुमानानुमेयव्यव-हारः । अत्र च हेत्वादयो लोकप्रसिद्धा एव । लोक इति लौकिकसंवृति-सत्यमपदिशति । अतः संवृतिसत्यसिद्धेन हेत्वादिना साध्यसिद्धिरासीदेव प्राक्, परमार्थावस्थायां तु सर्वाभावमाचक्ष्महे इत्यवस्थाभेदाददोष इति ॥

परिहरति — योऽधुनेति । यदि हि तद्बाधकबलेन नास्तीत्युच्यते, प्रागपि नासीदेव । बाधकेन तत्प्रागपि प्रतिक्षिप्तं रजतमिव शुक्ताववगतिक्षणा-दारभ्य । अतः प्रागप्यसतः कथं साधनत्वमिति ॥ १५६ ॥

साधनं चेदवश्यं च परमार्थास्तिता भवेत् ।
सिद्धिर्नापरमार्थेन परमार्थस्य युज्यते ॥ १५७ ॥

न दृष्टा शशशृङ्गादेः सम्यग्ज्ञानादिहेतुता ।
बाष्पादिनाप्यधूमेन मिथ्या वह्न्यादिबोधनम् ॥

तस्मादसत्यहेतोर्या परमार्थे मतिस्तव ।
साप्यसत्या न सत्यं हि सत्याभासेन गम्यते ॥

येऽपि रेखादयो दृष्टा वर्णानां प्रतिपादकाः ।
न ते स्वेनापि रूपेण परमार्थत्ववर्जिताः ॥ १६० ॥

वर्णात्मना न सत्याश्चेत् सर्वभावेष्वयं विधिः ।
पदार्थान्तररूपेण न सत्यं किञ्चिदिष्यते ॥ १६१ ॥

---

प्राक् साधनत्वाभ्युपगमे वा परमार्थास्तित्वमापद्यत इत्याह — **सा-धनेति** । कारणमाह — **सिद्धिरिति** ॥ १५७ ॥

किमिति न युज्येत, अत आह — **न दृष्टेति** । नात्यन्तमसतः साधनत्वं दृष्टं शशविषाणवदित्यनुमानमन्तर्णीतं, क्वचिद् दृष्टस्यापि रूपस्या-न्यत्रोपचरितस्य परमार्थोपायता नास्ति । किमुतात्यन्तासतो हेत्वादेरित्या-ह — **बाष्पादिनेति** ॥ १५८ ॥

उपसंहरति — **तस्मादिति** ॥ १५९ ॥

ननु वर्णात्मना असत्यानामपि रेखादीनां परमार्थवर्णोपायता दृष्टा, अतो नैकान्तिकोऽसत्यत्वं हेतुरत आह — **येऽपीति** । विपक्षवृत्तिर्हि हेतु-रनैकान्तिको भवति । नच परमार्थोपायेषु रेखादिष्वसत्यत्वमस्ति, स्वरूप-सत्यत्वात् । तेन च रूपेण वर्णबोधोपायत्वात् । तद्दर्शिनो हि स्मृतसङ्केतस्य वर्णा बुद्धौ भवन्तीति ॥ १६० ॥

ननु भवन्तु स्वरूपसन्तः । वर्णात्मना तावदसत्या एव, अत आह — **वर्णेति** । सर्वे हि भावाः स्वरूपेण सन्तः पररूपेणासन्तः । केनचिद् विशे-षेण रेखोदाहरणमिति ॥ १६१ ॥

स्वरूपे विद्यमाने तु यद्प्येवं प्रकाशते ।
स्वरूपाभावक्लृप्तौ तु न सत्यं नाप्यसत्यता ॥ १६२ ॥
हेत्वादीनां तु भवतः स्वरूपेणाप्यसत्यता ।
तेन बाष्पादिवत् तेषामुपायत्वं न लेख्यवत् ॥ १६३ ॥
उपायानां स्वरूपं हि संवृत्यात्मकमेव नः ।
तथा च सत्यतेष्टैव स्वरूपासत्यता कथम् ॥ १६४ ॥
संवृत्या यत् स्वरूपं हि तद्वाङ्मात्रनिबन्धनम् ।
हेतुत्वं परमार्थस्य प्रतिपत्तुं न शक्नुयात् ॥ १६५ ॥
परमार्थाच्च लोकस्य न भेदे हेतुरस्ति ते ।
लौकिकोपायगम्यस्य केन स्यात् परमार्थता ॥ १६६ ॥

---

नचैष प्रकारोऽत्यन्तासतां हेत्वादीनां सम्भवतीत्याह—स्वरूप इति । असत्यमपि केनचिद्रूपेण सदेव रूपान्तरेण भवति । नहि निस्स्वभावमिति नाप्यसत्यतेत्युक्तमिति ॥ १६२ ॥

एतदेव स्फुटयति—हेत्वादीनामिति । अत्र च बाष्पादीनामिवाग्न्यादावुपायत्वं हेत्वादीनां, न परमार्थेन तु लेख्यवदित्याह—तेनेति । हेतुत्वाभावप्रतिपादनपरमिदमिति ॥ १६३ ॥

अत्र चोदयति—उपायानामिति । किमिदं निस्स्वभावत्वमुपायानामापद्यते । संवृत्यात्मका हि ते । तेन च रूपेण सन्त एवेति ॥ १६४ ॥

परिहरति—संवृत्येति । सांवृतं हि रूपं वाङ्मात्रनिर्मितं, न परमार्थोपायो भवतीति ॥ १६५ ॥

अपिच, परमार्थाल्लोकस्य संवृतिसत्यस्य भेदे न हेतुरस्ति, तद्भेदग्राहिणोऽपि ज्ञानस्य मिथ्यात्वादित्याह—परमार्थेति । अपिच यदि परमार्थोऽपि लौकिकोपायगम्यः, न तर्हि परमार्थः, लौकिकोपायगम्यत्वाद् बाष्पादिवाग्निरवगम्यमान इत्याह—लौकिकेति । पूर्वं च सत्यभेदो निराकृतः । इदानीं सांवृतस्य परमार्थोपायतेति विवेकः । नन्वसत एव श्रुत्यादिप्रपञ्चात् प्रपञ्चविलयात्मनो ब्रह्मणो निरूपणं वेदान्तविद्भिरिष्यते । यथाहुः—

**नन्वसत्यपि बाह्येऽर्थे बुद्ध्यारूढे न सिध्यति ।**
**वासनाशब्दभेदोत्थविकल्पप्रविभागतः ॥ १६७॥**

"भेदप्रपञ्चविलयद्वारेण च निरूपणम् ।"

इति ।

"विद्यां चाविद्यां च यस्तद्वेदोभयं सह ।
अविद्यया मृत्युं तीर्त्वा विद्ययामृतमश्नुते ॥"

इति । किमुक्तम् । विद्यारूपं च ब्रह्म, अविद्यारूपं च श्रुत्यादि । तदुभयमपि यः सह वेद सोऽविद्योपलक्षितं मृत्युं तीर्त्वा विद्यारूपेणोपलक्षितं ब्रह्मानन्दं प्रतिपद्यत इति । तदेवमविद्यात एव विद्याप्राप्तिरिष्यते इति । किमपराद्धमेवं ब्रुवाणैरस्माभिः । नैष नः सिद्धान्तः यदसन्नेव श्रुत्यादिप्रपञ्चो ब्रह्मणि प्रमाणमिति । तेषामपि प्रत्यक्षादिप्रमाणसिद्धानामशक्यापह्नवत्वात् । यथा हि सोऽहमिति प्रत्यक्षसिद्धः प्रत्यगात्मा, एवं तेष्विति तद्वदेव सम्यञ्चो भवितुमर्हन्ति । तस्य च पूर्वोत्तरकर्मनिरोधानुत्पादाभ्यां विगलितभोगभोगायतनस्य कैवल्यं मोक्षमाचक्ष्महे, न प्रपञ्चविलयम् । 'एकमेवाद्वितीयमि'त्यादिवेदान्तास्त्वर्थवादान्तरवद् विषयवैराग्यप्रतिपादनपरतया कथञ्चिद् गमयितव्याः । 'स एष नेति नेती'तिकरणेन स्पष्टमेव बहिर्विषयसद्भावमुपदर्शयति । एष इत्यपरोक्षनिर्दिष्टस्य ब्रह्मणो विषयविवेकमात्रं कथयति न तदभावम् । श्रुत्यादिषु चाविद्यावादो ब्रह्मणः प्रशंसार्थः । 'अपशवोऽन्ये गोश्वेभ्यः' इतिवत् पश्वन्तरेष्वपशुवादः । अतो न क्वचिद्परमार्थस्य परमार्थोपायता । अस्तु वा नित्यनिर्दोषवेदान्तसिद्धमप्रपञ्चं ब्रह्म । नतु क्षणिकसंवेदनप्रवाहात्मकं द्वैतं कुतश्चित् प्रमाणादवगच्छाम इत्यलमनेनापि ॥ १६६ ॥

प्रत्यवस्थानान्तरमिदानीं बौद्धस्योपन्यस्यति—नन्विति । एवं हि मन्यन्ते—यद्यपि बाह्यो हेत्वादिरर्थो नास्ति, तथापि बुद्ध्यारूढेनैव हेत्वादिनानुमानानुमेयव्यवहारः सेत्स्यति । अनादिवासनोपप्लाविता हि हेत्वादिविकल्पविभागा भवन्ति हेतुरयं दृष्टान्तोऽयमित्यादयः । विकल्प इति सविकल्पिकां बुद्धिमाचक्ष्महे । अतो वासनाभेदाद् बुद्धिभेदः, तद्भेदाद्धेत्वादिभेद इत्युक्तं भवति । अवश्याभ्युपगम(नियम? नीय)श्चायं भवद्भिरपि । बुद्धिनिबन्धनो धर्म्यादिभेदः । न ह्यनित्यः शब्दः कृतकत्वादिति

न्यायविद्भिरिदं चोक्तं धर्मादौ बुद्धिमाश्रिते ।
व्यवहारोऽनुमानादेः कल्प्यते न बहिः स्थिते ॥१६८॥

अस्तीदं वचनं तेषामिदं तत्र परीक्ष्यताम् ।
भेदोऽसतः कथं हि स्याद् बुद्धिशब्दप्रकल्पनात् ॥

निर्वस्तुके कथञ्चित् स्यात् प्रसवो बुद्धिशब्दयोः ।
शब्दभेदोऽपि भवतस्तदभावान्न सिध्यति ॥ १७०॥

---

परस्परं धर्मिणो वा भिन्नयोर्हेतुसाध्ययोरवगतिरस्ति । अतो ज्ञानभेदनिबन्धन एवात्र भिन्नत्वव्यवहारः । सर्वत्रैव च ज्ञानमेव भेदनिबन्धनम् । सुदूरमपि गत्वा युक्तिभिरनुसंहितो भेदो ज्ञान एव पर्यवस्यति । अतोऽस्तु तन्निबन्धन एव सर्वत्र भेदः । देशादिभेदादपि हि भेदं ब्रुवाणस्तद्भेदं पर्यनुयुक्तो ज्ञानभेदमेवालम्बते । तावतापि व्यवहारसिद्धौ किं प्रकारान्तरेण भेदोऽनुस्रियत इति । अत्राप्यग्निधूमादौ कृतकानित्यत्वविलक्षणः स्फुटो भेदावग्रहो भवति । तत्रापि न जातिभेदो निबन्धनमिति वाच्यम् । सोऽपि चाग्निधूमशब्दनिर्मित एव । नहि संवृतिकल्पनादन्येन प्रकारेण जातिभेदमुपलभामहे । अतः शब्दभेदेऽर्थविकल्पविलासिता एवाग्नित्वादय इति । इदं च बाह्यनिराकरणपरतयानास्थयोक्तम् । न शब्दभेदोऽपि विज्ञानभेदाद् विना सम्भवति । सोऽपि ज्ञानमात्रप्रभावित एवाभ्युपेत्य बाह्यहेत्वादिविकल्पविभागार्थमुक्त इति ॥ १६७ ॥

अयमेवास्मदीयतन्त्रकाराणां सिद्धान्त इत्याह— **न्यायविद्भिरिति** । न्यायविद्भिर्हि दिङ्नागाचार्यैरिदमुक्तं 'सर्व एवायमनुमानानुमेयव्यवहारो बुद्ध्यारूढेन धर्मधर्मिन्यायेन बहिः सदसत्त्वमपेक्षत इति ॥१६८॥

एतदपि दूषयति — **अस्तीति** । नासतः शशविषाणादेः शब्दनिबन्धनः तज्जनितबुद्धिनिबन्धनो वा भेदो दृष्ट इति दुरुक्तमिदमपरेषां बुद्ध्यारूढेनानुमानानुमेयव्यवहार इति ॥ १६९ ॥

अपिच अस्तु बुद्धिशब्दभेदनिबन्धनो हेत्वादिभेदः, तयोरेव तु कथमकस्मादुद्भवः । न ह्यकारणिका कार्योत्पत्तिः सम्भवति । नच शून्ये जगति

**यदि वाविद्यमानोऽपि भेदो बुद्धिप्रकल्पितः ।**
**साध्यसाधनधर्मादेर्व्यवहाराय कल्प्यते ॥ १७१ ॥**
**ततो भवत्प्रयुक्तेऽस्मिन् साधने यावदुच्यते ।**
**सर्वत्रोत्पद्यते बुद्धिरिति दूषणता भवेत् ॥ १७२ ॥**
**यश्च मन्त्रस्त्वयोक्तोऽयं धर्म्यादौ बुद्धिमाश्रिते ।**
**न बाह्यापेक्षया स स्यादसिद्ध्यादौ मयेरिते॥१७३॥**
**बुद्धिप्रक्लृप्तिसिद्धिश्च भवतां व्यवहारिणाम् ।**
**मदुक्तं दूषणं सिद्धं त्वदुक्तं तु न साधनम् ॥ १७४॥**
**बाह्यार्थव्यवहारित्वज्ञानोत्पादे स्थितेऽपि नः ।**
**कथञ्चिन्नहि कल्प्येत व्यवहारोऽर्थवर्जितः ॥ १७५॥**

---

तयोः कारणमुत्प्रेक्षितुमपि शक्यत इत्याह — **निर्वस्तुक** इति । यश्चायं शब्दभेदो हेत्वादिभेदहेतुतयोपवर्णितः, सोऽपि तदभावादनुपपन्न इत्याह — शब्देति ॥ १७० ॥

किञ्च यद्यविद्यमान एव बुद्धिमात्रकल्पितः साध्यादिभेदोऽनुमान-व्यवहाराय कल्प्यते, ततो दूषणव्यवहारोऽपि तद्वदेव स्यात् । उत्पद्यते खल्वस्मिन् साधने हेत्वादिन्यूनतोक्तिमात्रादेव दूषणबुद्धिरित्याह— **यदि-वेति** द्वयेन ॥ १७२ ॥

शक्यते च वदितुम् एवमपि सर्व एवायं दूष्यदूषणव्यवहारो बुद्ध्यारूढेन दूष्यदूषणन्यायेन, न बहिः सदसत्त्वमपेक्षत इत्याह— **यश्चेति** ॥ १७३ ॥

नन्वेवमप्यावयोरविशेष एव, यथा हि नो दूषणज्ञानमुत्पन्नम् एवं भवतोऽपि साधनज्ञानम् । अतः कथं विजयसे अत आह — **बुद्धीति** । अयमावयोर्विशेषः बुद्धिमात्रव्यवहारिणो भवतो मदुक्तदूषणं सिद्धमिति न ते पक्षः सिध्यति । त्वदुक्तं तु साधनमस्माकमसिद्धमिति न साध्यं प्रति-पद्यामह इति ॥ १७४ ॥

कथं साधनमसिद्धमत आह — **बाह्येति** । बाह्यार्थव्यवहारिणो हि वयं, न त्वमिव ज्ञानैकशरणाः । तत्र कथमसति बाह्ये बुध्यामह इति ॥१७५॥

**ननु यद्वन्मया हेतुर्नेष्यते दूषणं तथा ।**
**तेन मे दूषणाभावाददुष्टं साधनं भवेत् ॥ १७६ ॥**

**नेदानीं दूषणैः कार्यं साधनाभावतो यदि ।**
**त्वयैवास्मदभिप्रेता स्वपक्षासिद्धिराश्रिता ॥ १७७ ॥**

**नचास्ति वासनाभेदो निमित्तासम्भवात् तव ।**
**ज्ञानभेदो निमित्तं चेत् तस्य भेदः कथं पुनः ॥१७८॥**

**वासनाभेदतश्चेत् स्यात् प्राप्तमन्योन्यसंश्रयम् ।**
**स्वच्छस्य ज्ञानरूपस्य नहि भेदः स्वतोऽस्ति ते ॥**

**प्रमाणं वासनास्तित्वे भेदे वापि न विद्यते ।**
**कुर्याद् ग्राहकभेदं सा ग्राह्यभेदस्तु किंकृतः ॥ १८० ॥**

---

पुनरपि परश्चोदयति— **नन्विति** । यथा हि मे साधनमसिद्धम्, एवं दूषणमपीति न दुष्टं साधनमिति ॥ १७६ ॥

मीमांसकस्तु पाशुपतोऽयमेवंवादी यद् विहाय साधनमभावाद् दूषणस्याप्यदुष्टत्वमातिष्ठत इति सापहासमाह— **नेदानीमिति** ॥ १७७ ॥

यश्च वासनाभेदनिबन्धनो विकल्पप्रविभागो वर्णितः, सोऽपि तद्भेदनिमित्ताभावादनुपपन्न इत्याह— **नचेति** । ननु ज्ञानभेदादेव वासनाभेदो भविष्यति, कथं निमित्ताभावः । न, तद्भेदस्यैव निर्निमित्तत्वाद्, वासनानिबन्धने तु तद्भेदेऽन्योन्याश्रयत्वमित्याशङ्कया सहाह—**ज्ञानेति** । ननु स्वभावभिन्नमेव ज्ञानं वासनाभेदनिबन्धनं भविष्यति, कथमन्योन्याश्रयत्वमत आह—**स्वच्छस्येति** । स्वच्छस्य हि ज्ञानात्मनः स्वयमनुपलभ्यमानभेदस्यानादिवासनोपप्लावितनीलाद्याकारकलुषितत्वमेव भेदकारणमिति बौद्धैराश्रितम्, अतो दुरुत्तरमितरेतराश्रयमिति ॥ १७९ ॥

नन्वनादित्वादेव बीजाङ्कुरवदितरेतराश्रयपरिहारो भविष्यत्यत आह— **प्रमाणमिति** । प्रसिद्धात्मनोर्हि बीजाङ्कुरयोरनादित्वाद् भवति दोषपरिहारः । वासना त्वस्ति भिन्ना चेति न किञ्चित् प्रमाणं क्रमते । यो हि

**संवित्त्या जायमाना हि स्मृतिमात्रं करोत्यसौ।**
**क्षणिकेषु च चित्तेषु विनाशे च निरन्वये ॥ १८१ ॥**
**वास्यवासकयोश्चैवमसाहित्यान्न वासना।**
**पूर्वक्षणैरनुत्पन्नो वास्यते नोत्तरः क्षणः ॥ १८२ ॥**
**उत्तरेण विनष्टत्वान्नच पूर्वस्य वासना।**
**साहित्येऽपि तयोर्नैव सम्बन्धोऽस्तीत्यवासना ॥१८३॥**
**क्षणिकत्वाद् द्वयस्यापि व्यापारो न परस्परम्।**
**विनश्यच्च कथं वस्तु वास्यतेऽन्येन नश्यता ॥ १८४ ॥**

---

बहिर्देशसम्बद्धं प्रत्यक्षमर्थमवजानीते, स कथं वासनामनुजानाति। तद-नुज्ञाने वा किमपराद्धं भावान्तरैरिति। अपिच पूर्वानुभवप्रभावितं स्मरण-हेतुसंस्कारमेव वासनामाचक्ष्महे। तदसौ सत्यपि ग्राहकं ज्ञानमेव विविध-मुपकल्पयति। यत्तु विचित्रा बहिर्भावा भासन्ते तत् कस्य हेतोरिति न ज्ञायत इत्याह—कुर्यादिति ॥ १८० ॥

न ग्राह्यभेदे वासना कारणमित्यत्रोपपत्तिमाह—संवित्त्येति। स्मृति-हेतुर्हि वासना। नचानुभूतात् स्मृतिरधिकं मात्रयापि गोचरयति। नच बहिरत्यन्तासन्तो भावाः क्वचिदपि गृहीतपूर्वा इति न तान् वासना स्मार-यितुं प्रभवतीति। किञ्च, अतश्च वासना नोपपद्यते यत् कारणं क्षणिकानि ज्ञानानि निरन्वयविनाशीनि परस्परमसहितानि चेत्याह—क्षणिकेष्विति। यथा तावत् क्षणिकानां निरन्वयविनाशिनां च न वासना, तथोपरिष्टाद् वक्ष्यतीति ॥ १८१½ ॥

असाहित्यान्न वासनेत्युक्तार्थमेव प्रपञ्चयति—पूर्वेति। साहित्या-भ्युपगमेऽपि समवायाद्यन्यतमलक्षणसम्बन्धाभावाद् वासना नोपपद्यते। न ह्यसम्बन्धः कालागरुधूमोऽगारं वासयतीत्याह—साहित्येति ॥ १८३ ॥

क्षणिकत्वान्न वासनेत्युक्तम्, अत्र कारणमाह—क्षणिकत्वादिति। व्यापारनिबन्धनो हि वास्यवासकभावः कारकविशेषत्वात् तस्य। नच क्षणिकं पूर्वमुत्तरं वा तयोरेव व्याप्रियत इति सम्भवति। ननु जन्मैव बुद्धेरर्थ-

**अवस्थिता हि वास्यन्ते भावा भावैरवस्थितैः ।**
**अवस्थितो हि पूर्वस्माद् भिद्यते नोत्तरो यदि ॥१८५॥**

**पूर्ववद् वासना तत्र न स्यादेवाविशेषतः ।**
**भङ्गुरे पूर्वसादृश्याद् भिन्नत्वाच्चास्ति वासना ॥१८६॥**

---

परिच्छेदे व्यापार इत्युक्तम्, तद्वद् वासनायामपि भविष्यति । न, दुष्टत्वादुपपत्तेः । दृश्यते खलूत्पद्यमानै(रे?)व बुद्धिरर्थं परिच्छिन्दन्ती । नह्यसौ क्षणमप्युदास्ते । न चार्थपरिच्छेदादन्यत्र व्याप्रियत इति युक्तम् । जन्मनैव व्यापारेण कारकत्वं, न ज्ञानान्तरं वासयन्ती जायमाना बुद्धिर्दृश्यत इति कथं वासनायां जन्मना कारणत्वम् । नच जन्मापि किञ्चिद् बौद्धा मन्यन्ते यन्निबन्धनः कारणभावो भवेत् । अस्माकं तु समवायिकारणदशाविशेषः कोऽपि कार्यस्य जन्मेति मतम् । स च जायमानान्नात्यन्तभिन्न इति युक्तं क्रियाकार(का? क)भाव इति । निरन्वयविनाशित्वान्न वासनेत्युक्तम् । तत्र कारणमाह — विनश्यदिति । यद्धि स्वलक्षण एव निरुद्धं न केनचिद्रूपेणान्वेति न तत्तदीयं वा रूपं वास्यत इति सम्भवति । तथा वासकमपि यन्निरन्वयविनष्टं तत् केनात्मना परं वासयति । अवस्थिता एव हि भावा गृहादयोऽवस्थितैरेवागरुधूमादिभिर्वास्यन्त इति दृष्टम् । अयं चावीतहेतुरुन्नेतव्य इति ॥ १८४$_{\frac{1}{2}}$ ॥

अत्र चोदयति— **अवस्थित** इति । अवस्थान्तरोपजननापाययोस्तदभिन्नस्यावस्थावतो नाशोत्पादाभ्यामवस्थितत्वानुपपत्तिः । अवस्थितत्वे वा पूर्वावस्थायामिवोत्तरत्रापि अवासनाप्रसङ्ग इति । अस्मन्मते तु भङ्गुरमुत्तरं पूर्वं च ज्ञानं, नावस्थितः कश्चिदेको ज्ञाताप्रच्युतप्राच्यरूपः । तदिह भङ्गुरपक्षे पूर्वसादृश्यात् ततो भिन्नस्योत्तरस्य युक्तैव वासना । एषैव तु वासना यत् पूर्वसारूप्यमुत्तरस्य । यथा लाक्षारसोपसिक्ते बीजपूरकुसुमे फलं तद्रूपं जायमानं तत्त्वान्वितमित्युच्यते । यत्तु व्यापारविरहादकारकत्वमुक्तं, तदयुक्तम् । न व्यापारतः कारकत्वम्, अपितर्हि पूर्वभावात् । भावातिरेकिणो व्यापारस्यानुपपत्तेः । यच्चेदं पूर्वस्योत्तरकारणत्वमिदमेव वासकत्वं पूर्वेणो-

नैतदस्त्यनुरूपं तु क्षणिकत्वे धियां तव ।
पूर्वज्ञानं त्वनुत्पन्नं कार्यं नारभते क्वचित् ॥ १८७ ॥

न विनष्टं न तस्यास्ति निष्पन्नस्य क्षणं स्थितिः ।
तेनोत्पन्नविनष्टत्वान्नास्त्यारम्भक्षणोऽपि हि ॥ १८८ ॥

निरन्वयविनष्टत्वादानुरूप्यं कुतः पुनः ।
न तदीयोऽस्ति कश्चिच्च धर्म उत्तरबुद्धिषु ॥ १८९ ॥

समानधर्मतां मुक्त्वा नानुरूप्यं च विद्यते ।

---

त्तरं वास्यत इति । कोऽर्थः । स्वरूपं जन्यत इति । अतो भङ्गुरवादिनामेव वासनोपपत्तिमती न स्थिरवादिनामित्याह — भङ्गुर इति ॥ १८६ ॥

तदिह स्वमतसाधनमुपेक्ष्यैव तावत् परमतदूषणमभिधीयते । दूषिते हि तस्मिन् सुखेन सिद्धान्तोऽभिधीयते । तत्र यत्तावदुक्तं सद्रूपज्ञानजनकत्वमेव वासनेति । तदयुक्तम् । यदि हि पूर्वज्ञानमुत्तरस्य जनकं भवति, ततोऽनुरूपं विरूपं वा जनयति । न तदुत्तरस्य जनकम् । अनुत्पन्नस्यासतो जनकत्वायोगात् । एवं विनष्टस्यापि, अजातातिवृत्तयोरनतिभेदात् । नच निष्पन्नस्य क्षणमप्यवस्थानमस्तीति कदा जनयिष्यतीति जनकत्वानुपपत्तौ दूरोत्सारितमनुरूपजननम् । नहि निरन्वयविनष्टस्य किञ्चिदनुरूपं सम्भवति, धर्मान्वयो हि आनुरूप्यम् । न पूर्वधर्मान्वय उत्तरज्ञानेऽस्ति, तदुपगमे निरन्वयविनाशायोगात् । नच समानधर्मतामन्तरेणास्ति स प्रकारो येनानुरूप्यं भवतीति । तदेतत् सर्वमाह — नैतदस्तीति सार्धतृतीयेन । ननु पूर्वभावित्वैव कारकत्वमित्युक्तं किं क्षणान्तरावस्थानेन । नच व्यापारकारणभावः येन तत्सम्बन्धार्थं क्षणान्तरावस्थानमिष्यते तदभावादित्युक्तमेव । मैवम् । नहि पूर्वभाविताभात्रं कारणत्वमिष्यते । मा भूद् गवाश्वस्यापि पौर्वापर्यमात्रात् कार्यकारणभाव इति पौर्वापर्यनियमे तु कार्यकारणत्वम् । नचासौ क्षणिकेषु सम्भवति । व्यापारस्तु प्रत्यक्षादिप्रमाणको नापह्नोतुं शक्यत इति ॥ १८९$\frac{1}{2}$ ॥

---

१. 'णकत्वम्' क. पाठः.

यदि स्यादानुरूप्याच्च वासना गोधियो यदा ॥१९०॥
हस्तिबुद्धिर्भवेत् तत्र वैलक्षण्यान्न वासना ।
ततः परं च गोज्ञानं निर्मूलत्वान्न सम्भवेत् ॥ १९१ ॥
सर्वं विलक्षणं ज्ञानं न स्यादेव विलक्षणात् ।
बाह्यार्थानुग्रहाभावात् पारार्थ्येनावशीकृताः ॥ १९२ ॥
निरन्वयविनाशिन्यः कुर्युः कार्यं कथं क्रमात् ।
विनाशे कारणस्येष्टः कार्यारम्भश्च नान्यथा ॥ १९३ ॥
तत्रैव ज्ञाननाशेन विनष्टाः सर्ववासनाः ।

---

दूषणान्तरमाह — यदीति सार्धेन । यद्यपि ह्यानुरूप्याद् वासनेत्युच्यते यदा तर्हि गोबुद्धेरनन्तरं हस्तिबुद्धिरुत्पद्यते तत्रैव वैलक्षण्याद् वासना न स्यात् । ततोऽपि परस्ताद् गोज्ञानं निर्बीजं न सम्भवेदिति । प्रदर्शनार्थं च गोहस्तिज्ञान उक्ते सर्वमेव विलक्षणाद् विलक्षणज्ञानं न स्यादित्याह — सर्वमिति ॥ १९१ ॥

एवं तावदानुरूप्यवासनापक्षो निराकृतः । इदानीं पुनरपि ज्ञानातिरिक्तवासनापक्षमेवोपसङ्क्रम्य दूषणान्तरमाह—बाह्येति । बाह्यार्थवादिनां हि पूर्वज्ञानजनिता आत्मस्था वासनाः किञ्चिदेव सदृशदर्शनाद्यपेक्ष्य लब्धोद्बोधाः कार्यं जनयन्ति क्रमेणेति युक्तम् । ज्ञानमात्रवादिनस्तु न किञ्चिद् वासनानां कार्यजननेऽनुग्राहकमस्ति यदपेक्षया विलम्बन्ते । अतो युगपदेव सर्वाः सर्वं कार्यमारभेरन्निति न क्रमेण ज्ञानानि दृश्येरन् । एकदैव विश्वज्ञानमुत्पन्नमिति क्षणान्तरे न किञ्चित् स्यात् । नचासां किञ्चिद्रूपमन्वेति यत् पुनः कार्यं जनयेत् । निरन्वयविनाशित्वान्न क्वचिदन्यत्र वासनानां पारार्थ्यं यथास्माकमात्मनि, संस्कार्यान्तराभावात् । अतः पारार्थ्येन वशीकाराभावादपि न क्रमो युक्तः । पारार्थ्येन ह्यस्माकमिव बोद्धुरवधानाद्यपेक्षया स्मृतिक्रम इव ज्ञानक्रमो भवेदपि । न त्वेतत् सर्वमस्तीति कार्यक्रमानुपपत्तिरिति ॥ १९२½ ॥

किञ्चैता वासनाः क्वचिदाश्रिता न वा । यद्याश्रिताः, ज्ञानातिरिक्तस्य

**तेन सर्वाभ्य एताभ्यः सर्वाकारं यदुत्थितम् ॥ १९४ ॥**
**ज्ञानमेकक्षणेनैव विनाशं गन्तुमर्हति।**
**यद्याश्रयविनाशेऽपि शक्त्यनाशोऽभ्युपेयते ॥ १९५ ॥**
**क्षणिकत्वं च हीयेत नचारम्भोऽन्यथा भवेत्।**
**वासनानां प्रवाहोऽपि यदि ज्ञानप्रवाहवत् ॥ १९६ ॥**
**वासनातस्ततो ज्ञानं न स्यात् तस्माच्च वासना।**
**कुर्यातां तुल्यमेवैते नान्योन्यं तु कदाचन ॥ १९७ ॥**
**नान्यो विलक्षणो हेतुर्येनान्यादृक् फलं भवेत्।**
**तस्मात् संवृतिसत्यैषा कल्पिता नास्ति तत्त्वतः ॥**
**नचेदृशेन भावेन कार्यमुत्पद्यते क्वचित्।**

---

कस्यचिदभावात् तदाश्रिता वाच्याः। तत्रैकज्ञाननाशे सकलतदाधारवासना-विनाशः। कारणविनाशादेव कार्यारम्भ इति वः सिद्धान्तः, प्रकारान्तरकारणत्वायोगात्। विनश्यदेव हि कारणं कार्यं जनयतीति युगपन्नश्यन्तीभिर्वासनाभिः सकृदेव सर्वाकारज्ञानमुत्थापितं तथावस्थितं च एकदैवैकक्षणे विनष्टमिति क्षणान्तरे न किञ्चिद् भवेदित्याह — **विनाश इति** द्वयेन ॥ १९४½ ॥

यदि त्वाश्रयभूतज्ञानविनाशेऽपि शक्तिर्वासना न नश्यन्तीत्युच्यते, ततः क्षणिकत्वसिद्धान्तहानिः। स्थिरस्य च क्रमयौगपद्याभ्यामर्थक्रियानुपपत्तेः कार्यानारम्भप्रसङ्ग इत्याह — **यदीति** ॥ १९५½ ॥

यदि तु स्वतन्त्रा एव ज्ञानवद् वासनाः प्रवृत्ता इत्युच्यते, ततो ज्ञानवासनयोरितरेतरकार्यकारणभावानुपपत्तिरित्याह — **वासनेति** ॥ १९६½ ॥

किमिति न स्यादत आह — **कुर्यातामिति**। सदृशमेव हि तदा ज्ञानवासने कार्यमारभेयातां ज्ञानं ज्ञानं वासना वासनां न पुनरन्योन्यमिति। ननु विजातीयकारणोपनिपाताद् विसदृशकार्योत्पादो भविष्यत्यत आह — **नान्य इति**। द्वयातिरिक्तवस्त्वभावादिति भावः ॥ १९७½ ॥

अतः संवृतिसत्यरूप इव वासना कल्पिता न परमार्थतः काचिद्-

**यस्य त्ववस्थितो ज्ञाता ज्ञानाभ्यासेन युज्यते ॥१९९॥**

**स तस्य वासनाधारो वासनापि स एव वा ।**

**कुसुमे बीजपूरादेर्यल्लाक्षाद्युपसिच्यते ॥ २०० ॥**

**तद्रूपस्यैव सङ्क्रान्तिः फले तस्येत्यवासना ॥ २००½ ॥**

**युक्त्यानुपेतामसतीं प्रकल्प्य**
**यद्वासनामर्थनिराक्रियेयम् ।**
**आस्थानिवृत्त्यर्थमवादि बौद्धै-**
**र्ग्राहं गतास्तत्र कथञ्चिदन्ये ॥ २०१½ ॥**

इति निरालम्बनवादः ॥

---

स्तीत्याह — तस्मादिति । नचैवञ्जातीयकं कस्मैचित् कार्याय घटत इति प्रागेव वर्णितमित्याह — नचेति ॥ १९८½ ॥

स्वमत इदानीं वासनामुपपादयति — यस्य त्विति । अवस्थितो हि ज्ञाता यज्ज्ञानाभ्यासेन वासनाधारो भवति तद् युज्यते । क्षणिकं तु न वासयितुं शक्यम् । नच तद्वासना प्रयोजनवती, क्वचिदुपयोगाभावात् । न च वासितः पूर्वावस्थातोऽत्यन्तं भिद्यते, येनान्यत्वं प्रतिपद्यते । नच प्राग्वदविशिष्टः, येन वासना न स्यात् । नचावस्थान्तरोत्पादेऽवस्थितत्वानुपपत्तिः, पूर्वापरयोरवस्थयोरनुगतस्य बोद्धुः प्रत्यभिज्ञानात् । तदिहावस्थातद्वतोरभेदविवक्षायां पूर्वज्ञानाहितसंस्कारः पुमानेव वासना भवेत् । भेदविवक्षायां तु तदाधार इति ॥ १९९½ ॥

यत्त्वानुरूप्यवासनापक्षे लाक्षोपसिक्तं बीजपूरकुसुममुपवर्णितं, तत् तद्रूपसङ्क्रान्तेरुपपन्नम्, नतु ज्ञानस्य किञ्चिद्रूपं ज्ञानान्तरं सङ्क्रामति निरन्वयविनाशित्वादित्युक्तमेवेत्याह — कुसुमेति तस्यान्तेन । प्रकरणार्थमुपसंहरति — इत्यवासनेति ॥ २००½ ॥

किञ्चेयं वासना तत्त्वदर्शिभिर्बौद्धैर्वस्तुतो वर्णितेति नेदं सम्भावयामः । असतीमेव तु युक्त्यानुपेतां युक्तिशून्यां वासनां विकल्प्य विषयेष्वास्थां

**एवमुक्तेऽनुमानस्य ज्ञानमाश्रित्य दूषणे ।
ज्ञानप्रवृत्त्यशक्त्या तु परः प्रत्यवतिष्ठते ॥ १ ॥**

---

निवर्तयितुमर्थनिराकरणमुक्तम् 'एकमेवाद्वितीयम्' इत्याद्युपनिषद्भिरिव । तत्रैव त्वर्वाचीनानां भ्रान्त्या सिद्धान्तावग्रह इति निराकृतं वादिनमाश्वासयतीति — **युक्त्येति** ॥ २०१½ ॥

इत्युपाध्यायसुचरितमिश्रकृतौ काशिकाटीकायां
निरालम्बनवादः समाप्तः ॥

---

अथ शून्यवादः ।

अत्र भाष्यं — 'शून्यस्तु । कथम् । अर्थज्ञानयोराकारभेदं नोपलभामहे । प्रत्यक्षा च नो बुद्धिः । अतस्तद्भिन्नमर्थरूपं नाम न किञ्चिदस्तीति पश्यामः' इति । तत्र यः शून्यो येन च शून्यः तदुभयानुपादानात् शून्यस्त्विति प्रतिज्ञावचनमसङ्गतार्थम् । यदि तु पूर्वसाधनवाक्यगतप्रत्ययशब्दानुषङ्गेण शून्यः प्रत्ययः तद्भिन्नमर्थरूपं नाम न किञ्चिदस्तीति चोत्तरग्रन्थानुसारेणार्थेन शून्य इति व्याख्यायते, ततस्तेनैव गतार्थत्वमत आह — **एवमिति** । अयमेवात्र प्रतिज्ञार्थः प्रत्ययोऽर्थेन शून्य इति । न च गतार्थत्वं, प्रत्यवस्थानहेतुभेदात् । स एव निरालम्बनवादी नास्तिकः प्रत्यक्षादिविरोधदूषितस्वसाधनो दूषणपरिहारेणेदानीं प्रत्यवतिष्ठते । बाह्यार्थग्राहिज्ञानाश्रयणेन हि प्रत्यक्षादिविरोधोऽभिहितः । तत्रेदमुच्यते । न ज्ञानं बहिरर्थे प्रवर्तितुं शक्तमसम्बन्धात् । असम्बन्धप्रकाशने चातिप्रसङ्गात् । एकरूपोपलब्धेश्च ज्ञानप्रवृत्तिविषयासिद्धेः । एकं हीदं नीलमिति नीलं प्रकाशते । तदेकमेव युक्तम्, विभागानवगमे तदभ्युपगमायोगात् । तदिदमुक्तम् 'अर्थज्ञानयोराकारभेदं नोपलभामहे' इति । अत एवायमनादिकालीनवासनोपप्लावितनिखिलनीलाद्याकारप्रकाशः । नात्र केनचिद् बाह्यमवस्थाप्येत, येन तदपलापे प्रत्यक्षादिविरोधो भवेत् । अतः स एवायं पक्षो दूषणपरिहारेण पुनरनुप्राणितः । तदेतत् प्रागप्युक्तं —

"प्रत्यक्षबाधने चोक्ते पश्चात् तच्छक्त्यवेक्षणात् ।"

इति ॥ १ ॥

**यत् तावन्मन्यमानेन प्रत्यक्षं भवतोच्यते ।**
**दूषणं तद्विरोधादि तदिदानीं परीक्ष्यताम् ॥ २ ॥**
**प्रवर्तितुं हि किं शक्तं स्तम्भाद्यर्थे बहिः स्थिते ।**
**अथवात्मांश एवैतद् ग्राह्ये क्षीणं न वस्तुनि ॥ ३ ॥**
**तद्यद्येतेन बाह्योऽर्थो गृह्यते दूषणं ततः ।**
**त्वदुक्तं सर्वमात्मांशे ग्राह्ये तन्नोपपद्यते ॥ ४ ॥**
**तत्र तावदिदं सिद्धं सर्वप्राणभृतामपि ।**
**ग्राह्यत्वं नीलपीतादिदीर्घाद्याकारवस्तुनः ॥ ५ ॥**

---

अत्र पूर्वपक्षं विवक्षन् संवित्परीक्षां तावदवतारयति—**यत् ताव-दिति** । यद् यादृशं बाह्यार्थग्राहि प्रत्यक्षं मन्यमानेन भवता मीमांसकेन प्रत्यक्षविरोधादिदूषणं निरालम्बनसाधनस्योच्यते, तदिदानीं परीक्ष्यताम् । प्रत्यक्षपरीक्षामुखेन चात्र संविन्मात्रपरीक्षैवोपक्षिप्ता । सर्वसंविदामेव बहि-र्विषयत्वानभ्युपगमात् । मुख्यतया तु प्रत्यक्षपरीक्षोपन्यास इति ॥ २ ॥

कीदृशी पुनरियं परीक्षेति तत्स्वरूपं दर्शयति — **प्रवर्तितुमिति** । किमिदं प्रत्यक्षं बाह्ये प्रवर्तितुं शक्तम् आहोस्वित् स्वांशपर्यवसायीतीदृशी परीक्षा । परीक्षा च संशय्य पूर्वोत्तरपक्षबलनिरूपणमभिधीयते । तदनेन प्रथमस्य परीक्षापर्वणः स्वरूपमुपन्यस्तमिति वेदितव्यमिति ॥ ३ ॥

आह — वक्ष्यति भवान् संवित्परीक्षाम् । किमस्याः प्रयोजनमिति वक्तव्यम् । अप्रयोजनस्य हि सन्दिग्धस्य काकदन्तवदपरीक्षणीयत्वादत आह — **तद् यदीति** । अयमभिप्रायः—सर्वपूर्वाक्षेपेणायं वाद उद्भवति । सर्वाक्षेपेषु च पूर्वाधिकरणस्यैव प्रयोजनम् । यथा वक्ष्यति — 'आक्षेपे पूर्वा-धिकरणस्ये'ति । तद् यदि बाह्यार्थग्राहि प्रत्यक्षमुपपादयितुं शक्ष्यामः, ततो दूषणसिद्ध्या बाह्यार्थपरं वक्ष्यामः । यदि त्वात्मांश एव सर्वसंविदां ग्राह्यो भविष्यति, ततो दूषणबाधनात् साधनसिद्धौ नास्तिकस्य बाह्या-पलापः सेत्स्यति । तदियं बाह्यार्थसिद्धावेव परीक्षोपयुज्यत इत्यवतार्यत इति ॥ ४ ॥

सा पुनरियमनाश्रया संविच्छक्तिपरीक्षेति नास्तिकैकदेशिनः प्रत्यव-

**न चाप्याकारभेदेन ज्ञानज्ञेयावधारणा।**
**नचान्यतरधर्मत्वं विस्पष्टं तत्र गृह्यते ॥ ६ ॥**

तिष्ठन्ते । ते हि ग्राह्यवैधुर्यदुःस्थिताः संविदोऽपि न सन्तीति वर्णयाम्बभूवुः । अतः शून्ये संसारे किं कुत्र प्रवर्तितुं शक्तमशक्तं वेति परीक्ष्यते । अत आह— तत्रेति । अयमभिप्रायः — नायमुभयापलापः शक्यो वक्तुम् । सर्वप्राणिनामविगानसिद्धत्वान्नीलाद्याकारप्रतिभासस्य । इदं तु चिन्तनीयं सर्वसंविदामेवौपाधिको नीलिमा स्वाभाविको बाह्यस्येति । तुच्छे तु संसारे निर्बीजप्रतिभासो नावकल्पते । अतः परीक्षणीयमिदं किं ज्ञानमेवानादिवासनोपप्लावितनीलाद्याकारमात्मगोचरमेवेदं प्रकाशते, परमार्थसन्तं वा बाह्यमर्थं प्रतिपादयितुं समर्थमिति । यदि तत्तावदुपस्थापयति, अतस्तद्बलभुवा प्रमाणान्तरेण तदपि सिध्यतीति । नीलपीतादिदीर्घादीति विविधाकारोपन्यासेन पूर्वपक्षबीजं दर्शयति । नायं व्यवस्थितैकस्वभावो नीलादिराकारो दृश्यते, अव्यवस्थितस्यापि दीर्घादेरौपाधिकस्य दर्शनात् । तात्त्विके वाव्यवस्थानुपपत्तिरिति । एतच्चोपरिष्टाद् व्यक्तीकरिष्यतीति ॥ ५ ॥

नन्वेवमस्तु यथाप्रतिभासमुभयं, तथापि कः परीक्षावसरः । नहि प्रत्यक्षसिद्ध एवोभयस्मिन् परीक्षा युक्ता । अत आह — नचेति । अयमभिप्रायः — सिध्यत्युभयं यदि ज्ञानज्ञेययोराकारभेदो दृश्यते । तदा हि विविक्ताकारमुभयं भासमानं न नेति शक्यमपलपितुम् । एक एव तु नीलादिराकारो भासते । अतः कथमुभयमविवादसिद्धं भवति यन्न परीक्ष्येत । सूक्ष्मः खल्वयं पण्डितैरुपवेदनीयोऽर्थो न्यायः येनैकत्राकारे भासमानेऽन्यदवस्थाप्यते । नायमपरीक्षकाणां सिध्यति । तदिदमुक्तम् 'अर्थज्ञानयोराकारभेदं नोपलभामहे' इति भाष्ये । अतो न प्रत्यक्षैकप्रमाणिका द्वैतसिद्धिरिति परीक्षावतरणीया । यथाच नोभयं प्रत्यक्षं तथोपरिष्टाद् वक्ष्याम इति । नन्वेवमाकारभेदानवसाये ज्ञानार्थयोरन्यतरस्य यस्यैवायमाकारो दृश्यते तस्यैवायमभ्युपगन्तुमुचितः, किमत्र परीक्षणीयम् अत आह — नचेति । भवेदेवं यदि ज्ञानार्थयोरन्यतरस्यायमाकार इति विशदतरमवगम्येत । न त्वन्यतरस्य धर्मता तस्य विस्पष्टा । अतो ज्ञानं वा नीलमर्थो वेति युक्तैव परीक्षेति ॥ ६ ॥

**गृह्यमाणस्य चास्तित्वं नाग्राह्यस्याप्रमाणकम् ।**
**तस्मादाकारवद् वस्तु ग्राह्यत्वाद् विद्यते ध्रुवम् ॥**

**अतः परीक्ष्माणानां ज्ञानमाकारवद् यदि ।**
**तन्मात्रे च प्रमा क्षीणा ततो नास्त्यर्थकल्पना ॥ ८॥**

**यदि वाकारवत्ता स्याद् बाह्यस्यैवेह वस्तुनः ।**
**तदस्ति गृह्यमाणत्वाद् तत्सिद्ध्यैवास्ति धीरपि ॥**

---

नन्वसत्यप्याकारभेदावगमे द्वयोरन्यतरसिद्ध्यैवार्थादितरत् सिध्यति । तथाहि — न तावज्जडस्यासति प्रकाशान्तरे प्रकाशः सिध्यतीति तत्सिद्धिः । अकर्मकज्ञानानुपपत्तेश्च 'ज्ञानाद् ज्ञेयसिद्धिरि'ति द्वैतवाद एव साधीयान् किं परीक्षयात आह — **गृह्यमाणस्येति** । अयमभिप्रायः — यदेतन्नीलमित्यत्र ग्रहणे साक्षात्कारिणि प्रकाशते, तस्यैवास्तित्वं नेतरस्येति सौगता भ्राम्यन्ति । अप्रत्यक्षसिद्धेरप्रमाणकत्वात् । तथाहि — न तावदान्तरज्ञानाद् बहिर्ज्ञेयसिद्धिः, असम्बन्धात् । असम्बन्धप्रकाशने चातिप्रसङ्गात् । ज्ञेयाच्च ज्ञानसिद्धेरप्रमाणकत्वमनन्तरमेव वक्ष्यामः 'ग्राहकं निष्प्रमाणकमि'ति । अतः प्रत्यक्षावभासिनोरेवोभयोरात्मलाभः सम्भवतीति । न चाकारभेदोपलम्भोऽस्तीत्युक्तम् , अतो न स्फुटा द्वैतसिद्धिरिति परीक्षा प्रतिपादयितव्येति भावः । यतश्च गृह्यमाणस्यास्तित्वं, तस्मादेकमेवेदमाकारवद् वस्त्विदं नीलमिति गृह्यते तदेकमेवापद्यते, न तु तत्त्वान्तरमाकर्षतीत्यभिप्रायेणाह — **तस्मादिति** ॥ ७ ॥

एवञ्च परेषु भ्राम्यत्सु नापरीक्ष्यनिरूपणं कर्तुं शक्यम् । तद् यदि नः परीक्ष्माणानां परोक्ताभिर्युक्तिभिर्ज्ञानमेवाकारवदिति समर्थनमभविष्यत् ततस्तन्मात्र एव प्रत्यक्षप्रमा क्षीणेति नार्थोऽवकल्पिष्यते । अथ तु बाह्यमेव वस्त्विदमिति प्रतिभासानुसारेणाकारवदिति समर्थ्यते, ततस्तत्तावत् प्रत्यक्षगृह्यमाणमस्तीति स्थिते तत्सिद्ध्यन्यथानुपपत्त्यैव वक्ष्यमाणप्रकारे(ण) बुद्धिसिद्धौ मम द्वैतं सिध्यतीत्यभिप्रायेणाह — **अत इति द्वयेन** ॥ ९ ॥

किं तावदत्र युक्तं स्याज्ज्ञानमाकारवत् कुतः ।
एकमाकारवद्वस्तु ग्राह्यमित्यध्यगीष्महि ॥ १० ॥

तद् यद्याकारवान्नर्थो बाह्यः कल्प्येत तस्य च ।
ग्राह्यत्वमन्यथा न स्यादिति ग्राहककल्पना ॥ ११ ॥

तेनाकारवतः क्लृप्ताद् ग्राह्यादाकारवर्जितम् ।
वस्त्वन्तरं प्रकल्प्यं स्याद् ग्राहकं निष्प्रमाणकम् ॥

---

एवं तावत् प्रत्यक्षपरीक्षां प्रस्तुत्य तत्स्वरूपप्रयोजनारम्भाक्षेपसमाधानाद्युक्त्वा पूर्वपक्षं ग्रहीतुकामो मीमांसकः स्वगोत्रानुसारेण स्वयमालोचयति—किमिति स्यादन्तेन । इदानीं पूर्वपक्षं गृह्णाति —ज्ञानमाकारवदिति । कथं पुनरिदमिति विस्पष्टे परप्रकाशे प्रत्यगात्मन्याकारवत्त्वमभिधीयत इति सिद्धान्ताभिप्रायेण पृच्छति — कुत इति । अयं च 'कथमि'ति भाष्यप्रश्नानुसारेण प्रश्नो व्याख्यातव्य इति । पुनरपि 'अर्थज्ञानयोराकारभेदं नोपलभामहे' इति भाष्याभिप्रायेणैव ज्ञानस्याकारवत्तायामुपपत्तिमाह — एकमिति । अयमभिप्रायः—एकमेव हि नीलाद्याकारं तत्त्वमधिगतवन्तो वयम् । अतस्तन्मात्रमेवाश्रयामः, न पुनरुभयमाश्रयितुमुत्सहामह इति ॥ १० ॥

नन्वस्त्वेकमाकारवत्, तथापि कुतोऽयं निश्चयः ज्ञानमाकारवन्नार्थ इत्यत आह — तद्यदीति । यदि बाह्यमेव वस्त्वाकारवदिष्यते, ततस्तस्य जडस्य प्रकाशायोगाद् ग्राहकान्तरं कल्पनीयमापद्येत । ज्ञानं तु प्रकाशस्वभावमनपेक्षितप्रकाशान्तरमेव साक्षात्कारि प्रकाशत इति नानुपपन्नम् । अतो ज्ञानमेवाकारवदित्यभिप्रायः ॥ ११ ॥

ननु प्रमाणबलादापतन्ती ग्राहकान्तरकल्पना युक्तैवात आह — तेनेति । अयमभिप्रायः—भवेदेवं यदि प्रमाणवती कल्पना भवेत् । निष्प्रमाणं तु निराकारं वस्तु ज्ञानाभिधानमाकारवतो बाह्यात् कल्पनीयं भवेत् । बाह्यं हि तेनाविदितप्रति(ब ? सम्ब)न्धं न तत्तावदनुमापयति, अतिप्रसङ्गात् । नच नित्यपरोक्षज्ञानवादिनः क्वचिदपि बुद्ध्या व्याप्तिसिद्धिः । अपिच अर्थो

ज्ञानानुमाने लिङ्गमर्थधर्मो वा । पूर्वस्मिन् कल्पे व्यभिचारी हेतुः, असत्यपि ज्ञानेऽर्थभावात् । अज्ञातस्य च लिङ्गतानुपपत्तिः एकदेशदर्शनादित्यभ्युपगमात् । ज्ञातस्तु नासति ज्ञानज्ञाने लिङ्गं भवति, अगृहीतविशेषणस्य ज्ञातत्वायोगात् । ज्ञातो हि लिङ्गं न स्वरूपेण, व्यभिचारादित्युक्तम् । किञ्चेदं ज्ञातत्वम् अन्यदतो ज्ञानसम्बन्धात् । तदवश्यं ज्ञानं जिज्ञासमानस्यापन्नमग्रे ज्ञानसंवेदनं ज्ञानमज्ञानं वा ज्ञातस्य । ननु न ब्रूमः स्वरूपेणार्थो लिङ्गं ज्ञानविशिष्टो वा । व्यक्तस्तु विषयो लिङ्गम् । ननु सा व्यक्तिबुद्धिरेव विषयस्य, तदसिद्धौ तदुपाधिको व्यक्तो विषयः कथं हि सेत्स्यति । न व्यक्तिबुद्धिरर्थात्मेति चेत्, स बुद्धिजन्मा न वा । न तावत् तज्जन्मा, असम्बद्धया बुद्ध्यार्थे धर्मान्तराधानायोगात् । अतज्जन्मनश्चातल्लिङ्गत्वात्, हेतुतद्वतोरसति तादात्म्येऽप्रतिबन्धात् । यथाहुः — 'स किं वा बुद्धिजन्मापि न बुद्धिं गमयेत् प्रतिबन्धाभावात्' इति । अर्थधर्मश्चाज्ञातुरपि साधारणः अविशेषात् परबुद्धिमप्यनुमापयेत् । उक्तं च — 'अर्थात्मनश्च साधारणत्वादन्यबुद्धेरप्यनुमानप्रसङ्गः' इति । स्यादेतत् । नेदमनुमानम्, अर्थापत्तिस्तु । साचागृहीतसम्बन्धस्यापि जायत एवेति । तन्न तावत् प्रमाणान्तरम् । यथाहुः — 'तद् द्विविधं सम्यग्ज्ञानं प्रत्यक्षमनुमानं चे'ति । प्रमाणस्य सतोऽत्रैव शब्दादेरन्तर्भावात् प्रमाणे एवेति च । अस्तु वा प्रमाणान्तरम् । कयानुपपत्त्यार्थो ज्ञानं गमयति । स हि स्वकारणसामग्रीतो लब्धात्मा । किं तस्यासति ज्ञाने नोपपद्यते । अस्ति खल्वसावज्ञातोऽपि । सत्यं, ज्ञातता तु तस्यानुपपन्ना । नासावन्या ज्ञानसम्बन्धादित्युक्तमेव । अर्थधर्मत्वे चातिप्रसङ्गो वर्णितः । स प्रमाणान्तरेऽपि समानः । परस्परस्याप्यर्थगतानुपलभ्यमानधर्मदर्शिनः परबुद्ध्यर्थापत्त्युपपत्तेः । अपिच प्रमाणान्तरप्रतीघातोऽनुपपत्तिः । तत्र केन प्रमाणेन ज्ञातो विषयः प्रतिहन्यते, यज्ज्ञानकल्पनयोपपद्येत । अतो नाप्रत्यक्षा बुद्धिः सिध्यतीति । यस्तु वदति सत्यमप्रत्यक्षा धीर्न सिध्यति । तद्वदेव त्वर्थोऽपि प्रत्यक्षसिद्ध एव । एकस्मिन्नेव हि प्रतिभासे मेयमातृप्रमाप्रकाशः नीलमहं जानामीति । अतः प्रत्यक्षबलसिद्धमेव द्वैतमिति । तदुपरिष्टान्निराकरिष्यामः 'नचोपलब्धिरस्तीहे'ति । अतोऽर्थाकाराभ्युपगमे निष्प्रमाणकं वस्त्वन्तरं कल्पनीयमिति सूक्तमिति ॥ १२ ॥

**तस्याकल्पकमिच्छंश्चेदर्थे ग्राहकतां वदेः ।**
**संज्ञामात्रे विसंवादः सिद्धा त्वेकार्थकल्पना ॥ १३ ॥**

**ग्राह्यग्राहकयोरैक्यं सर्वथा प्रतिपद्यते ।**
**बाह्याभ्यन्तररूपश्च परिकल्पो मृषेष्यते ॥ १४ ॥**

**मत्पक्षे यद्यपि स्वच्छो ज्ञानात्मा परमार्थतः ।**
**तथाप्यनादौ संसारे पूर्वज्ञानप्रसूतिभिः ॥ १५ ॥**

स्यादेतत् । अप्रकाशात्मन्यर्थेऽप्रमाणिका वस्त्वन्तरकल्पना भवेत्, अन्यथार्थप्रकाशासम्भवात् । अर्थमेव तु प्रकाशस्वभावमेषिष्यामः, न वस्त्वन्तरं कल्पयिष्याम इत्यत आह — **तस्येति** । अयमभिप्रायः — एकमेव वस्तु ग्राह्यग्राहकाकारमिति नः प्रतिज्ञा । तद् यद्यर्थ एव तादृशो भवताश्रीयते, सिद्धो नः पक्षः, अद्वैतासिद्धान्तसिद्धेः । संज्ञामात्रे त्वावयोर्विसंवादो भवेद् न वस्तुनि । उभयोरप्येकत्वाभ्युपगमात् । कथं पुनरत्र संज्ञामात्रे विसंवादः । अर्थवादी हि स्थिरमर्थमनुजानाति । ज्ञानवादी तु क्षणिकम् । सत्यम् । अन्याऽय विशेषः तत्त्वं तावदेकमेवापद्यते । एतदेवात्र निरूपणीयम् । अन्यत्त्वेतद् यत् स्थिरमस्थिरं वेति ॥ १३ ॥

एतदेव विवृणोति — **ग्राह्येति** । नन्वस्त्ययं विशेषः बाह्योऽर्थो ज्ञानमान्तरमिति । अतः कथं न वस्तुभेदः । अत आह — **बाह्येति** । अयमभिप्रायः — नायं बाह्यान्तरविवेकः पारमार्थिकस्तत्त्वाभेदे सिध्यति । भेदे हि तथा भवेदेकं बाह्यमेकमान्तरमिति । अभिन्ने तु तत्त्वे किमपेक्ष्य किं बाह्यं किमान्तरं वा भविष्यति । अतो मृषैवायं ज्ञानमात्रनिर्मितः परिकल्पः कल्पनमिति ॥ १४ ॥

ननु बौद्धानामपि स्वच्छाकारमेकमेव ज्ञानम् । अतः कथमस्मिन् नीलादिरूपं ग्राह्यग्राहकाकारशबलं विभक्तमिदं नीलमहं जानामीति निरूप्यते । नहि स्वच्छस्य नीलादिता सम्भवति । नचैकस्य ग्राह्यग्राहकता नीलमहं जानामीति, स्वात्मनि क्रियाविरोधात् । अत एव न प्रविभागः इदं जानामीति । अतः प्रतिभासानुगुणोऽर्थाकारपक्ष एव न्याय्यः, अत आह—

**चित्राभिश्चित्रहेतुत्वाद् वासनाभिरुपप्लवात्।**
**स्वानुरूप्येण नीलादिग्राह्यग्राहकरूषितम् ॥ १६ ॥**
**प्रविभक्तमिवोत्पन्नं नान्यमर्थमपेक्षते।**
**अन्योन्यहेतुता चैव ज्ञानशक्त्योरनादिका ॥ १७ ॥**

**मत्पक्ष** इति सार्धद्वयेन। अयमर्थः—यद्यपि स्वच्छो ज्ञानात्मा एक एव, तथाप्यनादौ संसारे यानि पूर्वज्ञानानि तान्येव प्रसूतिः प्रसवो यासां वासनानां ताभिः नीलपीतादिविचित्रज्ञानहेतुत्वाद् विचित्राभिः आत्मानुरूपेण तस्य स्वच्छस्य ज्ञानात्मन उपप्लवात्। उपप्लवो भ्रान्तिज्ञानं किमुक्तं भवति। यादृशी वासना तादृशं स्वानुरूपं विभ्रमं जनयति। नीलवासना नीलं, पीतवासना पीतमिति यावत्। एवं च स्वानुरूप्येणोपप्लवाद् ज्ञानात्मनि नीलादिरूपं तावत् प्रकाशते। तच्च ग्राह्यग्राहकाकारशबलं तदाकारवासनोपप्लवादेव। ग्राह्यग्राहकाकारशबलैर्हि पूर्वज्ञानैस्तदाका(र?रा)एव वासना आहिताः। अतो नीलाद्याकारवत् तदाकारप्रकाशो नानुपपन्नः। विभक्ताकारवासनावशादेव च विभक्तप्रतिभासो वर्णनीयः। एवंच वासनावशादेव नीलादिरूपं ग्राह्यग्राहकाकाररूषितं प्रविभक्तमिवेदं नीलमित्युपपन्नमिति न पारमार्थिकं बहिःसन्तमाश्रयभूतमपेक्षते। एकस्मिन्नेव हि तत्त्वे त्रितयं समाप्तं प्रमितिः प्रमाता प्रमेयं चेति। यथाहुः—

"अविभक्तोऽपि बुद्ध्यात्मा विपर्यासितदर्शनैः।
ग्राह्यग्राहकसंवित्तिभेदवानिव लक्ष्यते ॥"

इति। आह—सन्तु तावद् वासनानिबन्धनाः संविदां नानासमुल्लासाः। तद्वैचित्र्यमेव कुतः। ननूक्तं विचित्रज्ञानहेतुत्वाच्चित्राभिरिति। न, अन्योन्याश्रयापत्तेः। तथाहि—वासनाभेदाद् ज्ञानभेदस्तद्भेदाद् वासनाभेदः इति दुरुत्तरमितरेतराश्रयमिति। अत आह—अन्योन्येति। अयमर्थः—नेदमितरेतराश्रयम्। अनादिरयं वासनाज्ञानयोः कार्यकारणभावः बीजाङ्कुरयोरिव। नात्रान्यतरस्यापि पूर्वकोटिः प्रसङ्ख्यायते। अतो वासनातो ज्ञानं ततो वासनेति किमनुपपन्नम्। शक्तिरिति वासनामपदिशति। सा हि ज्ञानशक्तिरिति प्रसिद्धा। अयं चानादितयेतरेतराश्रयपरिहारः अनादौ संसार इत्यत्र सूत्रितोऽत्र विवृत इत्यनुसन्धातव्यमिति ॥ १७ ॥

**अनेककल्पनायाश्च ज्यायसी ह्येककल्पना ।**
**शक्तिमात्रस्य भेदश्च वस्तुभेदाद् विशिष्यते ॥**
**तस्मादुभयसिद्धत्वाज्ज्ञानस्याकारकल्पना ।**
**ज्यायसी भवतस्त्वर्थं कल्पयित्वा भवेदियम् ॥**
**तदसिद्धावशक्तत्वात् तेनैवं विप्रकृष्टता ।**
**प्रत्यासन्नं च सम्बद्धं ग्राह्यं मम भविष्यति॥ २० ॥**

---

एवं तावदुपपादितं ज्ञानमाकारवदिति । इदानीं तत्रैव कारणान्तरमाह — **अनेकेति** द्वयेन । कल्पनागौरवं हि द्वैतवादिनामापद्यते, नास्माकमेकत्ववादिनामिति भावः । ननु तवापि शक्तिकल्पनया द्वैतमेव, असत्यां हि तस्यां पूर्वोक्तविभागानुपपत्तिरत आह — **शक्तिमात्रस्येति** । अयमभिप्रायः — न वासना नाम काचिद् वस्तुतो ज्ञानातिरेकिण्यस्ति या द्वैतमावहति । संवृतिसत्यकल्पिता हि सा। नच काल्पनिकं वस्तु द्वैतमापादयति । अपिच बहिर्वस्तुवादिनामपि तदुपेत्य तत्समवाय्यन्यः शक्तिभेदः कल्पनीय एव तत्तत्कार्यभेदोपपादनाय । तदियं शक्तिकल्पना साधारणी । ज्ञानवादिनस्तु ज्ञानशक्तिकल्पनैव केवलेत्यस्ति विशेषः । एतच्च पारमार्थिकं शक्तिभेदमभ्युपेत्योक्तम् । नच तथा सौगता मन्यन्ते, चिन्मात्रं तु सदित्यभ्युपगमादिति । इतश्च ज्ञानमाकारवदित्याह — **तस्मादिति ज्यायस्यन्तेन** । उभयोरपि द्वैताद्वैतवादिनोः सिद्धं ज्ञानमतस्तस्यैवाकारकल्पना न्याय्या सिद्धाश्रयत्वादिति । तस्माद् वस्तुभेदादाकृष्येत्यर्थः । तव त्वस्माकमर्थासिद्धेराश्रयान्तरकल्पनापुरस्सरी तदाकारकल्पना स्यादित्याह — **भवत इति** ॥ १९ ॥

अत्र कारणमाह — **तदसिद्धावशक्तत्वादिति** । नीलादिर्हीदं नीलमिति क्वचिदाश्रितो दृश्यते । नासावाश्रयमन्तरेणोपपद्यते । तद् यदि ज्ञानाश्रय इष्यते सिद्धाश्रयो भवति, इतरथा साध्याश्रय इति विशेष इति । अपिचैवमर्थाकाराश्रयणे तेन विज्ञानेन विप्रकृष्टता नीलादेराकारस्यापद्येत ।

ततश्च तेन तत्प्रकाशायोग इत्यभिप्रायेणाह — तेनेति । अनेन च 'संवेदनादि'ति बौद्धोक्तो हेतुरन्तर्णीतः । एवं हि तेनोक्तं नानात्मनः संवेदनं भवति नीलवित्तौ पीतवत् । आत्मभूतस्य तु स्वात्मवदेव प्रकाशो नानुपपन्नः । तदिदमुक्तम् 'अनर्थान्तरत्वे तु नीलादेरनुभवात् तदात्मभूतः प्रकाशते, तथा नीलाद्यनुभवः स्यादि'ति । तथेति यथा ज्ञानात्मेत्युक्तं भवति । अतः संवेदनादेव तु भासमानस्य नीलादेस्तत्संविदश्चाविवेकः सिद्ध इति । अपरमपि 'ग्राह्यलक्षणयोगादि'ति बाह्यापलापे बौद्धोक्तं हेतुमुपन्यस्यति — प्रत्यासन्नमिति । अयमभिप्रायः — मम हि ज्ञानात्मभूतमेकान्तप्रत्यासन्नं नीलादि युक्तं यद् ग्राह्यतां प्रतिपद्यते । असम्बद्धस्य तु ग्राह्यलक्षणायोगः । नन्वियमेवार्थस्य ग्राह्यता यत् ततो ज्ञानस्योत्पत्तिः तत्सारूप्यं च । बाह्यनीलाद्याभासं हि ज्ञानम् । तत्स्वरूपं तावत् ततश्चोत्पद्यते कदाचित् ज्ञानकार्यव्यतिरेकात् । यथोक्तं — 'सत्सु समर्थेष्वन्येषु हेतुषु ज्ञानकार्यानुत्पत्तिः कारणान्तरवैकल्यं सूचयति । स बाह्योऽर्थः स्यादि'ति । सौत्रान्तिकमते सन्ति खल्वालोकेन्द्रियमनस्कारादयः । ते च ज्ञानहेतवः । नच ज्ञानं जायत इति दृष्टम् । तदिदं बाह्यार्थसन्निकर्षादेवोत्पद्यत इति तत्सिद्धिः । एवंचोत्पत्तिसारूप्याभ्यामेवार्थवेदनमित्युच्यते (अर्था ग्रा ? अर्थो गृ)ह्यत इति च । अत उत्पत्तिसारूप्ययोरेव ग्राह्यलक्षणत्वाद् ग्राह्योऽर्थो नापह्नोतुं शक्यते । मैवम् । एवं सत्यनन्तरमेव विज्ञानं तुल्यविषयं विषयः प्राप्नोति ज्ञानानां तत्सारूप्यात् तदुत्पत्तेश्च समनन्तरप्रत्ययाधीनजन्मत्वादुत्तरेषाम् । अपिच नार्थज्ञानयोः सारूप्यं, ज्ञानप्रतिभासिनः स्थूलाकारस्य परमाणुष्वभावात् । एकश्चायमाकारो ज्ञानसन्निवेशी । बहूनि च सञ्चितानि रूपादीनि । कथमनयोः सारूप्यम् । नचापि स्थूल एको विषयोऽवयव्यस्ति, तस्यावयवेभ्योऽव्यतिरेकात्, तन्नानात्वे नानात्वापत्तिः । एकावयवकम्पे च सर्वावयविकम्पप्रसङ्गः । एकावृतौ चाभेदात् सर्वावृतिः न वा कस्यचिदित्यविकलोपलम्भप्रसङ्गः । अवयवस्यावरणं नावयविन इति चेद्, न । अभेदे तदनुपपत्तेः । भेदे वा तदावरणेऽप्यनावृतत्वात् प्राग्वदस्य दर्शनप्रसङ्गः । कस्माच्च भिन्नोऽवयवज्ञानाधीनज्ञानः, न खलु घटसंवित् पटसंविदमपेक्षते । वस्तुस्वभावादिति चेद्, न । अन्यतमानुपलम्भेऽनुपलम्भप्रसङ्गात् । कतिपयावयवप्रति-

१. 'आत्मज्ञा' ख. पाठः.

पत्तौ वा (दर्शने ?) अङ्गुल्यग्रदर्शनेऽपि स्थूलोपलम्भप्रसङ्गः । अतो नास्ति कश्चित् स्थूल एकोऽर्थः यो ज्ञानं सरूपयति । किञ्च इदमेकेन वा केनचिदात्मना ज्ञानार्थयोः सारूप्यं सर्वात्मना वा । एकदेशसारूप्ये नीलमपि पीतसंविदः सरूपम् उभयोः क्षणिकत्वादसाधारणत्वाच्चेति तदपि ग्राह्यं भवेत् । एवं च सर्वः सर्ववित् स्यात् । अतदुत्पत्तेरग्राह्यत्वमिति चेद्, न । प्रमाणाभावाद् नीलबुद्धिर्नलिपीताभ्यां सदृशी नीलादेवोत्पद्यत इति न नः प्रमाणं क्रमते । अपिच नीलादप्युत्पत्तौ न प्रमाणमित्यनन्तरमेव वक्ष्यामः । समं च सारूप्यमिति न ग्राह्येतरविवेकः । सर्वात्मना तु सारूप्यमातिष्ठमानो जडत्वमप्यर्थस्य बुद्धावादध्यात् । एवं चान्ध्यमेव जगतः । यथाहुः —

"एकदेशेन सारूप्ये सर्वः स्यात् सर्ववेदकः ।
सर्वात्मना तु सारूप्ये ज्ञानमज्ञानतां व्रजेत् ॥"

इति । नच तदधीना ज्ञानोत्पत्तिः, उपादानविशेषाभावादेव कार्यव्यतिरेकसिद्धेः । कार्यदर्शनबलेन हि वयं समनन्तरप्रत्ययमेव वासनापरनामानमुत्तरबुद्धीनां कारणमाचक्ष्महे । तत्कार्यव्यतिरेके तदभावमुन्नयामः । नहि समग्रं च कारणं कार्यं च न भवतीति सम्भवति । अत उपादानमेव तन्नामदशामनुपगतं यन्न कार्यमारब्धवदिति किमर्थग्रहणेन । यथोक्तं —

"यथाकथञ्चित् तस्यार्थरूपमुक्त्वावभासिनः ।
अर्थग्रहः कथं सत्यं न जानेऽहमपीदृशम् ॥"

इति । सिद्धः सत्स्वपि हेत्वन्तरेषु कार्यव्यतिरेकः । तस्मान्नोत्पत्तिसारूप्ये ग्राह्यलक्षणम् । नचागृह्यमाणोऽर्थः सिध्यतीति सिद्धं

"नान्योऽनुभाव्यो बुद्ध्यास्ति त(स्य ? स्या) नानुभवोऽपरः ।
ग्राह्यग्राहकवैधुर्यात् स्वयं सैव प्रकाशते ॥"

इति । ग्राह्यलक्षणायोगात् तावन्नान्योऽनुभाव्योऽस्ति । अत एव तस्या नानुभवोऽपरः । तेनापि तद्ग्रहणानुपपत्तेः । अतः स्वप्रकाशा धीरेवैका मोदत इति सिद्धम् । यस्त्वसम्बद्धस्यैव ज्ञानेनार्थस्य प्रकाश्यतामातिष्ठते, सोऽसम्बद्धेनापि दीपेन घटस्य प्रकाश्यतामातिष्ठत इति विवृतं हेतुद्वयम् । सहोपलम्भनियम उपरिष्टाद् विवरिष्यत इति ॥ २० ॥

**इतश्चाकारवज्ज्ञानं यस्मात् तद्वत् प्रकाशकम् ।**
**स्वयं प्रकाशहीनस्य बाह्यस्योपायसम्मतम् ॥ २१ ॥**
**नचागृहीते ज्ञानाख्ये प्रकाश्योऽर्थोऽवधार्यते ।**
**तदधीनप्रकाशत्वाद् दीपाभासे यथा घटः ॥ २२ ॥**
**उत्पन्नेष्वपि चार्थेषु प्रकाशाभावतः क्वचित् ।**
**प्रतिबन्धकयोगाद् वा संवित्तिर्नोपजायते ॥ २३ ॥**
**ज्ञानस्योत्पद्यमानस्य प्रतिबन्धो न कश्चन ।**
**नचाप्रकाशरूपत्वं येनास्याग्रहणं भवेत् ॥ २४ ॥**

---

अपरमपि ज्ञानस्यैवाकारवत्तायां कारणमाह —इतश्चेति । युष्माकं मीमांसकानां तज्ज्ञानं प्रकाशकमिति सिद्धान्त इति । कस्य प्रकाशकमत आह— स्वयमिति । बाह्यस्य जडात्मनः स्वयं प्रकाशहीनस्य तदुपायतया सम्मतं, अन्यथा तत्प्रकाशायोगात् ॥ २१ ॥

किमतो यद्येवमत आह — नचेति । यद्धि यस्य प्रकाशकं तद् गृहीतमेव प्रकाशयति । तद् यदि ज्ञानमर्थस्य प्रकाशकमेतदपि नागृहीतं तत् प्रकाशयेत् । अतोऽवश्यं ग्रहीतव्यम् । नच तदनाकारं ग्रहीतुं शक्यम्, नचार्थज्ञानयोराकारभेदोपलम्भः । अतोऽवश्याभ्युपगन्तव्यं ग्रहणस्य ज्ञानस्यैवायमाकार इति साम्प्रतमित्यभिप्राय इति । तदधीनप्रकाशत्वादिति ज्ञानाधीनः प्रकाशः प्रतिभासो यस्येत्यर्थः ॥ २२ ॥

एवं तावदवश्यग्राह्यतया ज्ञानस्यैवाकारः अवश्यग्राह्यता च प्रकाशकतयेत्युक्तम् । इतश्चावश्यग्राह्यतेत्याह — उत्पन्नेष्विति द्वयेन । द्वेधा ह्युत्पन्नं वस्तु न गृह्यते प्रकाशकाभावात् प्रतिबन्धाद् वा । यथान्धकारतिरोहितो घटः कुड्यादिप्रतिबन्धाद् वा यथा लोके । स एव चैतदुभयमपि ज्ञाने सम्भवति । अतो ग्रहणकारणासम्भवादुत्पद्यमानमेव ग्रहीतव्यम् । एवं च तस्यैव साकारत्वापत्तिरित्युक्तमेवेति ॥ २४ ॥

प्राक् चार्थग्रहणादिष्टा तस्योत्पत्तिस्तदैव च ।
संवेदनं भवेदस्य नचेत् कालान्तरेऽपि न ॥ २५ ॥

किं हि तस्य भवेदूर्ध्वं प्राक् च नासीन्न येन तत् ।
पूर्वं गृहीतं पश्चाच्च गृहीतमिति भाष्यते ॥ २६ ॥

ज्ञानान्तरस्य चोत्पत्तिं प्रकाशो न प्रतीक्षते ।
तस्य तस्यापि चान्येन संवित्तावस्थितिर्भवेत् ॥

---

यदि त्वर्थप्रकाशात् प्राग् ज्ञानं नोत्पद्येतैव, ततोऽसतो ग्रहणासम्भवान्न गृह्येत, न त्वेवं भवद्भिरपीष्यते । उत्पन्नायामेव बुद्धावर्थस्य ज्ञातताभ्युपगमात् । ततः प्रागुत्पन्नस्याग्रहणकारणाभावादावश्यकं तादात्विकं ग्रहणमित्याह — **प्राक् चार्थेति अस्यान्तेन** । यदि तूत्प(न्नं ? न्न) प्रतिबन्धं च केनापि न गृह्यत इत्युच्यते नित्यासंवेद्यतैव तर्ह्यापद्येत । ततश्चाभाव एव ज्ञानस्य भवेदित्यभिप्रायेणाह — नचेदिति ॥ २५ ॥

किं पुनः कालान्तरे न ग्रहणमित्यत आह — **किमिति** । अगृह्यमाणे विशेषे प्रागग्रहणं परस्ताच्च ग्रहणमित्यनुपपन्नमिति ॥ २६ ॥

ननूत्पन्नस्यापि संविदन्तरापेक्षया ग्रहणमिति किं नोपपद्यते अत आह — **ज्ञानेति** । युक्तं यदप्रकाशकोऽर्थः प्रकाशाय ज्ञानान्तरमपेक्षते । ज्ञानं तु स्वयमेव प्रकाशरूपमिति किं तस्य प्रकाशान्तरापेक्षया । अतः सहसैव प्रकाशेतेति । तुल्यजातीयान्तरापेक्षायामनवस्था । यथाहुः— 'ज्ञानान्तरेणानुभवे हीष्टा' इति । नच ज्ञानं न ज्ञायत एवेति साम्प्रतम् । अभावप्रसङ्गात् । उत्तरकालं च स्मृतिदर्शनात् सहैव हि विज्ञानेन पूर्वदृष्टमर्थं स्मरन्तो दृश्यन्ते ज्ञातोऽसावर्थो मयेति । नचाज्ञातस्य ज्ञानस्य स्मृतिरुपपद्यते । उक्तं च परैः— 'तत्रापि च स्मृतिः' इति । एवं चापरापरज्ञानापेक्षायामेकविषयसंवित्तावेवायुः पर्यवस्येत् न विषयान्तरसञ्चारो जायेत । तत्र च दृष्टं ज्ञानम् । यथाहुः —

"विषयान्तरसञ्चारस्तथा न स्यात् स चेष्यते ।"

इति । तदेतत् सर्वमभिप्रेत्याह — तस्येति ॥ २७ ॥

**ज्ञानपृष्ठेन योऽप्यूर्ध्वमर्थाभावेऽपि दृश्यते ।**
**परामर्शोऽर्थरूपस्य स कथं वोपपद्यते ॥ २८ ॥**
**तद्रूपमर्थमालिख्य यदि धीर्नोपजायते ।**
**भूतकाले च यद्यर्थस्तत्पूर्वं नोपलक्षितः ॥ २९ ॥**
**वक्तारश्चापि दृश्यन्ते वर्तमानार्थबुद्धिषु ।**
**नीलोऽर्थोऽयं यतो मेऽत्र तद्रूपा जायते मतिः ॥ ३० ॥**
**तस्मात् पूर्वगृहीतासु बुद्धिष्वर्थोपलम्भनम् ।**

इतश्च प्राग् ज्ञानं ज्ञायते ज्ञानाकारश्च नीलादिः, येन ज्ञानपुरस्सरमेवावगतपूर्वं निरुद्धमर्थं स्मरन्तो दृश्यन्ते ज्ञातो मयातिक्रान्तोऽमुको राजेति। यदि ह्यर्थस्याकारो भवेत्, असत्यर्थे सता कथं धीरनुरज्येत। अतो बुद्धिरेव तदाकारमर्थमालिख्योपजायत इति युक्तम् । यदि चातीते काले ज्ञानपुरस्सरमर्थो नोपलक्षितो भवेत्, कथमिदानीं तथा स्मर्येत । यथावगतग्राहिण्यो हि स्मृतयः कथं मात्रयापि पूर्वानुभूतमतिक्रामन्ति । तस्माज्ज्ञानाकारो नीलादिः ज्ञानपूर्वकश्चार्थानुभव इत्याह— **ज्ञानेति** द्वयेन । तत् पुनरिदं परस्परविरुद्धमिवोभयं साध्यमुपलभ्यते । तथाहि । ज्ञानपूर्वमर्थोऽनुभूयत इत्यर्थमङ्गीकरोतीति लक्ष्यते। ज्ञानाकारसाधनेन च निराकरोति इति तद्विषयमनृतम् । मैवम् । नात्र ज्ञानपुरस्सरमर्थोऽवसीयत इति तात्पर्यम् । एवं तु मन्यते— अङ्गीकारयामि तावदेनं श्रोत्रियमनुभवानुभवपुरस्सरीमर्थस्थितिम् । एष हि छान्दसो द्वैतसिद्धिमेवमप्यविगुणां मन्यमानोऽभ्यनुजानाति तावत् प्रथमं ज्ञानसंवेदनम्। ततोऽनाकारोपलम्भासम्भवादेकाकारोपलम्भाच्चानायासमेवार्थापलापं वक्ष्याम इति च। तथा भाष्यकारेणापि — 'ननूत्पन्नायामेव बुद्धौ अर्थो ज्ञात इत्युच्यते' इति छद्मनैवार्थाभ्युपगमो दर्शितः। वार्त्तिककारेणापि तथैवानुविहितम् । अतो न दोष इति ॥ २९ ॥

इतश्च ज्ञानानुविधाय्यर्थः । तथाहि भवन्ति वक्तारः — नीलोऽयमर्थः तद्रूपानुभवादिति । ज्ञाननिरपेक्षे त्वर्थनिश्चये नैतदुपपद्यते । तदेतदाह — **वक्तार** इति ॥ ३० ॥

अतः सिद्धं बुद्धिज्ञानपुरस्सरमर्थज्ञानमित्युपसंहरति— **तस्मादिति** ।

## नचोपलब्धिरस्तीह निराकारासु बुद्धिषु ॥ ३१ ॥

अत्रैके वदन्ति — किमिदमनिष्टमापाद्यते ज्ञानमनुभूयत इति । प्रतीमो हि वयमेकस्यां संविदि त्रितयं प्रमाता प्रमितिः प्रमेयं चेति, नीलाद्याकारं प्रमेयं प्रमितिमनाकारां प्रमातारं च । तथा हीदृशीयं प्रतीतिः नीलमहं जानामीति । तदिह नीलपदास्पदं प्रमेयं मितिर्ज्ञाद्युपात्ता । प्रमाता तूत्तमपुरुषेणोपात्तः । किं पुनरत्र त्रितये प्रमाणम् । प्रत्यक्षम् । साक्षात्कारिणी हि प्रतीतिः प्रत्यक्षम् । अस्ति चास्यामर्थवित्तौ त्रितयस्य साक्षात्कारः । तत्रापि मातृमेययोः पराधीनः प्रकाशः । न मितेः, स्वयम्प्रकाशत्वात् । इतरयोस्तु न स्वयम्प्रकाशत्वं, सतोरपि स्वप्नादौ तददर्शनात् । अस्ति खल्वयं पुरुषः, स्वापे जागरायां च प्रत्यभिज्ञानात् । एवमेव विषयाः । नच तदा प्रकाशन्ते । तत् कस्य हेतोः, यदि विषयाणामात्मनश्च स्वयम्प्रकाशता संविदस्तु स्वापादावसम्भवादेवाप्रकाशः, नाप्रकाशत्वात् । अपिच मेयमातृगोचरा फलभूता संविदवगम्यते नतु तस्या अपि भिन्ना संविदपरा, यदसावपि परायत्तप्रकाशाश्रीयते । तदिह स्वप्रकाशा संवित् । तद्गोचरौ मातृमेयौ । संविद्गोचरत्वाविशेषेऽपि नात्मनः कर्मभावः, गन्तृवदुपपत्तेः । यथा खलु समानेऽपि क्रियाफलसंयोगविभागभागित्वे ग्रामादेः कर्मभावो, न गन्तुः । एवं प्रमाणफलसंवित्तिसम्बन्धाविशेषेऽप्यात्मनः कर्तृता । तत् कस्य हेतोः । परसमवायिक्रियाफलभागिता हि कर्मता । सावयवानां गन्तव्यानां च देहे गतिसमवायाद् आत्मनि ज्ञानसमवायात् । तत्रासौ ग्रामः कर्म । तथाच विषया इति ते तथा । अतो निराकारैव संवित् स्वमहिम्ना सिध्यन्ती मातृमेयावपि व्यवस्थापयति । किमिदानीं प्रमत्तवचस्सत्यं पूर्वं बुद्धिरुत्पद्यते नतु पूर्वं ज्ञायत इति । न, बुद्ध्यपदेशात् तस्याश्चानुमेयत्वात् । अस्ति वा बुद्धिसंविदोर्भेदः । अस्तीति ब्रूमः । का तर्हि बुद्धिः, का च संवित् । आत्ममनस्संयोगो बुद्धिः । बुद्धिर्ज्ञानमित्यनर्थान्तरम् । फलभूता संविदनुभवादिपदास्पदम् । तथा चात्ममनस्संयोगः कारणभूतोऽनुमीयत इति किमनुपपन्नम् । अदूरविप्रकर्षादन्यतरत्रान्यतरपदप्रयोगः । नन्वेवं संविदि संवेद्येषु च संवेद्यमानेषु संवेद्यद्वयोपलब्धिप्रसङ्गः । नचैवम्, एकाकारसंवेदनात् । उक्तमत्रैक एवाकारः संवेद्यः अनाकारा संवित् प्रकाशत इति । किमिदानीमसंवेद्यैव

१ 'द', २. 'दि संवेद्यमा' ख. पाठः.

**विवेकबुद्ध्यभावाच्च साकारस्य च दर्शनात् ।**
**साकारवत्तया बोधो ज्ञानस्यैव प्रसज्यते ॥ ३२ ॥**

संवित् । न ब्रूमोऽसंवेद्येति । संवि(भक्त ? त्त)यैव हि संवित् संवेद्यते न संवेद्यतया । केयं वाचोयुक्तिः । इयमियं नास्याः कर्मभावो विद्यत इति, स्वयम्प्रकाशत्वात् । नचैवमसंवित् । न, अतन्मूलत्वात् संवेद्यभावस्य सर्वभावानां, सा हि सर्वभावानां सिद्धिः नचासञ्चेतिता सिध्यतीति कथं तेऽपि सिध्येयुः । अतः संवित्प्रकाश एव द्वैतं साधयतीति किं सिद्धसाधनेन । संविदुपारूढो हि नीलादिरद्वैतमापादयति । संविदेव त्वनाकारसंविदितया व्यतिरेचितो नीलादिर्नाद्वैताय घटत इति सिद्धं प्रमाता प्रमितिः प्रमेयं चेति । तान् प्रत्याह — नचेति । अयमभिप्रायः — श्रोत्रियदृष्टचैव तावद् बुद्धिरनुमेयेति लक्ष्यते । यदेवमाह — 'ज्ञाते त्वनुमानादवगच्छती'ति । यत्तु ज्ञानाभिप्रायं तद् न संविदभिप्रायमिति । तन्न । पर्यायत्वादनयोः । चेतना बुद्धिः ज्ञानं संविदित्यनर्थान्तरमिति लौकिका बुध्यन्ते । नचात्ममनसोः संयोगश्चेतना, रूपादितुल्यगुणत्वात् । तच्चेतनात्वे च मनसश्चैतन्यप्रसङ्गः । तस्यात्ममनसोः साधारणत्वात् । अचेतना बुद्धिरित्यलौकिकम् । यथाहुः — 'बुद्धिश्चेतनैव हि ""म्यते' । इति । अतो यैवासावनाकारा संविद् भवताभिमता सैव तावद् (बु)द्धिः, तदभिप्रायमेव बुद्ध्यनुमेयत्वाभिधानम् । न त्वनाकारा संविदपरोक्षमनुभूयते बुद्धिश्चानुमीयत इति साम्प्रतम् । तदयमर्थः — यासौ लौकिकी बुद्धिर्नासावनाकारा अपरोक्षमुपलभ्यते । तस्मात् प्रत्यक्षबुद्धिवादिनायमाकारो ज्ञानसन्निवेशी वाच्यः । यथास्माभिरुक्तम् । यथा वार्त्तिकं वा सिद्धान्तः अर्थ एव प्रत्यक्षो न बुद्धिरिति । तत्र चोक्ता बुद्ध्यनुमाने लिङ्गानुपपत्तिः । अतोऽसिद्धमनिराकाराया बुद्धेरनुपलम्भात् संविदेव द्वैतं साधयतीति ॥ ३१ ॥

अपिचैवं सहोपलम्भनियमात् त्रयस्याभेदापत्तिरित्याह — **विवेकबुद्ध्यभावाच्चेति** । त्रयाणां विवेकबुद्ध्यभावादेकस्यैव ज्ञानस्याकारवत्तया बोधः प्रसज्यत इति वक्ष्यमाणेन सम्बन्धः । ज्ञानग्रहणमुपलक्षणार्थम् । एकमेव तत्त्वमाकारवद् भवेदिति विवक्षितम् । यो हि मेयमातृप्रमासु सहोपलम्भमातिष्ठते तस्यान्यतरविविक्तान्यतरबुद्ध्यभावादभेद एव त्रयस्या-

पद्येत, भेदे नियमायोगात् । भिन्नानां हि घटादीनामनियतः सहोपलम्भः । ते हि सहभावेन विवेकेन चोपलभ्यन्ते । अतोऽनियमव्याप्तो भेदो नार्हति व्यापकविरुद्धोपलब्धौ भवितुं धूम इवाग्निना व्याप्तोऽनग्नौ । भिन्नावभासाद् भेद इति चेद् , न । अनेकान्तात् । तत्रैतत् स्याद् , एकदापि हि त्रितयमनुभूयमानं भिन्नमेवावभासते घटकुड्यादिवदतो भिद्यत इति । तन्न । अनैकान्तिकत्वाद् भेदोपलम्भस्य भेदे । उपलभ्यते खलु द्विचन्द्रादिबोधेऽभिन्नश्चन्द्रः । नचैकस्माद् भिद्यते । तत् कस्य हेतोः । सहोपलम्भनियमादेव । स हि मुख्येन नियतसहोपलम्भः, तन्न ततो भिद्यते । तदनियतसहोपलम्भा एव भावा भेदेनावसीयमाना भिद्यन्ते नेतरे । यथाहुः— 'न भिन्नावभासित्वेऽप्यर्थान्तररूपत्वं नीलस्यानुभवात् तयोः सहोपलम्भनियमाद् द्विचन्द्रादिवदि'ति । ननु भिन्नयोरपि रूपालोकयोः सहोपलम्भनियमो दृष्टः । अनालोकोपलम्भा न रूपबुद्धिर्यतः । तन्न, केवलस्यापि क्वचिदालोकस्य दर्शनात् । रूपस्य च प्राणिविशेषेष्वनालोकस्य । सन्ति हि केचित् प्राणिनः येऽन्धकार एव रूपमालोकयन्ते । आलोके तु प्रतिहन्यन्ते । मातृमेयसंवेदनानि तु सहैवोपलभ्यन्त इति न भेदमर्हन्ति । नहि नीलाद् भिन्नं पीतं तेन सह नियमेनोपलभ्यते । अतः सहोपलम्भनियमादभिन्नं त्रयमापद्यते इति । ननु चायमुपालम्भोऽस्तु सहोपलम्भनियमवादिनामेकेषां मीमांसकानाम् । ये तु विषयवित्तिपुरस्सरीं बुद्धिसंविदमातिष्ठन्ते, तेषामसिद्धः सहोपलम्भनियमः । सदैव हि विषयसंवेदनोत्तरकालमेव संविदुपलभ्यते । यथाहुः —

"पूर्वं संगृह्यते पश्चाज्ज्ञानं तज्ज्ञाततावशात् ।"

इति । तान् प्रत्याह — सेति त इत्यन्तेन । अयमभिप्रायः — इदं तावदविवादं साकारं वस्तु दृश्यत इति । साकारदर्शनं चेदप्रत्यक्षे संवेदने नोपपद्यते, विषयः सन्मात्रतया न प्रकाशते यतः । तथा सति नित्यप्रकाशापत्तेः । अतो विषयोपलम्भसत्तयैव विषयप्रकाशः, न तत्स्वरूपसत्तया । विषयोपलम्भसत्ता चासिद्धा न सत्तानिबन्धनव्यवहाराय घटत इति तात्सिद्धिरास्थेया । नच वित्तेरन्या सिद्धिर्भावानां तद् यद्युपलम्भो विदितोऽसिद्धः, तदसिद्धौ विषयासिद्धिः, येन स एव तत्सिद्धिरिति विश्वमस्तमितम् । अतोऽस्मात् साकारस्यैव वस्तुनो दर्शनादनुपपद्यमानादवगम्यते यदस्ति सहोपलम्भ इति । अन्यथा तद्दर्शनायोगात् । यथाहुः —

**नह्येवं कल्पना शक्या निराकारादितो मतिः ।**
**गृह्यतेऽर्थस्ततः पश्चात् साकारः सम्प्रतीयते ॥ ३३ ॥**
**आकारवत्त्वभेदोऽत्र ज्ञात्वा शक्येत भाषितुम् ।**
**प्रागबुद्धिग्रहणादर्थे संवित्तिर्नेति साधितम् ॥ ३४ ॥**

---

"अप्रत्यक्षोपलम्भस्य नार्थदृष्टिः प्रसिध्यति ।"

इति । अतः सिद्धं सहोपलम्भनियमाज्ज्ञानस्याकारवत्तया बोधः नास्ति तत्त्वतो भेद इति ॥ ३२ ॥

आह — यद्युपलम्भासिद्धावुपलभ्योऽपि न सिध्यति, अस्तूपलम्भासिद्धिः । उपलम्भान्तरेण तु सिद्ध उपलभ्यं साधयिष्यति । एवमपि सहोपलम्भनियमासिद्धिरित्युपलम्भसिद्धिपूर्वकत्वादुपलभ्यसिद्धेः । उपलभ्यासिद्धिपुरस्सरी तूपलम्भसिद्धिः प्रतिक्षिप्ता, सिद्धेरसिद्धौ साध्यासिद्धेः । सिद्धिसिद्धिपूर्विका तु साध्यसिद्धिः किं नेष्यते । अतोऽसिद्ध एवायं हेतुरत आह — नहीति । अस्यार्थः — नेयमीदृशी कल्पना सम्भवति यदनाकारा संविदादावनुभूयते ततश्च पश्चात् साकारोऽर्थ इति । निराकारबुद्ध्यनुपलब्धेरुक्तत्वात् । इतश्च नैवं कल्पना युक्ता । कथं हि स्वोपलम्भकाले संभिन्नोऽर्थः स्वोपलम्भोपलम्भावसरे संवेद्येत, यो ह्युपलभ्यमान एव न सिद्धः सोऽन्योपलम्भावसरेऽनुपलभ्यमान एव सेत्स्यतीति सुव्याहृतम् । अपिच अन्येन संवेदनोपलम्भे सोऽप्यसिद्धस्तत्साधनाय न प्रभवतीत्यपरापरापेक्षायामनवस्था । एकासिद्धौ सर्वासिद्धिः । क्वचिद्वा स्वप्रकाशेऽन्येऽपि तथा स्युरविशेषात् । अतः स्वात्मानं विषयाकारं च युगपज्ज्ञानमुपलभत इति सिद्धः सहोपलम्भनियमः । एकव्यापारे क्रमायोगात् । एकः खल्वयं संविदः स्वात्मनि विषयाकारे च व्यापारः, प्रकाशात्मा नायं क्रमभावी न सम्भवतीति ॥ ३३ ॥

ननु मा भूदनाकाराया बुद्धेरुपलम्भः । सापि त्वाकारवत्येवोपलप्स्यते अर्थश्च । तस्माद् द्वयोराकारवत्त्वं भविष्यति । ततश्चोपलभ्यत इति किमनुपपन्नमत आह—आकारेति । अस्यार्थः — योऽयं ज्ञानार्थयोराकारवत्त्वभेदः यद्ययं ज्ञातः स्यात्, तथा(सी ? स)ति ज्ञात्वा भाषितुमपि शक्येत । नील-

नचार्थाकार एवायं ज्ञानारूढः प्रतीयते ।
नहि सोऽन्तः प्रवेशाय पर्याप्तो नार्थहानये ॥ ३५ ॥
इत्थम्भावे प्रमाणं च तस्य वक्तुं न शक्यते ।
तदीयप्रतिबिम्बत्वमेतस्मादेव नेष्यते ॥ ३६ ॥

---

पीतभेदवत् । नचैवं भापितुं शक्यम् ईदृशो ज्ञानाकार ईदृशोऽर्थाकार इति, नीलाद्याकारमात्रज्ञानादिति । एवं हि सर्वं समञ्जसं भवति । यदि बुद्धिग्रहणात् प्रागेव साकारोऽर्थः सिध्यति, ततो हि तत्सिद्ध्यन्यथानुपपत्त्या ज्ञानमपि कदाचित् सिध्येदिति सिध्यति द्वैतम् । अत्र पुनरगृहीतायां बुद्धावर्थो(नु? न)सिध्यतीति 'साकारस्य च दर्शनादित्य'त्र साधितम् । अतो न कथञ्चिद् द्वैतसिद्धिरित्यभिप्रायेणाह — प्रागिति ॥ ३४ ॥

अन्यन्मतं — सत्यमाकारवद् ज्ञानं, किन्तु अर्थेनायमाकारो ज्ञान आधीयते । अयमेवार्थज्ञानयोः ग्राह्यग्राहकभावः, यदर्थस्य ज्ञाने स्वाकारसमर्पणम् । कथमपरथा क्षणिकत्वादतीतोऽसमसमयभाव्यर्थो ज्ञानालम्बनं भवेत् । यथाहुः —

"भिन्नकालं कथं ग्राह्यमिति चेद् ग्राह्यतां विदुः ।
हेतुत्वमेव युक्तिज्ञा ज्ञानाकारार्पणक्षमम् ॥"

इति । एतद् दूषयति — नचेति । किमिति नैवमत आह — नहीति । अर्थाकारो ह्यर्थधर्मः । नच धर्मः स्वाश्रयं हातुमाश्रयान्तरं वोपगन्तुं प्रभवति, स्वरूपहानापत्तेरिति ॥ ३५ ॥

अपिच प्रमाणान्तरप्रसिद्धेऽर्थस्याकारवत्त्वे भवेदप्येवम् । नच तस्याकारस्येत्थम्भावेऽर्थधर्मत्वे प्रमाणमस्ति, हेत्वन्तरसम्भवेऽपि कार्यानिष्पत्तिः कारणान्तरवैकल्यं सूचयतीति तु निराकृतमुपादानविशेषादेव कार्यसिद्धेरुक्तत्वादित्यभिप्रायेणाह — इत्थमिति । ये तु वदन्ति — मा नामार्थाकारोऽर्थं हातुमाश्रयान्तरं वोपगन्तुं प्रभवति । अर्थस्यैव प्रतिबिम्बमिदं शुद्धादर्शप्रतीकाशे स्वच्छे ज्ञानात्मनि दृश्यत इति । तान् प्रत्याह — तदीयेति । एतस्मादेवेति । अर्थाकारत्वे प्रमाणाभावादित्यर्थः ॥ ३६ ॥

---

१. 'न्तुं शक्तः प्र' ख. पाठः.

निश्चन्द्रे बिम्बरूपं हि दृष्टं येन दिवा जले ।
स रात्रौ खे च तं दृष्ट्वा जानाति प्रतिबिम्बताम् ॥
विज्ञाने न कदाचित्तु प्राङ्निराकारदर्शनम् ।
बाह्येवाकारवत्ता धीर्येनैवं कल्पना भवेत् ॥ ३८ ॥
शब्दगन्धरसानां च कीदृशी प्रतिबिम्बता ।
ज्ञाने च गृह्यमाणस्य कथं स्यादर्थधर्मता ॥ ३९ ॥
बाह्याभ्यन्तरदेशत्वान्न चार्थज्ञानयोर्मिथः ।
सम्पर्कोऽस्ति यतो मोहादविवेकमतिर्भवेत् ॥ ४० ॥
असम्मूढस्य चादृष्टे न सम्मोहप्रकल्पना ।
कल्प्यमानेऽथवाप्येवं न द्वयोरवतिष्ठते ॥ ४१ ॥

---

तानेव प्रसिद्धप्रतिबिम्बोदाहरणेन प्रतिबोधयति — निश्चन्द्रेति । तमिति योग्यतया चन्द्रः प्रतिनिर्दिश्यते । खे च जले चेत्यर्थः ॥ ३७॥

नचैष न्यायोऽत्र सम्भवतीत्याह — विज्ञानेति ॥ ३८ ॥

अपिचास्तु रूपवत्सु प्रतिबिम्बकल्पना, अरूपाणां तु शब्दादीनां प्रतिबिम्बकल्पना न कथञ्चित् सम्भवतीत्याह — शब्देति । अपिच नीलाद्याकारा संविदुपलभ्यते । तत् किमपराद्धमनया, यत्तामनादृत्यायमाकारोऽर्थधर्मतयाभ्युपगम्यते प्रतिबिम्बवच्च दर्शनमित्यभिप्रायेणाह—ज्ञाने(चे)ति ॥ ३९ ॥

यस्तु वदति— नार्थाकारो ज्ञाने सङ्क्रामति । नचार्थस्थः प्रतिबिम्बो दृश्यते । किन्तु ज्ञानमर्थेनायोगोलकमिवाग्निना संस्पृष्टम् । अतोऽयसीव भास्वराकारो मोहादर्थाकारो ज्ञाने दृश्यत इति । तं प्रत्याह —बाह्येति । अयस्तेजसोर्हि सन्निकर्षाद् युक्तो मोहादविवेकभ्रमः । बाह्याभ्यन्तरदेशौ तु ज्ञानार्थावसम्पृक्तौ । ततः कथमनयोर्मोहादविवेकभ्रम इति ॥ ४० ॥

अपिच कश्चिदेकः सम्मूढो भवति जगतस्तु सम्मोहकल्पना सम्मोह एव । नचात्र कश्चित् कदाचिदसम्मूढो दृश्यते । सर्वस्य विवेकादर्शनात् ।

**संसर्गधर्म आकारस्तस्मादेव न युज्यते ।**
**देशभेदाददसंसर्गो मूर्तामूर्ततया तथा ॥ ४२॥**
**त्रैलोक्येन प्रसङ्गाच्च संसर्गो नैककालता ।**
**नचाप्यार्जवतः स्थानं ज्ञानेनार्थस्य विद्यते॥ ४३॥**
**सर्वथा कल्पनायां च चक्षुषापि रसादयः ।**
**गृह्येरन् सर्वभावानामण्वाकाराश्च तद्गताः ॥ ४४ ॥**

---

अतो न सम्मोहकल्पना युक्तेत्याह — अज्ञम्मूढस्येति । यदि तु ज्ञानार्थयोर्विविक्तयोरदर्शनेऽपि सम्मोहः कल्प्यते, तर्हि द्वयोरेव नावतिष्ठेत । एवं हि यथेष्टमेव तत्त्वानि प्रसज्ज्याय सम्मोहोऽभिधीयतां, किं विशेषादित्याह — कल्प्यमान इति ॥ ४१ ॥

अन्यद् दर्शनं — नार्थाकारो मोहाज्ज्ञानेऽवगम्यते । किन्तु सांसर्गिकोऽयमाकारश्चूर्णहरिद्रयोरिवारुणिमेति । तदप्यत एव बाह्याभ्यन्तरदेशत्वादनुपपन्नमित्याह — संसर्गेति । तदेव प्रकटयति — देशभेदादिति । अपिच, अमूर्तं ज्ञानं मूर्तोऽर्थः कथमनयोः संसर्गधर्म आकारो भवेत् । घटाकाशादावदर्शनादित्याह — मूर्तामूर्ततया तथेति ॥ ४२ ॥

नन्वसत्यप्येकदेशत्वे एककालतया संसर्गो भविष्यतीत्यत आह — त्रैलोक्येनेति । त्रैलोक्यं हि ज्ञानेन समकालतया संस्पृष्टं संसर्गजन्माकारं प्रतिभासयेत् । नचैवमस्ति । तस्मादतिव्याप्तेर्नैककालतया संसर्ग इति । नन्वार्जवावस्थानं ज्ञानार्थयोः संसर्गो भविष्यतीत्यत आह — नचेति । निर्मुखस्यार्जवाभावाद् न ज्ञानेनार्थस्यार्जवावस्थानम् । सर्वतोदिक्पदार्थबोधेन सर्वतोमुखत्वे वा सर्वार्थसंसर्गप्रसङ्गात् सर्वाकारोपलब्धिः । नहि सर्वतोमुखं कस्यचिदेकस्याभिमुखं युक्तमिति ॥ ४३ ॥

अपिच, येनैवार्थेन ज्ञानस्य संसर्गः कल्प्यते, सर्वथैव तेन संसर्गः कल्पयितव्यः, निर्भागत्वात् । एवं च चक्षुषैकत्र भावेऽनुभूयमाने तेनैव तद्गतरसाद्युपलब्धिप्रसङ्गः, तद्गतसूक्ष्माकारोपलब्धिश्चेत्याह — **सर्वथेति** ॥ ४४ ॥

**नचापि विषयत्वेन स्थाने संसर्गकल्पना ।**
**विषयत्वं हि कीदृक् स्यात् प्रागाकारोपलम्भनात् ॥**

**नह्यसंचेतितो भावो विषयत्वेन कल्प्यते ।**
**विषयत्वात् तदाकार आकाराद् विषयश्च सः ॥ ४६ ॥**

**द्वयोराकारनिर्मुक्तं सत्त्वं संसृष्टता तथा ।**
**स्वरूपतः परिच्छिद्य वक्तुमित्यादि युज्यते ॥**

**नचाप्यस्येह सद्भावः प्राग् गृहीतो नचोपरि ।**
**नह्याकारविनिर्मुक्तं ग्राह्यमस्तीति भाषितम् ॥ ४८ ॥**

---

ननु यदेव तदर्थस्य ज्ञानं प्रति विषयतयावस्थानं सोऽनयोः संसर्गो भविष्यतीत्यत आह — नचेति । अत्र कारणमाह — विषय(त्व)मिति । अयमभिप्रायः — संसर्गाकारवादिना हि प्रागेवाकारोपलम्भनात् संसर्गो वक्तव्यः । नच विषयत्वमाकारोपलम्भनात् प्रागस्ति । अतः कथं तन्निबन्धनाकारा संविद् भवति ॥ ४५ ॥

किमिति न स्यादत आह — नहीति । संवेद्यमान एव हि भावो विषय इति विषयविदः । अत उपलम्भोत्तरकालमेव विषयभावान्न तन्निबन्धन आकारबोधः शक्यतेऽङ्गीकर्तुमिति । एवं तु कल्प्यमान इतरेतराश्रयं प्राप्नोतीत्याह — विषयेति । नीलत्वविषयत्वेन संसर्गात् तदाकारो निष्पद्यते । तदाकारनिष्पत्त्या च तस्य विषयभाव इति दुरुत्तरमितरेतराश्रयमिति ॥ ४६ ॥

दूषणान्तरमाह — द्वयोरिति । अयमभिप्रायः — यदि ज्ञानार्थयोर्द्वयोरप्याकारशून्यं स्वरूपमवगतं स्यात्, पुनश्च कदाचित संसृष्टत्वेनाकारसंवित्तिः, तदा भवेदपि संसर्गधर्माकारकल्पना । नैवमस्तीति वक्ष्यामः ॥ ४७ ॥

नचार्थस्य ज्ञानाद् विविक्तस्य सद्भावो गृहीतपूर्वः । नच ज्ञानस्योपरि गृह्यते येन चूर्णहरिद्रयोरिव विविक्तगृहीतयोरनयोः संसर्गः कल्प्यत इत्याह — नचेति । कारणमाह — नहीति । संसर्गधर्मत्वे ह्याकारस्य

**तस्मादर्थेन संसर्गो निष्प्रमाणक एव ते ।**
**ज्ञानवैचित्र्यसिद्ध्यर्थं नचास्त्यर्थस्य कल्पना ॥ ४९ ॥**
**तदधीनं हि वैचित्र्यं क्व दृष्टं येन कल्प्यते ।**
**निराकारेण चोत्पत्तिर्वैचित्र्याकारयोः कथम् ॥ ५० ॥**

---

प्रथमं द्वयोरप्यनाकारबोधेन भवितव्यम् । नचाकारशून्यं ग्राह्यमस्तीति पूर्वमुक्तमिति ॥ ४८ ॥

उपसंहरति — **तस्मा**दिति । किं पुनरिदमर्थस्य सद्भावो न गृहीत इति । ज्ञानवैचित्र्यानुपपत्तिरेव ह्यर्थस्य सद्भावे प्रमाणम् । स्वच्छाकारस्य हि ज्ञानस्य न कारणान्तरमन्तरेणाकारसम्बन्धस्तद्वैचित्र्यं चोपपद्यते । अतोऽस्ति कश्चिज् ज्ञानातिरिक्तो हेतुर्येनेदं वैचित्र्यमाधीयत इत्यभ्युपगन्तव्यम् । न चेन्द्रियाण्येव तत्र कारणमिति युक्तं, तेषामेकरूपत्वेन कार्यवैचित्र्यानुपपत्तेः । नच समनन्तरप्रत्ययादेव केवलाद् विचित्राकारदर्शनमुचितं, विसदृशप्रत्ययानन्तरमेव हि वयमेकान्तविसदृशं प्रत्ययमुपादीयमानमुपलभामहे । तत् तद्धेतुकत्वेऽनुपपन्नम् । यथाकार्यदर्शनं तु विचित्रा एव हेतवः कल्प्यन्त इति युक्तम् । ते चार्थशब्दवाच्याः । एवञ्च प्रसिद्धसद्भावोऽर्थः ज्ञानं चाविवादसिद्धमेवेति प्रसिद्धसद्भावयोर्न्याय्य एव संसर्गः, अत आह — ज्ञानवैचित्र्येति ॥ ४९ ॥

किमिति न कल्पना, अत आह — **त**दिति । यदि वैचित्र्यमर्थाधीनतया विदितप्रतिबन्धं भवेद् , एवमर्थमनुमापयेत् । अत्यन्तापरिदृष्टपूर्वेण त्वर्थेन न क्वचिद् वैचित्र्याधानं दृष्टमिति न तद्दर्शनेन तदनुमानं युक्तम् । कार्यदर्शनबलेन कुतश्चिदेव समनन्तरप्रत्ययविशेषात् किञ्चिदाकारं ज्ञानं जायत इति न नोपपन्नम् । विलक्षणा हि ते उपादानविशेषा विलक्षणशक्तय इति न किञ्चिद् दुष्यतीति कार्यदर्शनबलानुसारिण्यामेव च कारणव्यवस्थायां सुष्वा(?)पादावप्याकाराभावसिद्धिः । कार्याभावेन कारणाभावानुमानात् । भवति तु तास्वपि दशासु स्वच्छसंवित्सन्तानः परस्ताज् ज्ञानदर्शनाद् , अनुपादानकारणस्य तस्यानुपपत्तेः । कथमनाकारादाकारवतो निष्पत्तिरिति चेत्, कथं विसदृशाद् विसदृशस्योत्पत्तिः । तत्रापि शक्तिभेद एव कार्यदर्शनबलानुमेयो निबन्धनम् । कश्चिदेवेह मूर्छादावन्ते प्रत्ययभेद

**निराकाराच्च विषयाद् बुद्ध्याकारोऽतिविस्मयः ।**
**स्मृतिस्वप्नादिबोधेन स्यादनाकारता तव ॥ ५१ ॥**
**नहि तत्रार्थसंसर्गः केवला वासनैव तु ।**
**हेतुत्वेनोपपन्नेति सैव जाग्रद्धियामपि ॥ ५२ ॥**

---

आविरस्ति, यः परस्तान्मूर्छोच्छेदे नीलाद्याकारप्रत्ययमुपजनयति । स तस्यायमचिन्तनीयो महिमा कार्यदर्शनप्रमाणको न मीमांस्यत इति सूक्तमर्थसद्भावो न गृहीत इति । अपिच यदि साकारोऽर्थः तदधीनं च ज्ञानानां वैचित्र्यं, कथं तर्हि मूर्छादावन्तिमेन निराकारेण ज्ञानेन परस्ताद् भाविनो ज्ञानजातस्याकारो वैचित्र्यं वोपपद्यते । नहि तदुभयमप्यर्थजन्यं, सत्येव तस्मिन्नभावात् । मूर्छायामपि ह्यर्थ आसीदेव । नच तेनासावाकारो दर्शितः । अतो व्यभिचारिणः समनन्तरप्रत्ययविशेषादेव निराकारादपि वैचित्र्याकारयोरुत्पत्तिरभ्युपगन्तव्या । एवञ्च सर्वत्रैव तथाभ्युपगन्तुमुचितम् । किमर्थग्रहेण । पठन्ति च । 'अर्थग्रहः कथं सत्यमि'ति । तदेतदाह — निराकारेणेति ॥ ५० ॥

अपिच, साकारा नीलादयो विषया ज्ञानं सरूपयन्तु निराकारस्तु गगनकुसुमशशविषाणवन्ध्यासुतादिविषयः कथं बुद्धावाकारमादध्यात् । न हि तत्र विषयाकारो नाम कश्चिदस्ति । बलात् तत्र बुद्धिरेव साकारेति वक्तव्यम् । तद् व्यापकमस्तु । किमर्धजरतीयेनेत्यभिप्रायेणाह — **निराकारादिति** । अपिच पूर्वानुभूतेषु स्मर्यमाणेषु असम्बन्धस्वभावेषु स्वप्नादि-बोधे चात्यन्तानन्ताननुभूतस्वशिरश्छेदादिविषये विषयाकाराभावादनाकारस्तद्वादिनां ज्ञानमापद्यत इत्याह — स्मृतीति ॥ ५१ ॥

अत्र कारणमाह — **नहीति** । सता ........ सतेति भावः । कथं तर्हि तत्राकारासम्बन्धः अत आह — केवलेति । वासनेति । समनन्तरप्रत्ययमेवोपादानापरनामानमुपादत्ते । नतु ज्ञानातिरेकि........पूर्वं चिरन्तनबौद्धमतेन वासनाभेदो वर्णित इति वेदितव्यमिति । एवञ्च जाग्रद्बुद्धिष्वपि वासनाहेतुक एवाकारप्रतिभासो युक्त आश्रयितुं, किमर्धजरतीयेनेत्यभिप्रायेणाह — इतीति ॥ ५२ ॥

---

१. 'स्वापादि' क. पाठः.

अन्वयव्यतिरेकाभ्यामेवं ज्ञानस्य गम्यते ।
आकारो नहि बाह्यस्य ज्ञानापेतो निदर्श्यते ॥ ५३ ॥
बाह्योपेतो मया यद्वत् तस्मात् संसर्गवागियम् ।
निराकारेऽपि विज्ञाने वासनास्वेव युज्यते ॥ ५४ ॥
द्वयोरप्येक आकार इत्येतस्याप्रमाणता ।
देशभेदादसंसर्गाद् द्वयोश्चानवधारणात् ॥ ५५ ॥

---

किञ्च, अन्वयव्यतिरेकाभ्यां ज्ञानाकारकल्पनैव साधीयसीति दर्शयति— अन्वयेति । एवंशब्दो युक्त्यन्तरोपन्यास इति । कथमवगम्यते, अत आह — नहीतिवदन्तेन । अस्यार्थः—असत्यपि बाह्ये स्वप्नादौ ज्ञानमात्रान्वयादेवाकारान्वयो दृश्यमानो ज्ञानप्रभावित एवावसीयते । न त्वेवमर्थवादिनो ज्ञानापेतमर्थस्याकारान्वयं दर्शयितुं शक्ताः । असति ज्ञान आकारप्रतिभासायोगादिति । अतः सिद्धं तावद् वासनानिमित्त एवायं ज्ञानाकारो नार्थसंसर्गधर्म इति । यदित्ववश्यं सांसर्गिकोऽयमाकारो वक्तव्यः, परमस्तु स्वभावनिराकाराणां ज्ञानानां वासनासंसर्गनिबन्धनत्वेनाकारस्य संसर्गवाक्प्रवृत्तिरित्याह — तस्मादिति ॥ ५४ ॥

प्रत्यूढः संसर्गधर्मपक्षः । अन्यन्मतं — नीलादिराकारो भासते । न चायं ज्ञानार्थयोरन्यतराश्रयतया निर्धारयितुं शक्यते । तदयमगृह्यमाणे विशेषे एक एव द्वयं साकारयतीत्याश्रीयते लाक्षाराग इव सन्निहितं मणियुगलम् । तदेतदुपन्यस्य दूषयति — द्वयोरिति । कथमप्रमाणमत आह — देशभेदादिति । अन्तःस्थं हि ज्ञानं बहिरर्थः । नानयोः सन्निकर्षोऽस्तीति नेदमुभयमेकमाकारमुपजीवितुमुत्सहते । मणियुगलं तु सन्निहितमेको लाक्षारागोऽनुरञ्जयतीति न नोपपन्नमिति । ननु भिन्नदेशयोरपि कुतश्चित् संसृष्टयोरेकाकारोपजीवनं भविष्यतीत्यत आह — असंसर्गादिति । उक्तमिदं नानयोः कदाचित् संसर्गो गम्यते मणेरिव प्रमाणाभावादिति । अपिच पृथगवधारितसद्भावस्य द्वयस्य साधारण आकारो भवेत् ; नत्वत्र विभक्ताकारं द्वयमुपलभ्यते । सर्वदैवैकाकारोपलम्भात् । उक्तं च — 'अर्थज्ञानयोराकारभेदं नोपलभामहे' इति । तदेतदाह — द्वयोरिति ॥ ५५ ॥

**एवमेवार्थबुद्ध्योः स्यात् सादृश्यान्नाविभक्तता ।**
**भेदे ज्ञाते हि सादृश्यं नाज्ञाते स्यात् खपुष्पवत् ॥**
**तथा द्विचन्द्रमायादावन्यथार्थे व्यवस्थिते ।**
**या स्यादाकारसंवित्तिर्नासावर्थनिबन्धना ॥ ५७ ॥**
**नक्षत्रं तारका तिष्यो दारा इत्येवमादिषु ।**
**नैकत्रार्थे विरुद्धत्वाल्लिङ्गानेकत्वसम्भवः ॥ ५८ ॥**
**परिव्राट्कामुकशुनां कुणपादिमतिस्तथा ।**
**दीर्घह्रस्वत्वबुद्धिश्च ह्येकस्मिन्नप्यपेक्षया ॥ ५९ ॥**

---

अन्यद् दर्शनं — विभक्ताकारमेवेदमुभयमत्यन्तसुसदृशत्वेन त्वाकारविवेको न लक्ष्यते नीलोत्पलवन इव कादम्बकानामिति । एतदुपन्यस्य दूषयति — **एवमिति** । सादृश्यादविभक्तता न स्यादित्यन्वय इति । कारणमाह — भेद इति । निर्ज्ञातभेदयोर्हीन्दीवरकादम्बयोः सादृश्यादविवेकाभिधानं युक्तम् । पृथगनवगतपूर्वस्य त्वर्थस्य खपुष्पतुल्यस्य सादृश्यादविवेक इति महानयमविवेक इति । सर्वे चैते बाह्यार्थवादिबौद्धैकदेशिपक्षा उपन्यस्य दूषिता इति वेदितव्यमिति ॥ ५६ ॥

इतश्च ज्ञानस्याकार इत्याह — तथेति । द्विचन्द्रादिविभ्रमेष्वन्यथार्थे व्यवस्थितेऽन्याकारा बुद्धिरुपजायते । तच्चार्थनिबन्धनत्वे त्वाकारस्य नोपपद्यते । कथं ह्यन्याकारोऽर्थो ह्यन्याकारां धियमुपजनयेत् । तदवश्यमसत्यप्यर्थे भासमान आकारो ज्ञानस्यैव वक्तव्यः । अतः सर्वत्रैव तथावधारणं युक्तमित्यभिप्रायः ॥ ५७ ॥

किञ्च यदेतद् विरुद्धानेकलिङ्गत्वमेकस्य नक्षत्रं तारका तिष्यो दारा इत्यादिषु तदर्थाकारत्वे नोपपद्यते विरुद्धधर्माध्यासस्य भेदनिबन्धनत्वेनार्थभेदापत्तेः । भिन्नान्येव तु विचित्रवासनानिबन्धनानि विचित्रार्थज्ञानानि जायन्त इति युक्तम् । तदेतदाह — **नक्षत्रमिति** ॥ ५८ ॥

यथैकस्यामेव प्रमदातनौ येयं परिव्राट्कामुकशुनां कुणपं कामिनी भक्ष इति कल्पना भवति, साप्येकात्मत्वादेकस्यार्थस्यार्थवादिनां नोपपद्यत

**घटत्वपार्थिवद्रव्यसंज्ञेयादिमतिस्तथा ।**
**युगपद् ग्राहकाणां च न स्यादैकात्म्यवत्तया ॥६०॥**
**नार्थे ह्येकत्र युगपद् विरुद्धाकारसम्भवः ।**
**प्रत्ययानां च भिन्नत्वाद् भवेच्छक्त्यनुसारतः॥ ६१॥**

इत्याह — परिव्राडिति । अत्र नार्थनिबन्धनेत्यनुपञ्जनीयमिति । इदं चापरं बाह्यार्थवादिनां नोपपद्यत इत्याह — दीर्घेति एकैव हि प्रदेशिन्यङ्गुष्ठमध्यमाङ्गुल्यपेक्षया दीर्घह्रस्वतयावगम्यते, तच्चैतदैकात्म्ये तस्यार्थवादिनां नोपपद्यते । पूर्वं च प्रमात्रपेक्षयानेकाकारसंविदुक्ता । अत्र तु न केवलं भिन्नानां प्रमातॄणामेकत्रानेकाकारबुद्धिः, एकस्यापि तूपाधिभेदादनेकाकारबोधो दृश्यत इत्युक्तमिति ॥ ५९ ॥

न केवलमौपाधिको नानाकारः प्रत्ययः । किन्तु घटोऽयं पार्थिवोऽयमित्यादिरेकत्रैवार्थे युगपदनेकेषां ग्राहकाणां विकल्पो दृश्यते । तच्चेदं पारमार्थिकार्थसद्भावे नोपपद्यते तस्यैकात्मत्वात् । एकोऽर्थ एकात्मक इति सर्वैरेव स तथावगम्यते । न चैवम् । अतो बुद्धिमात्रविलसितमेवेदमनेकाकारत्वमिति साम्प्रतम् । तदेतदाह — घटत्वेति । अत्र च प्रातिलोम्येनान्त्यसामान्यात् प्रभृति परसामान्यं यावदुपन्यासः कृत इत्यनुसन्धातव्यम् । ज्ञेयता तु न सामान्यं ज्ञानसम्बन्धोपाधिकत्वात् । अयमपि च प्रतीतिप्रकारो दृश्यत इति प्रदर्शनार्थमुक्तम् । यद्यपि चात्र घटत्वादीनां दीर्घत्वादीनामिव विरोधो न दृश्यते, तथाप्येकात्मकत्वादेकस्य निर्भागस्यार्थात्मनो नानाकारप्रतिभासोऽनुपपन्न इत्युक्तमिति ॥ ६० ॥

किमिति न स्यादत आह — नेति । न तावदेकत्रार्थ एकात्मन्यनेकाकारत्व एवं न्याय्यः । यथाहुः —

"अन्यथैकस्य भावस्य नानारूपावभासिनः ।
सत्यं कथं स्युराकारास्तदेकत्वस्य हानितः ॥"

इति । नतरां विरुद्धाकारसम्भवः । स च प्रागेवोक्तोऽनुसन्धातव्य इति । ज्ञानवादिनस्तु नानाप्रत्यया नानाप्रकारा भवन्तीति युक्तमित्याह — प्रत्ययानामिति । किं पुनरेषां तथात्वे कारणमत आह शक्त्यनुसारतः ।

**निरपेक्षं स्वरूपेण तस्माज्ज्ञानं यदाकृति ।**
**तथार्थो न यथार्थं तु ज्ञानमुत्पद्यते क्वचित् ॥ ६२ ॥**

**इत्थं विज्ञानतन्त्रत्वे कोऽन्वर्थं कल्पयिष्यति ।**
**धीरनारोपिताकारा स्वात्मन्येवोपयोक्ष्यते ॥ ६३ ॥**

**नैतदस्ति त्वयैकं हि ग्राह्यं ग्राहकमिष्यते ।**

---

शक्तिरिति समनन्तरप्रत्ययमेवापदिशति, तदधीनत्वाज्ज्ञानकार्यनिष्पत्तेः । तदतिरिक्ता तु शक्तिरप्रमाणिकैवेति न बौद्धैरिष्यत एवेति ॥ ६१ ॥

अतः सिद्धं तावद् भासमान आकारो ज्ञानस्यैव न त्वर्थो(क्षेपः ? पेक्षः) अर्थनिरपेक्षमेव तु स्वरूपेण यादृशं ज्ञानं यदि तदनुसार्यर्थोऽभ्युपगन्तुमिष्यते सोऽस्तु नाम । न पुनर्यथार्थं ज्ञानं नाम किञ्चिदस्तीत्याह — **निरपेक्षमिति** ॥ ६२ ॥

अस्तु तर्हि ज्ञानानुसार्येवार्थः, न, एवमपि द्वैतहानिरित्यत आह — **इत्थमिति** । अयमभिप्रायः — गलजिह्विकयेदमस्माभिरुक्तं तथार्थ इति । नतु ज्ञानाकारत्वेऽर्थो नाम कश्चित् सिध्यति । आकारभेदानुपलम्भात् । अतो न विज्ञानतन्त्रत्वेऽर्थकल्पना शक्यते कर्तुम् । अर्थेनानारोपिताकारा धीरेव स्वात्मन्येवोपयोक्ष्यते । स्वात्मानमेव प्रकाशयति न त्वर्थविषया । यद्येवं सर्वसंविदामनर्थकत्वात् किंकृतः प्रमाणेतरविवेकः । अर्थक्रियाकारिप्रत्ययसदसद्भावकृत इति ज्ञात्वा शाम्यतु भवान् । व्यवहारसंवादापेक्षया हि प्रमाणं तद्विसंवादादप्रमाणमिति सांव्यवहारिकी प्रमाणस्थितिः । पारमार्थिकं तु प्रमाणं चिन्तामयीमेव प्रज्ञामनुशीलयन्तः केचिदेव कृतिनो निर्धूतनिखिलनीलाद्युपरागमभिमुखीकुर्वन्तीति तत् तुरीयं प्रत्यक्षमाचक्षते ॥ ६३ ॥

सिद्धान्तमिदानीमारभते — **नेति** । अस्यार्थः — एकं हि ज्ञानं ग्राह्यग्राहकमिति वः सिद्धान्तः । न चैकस्योभयात्मकत्वे कश्चिद् दृष्टान्त इति । तत्पुनरिदं पूर्वापरयोरनवहितस्येव भाषितम् । तथाहि — न तावद् ग्राह्यग्राहकाकारं ज्ञानमिति बौद्धैरिष्यते । अपितर्हि प्रलीनग्राह्यग्राहकोद्ग्राहं चिन्मात्रमेव स्वयंप्रकाशमिति । उक्तं हि —

"ग्राह्यग्राहकवैधुर्यात् स्वयं सैव प्रकाशते ।"

इति । बौद्धगन्धिमीमांसकैरप्युक्तं— 'संवित्तयैव हि संवित् संवेद्यते न तु संवेद्यतया नास्याः कर्मभावो विद्यते' इति । दृष्टान्ताभाववचनमपि चासमर्थम् । नहीदानीमनुमानतो बौद्धस्य प्रत्यवस्थानं, येन दृष्टान्ताभाववचनेनोपालभ्यते । निरालम्बनानुमानस्य प्रत्यक्षबाध उक्ते सम्प्रति प्रत्यक्षशक्तिपरीक्षयैव प्रत्यवस्थितं न ज्ञानं बहिरर्थे प्रवर्तितुं शक्तं ग्राह्यलक्षणायोगादित्यादिभिः । अतः किं दृष्टान्ताभाववचनेनोपालभ्यते । अत्रोच्यते — एवं हि मन्यते । अवश्यमयं ग्राह्यग्राहकभावः संविदो बौद्धैरभ्युपगन्तव्यः, कथमन्यथा सैव सिध्यति । न ह्यग्रहणकर्मणः कस्यचित् सिद्धिरस्ति । ननु स्वप्रकाशः प्रकाशः किमस्य प्रकाशान्तरेण । स्वप्रकाश इति कोऽर्थः । स्वयमेव प्रकाशते नतु प्रकाशान्तरमपेक्षत इति । किं पुनरिदं प्रकाशत इति प्रकाशादर्थान्तरवचनं, न वा । यद्यर्थान्तरवचनम्, अस्ति तर्हि संविदोऽप्यपरः प्रकाशः । अन्यथा प्रकाशत इत्यनधिकार्थमवचनीयमेव । स्वरूपं हि संवित्पदेनैवोपात्तम् । अतः प्रतीतिकर्मतैव संविदः प्रकाशतेपदार्थो घटः प्रकाशत इतिवत् । स्यादेतत् । कर्तृप्रतिनिर्देशोऽयं नातः कर्मभावोऽवसीयत इति । नैवम् । एवमपि प्रकाशतेपदार्थस्य कर्तृभावो वाच्यः । नासावसति प्रकाशभेदे सिध्यति, अद्वितीयस्य भेत्तुमशक्यत्वात् । अतो नाप्राप्तस्य सिद्धिरस्ति । नचापि कर्मणः प्राप्तिरस्तीति तस्याः संविदोऽवश्यं प्राप्यकर्मता भावान्तरवद् वक्तव्या नान्या गतिरस्ति । नन्वर्थः कर्म, आत्मा कर्ता, संवित्तु फलं, तत् कथं कर्मेत्युच्यते । न । फलस्याप्यप्रतीतिकर्मणः सिद्ध्यसम्भवात् । अन्यथा मातृमेययोरपि स्वप्रकाशापातात् किं तत्सिद्ध्यर्थं संविदभ्युपगमेन । न प्रयोजनतः संविदं सङ्गिरामहे, अपितु प्रतीतितः । प्रतीमो हि वयं मातृमेयगोचरां फलभूतां संविदम् । न ततोऽपि भिन्नामपरामिति तावत्येव व्यवतिष्ठामहे । मैवम् । निराकृतमिदं नानाकारा धीरुपलभ्यत इति । नहि नः संवित्प्रकाशवदर्थप्रकाशोऽपि भाव्यते, नीलाद्याकारमात्रप्रकाशात् । नन्वप्रकाशात्मानो घटादयः प्रकाशान्तरमपेक्षन्ताम् । संविदस्तु तद्रूपायाः किमिति प्रकाशान्तरापेक्षया । न, अतद्रूपत्वात् । संविदोऽपि हि न स्वात्मप्रकाशात्मत्वं, अर्थप्रकाशो ह्यसौ ।

तिशयो दृष्टः । तत् क्वचिदाश्रये समासादितपरप्रकर्षं सर्वगोचरं भविष्यति । भवति चात्र सातिशयं काष्ठाप्राप्तमवगतं यथा वियति परिमाणम् । सातिशयं च ज्ञानम् । अतस्तेनापि क्वचिदाश्रये परिनिष्ठातव्यम् । एषा च ज्ञानस्य परिनिष्ठितिर्या सर्वविषयता महाविषयतयैव यथोत्तरमतिशयागमादित्यत आह— **यत्रापीति सामर्थ्यमन्तेन** । अयमभिप्रायः— सत्यं च[1] चक्षुषः प्रकर्षो ज्ञानस्य च, नतु स्वार्थमतिक्रम्य । उन्मीलितचक्षुषो हि प्रतियतः यद्यपि नीलपीतादिभेदभिन्नमनेकमपि रूपं प्रकाशत इति नैकत्र रूपे चक्षुर्नियम्यते, नानादेशपरिमाणार्थपरिच्छेदाच्च न देशपरिमाणाभ्याम् । तथापि तु न स्वार्थमतिक्रम्य चक्षुषा किञ्चित् प्रकाश्यते इत्यास्ति नियमः । कश्चास्य स्वार्थः, येन सन्निकृष्यते । यथा रूपी रूपं रूपैकार्थसमवायिनश्च । रूपिणा तावद् द्रव्येण संयुज्यते 'भौतिकं हि तदि'ति प्रत्यक्षसूत्रे वक्ष्यते । रूपतदेकार्थसमवायिभिश्च संयुक्तसमवायात् सन्निकर्षः । नचैतावता रसादिषु प्रसङ्गः, योग्यतासहिता[2] प्राप्तिः सन्निकर्ष इति तत्रैव वक्ष्यते । योग्यता च कार्यदर्शनानुसारेण यथाकार्यमवतिष्ठते । अत एवातिदूरवर्तिनोऽपि भावा न चक्षुषः स्वार्थाः । एवमजातातिवृत्तादयः । तदेतेष्वेव स्वार्थेषु चक्षुः प्रकर्षमनुभवेत्, न परविषये शब्दादौ । एवं श्रोत्रेऽपि दर्शयितव्यम् । एतावांश्च स्वार्थे दृश्यते प्रकर्षो यदनतिदूरानतिसूक्ष्मभावप्रकाशनम् । तदिह स्वार्थाव्यभिचारात् तदवच्छिन्नैव व्याप्तिरवगतेति न सर्वविषयप्रकाशनानुमानाय घटते । प्रतिहेतुर्वर्णित एव । ज्ञानस्यापि चायं स्वार्थो यत्रास्य कारणमस्ति । षोढापि च प्रमाणज्ञानकारणं विभक्तं तद् यत्रास्ति, तत्र यथायथमभ्यासवशाद् ज्ञानं प्रकृष्यत एव, इष्यते च । षड्भिः प्रमाणैः संक्षिप्तः सर्वज्ञ इत्युक्तमेव । विस्तरेण तु सर्वेऽर्थाः प्रत्यक्षमीक्ष्यन्ते इति नैष ज्ञानस्य प्रकर्षः सम्भवति, प्रत्यक्षकारणानां स्वविषयप्रकाशप्रकर्षनियमात् । तदधीनत्वात् तु ज्ञानस्य तन्नियमादेव नियमः । अतो न स्वार्थमतिक्रम्य प्रत्यक्षस्य सामर्थ्यं सम्भवति । भविष्यद्ग्रहणमुपलक्षणं भविष्यत्यतीते वर्तमाने च । सविशेषै[3]निखिलभुवनावलम्बिनि भावभेदे नो खल्वस्ति नाम भाजनमेतावतोऽतिशयस्य कश्चिद् यो देहस्यैवैकस्य कस्यचिल्लोमानि परमाणून् वा सङ्कलयितुमलम् । (प्रागेव सर्वं ?) नन्ववर्तमानमपि चक्षुषा प्रकाश्यत एव भ्रान्ता-

१. 'हि यद्य' क. पाठः. २. 'रिणी य' ख. ग. पाठः. ३. 'षे' ग. पाठः.

विपरीतमिदमुच्यते — ऐकात्म्ये संवेदनमिति, भेदाश्रयत्वाद् ग्राह्यग्राहकभावस्य, स्वप्रकाशत्वनिषेधाच्च । एकं हि तत्त्वमविभागं नात्मानि वर्तितुमर्हति । स्वात्मनि क्रियाविरोधात् । न ह्यङ्गुल्यग्रमात्मनात्मानं स्पृशति सूच्यग्रं वा विध्यति । कर्मकर्तारौ हि तद्धर्मभेदाश्रयणेनैवोभयथा विवक्ष्यन्ते केशादयो लवनादौ न त्वेकान्तमेकात्मानः । आत्मनोऽपि ग्राह्यग्राहकभावमनन्तरमेव समाधास्यतीति सिद्धं नैकस्य ग्राह्यग्राहकभाव इति । यत्तु भेदे ग्राह्यलक्षणायोग इति । तद् यदुत्पत्तिसारूप्याभिप्रायेण तदनुमन्यामह एव उक्तदोषत्वादेवंविधस्य ग्राह्यत्वस्य । यत्तु ज्ञानोत्पत्तौ सम्बे(ध्य? त्य)ते तद् ग्राह्यं, कथमनात्मभूतमसम्बद्धं सम्बेद्यते । एवं ह्येकमेव ज्ञानं विश्वं गोचरयेद्, असम्बन्धाविशेषात् । अस्ति वा ऐकात्म्ये नीलसंवेदनयोः सम्बन्धः । नन्वसौ भेदाधिष्ठानः कथमेकत्राविभाग आस्पदं लभते । स्यादेतत् । ऐकात्म्येऽपि किंसम्बन्धेन, स ह्येकात्मा स्वप्रकाश एवेति । नैवम् । उक्तो हि स्वात्मनि वृत्तिविरोधः । तस्माद् भिन्नमेव संवेदनान्नीलं ग्राह्यलक्षणमुपनिपततीति तद्ग्रहे भेदमातिष्ठामहे । अभेद एव तूक्तेन प्रकारेण ग्राह्यलक्षणायोगः । यदा तु ज्ञानार्थयोः सारूप्यनिराकरणार्थं स्थूलानुपपत्तिश्चलाचलोपलम्भादिभिरापादिता, तां वनोपन्यासावसरे परिहरिष्यामः । सारूप्येण तु ग्राह्यतामनातिष्ठन्तो नेह स्थूलसिद्धावाद्रियामहे । तदकत्रकाराभिहतमेव हेतुत्रयम् । कथमिदानीमसम्बद्धं प्रकाशते । तत्प्रकाशे वा नातिप्रसङ्गः । नासम्बद्धं प्रकाशते । इन्द्रियाणि हि प्रकाशकानि । तानि च प्राप्यकारित्वादर्थेन सम्बद्धान्येवार्थविषयमात्मनि ज्ञानं जनयन्ति । तैश्चासन्निहितमवर्तमानं वा न प्राप्यत इति नातिप्रसक्तिः । ज्ञानं तु न प्रकाशकं प्रकाशत्वात् । प्रकाशकं च नासम्बद्धं प्रकाशकं प्रदीपवदिति तत्प्रकारजुषामिन्द्रियाणामिष्ट एव सम्बन्धः । तत् किमसम्बन्ध एव ज्ञानार्थयोः । यद्येवं कथं घटस्य ज्ञानं नासम्बन्धः । विषयविषयिभावोऽपि सम्बन्ध एव । स चास्ति ज्ञानार्थयोः । संयोगस्तु नेष्यते समवायो वा । कोऽयं विषयार्थः । येयं प्रतीतिकर्मता । प्रतीतिरिति हि क्रिया । अस्यामात्मा कर्ता । इन्द्रियाणि करणम् । अर्थः कर्म । तद् येयमर्थस्य प्रतीतौ कर्मकारकता तदेव तस्य विषयत्वं तच्च रूपं प्रतीतेः प्रागभूतं परस्तान्निष्पद्यत इत्यवश्यमाश्रयणीयम् । अन्यथा ज्ञाताज्ञातयोरविशे-

षापत्तेः । तदेव ज्ञातता(ति ? दि)पदास्पदं ज्ञानज्ञाने लिङ्गं, कथं पुनस्तद-प्रतीतायां प्रतीतौ प्रतीयते । ज्ञानविशिष्टता हि ज्ञातता । सा कथमज्ञाते विशेषणे ज्ञायते । अज्ञाता वा लिङ्गमनुपपद्यमाना वा न ज्ञानं गमयति । न ह्यज्ञातं लिङ्गमनुपपद्यमानं वा लिङ्गिनमुपपादकं वोपस्थापयति । तदितरेतरा-श्रयं, ज्ञानज्ञाततयोरितरेतराधीनसिद्धित्वात् । स्वरूपमात्रेण त्वर्थो न लिङ्ग-(मि ? म)तिप्रसङ्गादित्युक्तमेव । भवेदेवं यदि ज्ञानप्रतीतौ ज्ञातः प्रतीतो भवेत् तदुत्पत्तौ तु स प्रतीत इत्युच्यते । अतः स्वयं सिद्धो ज्ञानं साधयति । यत्तु ज्ञानविशिष्टता ज्ञाततेति । तन्न । तत्कर्मता हि सेत्युक्तमेव । तत्कर्मभाव-श्चार्थस्य न तत्प्रतीतौ सम्भवति । किन्तर्हि । तदुत्पत्तौ । तदयमुत्पत्त्यैव ज्ञानस्याप्राप्तपूर्वो विषयः सम्प्रति प्राप्तो ज्ञानमुपकल्पयति । एष हि प्राग् ज्ञानोत्पत्तेः सुस्वापादावन्ध इवासीत्, न कश्चिद् विषयमज्ञासीत् । तत् केयमाकस्मिकी विषयाणां प्राप्तिरिति चिन्तयति — नहि कदाचिद् भुवा-मकस्माद् भावः सम्भवति । अहेतुसापेक्षस्य गगनवन्नित्यभावापत्तेः । अभावो वा तत्कुसुमवदिति भवितव्यमस्य कदाचिद्भवतोऽर्थसन्निकर्षस्य केनापि कारणेन । न ह्यसौ तथाविधः स्वरूपेणैव, नित्यतथात्वापत्तेः । नेन्द्रियवशेन । तेष्वपि सत्सु सुस्वापादावदर्शनाद् अर्थतथात्वस्य जागरायां चाव्याप्रियमाणेषु । अस्तु तर्हि तद्व्यापार एव तथात्वे हेतुरर्थस्य । न, सत्यप्यभावात् । अस्ति खल्वस्य नानार्थैः सन्निकृष्यमाणानामिन्द्रियाणा-मसाधारणो व्यापारः । किञ्चिदेव तु कदाचिज्ज्ञातं भवति । एवमेवात्म-मनसोरपि सतोरर्थतथात्वादर्शनादहेतुत्वं तथात्वेन । नन्वव्यभिचारी मनसो योगस्तद्भावे हेतुर्भविष्यतीति । कस्य इन्द्रियाणामात्मनो वा । तन्न ताव-दिन्द्रियाणाम् । यदेव हि किञ्चिद् बहिरिन्द्रियं चक्षुरादि कार्यदर्शनवशा-न्मनसा संयुक्तमित्यवगतं तदेव किञ्चिज् ज्ञापयति । नेतरत् तदिन्द्रियमनो-योगहेतुकत्वेन युज्यते ज्ञातत्वस्येति तद्योगो न हेतुत्वेन कल्प्यते । आत्म-न्यपि मनोयुक्ते कस्य हेतोः किञ्चिदेव ज्ञातं नापरम् । येनेन्द्रियं सन्नि-कृष्यते चक्षुरादि तदात्ममनोयोगाज्ज्ञातं भवतीति चेद्, न । उक्तव्यभि-चारत्वात् । चक्षुस्सन्निकृष्टमपि हि किञ्चिदेव कदाचिज्ज्ञातं भवति नापरं, तदसति विशेषे नावकल्पते ।

अपिच ज्ञानकर्मता ज्ञातत्वं चेतना ज्ञानमिति चानर्थान्तरमिति लोक-सिद्धम् । तद् यद्यात्ममनोयोगश्चेतना, तस्योभयसाधारण्याद् मनश्चैतन्य-

बाह्यान्तःकरणजप्रत्यक्षनिराकरणेऽप्ययमेव भागो व्याख्येयः । न चाक्षुषस्य मानसस्य वा भविष्यदादौ सामर्थ्यमित्यर्थः । अपिच योगिज्ञानगोचरं सर्वमभ्युपयता कथं योगिना सर्वमनुभूयत इति वाच्यम् । यदतीताद्यपि वर्तमानतया योगिभिरवसीयत इति, एवं तर्ह्यतस्मिंस्तद्ग्रहो मिथ्या योगिज्ञानम् । अथ तु यथावस्थितमेव सर्वं योगिनानुभूयत इत्युच्यते, एवं तर्हि नातीतादिविषयस्य प्रत्यक्षतोपपत्तिः । अनुमानेऽपि प्रसङ्गात् । एवञ्च वर्तमानावर्तमानविषयं ज्ञानं प्रत्यक्षमित्यर्थवैशसम् । स्यान्मतं — कल्पनाविरहः प्रत्यक्षत्वम् । अतीतादिविषयमपि योगिनस्तद्रहितम् । अतः प्रत्यक्षमिति । तन्न । पूर्वापरकालसम्बन्धस्याविकल्पेन ग्रहीतुमशक्यत्वात् । का चेयं कल्पना । यद्यभिलापिनी प्रतीतिः, श्रोत्रमप्रत्यक्षं भवेत् । अथाभिलापसंसर्गयोग्यप्रतिभासाप्रतीतिः, कल्पनासामान्यस्वसंवेदनमप्रत्यक्षं भवेत् । यदप्याहुः — "नैनामियमभिलापेन संसृजति । तथा वृत्तेरात्मनि विरोधादिति" । तदयुक्तम् । असत्यप्यभिलापसंसर्गे तत्संसर्गयोग्यस्य सामान्यात्मनस्तत्र निर्भासात्; तावता च कल्पनात्वानपायात् कल्पनापोढत्वानुपपत्तिः । अथान्यरूपारोपः कल्पना, योगिज्ञानमप्यजातादिषु वर्तमानरूपारोपेणैव वर्तत इति न कल्पनापोढम् । अपिचान्यथास्थितस्यान्यथाभानाद् भ्रान्तमेव योगिज्ञानमभ्रान्तपदेन व्यावर्तितं कथं प्रत्यक्षम् । यथा हि तिमिरादिदोषवशप्रभवं केशज्ञानं भ्रान्तमित्यभ्रान्तपदेन व्यावर्त्यते, एवं योगिनामपि सर्वस्मिन् वर्तमानावभासं भ्रान्तमेवेत्यभ्रान्तपदेन व्यावर्तितं न प्रत्यक्षं भवेत् । साक्षात्कारिता तु नानिन्द्रियजस्य ज्ञानस्य सम्भवतीति प्रत्यक्षसूत्रे वक्ष्यामः । अपिचार्थसामर्थ्यसमुद्भवं प्रत्यक्षं योगिज्ञानं चासदजाताद्यर्थसमुद्भवं कथं प्रत्यक्षम् । एतदपि भविष्यत्त्वप्रतिपादनेनैव सर्वं दर्शितमित्यनुसन्धातव्यम् ।

स्यान्मतं — सर्वमेव प्रत्यक्षमसन्निहितावभासं, ज्ञानार्थयोः कार्यकारणभावेनायौगपद्यात् । अतो नानेन योगिज्ञानं दुष्यतीति । यद्येवं किं तर्हि प्रकाशते । ज्ञानाकार एवार्थेनाहितः । एतावदेवार्थस्य ग्राह्यत्वं यज्ज्ञानाकारार्पणहेतुत्वम् । यद्येवमर्थैकदेशोऽपि नावसीयते इति दूरे सर्वज्ञानम् ।

१. 'णप्र' क. ग. पाठः. २. 'ह्याद् मि' क. पाठः. ३. 'क्षानप्रत्यक्षं' क. ग. पाठः. ४. 'दुर्गृहीतम् ।', ५. 'थाप्रत्र' क. पाठः. ६. 'यम', ७. 'ज्ञान'; ८. 'ऽजाता' ख. पाठः.

यत्तूक्तमर्थस्थो धर्मः परेणापि ज्ञातो ज्ञानं गमयेदिति । तदयुक्तम् । अर्थो हि ज्ञातोऽनुपपद्यमानो ज्ञानकल्पनायां हेतुरुक्तः । नचासौ सर्वस्य तथा भवति । यस्यैव तु ज्ञानमुत्पन्नं तस्यासौ ज्ञात इति प्रतीतिसाक्षिकमेव । यथा यस्यैव गमनं तस्यैव देशान्तरप्राप्तिर्भवति असत्यपि गतिज्ञाने । किमात्मकः पुनरर्थस्थो धर्मः । उक्तं कर्मकारकतेति । ननु कर्मशक्तिरप्रत्यक्षसिद्धा कथं ज्ञानं गमयति । न कर्मशक्त्या ज्ञानं कल्पयामः । कर्मणा त्वर्थेन, स तु प्रत्यक्षसिद्ध एव । तस्य चाप्रत्यक्षायामपि शक्तौ कारकान्तरवत् प्रत्यक्षतोपपत्तिः । कारकान्तरशक्तयोऽपि ह्यप्रत्यक्षा एव । न चैतावता तेषामप्रत्यक्षभावः । अतः प्रत्यक्षादिप्रमाणप्राप्तो विषयो ज्ञानकल्पनायां हेतुः । प्राप्तिश्चार्थस्याभूतपूर्वावस्था सर्वस्य स्वसंवेद्येत्येके । अन्ये तु हानादिव्यवहारयोग्यतैवार्थस्य प्राप्तिरित्याहुः । सैव हि ज्ञातत्वम् । तदेव हि ज्ञानफलम् । क्रियाफलभागिता च कर्मत्वम् । सर्वथा सिद्धं ज्ञातादर्थाज् ज्ञानानुमानम् । येऽपि प्रत्यक्षैव संवित् स्वात्मानं विषयवदवस्थापयतीति मन्यन्ते, तैरपि ज्ञानोत्पत्तेः प्रागभूतः परस्ताद् भाव्यर्थगतो धर्मभेदोऽभ्युपगन्तव्यः । नतु ज्ञानप्रत्यक्षतैवार्थप्रत्यक्षता । न ह्यन्यस्मिन् प्रत्यक्षेऽन्यत् प्रत्यक्षं भवति, अतिप्रसङ्गात् । यदि संवित्प्रत्यक्षतैवार्थप्रत्यक्षता भवेद्, अनुमेयादीनामप्यापद्येत । अनुमानसंविदोऽपि प्रत्यक्षत्वात् । अतोऽवश्यं स्वगत एवार्थस्य विशेषो वक्तव्यः, येन प्रत्यक्षेतरते व्यवतिष्ठेते । अतः सिद्धं नाप्रमाणिका ज्ञेयसिद्धौ ज्ञानकल्पनेति द्वैतासिद्धिः । सर्वसंविदां त्वानर्थक्ये विषयाकारप्रत्यभिज्ञा निर्निबन्धनैव भवेत् । एष हि पूर्वेद्युर्दृष्टमर्थमपरेद्युः प्रत्यभिजानाति । तज्ज्ञानेन सह निरुद्धस्याकारस्य नोपलभ्यते । अन्यः खल्वयमद्य भुवो ज्ञानस्याकारः । अन्यश्चासौ यः प्राङ् निरूपितानिरुद्धः । कतरदत्र प्रत्यभिजानीमः । प्रमाणेतरविभागोऽपि सर्वसंविदामानर्थक्येऽनुपपन्नः । न चार्थक्रियाकारिज्ञानसदसद्भावनिबन्धनोऽसाविति युक्तम् । स्वप्नपरिदृष्टेष्वप्यर्थेषु (का ? क्व)चिदर्थक्रियाकारिज्ञानोदये प्रामाण्यप्रसङ्गात् । बाध्यते स्वप्नज्ञानमनन्तरम्, अतो न प्रमाणमिति चेत्, जाग्रज्ज्ञानमपि योग्यवस्थायां बाध्यत एवेति कथं प्रमाणम् । अथ तच्चिरेण बाध्यत इत्युच्यते, नैतावता विशेषेण सत्यामिथ्यात्वे भवतः । नहि मायासुवर्णज्ञाने चिरे[illegible]दो दृश्यत

१. 'मन्त' ख. पाठः.

नचैकस्यैवमात्मत्वे दृष्टान्तः कश्चिदस्ति ते ॥ ६४ ॥
अग्न्यादयो घटादीनां प्रसिद्धा ये प्रकाशकाः ।
न ते प्रकाश्यरूपा हि प्रकाशस्यानपेक्षणात् ॥ ६५ ॥
ग्राह्यत्वं तु यदा तेषां तदाक्षं ग्राहकं मतम् ।
अक्षग्रहणकाले तु ग्राहिका धीर्भविष्यति ॥ ६६ ॥

---

इति तत् प्रमाणम् । अतो यत् प्रमाणं तत् प्रमाणम्, अप्रमाणं चाप्रमाणं न त्वर्धजरतीयमुपपद्यते । अतः सिद्धं ज्ञानाद् भिन्न एवार्थो ग्राह्यलक्षणानुयायी ज्ञानं च साधयतीति । दृष्टान्ताभाववचनमपि नानुमानदूषणार्थं, किन्तु स्वाभिप्रेतानुमानदूषणपरिहाराय । एवं ह्यत्रानुमानमन्तर्णीतं नाविभागं ह्यात्मकम् अविभागत्वाद् अन्यतरांशवदिति । यदि च कश्चित् कदाचिदग्न्यादिषु दर्शनादनैकान्तिकतां ब्रूयात्; तदर्थमिदमुक्तं 'नचैकस्यैवमात्मत्वे दृष्टान्तः कश्चिदस्ति ते' इति । तच्चैतदुपरिष्टात् प्रपञ्चयिष्यतीति ॥ ६४ ॥

नन्वग्न्यादीनामेकात्मनामेव प्रकाश्यप्रकाशकता दृष्टा । अतोऽनैकान्तिको हेतुरत आह — अग्नीति । अयमर्थः— येऽग्न्यादयः प्रकाशकतया प्रसिद्धाः ते घटादीनां न स्वात्मन इति, न प्रकाशरूपाः प्रकाशात्मनः स्वरूपस्येति । किं पुनः स्वात्मनः प्रकाशस्य न ते प्रकाशकाः । नहि तेऽप्रकाशिताः सिध्यन्ति । नच तत्सिद्ध्यर्थमपरसजातीयापेक्षा दृश्यते । नहि प्रदीपः प्रदीपान्तरमपेक्षते । अत आह — अनपेक्षणादिति । अयमभिप्रायः — न ते स्वप्रकाशाय स्वात्मानमपेक्षन्ते, स्वात्मनि वृत्तिविरोधात् । स्वस्य स्वस्मिन् प्रकाशायोगादिति ॥ ६५ ॥

किमिदानीमप्रकाशिता एव प्रकाशन्ते, नैवमपि । केन तर्हि प्रकाश्यन्त इत्यत आह — ग्राह्यत्वमिति । चाक्षुषेण हि तेजसा प्रकाशितास्ते गृह्यन्ते । तत् तेषां ग्राहयितृ न ग्रहीतृ । इन्द्रियचैतन्यप्रसङ्गात् । नन्वेवं तेजसस्तेजोन्तरापेक्षायां सजातीयापेक्षेत्यनवस्था । नैवम् । उक्तात्र नायनस्य तेजसः कार्यदर्शनानुसारिणी रूपसिद्धौ शक्तिसिद्धिः । बहिस्तेजसो रूपप्रकाशकत्वदर्शनाद् देहेऽपि वर्तमानं तदेव रूपस्य प्रकाशकं भूतान्तराणां तैजसस्य च । नचेह सजातीयापेक्षा । अवान्तरजातिभेदात् । अत एवा-

30

**तस्यां तु गृह्यमाणायामन्या धीर्ग्राहिकेष्यते ।**
**नन्वात्मा ग्राहको ग्राह्यो भवताभ्युपगम्यते ॥ ६७ ॥**

**कथञ्चिद् धर्मरूपेण भिन्नत्वात् प्रत्ययस्य यत् ।**
**ग्राहकत्वं भवेत् तत्र ग्राह्यं द्रव्यादि चात्मनः ॥ ६८ ॥**

**यस्तु नात्यन्तभेदोऽत्र क्व वासाविष्यते मया ।**
**प्रत्यासत्तिनिमित्ता तु प्रत्यगात्मप्रवृत्तिता ॥ ६९ ॥**

---

न्धस्य प्रदीपादयो न बुद्धिविषयाः । स्वप्रकाशत्वे च तेषामन्धस्यापि धीगोचरा भवेयुरिति । अक्षमपि रूपरूपिरूपैकार्थसमवायिना प्रकाशकं न स्वात्मनः, तद्ग्रहणकाले बुद्धेरेवान्यथानुपपत्तिप्रमाणिकाया ग्राहकत्वमित्याह— अक्षेति ॥ ६६ ॥

बुद्धिस्तु बुद्ध्यन्तरवेद्येत्यनन्तरमेवोपपादितमित्याह—**तस्यामिति** । अत्र चोदयति — नन्विति । आत्मनो हि ग्राहकान्तराभावादवश्यमेकस्योभयरूपता वक्तव्या । नह्यसावन्येन गृह्यते । ग्राहकानन्त्यप्रसङ्गात् । अतस्तद्वदेवैकस्यैव ज्ञानात्मनो ग्राह्यग्राहकभावो नानुपपन्न इति ॥ ६७ ॥

परिहरति — **कथञ्चिदिति** । अयमभिप्रायः — निर्भागं हि ज्ञानमिति वः सिद्धान्तः । नचैवंविधस्य द्वैरूप्यमुपपन्नम् । आत्मा तु केनचिदात्मना ग्राहकः । केनचिदात्मना ग्राह्य इति किं नोपपद्यते । तथाहि — अस्यार्थसंयुक्तेन्द्रियसंयुक्तमनस्संयोगिनः प्रत्ययो नाम धर्मभेदो जायते । स चास्मात् कथञ्चिद् धर्मरूपेण भिन्नः । तेन चायं ग्राहकः । यत् तस्य पृथिव्यादिद्रव्यान्तरसाधारणं द्रव्यादिरूपं तद् ग्राह्यम् । ज्ञानस्य तु नैवंविधः कश्चिद् विभागो बौद्धैरिष्यते । अतः कथं तस्य द्वैरूप्यमिति ॥ ६८ ॥

नन्वेवमपि तावदत्यन्तभेदो ग्राह्यग्राहकयोरनिष्ट एव, अभेदस्यापि धर्मधर्मिणोरिष्टत्वादत आह— **यस्त्विति** । अत्यन्तभेदो हि घटाग्न्यादीनामप्यस्माभिर्नेष्यते एव । द्रव्यादिरूपेणाभेदात् । अतः कथञ्चिद् भिन्नयोरेव सर्वत्र प्रकाश्यप्रकाशकत्वमित्यात्मनोऽपि नानुपपन्नमिति । यदि तर्हि प्रत्य-

**अस्मत्प्रयोगसम्भिन्ना ज्ञानस्यैव च कर्तरि ।**

---

यांशो ग्राहकः द्रव्यांशो ग्राह्यः, कथं तर्हि भाष्यकारः 'प्रत्यगात्मनि चैतद् भवति न परत्रे'ति प्रत्यगात्मवृत्तितामात्मनो मन्यते। नन्वेवं परगोचर एवाहं-प्रत्ययो भवेत् । परं हि प्रत्ययात्मनो द्रव्यादिरूपमत आह— प्रत्यासत्तीति। येयमात्मनः प्रत्यगात्मवृत्तिता भासते नायं दोषः । सर्वमेव हि नोऽनेका-न्तेन परत्र प्रवर्तते । आत्मा त्वत्यन्तप्रत्यासन्नग्राह्यग्राहकधर्मकः प्रत्यगात्म-वृत्तितया भासते । अत्यन्तप्रत्यास(न्नो? न्नौ) हि नरस्य जलाजलात्मानौ तयोरसौ साधारणो ग्राह्यग्राहक इत्यभिधीयते इति न कश्चिद् दोष इति ॥ ६९ ॥

अपिच, अहमिति योऽयमस्मत्प्रयोगः तत्सम्भिन्ना विशदतरमात्म-गोचरा संविदुत्पद्यमाना दृश्य(न्ते ? ते।) ज्ञानं तु न स्वगोचरं जातु जाय-मानमुपलब्धम् । अतो नात्मदृष्टान्तेन ज्ञानस्योभयरूपता वक्तुं शक्या। नहि तदहं नीलमिति कदाचिदुत्पद्यमानं दृश्यते। सर्वदेदम्प्रयोगसम्भिन्नबोधात् । अत उपपन्नैवात्मकर्तृकात्मनि संवित्तिः नतु ज्ञान इत्याह— **अस्मत्प्रयो-गसम्भिन्नेति** । अत्रैके वदन्ति कुमारस्वामिवादिनः — नात्मास्मत्प्रयोग-सम्भिन्नबोधवेद्यः । नहि वयं कार्यकारणसङ्घातातिरेकिणमयमस्मीति पुरुषं बुध्यामहे । पृथिव्यादिद्रव्यानुभव एव स्वप्रकाशः स्वमात्मानं स्वप्रकाश्य-मात्मानं मेयं च द्रव्याद्यवस्थापयति । नहि विषयवित्तावप्रतिसंहिते पुरुषे स्वपरवेद्ययोरातिशयः सिध्यति। अतो विषया न बोद्धर्यनवभासमाने भासन्ते। नासौ तेषु। अत एव विषयवेदनोपरमे जडाकाशादिवदात्मनोऽवस्थानं स-ङ्गिरन्ते । यदा खल्वयं पुरुषः प्रक्षीणाशेषकर्माशयो मुच्यते, तदा ज्ञानकार-णानामिन्द्रियादीनामभावादसति विषयवेदने चिद्रहितः खवदवतिष्ठते । निश्शेषवैशेषिकात्मगुणोच्छेदलक्षणमेव हि मोक्षं मन्यन्ते । नचैवमपुरु-षार्थत्वं, दुःखोपरमस्यापि पुरुषेणार्थ्यमानत्वात् । संसारिणो हि दुःखेनो-द्विग्ना अत्यन्ताय तदुच्छेदमभिसन्दधाना गृहेभ्यः प्रव्रजन्तो दृश्यन्ते । ननु सुखमप्यात्मनो वैशेषिको गुणः । तस्योच्छेदादपुरुषार्थत्वमपि भवेत् । मैवम् । सुखमपि संसारिणो नानाविधानेकदुःखसङ्कुलं नातिचिरमनुवर्तत इति महान्तस्तदपि दुःखपक्ष एव निक्षिपन्तो मोक्षायोत्तिष्ठन्ते । अतो नास्ति

विषयवेदनोपरमे नरस्य चैतन्यम् । अत एवायमहरहस्सुस्वापे सन्मात्रतयावतिष्ठते । न पुनः किञ्चिज्जानाति । तत्र चानुभवे स्वप्नपरिचितानामिवार्थानामुपरिग्रात् स्मरणं भवेत् । नचैतदस्ति । अतो नानवभासमानेषु विषयेषु बोद्धा प्रख्यायते । नच विषयवित्तावस्मत्प्रयोगसम्भेदः इदम्प्रयोगसम्भेदादिति नास्मत्सम्भेदे विषयानवग्रहादात्मग्रहः । नापि विषयवित्तावात्मग्रहे अस्मत्प्रयोगसम्भेद इत्यसमञ्जसमस्मत्प्रयोगसाम्भिन्नेति । अत आह—ज्ञानस्येति । अयमभिप्रायः — अस्मत्प्रयोगसम्भिन्नोऽस्ति बोधो न वा । यदि नास्ति, जितमनुत्तरा गुरवः । सतस्तु किमालम्बनमिति वक्तव्यं शरीरमिन्द्रियाणि वा । न तावच्छरीरं, ज्ञातृगोचरत्वात् । अहं जानामीति ज्ञातारमहंप्रत्ययोऽवलम्बते । नच शरीरं चेतयते भौतिकत्वाद् भूतानां चाचेतनत्वात्, कारणगुणपूर्वकत्वाच्च कार्यगुणानाम् । अत एव नेन्द्रियाणि ज्ञातृणि । नच ज्ञानं, प्रत्यभिज्ञानात् । अयं हि पूर्वेद्युर्दृष्टमर्थमुत्तरेद्युः प्रत्यभिजानानः पूर्वापरसाधारणमात्मानमनुसन्दधाति अहमिदमदर्शमिति । तत्तु ज्ञानगोचरत्वेऽनुपपन्नम् । अन्यो हि तदा यः पूर्वेद्युर्दृष्टवान्, अन्यश्चायं योऽद्य पश्यति, क्षणिकत्वाज् ज्ञानानाम् । अतः —

"बुद्धीन्द्रियशरीरेभ्यो भिन्नोऽहङ्कारगोचरः ।
संवित्सामर्थ्यसिद्धत्वान्न जहात्युक्तरूपताम् ॥"

इति । तदिदमुक्तं — ज्ञानस्यैव च कर्तरीति । ज्ञानकर्तुर्हीयमस्मत्प्रयोगसम्भिन्ना संवित्तिः, न चान्यो ज्ञानस्य कर्तेत्युक्तम् । अतः संविद्बलादेवोभयरूपतात्मनः सिध्यति

"न त्वेवमात्मैवात्मानं ज्ञानं जानाति जातुचित् ।
तद्धीदं नीलमिति यत् सर्वदा परगोचरम् ॥"

यत्तु न कार्यकरणसङ्घातातिरेकिणं प्रतिपद्यामहे इति । किमेवं देहाद्यालम्बनोऽहंप्रत्ययः । तत् तावत् प्रत्युक्तमेव । नचानालम्बनोऽयम्, अत्रत्यसिद्धान्तात् । तदयमनालम्बनमात्मानमलभमानः स्वगोचरं ज्ञातारमाकर्षति । स प्रतीतिबलसिद्धोभयरूपः पुरुषो न नोपपद्यते । देहेन्द्रियादिसङ्कीर्णस्तु न विविच्योपलक्षयितुं शक्यते अयं नामासौ पुरुष इति । न चैतावता न गृहीतो भवति । नहि क्षीरोदकसंसर्गे विवेकेनागृहीते इति

न गृहीतमुभयम् । एवमिहापि संमुग्धबुद्धः पुरुषः प्रत्याहारादिकं योगमभ्यस्यद्भिर्नित्यनैमित्तिकमात्रानुष्ठायिभिरकुर्वद्भिर्निषिद्धं भोगप्रक्षीणाशेषकर्माशयैरयमस्मीति विविच्यापरोक्षीक्रियते । न त्वयं विषयवित्तावप्ययं नामेति विविच्यते । येऽपि विषयवेदनावसर एव नरो गृह्यते इत्यास्थिताः, तैरप्यस्य विवेको दर्शयितुमशक्य एव । अतो नायं दोषः विवेको नावगम्यत इति । न त्वयं विषयवेदनावसरे ज्ञायते । नहि तदा तदतिरेकिणः कस्यचित् प्रतीतिरस्तीत्यनन्तरमेव वक्ष्यते न त्वत्रेत्यनेन । संविदेव तावत् तदा नावभासते, यदायत्तो भावानां भेदः प्रागेव संवेत्ता । यत्त्वेवं स्वपरवेद्ययोरनतिशय इति । तन्न । यस्य हि ज्ञानमुत्पन्नं, तस्य विषया भासन्ते इत्युक्तमेव । अतः कथमुत्पन्नज्ञानेन संविदितमन्योऽनुभवेत् तेन वा ज्ञातं तदन्यः । नहि बोद्धृसंवेदनकृतः स्वपरवेद्ययोर्भेदः, येनैवमापद्येत । एतावतैव ह्येकस्यासौ वेद्यः, नापरस्य, यत् तस्य ज्ञानमुत्पन्नम् । एवमपि भवेदेतद् यद्यसत्यां बोद्धृवित्तौ विषया न विदिता भवेयुः । तद्वित्तिरेव वा विषयवेदनं भवेत् । न त्वेवं, केवलविषयावग्रहात् । अन्यगोचरज्ञानस्यान्यविषयत्वासम्भवात् । एवं चासत्यां विषयवित्तौ पुरुषो न प्रकाशत इत्यपि दुरुक्तम् । एवं ह्युपरतकरणग्रामस्य मोक्षो मरणमेव शब्दान्तरेणानुज्ञातो भवेत् । न खल्वपि ज्ञानात्मनः पुरुषस्य सदसत्त्वयोरस्ति विशेषः । तदयमपवर्गदशायां प्रकाशत एव । केन पुनरयं तदा प्रकाश्यते । न केनचित् । स्वप्रकाश एवेत्येके । नत्वेवं, स्वप्रकाशत्वनिषेधादविभागस्य । तदापि त्वयं धर्मधर्मित्वविभागाश्रयणेन प्रत्ययात्मना ग्राहको द्रव्यादिरूपेण ग्राह्य इति वाच्यम् । किमस्ति तदा धर्मधर्मिभेदः । को दोषः । श्रुतिविरोधः । श्रूयते हि 'एकमद्वितीयमि'ति । न । व्यतिरिक्तग्राह्यनिषेधात् । अन्यथा ह्यात्मभेदोऽपि न सिध्येत् । नचासौ नेष्यते, मुक्तेतराविभागापत्तेः । अपिच अर्थावग्रहनिवृत्त्यर्था एवं विसंवादा इति तत्र तत्रोक्तम् । अतोऽपवर्गेऽपि ग्राह्यग्राहकाकार एवात्मा । श्रूयते च 'जानात्येवायं पुरुषो ज्ञातव्यं तु न वेदे'ति । 'नहि तदा ज्ञातुर्ज्ञतेर्विपरिलोपो विद्यते । नतु विभक्तमस्त्यन्यद् यतो द्वितीयं जानीयादि'ति । तस्माज्जानातिपदप्रयोगादवगच्छामः यदस्ति मोक्षेऽपि कर्मभावः पुरुषस्येति । जानातेरकर्मकस्याप्रयोगात् । इयांस्तु विशेषः यदयं भूतेन्द्रियवशो विषयोपरागात् तच्छ-

याभेदान् प्रतिपद्यमानोऽविभक्तज्ञानशक्तिराभासते । निजैव त्वस्य चितिशक्तिः । सा असति विषयोपराग आत्मगोचरैवावतिष्ठते । कथमकरणिका ज्ञानोत्पत्तिरिति चेद्, मैवम् । तदानीमपि मनसो भावात् । नित्यं हि तदात्मवदुपेयते । आह च —

"प्रत्याहारादिकं योगमभ्यस्यन् विहितक्रियः ।
मनःकरणकेनात्मा प्रत्यक्षेण प्रतीयते ॥"

इति । नचैवं विषयवेदनप्रसङ्गः, मनसो बहिरस्वातन्त्र्यात् । विषयवित्तीनां च सुखदुःखहेतुत्वेन कर्मजन्यत्वादसति कर्मसंस्कारेऽनुपपत्तेः । आत्मज्ञानं च न कर्मजन्यमिति विगलितनिखिलकर्माशयस्यैव निष्पद्यते । केवलज्ञाननिराकरणेऽपि विषयवेदनान्येव प्रत्युक्तानि नात्मज्ञानम् । आह च —

"निजं यत्त्वात्मचैतन्यमानन्दोऽध्यक्ष्यते च यः ।
यच्च नित्यविभुत्वादि तेनात्मा नैव मोक्ष्यते ॥"

इति । सुस्वापेऽपि त्वात्मसंविदस्त्येवेति केचित् । अत एव सुषुप्तप्रतिबुद्धः सुखमहमस्वाप्समित्यात्मानं प्रतिसन्धत्ते । अथवा तत्र कर्माशयानुवृत्तेस्तत्परतन्त्रं मनो न केवलमात्मानं प्रकाशयति, न विषयवित्तिविरहात् । अतो न विषयसंवेदन एवात्मसंवेदनम् । अपिचैवं मेयमातृगोचरायामेकस्यां संविदि भासमानयोः किंकृतः कर्मकर्तृभावः । एवं हि तद्विकर्मकं ज्ञानं भवेत् । यत्तूक्तं परसमवायिक्रियाफलभागिता कर्मतेति, तदयुक्तम् । यदेव हि ज्ञानोत्पत्तावाप्यते तत् प्राप्यं कर्म । तथाचात्मेति कथमस्याकर्मत्वम् । अपिच केयं क्रिया, यत्समवायात् तत्फलभाक्तया आत्मनः कर्तृत्वम् । किंपुनस्तत् । उक्तम् आत्म(म)नोयोग इति । नन्वस्य मनस्यपि समवायात् तस्यापि कर्तृत्वप्रसङ्गः । तत्फलसम्बन्धश्चोभयोरप्यविशेषादापद्यते । तत्र चोक्तो मनश्चैतन्यप्रसङ्ग इति सिद्धं न विषयवित्तेरेव त्रयसिद्धिरिति । यच्चास्मिन् दर्शने दुःखोपरतिरेव मोक्ष इत्युक्तम् । तदप्ययुक्तम्, आनन्दश्रुतेः । श्रूयते हि 'विज्ञानमानन्दं ब्रह्म' 'आनन्दं ब्रह्मणो रूपम्' इति च । 'तदेतत् प्रेयः पुत्रादि'ति च । नच दुःखनिवृत्तिरेवानन्दः, अश्मादौ प्रसङ्गात् । स्यादेतत् । प्रत्यग्वृत्तिरुपलभ्यमाना दुःखाभावात्मना सुखम् । नचात्मा किञ्चित् प्रत्यग् जानाति अचेतनत्वादिति नासौ दुःखायते सुखायते वा । मैवम् । एवमपि देहिनो भिन्नावयवसंयोगी सुखदुःखसाधन-

भवन्ती तत्र संवित्तिर्युज्येताप्यात्मकर्तृका ॥ ७० ॥

नत्वत्र करणज्ञानग्राहकाकारवेदनम् ।
ग्राह्यत्वं येन बुद्धेः स्यादभिन्नत्वेऽपि पूर्ववत् ॥ ७१ ॥

अन्याकारापि संवित्तिर्यद्यन्यविषयेष्यते ।
ज्ञानाकारापि संवित्तिः कस्मान्नार्थस्य कल्प्यते ॥

---

जन्मा युगपत् सुखदुःखभोगो न स्यात् । दुःखायमान एव ह्येकत्र भागे परत्र सुखायते । तद् दुःखनिवृत्तौ सुखेऽनुपपन्नम् । प्रदेशान्तरे दुःखाभावः सुखमिति चेद्, न । स्वसंवेद्यत्वादाह्लादविशेषस्य, प्रदेशान्तरे दुःखाभावे च सुखे नरकान्तरे दुःखाभावान्नरकान्तरे सुखित्वप्रसङ्गः । तत्तावद् दुःखनिवृत्तिः सुखम् । नचास्यामानन्दवादो गौणः, प्रमाणाभावात् । नह्यानन्दश्रुत्यर्थे मुख्ये गृह्यमाणे किञ्चिदनुपपन्नं, येन गौणतया व्याख्यायते । अतो विज्ञानमानन्दं ब्रह्मेति प्रतिजानीमहे । असञ्चेतितस्त्वानन्दोऽप्यसत्कल्प एवेति सिद्धमन्तरेणैव विषयवेदनमस्मत्प्रयोगसम्भिन्नायां संवित्तावात्मा प्रकाशत इति ॥ ७० ॥

यथा चास्मत्प्रयोगसम्भिन्नसंवित्संवेद्य आत्मा द्विरूपो नैवं ज्ञानम् । नहीदं नीलमिति ज्ञाने करणानामिन्द्रियाणां ग्राहकस्यात्मनो ज्ञानस्य वाकार उपलभ्यते, नीलमात्रप्रकाशादिति न पूर्ववदात्मवदभिन्नत्वेऽपि नीलज्ञाने तद्बुद्धेर्ग्राह्यत्वम् । नीलमेव तु तया गृह्यते । सा तु ततो ज्ञातादवगम्यत इत्युपपादितमेव, तदेतदाह—नत्विति । दृष्टान्तार्थं करणग्राहकयोरुपादानम् । यथेदं नीलमित्यत्र करणमिन्द्रियं ग्राहकः पुरुषो न ज्ञायते, एवं ज्ञानमपि । कर्मैव तु केवलमत्रावगम्यते । नच कर्तृकरणक्रियमिति ॥ ७१ ॥

स्यादेतत् । ज्ञानसंवित्तिरेवेयमिदं नीलमिति । पररूपनिरूपणाकारत्वं तस्या वासनानिबन्धनम् । अनादिर्हि वासना संसारिणां, तद्वशेन स्वात्मानमपि परमिव निरूपयति परेषामिव परं देहमात्मतया अहमिति । अत आह—अन्याकारेति । अयमभिप्रायः—संविन्निष्ठा हि नो वस्तुव्यव-

अभिन्नत्वं यदा चेष्टं ग्राह्यग्राहकवस्तुनोः ।
तदान्यतरसंवित्तौ द्व्याकारं ग्रहणं भवेत् ॥ ७३ ॥
यदा तु ग्राह्यमाकारं नीलादि प्रतिपद्यते ।
न तदा ग्राहकाकारा संवित्तिर्दृश्यते क्वचित् ॥ ७४ ॥
तस्मादभिन्नता चेत् स्यात् तस्याप्यनुभवो भवेत् ।
ग्राह्यो वा नानुभूयेत ग्राहकाननुभूतिवत् ॥ ७५ ॥
ग्राहकग्रहणेऽप्येवं ग्राह्यसंवेदनं भवेत् ।
शुद्धमेव निराकारं ग्राहकं संविदस्ति हि ॥ ७६ ॥
ग्राह्यादभिन्नतायां च सा संवित्तिर्न युज्यते ।
ग्राहको वा न गृह्येत तद्ग्राह्याननुभूतिवत् ॥ ७७ ॥

स्थितयः । संविच्चेदमिति बहिर्विषयप्रकाशात्मा जायमाना दृश्यते । यदि त्वियमेवंरूपाप्यन्यविषया ज्ञानविषयेष्यते, एवं तर्हि ज्ञानाकारा संवित्तिरर्थविषयास्माभिः कस्मान्न कल्प्यते । (नचासति बाधके परगोचरत्वं भ्रान्तिरिति युज्यते कल्पयितुम् । वासना च प्राचीनज्ञानजन्मात्माश्रयः संस्कारोऽभिधीयते । नासावस्ति नास्तिकानां, नैरात्म्यसिद्धान्तात् । नापि ज्ञानमाधारो वासनायाः, क्षणिकत्वात् । नापि समनन्तरप्रत्ययो वासना, तस्य तथात्वेनाप्रसिद्धेः । असावपि स्वगोचरो न परं परगोचरतया दर्शयितुं शक्नोति । अतद्रूपत्वात् ताद्रूप्यनिष्पत्त्ययोगात् । इतरथानुभवरूपतापि तस्य न स्यात् । अनुभवाकारतां ह्युत्तरस्य समनन्तरप्रत्ययो वितनुते । तत् कस्य हेतोः ? स्वरूपानुरूपकार्यारम्भस्थितेः । अत एव नात्मगोचरादिदमिति परसंवेदनोत्पत्त्युपपत्तिः । परत्राहम्मानकल्पना तु भ्रान्तिः, ज्ञातृगोचरत्वादहङ्कारस्येत्युक्तमेव । न त्विह बाह्यालम्बनत्वे ज्ञानस्य किञ्चिदनुपपन्नं येनात्मगोचरतावश्यं कल्प्यत इति सिद्धं बाह्यालम्बनमेव ज्ञानमिति) ॥ ७७ ॥

**यथा च ग्राह्यसंवित्तौ ग्राहकग्रहणेऽपि वा ।**
**ग्राह्यग्राहकसंवित्तिर्नास्त्येव स्याद् द्वयोरपि ॥ ७८ ॥**

**स बहिर्देशसम्बद्ध इत्यनेन निरूप्यते ।**
**ग्राह्याकारस्य संवित्तिर्ग्राहकानुभवाद्दते ॥ ७९ ॥**

**परं प्रति न साध्यत्वादर्थस्याकारसिद्धये ।**
**बहिर्देशेन सम्बन्धो न हेतुत्वाय कल्पते ॥ ८० ॥**

**तस्माद् बहिरितीहेदं निष्कृष्टं ग्राहकांशतः ।**
**संवेद्यं नीलपीतादि प्रत्यक्षादेरुदाहृतम् ॥ ८१ ॥**

---

एवं तावदन्यतराग्रहणेऽन्यतरो न गृह्यत इत्युक्तम् । तद्वदेव द्वयोरप्यग्रहणमिति समाहृत्य दर्शयति — **यथा चेति** । अस्यार्थः — यथा ग्राह्यग्रहणे ग्राहको न गृह्यते ग्राहकग्रहणे च ग्राह्यः । एवं च द्वयोरप्यग्रहणं भवेत् । नतु ग्राहकमात्रस्य वा ग्राह्यमात्रस्य वा । पूर्वं त्वन्यतराग्रहणदृष्टान्तेनेतरस्याग्रहणमापादितम् । इदानीं समाहृत्योभयोरुच्यत इति प्रयोगभेद इति ॥ ७८ ॥

एतच्च ग्राह्यमात्रस्य ग्रहणं ग्राहकरहितं 'स बहिर्देशसम्बद्धः' इत्यादिना भाष्येणोक्तमित्याह — **स इति** । अयं च भाष्यार्थः — स एव केवलो बाह्यार्थः प्रत्यक्षमवगम्यते । न पुनर्ग्राहक इति ॥ ७९ ॥

आञ्जस्येन त्वर्थाकारो नीलादिरित्येतत्सिद्धये बहिर्देशसम्बन्धो हेतुतया लक्ष्यते, तन्नानुमन्यामह इत्याह — **परमिति** । नहि परस्य बहिर्देशो नाम कश्चित् सिद्धः योऽर्थसाकारत्वे हेतुतयोपन्यस्येत । सर्वस्य ज्ञानाकारत्वेनाभ्युपगमात् । अतो बहिर्देशस्तत्सम्बन्धश्च बौद्धं प्रति साध्य एव, न हेतुरिति ॥ ८० ॥

तस्माद् यथोक्त एव भाष्यस्यार्थ इत्याह — **तस्मादिति** । अस्यार्थः — बहिरित्यादौ भाष्ये इदंशब्देनेदं नीलमिति विकल्पस्थेन निष्कृष्टं ग्राहकांशात् प्रत्यक्षादेः प्रमाणगणस्य संवेद्यमुदाहृतं नीलादिमात्रम् । एतदुक्तं भवति । न स्वगोचरं ज्ञानं बहिःप्रकाशाद्, इदमिति

**न पूर्वं ज्ञायते बुद्धिरित्यत्रैतद्व वदिष्यते ।**
**ग्राहकस्यैव संवित्तिर्लक्ष्यते ग्रहणे क्वचित् ॥ ८२ ॥**
**न स्मरामि मया कोऽपि गृहीतोऽर्थस्तदेति हि ।**
**स्मरन्ति ग्राहकोत्पादं ग्राह्यरूपविवर्जितम् ॥ ८३ ॥**
**तस्मादभिन्नतायां च ग्राह्येऽपि स्मरणं भवेत् ।**
**ग्राहकस्मृतिनिर्भासात् तत्राप्येषैव गृह्यते ॥ ८४ ॥**

परनिरूपणात् । स्वगोचरे हि नेदमिति प्रकाशो भवेत्, किन्त्वहमिति । तदिह बहिर्देशसम्बन्धोपन्यासेन परगोचरतैव संवित्तेरुच्यत इति ॥ ८१ ॥

तथा केवलग्राहकसंवित्तिरपि सत्यम् पूर्वं बुद्धिरुत्पद्यते नतु पूर्वं ज्ञायते इत्यत्रोक्तेत्याह — नेति । अत्र हि पूर्वमुत्पन्नापि बुद्धिर्न प्रागवगम्यते, किन्तु पश्चादिति वदता ग्राह्याकारविनिर्मुक्तस्यैव ग्राहकस्य संवित्तिरुक्तेति ॥ ८२ ॥

प्राग् बुद्धेरग्रहणसिद्ध्यर्थं भाष्यकारेणोक्तं 'भवति हि कदाचिदेतद् यज्ज्ञातोऽर्थः सन्नज्ञात इत्युच्यते' इति । तस्यार्थः —ज्ञातपूर्वोऽर्थः कदाचिदस्मर्यमाणोऽज्ञातवदभिधीयते । ज्ञानमात्रं तु तद्गोचरं स्मर्यते । एवं हि वक्तारो भवन्ति— अस्याः श्रुतेरर्थो मया गुरुणा व्याख्यायमानो ज्ञातः, इदानीं प्रस्मृतवानस्मि । ज्ञानं त्वेतद्गोचरं पूर्वं जातं स्मरामीति । यथा चास्या बुद्धेरग्रहणे हेतुत्वं तत्फलाभिप्रायेण परस्ताद् वक्ष्यति 'फलत्वाद् ग्रन्थवर्णने' इत्यत्र । तस्मादपि केवलं ग्राहकस्मरणाद् ग्राह्याकारविविक्तग्राहकबोधः सेत्स्यतीत्याह — नेति ॥ ८३ ॥

अभेदे तु ग्राह्यग्राहकयोर्ग्राहकवद् ग्राह्यस्यापि स्मरणं भवेदित्याह — **तस्मादिति** । तस्माद् ग्राहकादित्यर्थः । यतस्तु ग्राहकमात्रस्यैव स्मृत्यात्मको निर्भासो भवति न ग्राह्यस्य, अतोऽवगच्छामः यदनुभवकालेऽप्येषा बुद्धिरेव केवला गृहीता कथमन्यथा केवला स्मर्येत । तदेतदाह — ग्राहकेति । ग्राहकमात्रस्य स्मृतिनिर्भासात् कारणात् तत्र ग्राहकग्रहणकाले केवला बुद्धिर्गृह्यते इत्यर्थः ॥ ८४ ॥

तदत्यन्ताविनाभावान्नैकाकारं हि जायते ।
अन्वयव्यतिरेकाभ्यां सिद्धैवं भिन्नता तयोः ॥ ८५ ॥
ग्राह्यांशो ग्राहकांशेन गृह्यते ग्राहकः पुनः ।
गृह्येतेति न वक्तव्यं ग्राहकान्तरवर्जनात् ॥ ८६ ॥
ग्राह्यांशेनाप्यशक्तत्वान्न तस्य ग्रहणं भवेत् ।
ग्राहकत्वेन चैतस्य हीयेतैव द्विरूपता ॥ ८७ ॥
ग्राहके गृह्यमाणे च ग्राह्यमात्रप्रसञ्जनम् ।
न स्यादाकार एकश्चेद्भिन्नत्वस्यापि नास्तिता ॥ ८८ ॥

कस्मादेवमत आह — तदिति । तत् स्मरणम् । अत्यन्ताविनाभावाद् ग्राह्यग्राहकयोरेकाकारं न जायत इत्यर्थः । तदेवमन्यतरांशान्वयेऽन्यतरविवेकात् सिद्धो ग्राह्यग्राहकयोर्भेद इत्याह — अन्वयेति ॥ ८५ ॥

अत्र चोदयति — ग्राह्येति । अयमर्थः — यदेतद् भवता ग्राह्यग्राहकयोरभेदमभ्युपेत्यान्यतरग्रहणेऽन्यतरग्रहणमापाद्यते, तदयुक्तम् । नहि यद् यतो न भिद्यते तदवश्यं तद्ग्रहणे गृह्यते । नहि शब्दादभिन्ना नित्यानित्यादयो धर्माः शब्दग्रहणे गृह्यन्ते । अभेदेऽपितु यस्यांशस्य यदा योग्यता स तदा गृह्यते नेतर इति किमनुपपन्नम् । ग्राह्यांशश्च ग्राहकांशसद्भावाद् ग्रहणयोग्यः, न ग्राहकांशः, तदतिरिक्तग्राहकान्तराभावात् । अतो न ग्राह्यग्रहणे ग्राहकग्रहणप्रसक्तिरिति ॥ ८६ ॥

स्यादेतत् । ग्राह्यांश एवास्य ग्राहको भविष्यतीति । तन्न. कर्मणः कर्तृभावानुपपत्तेरित्यभिप्रायेणाह — ग्राह्येति । अपिच ग्राह्यग्राहकभावमेकस्य ज्ञानस्याभ्युपेत्य भवतोभयग्रहणमापाद्यते । यदि च ग्राह्यांशोऽपि ग्राहको भवेद् द्वैरूप्यमेव हीयेत । ग्राहकैकस्वभावतापत्तेरित्याह — ग्राहकेति ॥ ८७ ॥

अथवा ग्राह्यांशस्तावद् ग्राह्य एव, यदि च ग्राहको गृह्येत, ततो ग्राह्यैकात्मत्वं भवेदित्याह — ग्राहक इति । अत्यल्पं चेदमस्माभिरुच्यते उभयग्रहणे एकरूपतेति । सापि तु न सिध्यत्येव । ग्राह्याभावे ग्राहकाभावात् तदभावे ग्राह्याभावादित्याह — न स्यादिति ॥ ८८ ॥

**उद्भवाभिभवाभ्यां च ग्राह्याग्राह्यत्वदर्शनम् ।**
**यथा दीपप्रभादीनां रूपमात्रोपलम्भनम् ॥ ८९ ॥**
**दिवा चाग्नेः समीपस्थैः स्पर्श एवोपलभ्यते ।**
**गन्धवद्द्रव्यवृत्तौ च गन्धस्यैवोपलम्भनम् ॥ ९० ॥**

एवं तावद् ग्राहकान्तरवर्जनाद् ग्राहको न गृह्यत इत्युक्तम् । अपि चोद्भवाभिभवौ भावानां ग्रहणाग्रहणकारणतया सिद्धौ । अतो य एवांशो यदोद्भूतो भवति, तदा स एव गृह्यत इति न नोपपन्नमित्याह — उद्भवेति । अत्रैव दृष्टान्तमाह — यथेति ॥ ८९ ॥

रात्रौ हि दीपप्रभादीनां रूपमात्रमुपलभ्यते, न स्पर्शः । अभिभूतत्वादित्याह — दिवेति । स्पर्शरूपयोश्च नक्तन्दिवमभिभवे चन्द्रमसः शीतस्पर्शः प्रबलं च तारणं तेजः कारणमिति । एवं तावदभिभवे कारणान्तरसन्निधानादभिभूतस्याग्रहणमुक्तम् । इदानीं स्वयमपि सूक्ष्मत्वादभिभूतं न गृह्यते इत्युदाहरणेन दर्शयति — गन्धवदिति । यदा खलु वायुना प्रेर्यमाणाः सूक्ष्मा द्रव्यभागा घ्राणेन्द्रियगोचरा भवन्ति, तदा तेषु वर्तमानेष्वपि गन्धमात्रमेवोपलभ्यते न द्रव्यमभिभूतत्वात् । सा पुनरियं द्रव्यसङ्क्रान्तिरयुक्तेति मन्यन्ते । यदि खलु तिलादिषु चम्पकादिद्रव्यमेव सङ्क्रामेद् एवं मृद्यमानेषु तेषु चम्पकगन्धो नश्येत् पुष्पस्थ इव । चम्पकादिद्रव्येषु मृद्यमानेषु तद्गन्धस्य नाशो दृष्टः । एवं तिलस्थकुसुमावयवमर्दनेऽपि भवेत् । यः खलु स्थूलेष्वेव कुसुमेषु मृद्यमानेषु नश्यति, स कथं सूक्ष्मावयवस्थं न नङ्क्ष्यतीत्युत्प्रेक्ष्यते । अतश्चम्पकादिसान्निधानाद् गन्धान्तरमेव तिलादिषु जायते इति मन्यते । एवमप्स्वग्निसंयोगाद् गुणान्तरागमो वक्तव्यः । नाग्निसङ्क्रान्तिरनुपलम्भनात् । स्पर्शमात्रमेव हि तत्राग्नेर्वयमुपलभामहे, नाग्निम् । अपिचायं तपस्वी द्रव्यसङ्क्रान्तिमातिष्ठमानः सुराघ्राणे पतेत् । सुरात्रसरेणूनां घ्राणोदरेण वक्त्रसञ्चारात् । अत आत्मवधायैवेयं द्रव्यसङ्क्रान्तिराश्रिता भवेत् । अत्राभिधीयते — न तावत् स्वाश्रयपरित्यागेनाश्रयान्तरं गन्धो गच्छतीति सम्भावयामः । गुणानामस्वतन्त्रत्वात् । आश्रयपारतन्त्र्यमेव हि तल्लक्षणम् । गुणान्तरमपि न तावत् सन्निहितेष्वाकाशानिलादिषु कुसुमसम्प-

न गुणान्तरसंवित्तिर्यथात्राभिभवात् तथा ।
नाकारान्तरसंवित्तिर्ग्राह्यग्राहकबुद्धिषु ॥ ९१ ॥
ग्राह्यादनन्यभूतोऽपि कश्चिन्नैवोपलभ्यते ।
नित्यानित्यादयो धर्माः शब्दादिग्रहणे यथा ॥ ९२ ॥
अभेदं चाभ्युपेत्यायं प्रसङ्गो यदि गीयते ।

कोऽज्जायते इति वाच्यम् । तेषु गन्धस्यात्यन्ताभावात् । नापि नासिकाया-मेव गन्धान्तरं जायत इति वक्तव्यम् । अतिदूरत्वेन कुसुमासंसर्गात् । अतः कुसुमावयवा एव दृष्टतद्गन्धसम्बन्धा वायुना प्रेर्यमाणा घ्राणोदरं यावदागता गृह्यन्त इति प्रमाणवती कल्पना । योऽपि मर्दने गन्धनाश उक्तः, सोऽप्य-युक्तः । सूक्ष्मा हि तत्र कुसुमावयवाः सङ्क्रान्ताः । न ते मृद्यन्ते । अतो गन्धो न नश्यतीत्युक्तम् । योऽपि गन्धाघ्राणे सुरापानदोषोऽभिहितः, नासौ । पानं हि सुराया निषिद्धं, नाघ्राणम् । अल्पस्तु तदाघ्राणे दोषः । न च सुरां जिघ्रन् पिबतीत्युच्यते । अतो न सूक्ष्मावयवानां नासिकासन्नि-धानमात्रात् सुरापानापत्तिरिति सिद्धं गन्धवदेव द्रव्यं तत्र वर्तते सूक्ष्म-त्वात् तु नोपलभ्यत इति ॥ ९० ॥

एवं दृष्टान्तेष्वभिभूतस्याग्रहणमुक्त्वा प्रकृते योजयति — **नेति** । यथा दीपप्रभादिषु गुणान्तरसंवित्तिर्नास्ति, यथा च गन्धवद्द्रव्यवृत्तौ द्र-व्यस्य, एवं ग्राह्यांशबुद्धौ ग्राहकांशबुद्धौ वाकारान्तरसंवित्तिर्न भविष्यतीति ॥ ९१ ॥

इदं चापरं ग्राह्यादभिन्नमेव न गृह्यत इत्याह — **ग्राह्यादिति** । अस्ति कश्चिद् धर्मभेदः यो ग्राह्यात् शब्दादभिन्नोऽपि नोपलभ्यते नित्यत्वा-दय इव शब्दग्रहण इति ॥ ९२ ॥

इदं तु चिन्तनीयम् — कस्येदं प्रत्यवस्थानं 'ग्राह्यांशो ग्राहकांशेने'-त्यादि । न तावद् बौद्धस्य । स ह्यविभक्तस्यैव बुद्ध्यात्मनो ग्राह्यग्राहक-संवित्तिभेदभिन्नस्य ग्रहणमातिष्ठते । यदाह —

"अविभक्तोऽपि बुद्ध्यात्मा विपर्यासितदर्शनैः ।
ग्राह्यग्राहकसंवित्तिभेदवानिह लक्ष्यते ॥"

**एकस्मिन् गृह्यमाणेंऽशे न गृहीतोऽपरः कथम् ॥ ९३ ॥**
**तस्मात् यत् स्याद्यदा योग्यं तस्यैव ग्रहणं तदा ।**
**द्वयं च त्वदुपन्यस्तं शक्त्यभावान्न गृह्यते ॥ ९४ ॥**
**कुतोऽयमेकवस्तुत्वे योग्यायोग्यत्वसम्भवः ।**
**उद्भवाभिभवात्मत्वं कथं चैकस्य कल्पितम् ॥ ९५ ॥**

इति । अतस्त्र्याकारस्यैव ज्ञानस्यानुभवात् कथमन्यतरांशाग्रहणेन प्रत्यव-तिष्ठते । भ्रान्तिकल्पितं तु ग्राह्यादिविभागं बौद्धा मन्यन्ते, न स्वप्रतिभानमेव तेषाम् । अतः कस्येदं प्रत्यवस्थानमिति । सत्यम् । नात्र बौद्धश्चोदयिता । 'पार्श्वस्थवचनमिदम् । एवं हि कश्चिदत्र पार्श्वस्थो वदति — किमिदं ग्राह्यग्राहकभावमभ्युपेत्यैव भवता द्विरूपग्रहणमापाद्यते । नहि ग्राहकस्य ग्राहकान्तरं विद्यते तद्ग्रहणं च द्विरूपहानिः तच्चाभ्युपेतमेवेति. कथं तद्विपरीताभिधानं मीमांसकस्य । दृष्टा चाभेदेऽप्युद्भवाभिभवादिकृता ग्रहणाग्रहणव्यवस्थेति । स एवेदानीं बौद्धाभिप्रायेणाह — अभेदाभिति । ग्राह्यग्राहकयोर्हि पारमार्थिको भेदो नेष्यत एव । एकरूपस्यैव तु बुद्ध्यात्मनस्तथा प्रकाशाभ्युपगमात् । अतो योऽयं बुद्ध्यात्मनः प्रकाशः स एव तयोरिति किमिति तद्ग्रहणे न गृहीतं भवति । अपिच, अभेदमभ्युपेत्यास्मान् प्रति प्रसङ्गो गीयते कथमभेदे ग्राह्यग्राहकव्यवस्थेति । तच्चायुक्तम् । कथं ह्यभिन्नस्य तत्त्वस्य किञ्चिदगृहीतं नाम सम्भवति । यदि त्वभेदो नाभ्युपेयते, नायं प्रसङ्गो दातुं शक्यते । भिन्नत्वादेवाग्रहणोपपत्तेरिति ॥ ९३ ॥

पूर्वपरिचोदनामिदानीमुपसंहरति — तस्मादिति । यद्धि ग्रहणयोग्यं तद् गृह्यते यस्य च ग्राहकसद्भाव उद्भवो वा तद् ग्रहणयोग्यम् । अतः पूर्वोपन्यस्तस्य ग्राह्यग्राहकात्मनो द्वयस्य किञ्चिदेव ग्रहीतुं शक्यं नेतरदिति ग्रहणशक्त्यभावान्नोभयं चोदनीयमिति ॥ ९४ ॥

अत्र परिहारमाह — कुत इति । अयमभिप्रायः — न तावद्भ्रान्तिकल्पितो ग्राहकादिविभागः, 'बाधविरहात् । तथापिवा भ्रान्तित्वे संविद्रूपेऽपि तत्प्रसङ्गादभावात्मतापत्तिः । तदयं वास्तवो ग्राह्यादिविभागो नैकस्मिन्नद्वितीये ज्ञानात्मनि सम्भवतीति प्रथममुक्तं 'नैतदस्ती'त्यादिना ।

एकांशाभिभवे च स्यादितराभिभवोऽपि ते ।
तथा तस्याभिभूतत्वाद् ग्राह्यत्वं नच युज्यते ॥ ९६ ॥
अयोग्यता विकल्प्यैवं दृष्टान्ता येऽत्र कीर्तिताः ।
रूपादिभेदात् तत्र स्यादुद्भवाभिभवावपि ॥ ९७ ॥
यद्यप्येकान्ततो भेदो रूपादेर्न परस्परम् ।
तदापि द्रव्यरूपस्य परिणामस्तथा तथा ॥ ९८ ॥

---

पुनश्च 'अभिन्नत्वं यदा चेष्टमि'त्यादिना एकस्यैव द्वैरूप्यमङ्गीकृत्योभयग्रहणप्रसक्तिरापादिता । तत्र नैष परिहारो घटते अयोग्यत्वादभिभूतत्वादन्यन्न गृह्यते इति । नह्येकस्मिन् ज्ञानात्मनि योग्यायोग्यत्वविभाग उद्भवाभिभवात्मत्वं वा सम्भवति । अतोऽवश्यमभिन्नत्व इष्टेऽन्यतरसंवित्तौ द्व्याकारग्रहणेन भवितव्यमिति ॥ ९५ ॥

किं पुनरेकस्योद्भवाभिभवात्मत्वं न सम्भवतीत्यत आह — एकेति । एकं हि ग्राह्यग्राहकाभिधानं तत्त्वम् । तत्र यदि ग्राहकांशोऽभिभूतः कथं तदभिन्नो ग्राह्यांशो नाभिभूत इति शक्यते वक्तुं, विरुद्धधर्माध्यासेन भेदापत्तेरिति । एवं चोभयाभिभवे ग्राह्यांशस्यापि ग्राह्यत्वं न स्यादिति न किञ्चित् तत्त्वं सम्भवेदित्याह — तथेति ॥ ९६ ॥

एवमयोग्यतापि विकल्पनीया किमुभयमयोग्यमेकं वा । यद्युभयं न किञ्चिद् गृह्यत इति शून्यतैवापद्येत । यदि त्वेकमयोग्यमितरन्नेत्युच्यते तदेकत्वाद्द्वितीये नोपपन्नमित्याह — अयोग्यतेति । ये पुनरत्र दृष्टान्ता उक्ताः प्रदीपप्रभादिषु रूपादयः, तत्रोद्भवाभिभवाभिधानं युज्यते । रूपादीनां परस्परभेदेन तत्रोद्भवाभिभवोपपत्तेः । भिन्नं हि स्पर्शाद्रूपं, तद्रात्रौ रूपोद्भवेऽभिभूतस्पर्शो न गृह्यत इति किमनुपपन्नम् । तदेतदाह — दृष्टान्ता इति । आदिशब्दाद् योग्यायोग्यभेदोऽपीति । स्वरूपभेदानुविधाय्युद्भवाभिभवादिभेदोऽपीत्यर्थः ॥ ९७ ॥

ननु नास्ति रूपादीनां पारमार्थिको भेदो महान् खल्वयं क्लेशः यद् द्रव्यादेव तेषां भेदोऽभिधीयते । परस्परभेदास्तु क्लेशतरेणोपपाद्यन्ते । अत एकमेव द्रव्यादिरूपं ग्राहकभेदाद् रूपादिभेदभिन्नमाभासते मुखमिवादर्शभेदा-

**अभिन्नत्वेऽपि न ग्राह्यमिति यच्चाब्रवीद् भवान् ।**
**कृतकत्वादिधर्माणां धीभेदेऽनन्यता कथम् ॥ ९९ ॥**
**नह्यन्यत् प्रत्ययादस्ति भिन्नाद् ग्राह्यस्य भेदकम् ।**
**नचेयत्तैव भेदस्य देशतो मूर्तितोऽपि वा ॥ १०० ॥**

---

दिति मन्यन्ते । अतस्तत्राप्यभेद एवोद्भवादिव्यवस्था दृष्टेति न कश्चिद् विशेषः । अत आह—यदापीति । अयमभिप्रायः—यदि तावदस्मत्सिद्धान्तो रूपादावाश्रीयते, ततस्ते द्रव्यात् परस्परतश्च भिद्यन्त एव । अथ मतान्तरेण, तथापि न तावदेकस्योद्भवाभिभवावपि सिध्यतः । अतोऽस्मन्मतेऽपि हि यथैकमेव मृद्रूपं घटशरावादिपरिणामभेदभिन्नमेवमेकमेव द्रव्यरूपं रूपादिभिः परिणामभेदैर्भिद्यत इत्याश्रयणीयम् । यत्तु एकस्यैव द्रव्यरूपस्य ग्राहकभेदाद् भेद इति, तदतिस्थवीयः । युक्तं हि मुखेषु प्रत्यभिज्ञानादौपाधिकभेदाश्रयणमादर्शभेदाश्रयणेन । न त्विह तथेति वरं परिणामवाद एव । तत्र च नैकस्योद्भवादिव्यवस्था लोके दृश्यते । यस्त्वयमाकस्मिको रूपस्य स्पर्शात्मना परिणामः पुनस्तस्यैव रूपात्मना, स निर्निमित्तो न वक्तुमुचितः । एकस्यैव च द्रव्यस्यैकं रूपं दिवा गुणान्तरोद्भवेनाभिभूतं यद् नक्तं पुनर्बुध्यते, तन्नोपपन्नम् । परिणामे नहि दध्यात्मना परिणतं क्षीरं पुनः क्षीरात्मना परिणतं दृश्यते । अतः स्वभावादेव द्रव्यात् परस्परं च रूपादयो भिद्यन्ते इत्येतदेव साम्प्रतम् । यथा चासत्यपि देशादिभेदे भेदः सिध्यति तथानन्तरमेव वक्ष्यति । तदुपेक्ष्यैव तावत् परिणामवादमभिदध्महे नैवमप्येकस्योद्भवाभिभवाविति ॥ ९८ ॥

यदपीदमपरमुक्तम् ग्राह्यादभिन्नमपि किञ्चिन्नानुभूयते शब्दादौ नित्यत्वादीति, तदनुभाष्य दूषयति—अभिन्नेति । यथा हि बुद्धिभेदनिबन्धनो रूपादीनां भेदः, एवं कृतकत्वादिधर्माणां शब्दाद् धर्मान्तरेभ्यश्च धीभेदकृतं भेदमभिदधाना न दण्डेन वारयितुं शक्या इति ॥ ९९ ॥

किं पुनरेषां भेदे कारणमत आह—नहीति । द्रव्यगुणकर्माण्येव तावद् भिद्यन्त इति किमत्र कारणमन्यदतः प्रत्ययभेदात् । स चायमविशिष्टः कृतकत्वादिधर्मभेदेऽपीति तत्कारणकस्तेषां भेद इति । ननु

**कारकाणां हि सम्बन्धः कार्यैः कृतकतोच्यते ।**
**विभागोऽवयवानां च भवेत् क्वचिदनित्यता ॥ १०१ ॥**
**बुद्ध्यादेरात्मरूपादिस्थानं नाशित्वमुच्यते ।**
**नित्यत्वं सर्वदा सत्ता वस्तुत्वं सैव कीर्त्यते ॥ १०२ ॥**
**प्रमाणज्ञानसम्बन्धः प्रमेयज्ञेयतोच्यते ।**
**सर्वत्र चात्र भिन्नत्वमस्ति केनचिदात्मना ॥ १०३ ॥**

नामीषां देशभेदो वा मूर्तिभेदो वा दृश्यते । अतः कथं ते भिन्नाः, अत आह—नचेति । न नः पारिभाषिको भावानां भेदः । संविदेकशरणा हि वयम् । सा च भिन्ना भेदमभिन्ना चाभेदं व्यवस्थापयति । न तु देशतो मूर्तितो वा भेद इति इयत्तैव परिभाष्यत इति ॥ १०० ॥

कीदृशी पुनरियं कृतकता, या बुद्धिभेदभिन्नावगम्यते अत आह—**कारकाणामिति** । योऽयं कार्यद्रव्याणां घटादीनां कारकैः कुलालादिभिः सम्बन्धः, सा कृतकता । 'कृत्तद्धितसमासेषु सम्बन्धाभिधानं त्वतल्भ्यामि'ति स्मृतेः । सेयमीदृशी कृतकता कथं शब्दादभिन्नेत्युच्यते । अन्यो हि तदा शब्दो गकाराद्याकारः । अन्या चेयं कृतकता तस्य तत्कारकैः सम्बन्ध इति । अनित्यता तु सावयवानां घटादीनां तावदवयवविभागात्मिकेत्याह—विभाग इति ॥ १०१ ॥

निरवयवानां तु बुद्ध्यादीनामवयवविश्लेषात्मकानित्यत्वासम्भवाद् योऽयमात्मनोऽपरिणामरूपेणावस्थानं तन्नाशित्वमित्याह—बुद्धीति । नाशित्वमनित्यतेति नित्यतायाः स्वरूपं दर्शयति—नित्यत्वमिति । वस्तुत्वस्य सत्तातः केचिद् भेदं मन्यन्ते, तत् तु नेष्यत इत्याह—वस्तुत्वमिति । सत्तैव वस्तुत्वं नापरं किञ्चिदित्याकृतिग्रन्थे वक्ष्यत इति ॥ १०२ ॥

प्रमेयताज्ञेयते अपि प्रमाणज्ञानसम्बन्धात्मिके शब्दाद् भिन्ने एवेत्याह—**प्रमाणेति** । ज्ञानत्वं 'प्रमाणेतरज्ञानसाधारणमिति भेदेन ज्ञानसम्बन्धप्रभाविता ज्ञेयतोक्तेति । सर्वत्र चात्रासत्यपि देशादिभेदावसाये केनापि स्वसंवेद्येनात्मना भेदोऽवसीयत इत्याह—सर्वत्रेति ॥ १०३ ॥

**तस्माद् यथैव रूपादेर्देशभेदादिभिर्विना ।**
**बुद्धिभेदेन भेदोऽस्ति तथैवात्र प्रतीयताम् ॥ १०४ ॥**

**अत्यन्तभिन्नताऽस्माभिर्नैव कस्यचिदिष्यते ।**
**सर्वं हि वस्तुरूपेण भिद्यते न परस्परम् ॥ १०५ ॥**

**सर्वं च कृतकत्वादि क्रियाहेत्वाद्यपेक्षया ।**
**गृह्यते तदसंवित्तावभेदेऽपि न गृह्यते ॥ १०६ ॥**

**ज्ञाने नैवंविधो भेदो नापेक्षान्यत्र विद्यते ।**
**परस्परेण चापेक्षा स्याच्चेत् सन्निहितश्च सः ॥ १०७ ॥**

अतो यथैवास्मन्मते बुद्धिभेदमात्रप्रभावितो रूपादीनां भेद इष्यते असत्यपि देशादिभेदे, तथैवैतेष्वपि शब्दादिधर्मभेदेषु भेदोऽस्तीत्युपसंहरति — **तस्मादिति** ॥ १०४ ॥

नन्वेवमपि तावदत्यन्तभेदो नैषामिष्यते, कथञ्चिद् भेदात् । अतः सिद्धमभिन्नस्योद्भवादय इति । न सिद्धम् । अत्यन्तभिन्नता हि नास्माभिः कस्यचिदिष्यते, सर्वस्य सदाद्यात्मनाभेदात् । अस्ति तु केनापि रूपेण भेद इति तदाश्रयणेनैव विरुद्धधर्मसम्बन्धः समाधीयते । नचैतद् बौद्धसिद्धान्ते ज्ञानस्य सम्भवतीत्यभिप्रायेणाह — **अत्यन्तेति** ॥ १०५ ॥

किंपुनः कारणमभिन्नस्यापि शब्दात् कृतकत्वादेरग्रहणमिति । भेदस्यापि विद्यमानत्वादितिचेद्, हन्तैवमभेदोऽपि वास्तव इति किन्न शब्दग्रहणे गृह्यते, अत आह— **सर्वं चेति** । यदेतत् कृतकत्वादिधर्मजातमुपन्यस्तं तत् सत्यपि शब्दाभेदे क्रियाहेत्वाद्यपेक्षया गृह्यते । नहि वस्त्वस्तीत्येव ग्रहणं भवति । अपितु ग्रहणेतिकर्तव्यतासापेक्षम् । कृतकत्वस्य च क्रिया कुलालादिव्यापारः । तद्धेतुश्च कुलालादिः । जिघृक्षा च ग्रहणकारणम् । अतस्तदसंवित्तावभेदेऽपि शब्दान्न ग्रहणं कृतकत्वादीनाम् । अत्यन्ताभेदे तु ग्रहणादिव्यवस्था न सिध्येत् । नचासावस्माभिरिष्यत इति ॥ १०६ ॥

नचायं धर्मधर्मिकृतो भेदो ज्ञाने सम्भवति । अद्वितीयत्वात् तस्य । नापि क्रियाहेत्वादितुल्यमपेक्षणीयान्तरमस्ति यत्कृता ग्रहणाग्रहणव्यवस्था

ननु ग्राहकमित्येवं ग्राह्यमित्यपि वा मतिः ।
नीलादिग्रहणे नास्तीत्यपेक्षा कथमुच्यते ॥ १०८ ॥
मा भूदेवं तथाप्यत्र द्व्याकारं ग्रहणं भवेत् ।
एवं चागृह्यमाणे वा ज्ञाने आकारता कथम् ॥ १०९ ॥
उत्तरोत्तरविज्ञानविशेषाद् या प्रकल्प्यते ।
ग्राहकाकारसंवित्तिः स्मरणाच्चानुमानिकी ॥ ११० ॥

---

भवेत् । ज्ञानातिरिक्तवस्त्वन्तराभावादित्याह — ज्ञान इति । अन्यत्रानपेक्षेत्यसहमानः प्रत्यवतिष्ठते — परस्परेणेति । अयमभिप्रायः अपेक्षार्थ एव तावद् दुष्प्रतिपादः । अभिन्ने तत्त्वे किं केनापेक्ष्यते । उपेत्यापि ब्रूमः । य एव कश्चिदपेक्षिष्यते ग्राहको वा ग्राह्यो वा, स एव सन्निहितः । अत्यन्ताभेदात् तयोः । अतो नाग्रहणकारणमन्यतरस्यापीति द्व्यात्मकग्रहणप्रसङ्गः ॥ १०७ ॥

अत्र चोदयति — नन्विति । यदेतदपेक्षामभ्युपेत्य भवतोच्यते सन्निहित इति, तदयुक्तम् । नहि नो नीलादिग्रहणे ग्राह्यमिदं ग्राहको वायमिति बुद्धिरुत्पद्यते । अतो ग्राह्यग्राहकत्वेनानवगमात् कथं तयोः सान्निधानमपेक्षा कथमुच्यत इत्यपेक्षाभ्युपगमो न युक्त इत्यर्थः ॥ १०८ ॥

परिहरति — मा भूदिति । यद्यपि ग्राह्योऽयं ग्राहकोऽयमिति वा न विकल्प्यते, तथापि तावदेकात्मनः सर्वेणैवात्मना गृहीतत्वाद् यदेवापेक्षितं तदेव लभ्यत इति युक्तमेव वक्तुम् । अन्योऽयं ग्राह्योऽयं ग्राहकोऽयमिति शब्दविकल्पः । अन्यच्च ज्ञानरूपम् । तच्चेत् समग्रं गृहीतं, किमपरमपेक्षणीयं यदग्रहणादुभयांशबोधो न भवेदिति । एवमपि चेदुभयात्मकं न गृह्यते, कथं द्व्यात्मकं भविष्यति । अतः सिद्धं न द्व्यात्मकं ज्ञानमित्यभिप्रायेणाह — एवमिति ॥ १०९ ॥

एवंतावद् यदुक्तं सत्यपि द्व्यात्मकत्वे न द्व्यात्मकं गृह्यत इति, तन्निराकृतम् । इदानीं द्व्याकारमेव ज्ञानं गृह्यत इति यद् बौद्धैरुक्तं तद् दूषयितुमुपन्यस्यति — उत्तरोत्तरेति । एवं हि बौद्धा मन्यन्ते — स्वसंवेद्यज्ञानस्य द्विरूपता । तद्धि जानामि घटमित्येवोत्पद्यते । तत्र जानामीति

**एकाकारं किल ज्ञानं प्रथमं यदि कल्प्यते।**
**ततस्तद्विषयाप्यन्या तद्रूपैव मतिर्भवेत् ॥ १११ ॥**
**घटविज्ञानतज्ज्ञानविशेषोऽतो न सिध्यति।**
**ग्राहकाकारसंवित्तौ त्वाकारप्रचयो भवेत् ॥ ११२ ॥**
**जायते पूर्वविज्ञानं द्व्याकारं तत्र यत् परम्।**
**तस्यात्मीयश्च पूर्वौ च विषयस्थावुपप्लुतौ ॥ ११३ ॥**

ग्राहकांशः। घटमिति च ग्राह्यांशः। तदेवं स्वसंवेद्येऽपि ज्ञानस्य द्विरूपत्वे यो नाम मूढो न सम्प्रतिपद्यते, तत्प्रतिबोधनार्थमुत्तरोत्तरविज्ञानविशेषनिर्देशो बौद्धैरभिमतः। एवं हि निर्दिशन्ति घटज्ञानं जानामीति। तदिह पूर्वेण विषयाकारेण ग्राहकाकारेण च रूपितो द्वितीयज्ञानस्य ग्राहकाकारः प्रचितो निर्भासते। तदाद्यस्य द्विरूपत्वे घटते। यदि त्वाद्यं ग्राह्याकारमात्रं वा ग्राहकाकारमात्रं वा भवेत्, ततो द्वितीयाद्यपि तद्गोचरं तदाकारमेव भवेत्। तत्राद्यस्य ग्राह्यमात्रत्वे द्वितीयमपि ज्ञानं घट इत्येवोत्पद्यते। तत्र शब्दत्रयेण निर्देशो नोपपद्येत घटज्ञानं जानामीति। नह्यनातुराणामनर्थको नाम निर्देशो भवति। एवं च तृतीयादिज्ञानेषु चतुष्टयादिभिर्निर्देशो दर्शयितव्यः। तस्मादुत्तरोत्तरज्ञानविशेषादवगम्यते अस्ति ग्राहकाकारसंवित्तिरपीति। यदपि चेदमपरं द्व्याकारवेदने कारणमुक्तं

"स्मृतेरुत्तरकालं च नह्यसावविभावितः।"

इति। यथा खल्वयं स घट इति ग्राह्यं स्मरति, एवं घटज्ञानमज्ञासिषमिति जानातिवाच्यं ग्राहकांशमपि। नचानवगतपूर्वार्थविषया स्मृतिः सम्भवतीति पूर्वानुभवप्रतिबन्धात् स्मरणादानुमानिकी पूर्वं ग्राहकाकारसंवित्तिः कल्प्यत इत्याह --- स्मरणादिति ॥ ११० ॥

तदेव प्रपञ्चयति --- एकाकारमिति सार्धेन। इदं च प्रागेव व्याख्यातमिति। यदि तु ग्राहकाकारो गृह्यते इत्याश्रीयते, तदाकारप्रचयदर्शनमुपपन्नं भवेदित्याह --- ग्राहकेति ॥ ११२ ॥

कथमुपपन्नमित्यत आह --- जायत इति। पूर्वं हि घटं जानामीति ज्ञानं ग्राह्यग्राहकाकारम्। तत्र तस्मिन्नेव विषयभूते। यत् परं घटज्ञानं जानामीति ज्ञानम्। तस्यात्मीयश्च ग्राहकाकारः। पूर्वौ च स्वविषयभूतप्राप्य-

**परेष्वाकारवृद्ध्यैवं पूर्वेभ्यो भिन्नता तथा ।**
**ग्राह्यवत्स्मरणात् पश्चात् संवित्तौ ग्राहकः पुरा ॥**
**न तावदेवमाकारान् पश्यामः प्रचयान्वितान् ।**
**विषयव्यपदेशाच्च नर्ते ज्ञाननिरूपणम् ॥ ११५ ॥**

ज्ञानस्थौ ग्राह्यग्राहकाकारावुपप्लुतौ भवतः । एवं द्व्याकारवेदनमुपपन्नं भवतीति ॥ ११३ ॥

अनेनैव प्रकारेण तृतीयादिष्वपि ज्ञानेष्वाकारवृद्ध्या पूर्वपूर्वेभ्यो भिन्नता सिध्यति । इतरथा तु पूर्वस्य केवलग्राह्याकारत्वे स्वाकारसमर्पणेन विषयभावादुत्तरमपि तत्सदृशं घटात्मकमेव भवेदित्ययुक्तम् । एवं केवलग्राहकाकारत्वे पूर्वस्योत्तरस्यापि ताद्रूप्यान्न वैलक्षण्यं सिध्येत् ।

"निराकारत्वपक्षेऽपि तुल्यतैव प्रसज्यते ।
निराकारत्वसामान्यात् प्राचीनोत्तरसंविदोः ॥"

इत्यभिप्रायेणाह — परेष्विति । एवं तावदुत्तरोत्तरविज्ञानविशेषादित्येतत् प्रपञ्चितम् । स्मरणाचानुमानिकीत्येतदिदानीं प्रपञ्चयते — ग्राह्येति । इदं च प्रागेव व्याख्यातमिति ॥ ११४ ॥

आकारप्रचये तावत् परिहारमाह — नेति । अयमर्थः— नोत्तरोत्तरविज्ञानेषु प्रचयान्विता आकारा दृश्यन्ते, नीलाद्याकारमात्रप्रतिभानात् । सर्वदा हि नो विषय एवेदमिति बहिर्निर्भासते । कदाचिदेव तूद्भूतजिज्ञासस्यानाकारज्ञानप्रतिभानमिति वर्णितमसकृत् । अतो न ज्ञानारूढमाकारद्वयं दृश्यत इति संवित्प्रमाणकमहं नीलमित्यनवगतेः । कस्तर्हि घटं जानामीति जानात्यर्थः । नावश्यं विषयबोधेषु जानातिः प्रवर्तते । घटोऽयमित्येव प्रतीतेः । यदा तु ज्ञानमेव जिज्ञासितं भवति तदार्थस्य ज्ञाततावशेन ज्ञानमपि प्रतीयेत । तत्र चायं जानातिप्रयोगः । न चैतावता ज्ञानमेव द्व्याकारं भवति, विदिते बहिर्विषयाकारे पृथगेवेदमनाकारज्ञानमिति । यद्यनाकारस्यैव ज्ञानस्य संवेदनं, कथन्तर्हि नीलाकारं पीताकारं ज्ञानमिति व्यपदेशोऽत आह — विषयेति । अयमभिप्रायः — न तावज् ज्ञानमाकारवत्तया दृश्यते, बहिराकारत्ववेदनादित्युक्तम् । यस्तु नीलाकारं ज्ञानमिति व्यपदेशः, न तेनाकारवत्ता ज्ञानस्य सिध्यति । विषयो हि नीलादिव्यपदेशभाजनम् । तद्व्यपदेशेनैवं च ज्ञानं व्यपदिश्यते न तु तन्नीलम् ।

**तस्माज् ज्ञानात्मनैकत्वे ग्राह्यभेदनिबन्धनः ।**
**संवित्तिभेदः सिद्धोऽत्र किमाकारान्तरेण नः ॥ ११६ ॥**

**निराकारत्वसाम्येऽपि यथाकारवतां ध्रुवम् ।**
**भेदः स्वाभाविकस्तद्वज्ज्ञानानां किन्न सिध्यति ॥**

**स्मृतेरुत्तरकालं चेत्येतन्मिथ्यैव गीयते ।**
**तदैव ह्यस्य संवित्तिरर्थापत्त्योपजायते ॥ ११८ ॥**

---

कस्य हेतोः परव्यपदेशेन व्यपदिश्यत इति चेद्, न । तं विना व्यपदेष्टुमशक्यत्वात् । नहि तद्व्यपदेशमन्तरेण निरूपयितुं शक्यमीदृशं नामेदं ज्ञानमिति, स्वयमनाकारत्वात् संविदामिति ॥ ११५ ॥

यत्तु निराकारत्वपक्षे सर्वसंविदां तुल्यतैव प्रसज्यत इत्युक्तं, तदयुक्तम् । अनाकारत्वेऽपि ग्राह्यभेदप्रमाणकत्वाद् भेदस्य, ग्राह्या हि विषयाः संवित्तौ प्रमाणम् । ते च भिन्ना दृश्यमाना भिन्ना एव संवित्तीरवस्थापयन्तीति । अतस्तद्भेदसिद्धये तत्समवेताकारान्तराभ्युपगमो न युक्त इत्याह — **तस्मा**दिति । ग्राह्यभेदनिबन्धनस्तत्प्रमाणक इत्यर्थः ॥ ११६ ॥

नन्वस्तु ग्राह्यभेदो भेदे प्रमाणम् । अनाकाराणां तु केनात्मना भेद इत्येव दुष्प्रतिपादमत आह — **निराकारत्वे**ति । अयमभिप्रायः — किमिदमनाकारत्वं संविदाम् । यदि निस्स्वभावत्वं, तन्नेष्यते विषयवशोन्नीयमानप्रकाशस्वभावत्वात् । अथ नीलाद्याकारविरहः, न । आकाशकालात्मदिक्कर्मसु तदभावेऽपि भेदाभ्युपगमात् । अतो यथा नीलाद्याकारा एव भावा आकारवत्त्वेनाभिन्ना अपि परस्परेण भिन्ना भासन्ते, एवमनाकारत्वेनाभिन्नान्यपि ज्ञानानि ग्राह्यभेदोन्नीयमानेनात्मना भेत्स्यन्ते स्वभावादेवेति ॥ ११७ ॥

'स्मरणाच्चानुमातुकी'ति यदुक्तं तदिदानीमुपन्यस्य दूषयति — **स्मृते**रिति । मिथ्यैवैतद् बौद्धैर्गीयत इत्यर्थः । कथं मिथ्या अत आह — **तदैवे**ति । तदैव खल्विदं ग्राहकाकारं ज्ञानं संवेद्यते । घटो हि तत्र स्मर्यते । तत्स्मरणान्यथानुपपत्त्या च तत्कारणभूतं ज्ञानमर्थापत्त्या कल्प्यते । नूनं मया घटो ज्ञातः, कथमन्यथा स्मर्यते । तत्रैव चार्थापत्तिवेद्ये ज्ञानेऽज्ञासिषमिति पदप्रयोगः, नतु ज्ञानमपि पूर्वं गृहीतमिति ॥ ११८ ॥

---

१. 'षेऽज्ञासि' ख. पाठः.

गृहीतभिति यच्चोक्तं तदभेदान्न तद् यतः ।
नास्माभिर्वाक्यवृत्तेस्त्वं निमित्तमनुयुज्यसे ॥ ११९ ॥
ग्राह्यग्राहकतैवास्य केनचिन्नोपलभ्यते ।
प्रत्यक्षज्ञानपक्षे च नैषा स्यादानुमानिकी ॥ १२० ॥
एकाकारे च विज्ञाने यद्यन्योऽप्यत्र कल्प्यते ।
सहस्राकारतैकस्य कस्मान्न परिकल्प्यते ॥ १२१ ॥
ग्राह्यग्राहकयोर्भेदो नन्वस्त्येव परस्परम् ।
सिद्धो नः पक्ष एवं स्यान्न ज्ञानत्वादभेदतः ॥१२२॥

यत् पुनर्द्व्याकारवेदने पूर्वमुक्त'मभेदं चाभ्युपेत्यायमि'त्यत्र कथमेकस्मिन् गृह्यमाणे परो न गृह्यत इति । तद् दूषयति — गृहीतमितीति । यदस्माभिरंशद्वयाग्रहणे निमित्तमनुयुक्तो भवान् किमुभयात्मकं न गृह्यत इति, नानेनाऽऽत्मकं वाक्यप्रवृत्तिमात्रमेव भवतोऽभिमतं यथा तथा वा तावद्व्यवधास्त्वमिति । अपि तु अग्रहणकारणं वा त्वया वक्तव्यम् । वास्तवं वाग्रहणं, न त्वभेदाद् द्व्यात्मकं गृहीतमिति वाक्प्रवृत्तिमात्रेणास्माभिर्नुच्यस इति ॥ ११९ ॥

परमार्थतस्तु ग्राह्यग्राहकाकारवेदनं नास्तीत्युक्तमेवेत्याह—ग्राह्येति । स्यादेतत् । मा नाम प्रत्यक्षेण द्व्यात्मकं गृह्यताम् । अनुमानेन तूभयाकारवेदनं साधयामः । ग्राहकात्मा गृहीतो ग्राह्याभेदात्, तदात्मवदित्यत आह — प्रत्यक्षेति । अयमभिप्रायः — प्रत्यक्षं ज्ञानमिति वः पक्षः । न चास्मिन् पक्षेऽनुमानेन ग्रहणसाधनं युक्तम् । यदि हि द्व्याकारं ज्ञानमुत्पन्नं भवेत्, तथैव प्रकाशेत । अतो नैषा द्व्याकारोपलब्धिरानुमानिकी प्रत्यक्षज्ञानपक्षे स्यात् । नच प्रत्यक्षेण द्व्याकारं ज्ञानं कैश्चिदुपलभ्यत इति न द्व्याकारता ज्ञानस्येति ॥ १२० ॥

यदि त्वेकाकार एव ज्ञाने द्व्याकारता कल्प्यते, एवं सत्यप्रमाणकत्वाविशेषात् सहस्राकारतैव किं न कल्प्यते इत्याह — एकेति ॥ १२१ ॥

अत्र चोदयति — ग्राह्येति । अयमभिप्रायः — यदेतदन्यतरांशग्रहणेऽभिन्नत्वादपरस्यापि ग्रहणमापादितं भवता तदयुक्तं, अभेदे हि सत्ये-

**भिन्नाभिन्नत्वमेकस्य कुतोऽत्र परिकल्पितम् ।**
**त्वया साङ्ख्यमतेनैवमुक्त्वा बुद्धस्य शासनम् ॥**

**एकं चेद् ग्राहकं ग्राह्यं कुतो भिन्नत्वमागियम् ।**
**भिन्नं चेत् कथमुच्येत तस्यैकत्वं पुनस्त्वया ॥ १२४ ॥**

**एकज्ञानादनन्यत्वाद् ग्राह्यग्राहकयोर्मिथः ।**
**एकत्वेन भवेज्ज्ञानं ग्राह्यं ग्राहकमेव वा ॥ १२५ ॥**

तत् स्यात् । ननु ग्राह्यग्राहकांशयोः परस्परमभेदः । ज्ञानं हि तत्राभिन्नमंशौ च परस्परं भिन्नावेव । अतो यथैन्द्रवायवादिग्रहाः परस्परं भिन्ना अपि ज्योतिष्टो(म ? माङ्ग)त्वेन न भिद्यन्त इति मीमांसका मन्यन्ते, एवं ज्ञानस्यापि स्वात्मनाभेदेऽप्यंशयोः परस्परं भेदान्न ग्रहणसङ्करपरिचोदनावकाश इति निराकृतस्वपक्षस्य बौद्धस्य प्रत्यवस्थानमिति । सिद्धान्तवादी तु — न तावदयमेकान्तवादी बौद्धो भिन्नाभिन्नत्वमभ्युपेत्य ग्राह्यग्राहकयोर्भेदमभिवत्त इति सम्भवति, तन्नूनमैकान्तिक एवानेन ग्राह्यग्राहकयोर्भेदोऽभिहित इति मन्वान आह — सिद्ध इति । इतरः स्वाभिप्रायमाविष्कर्तुं परपक्षनिषेधं तावदाह — नेति । कारणमाह — ज्ञानत्वादभेदतः । अयमर्थः — नैवमपि भवत्पक्षसिद्धिः, ज्ञानत्वेनांशयोरभेदादित्युक्तमेवेति ॥ १२२ ॥

इतर इदानीं सिद्धान्तहानिमापादयंस्तमेवंवादिनं निगृह्णाति — भिन्नेति । साङ्ख्या हि प्रकृतिविकारयोरत्यन्तभेदमनिच्छन्तो विकारात्मना प्रकृतौ भेदं तदात्मना च विकाराणामभेदं सङ्गिरन्ते । तद् यथा साङ्ख्यमतेन भिन्नाभिन्नात्मकं वस्तु परिकल्प्यते, तथा कथं त्वया भ्रान्तचित्तेन बुद्धशासनमुक्त्वा भिन्नाभिन्नत्वमेकस्य ज्ञानात्मनः परिकल्पितम् । अस्माकं त्वनेकान्तवादिनामुपपन्नो ज्योतिष्टोमे तथाभ्युपगम इति ॥ १२३ ॥

भवतस्तु यदि ग्राह्यग्राहकात्मकं द्वयं ज्ञानात्मनैकं, ततो भिन्नत्ववागनुपपन्ना, नो चेदेकत्वमित्याह — एकमिति ॥ १२४ ॥

एवं चात्र भवन्मताश्रयणेनैकात्म्यमापादयितुं शक्यमित्याह — एकेति । ग्राह्यग्राहकाकारमानां, एकरूपात् ज्ञानात्मनोऽभेदात् । तदात्मवदेव ग्राह्यग्राहकयोर्मिथः परस्परमेकत्वेन कारणेन ज्ञानं ग्राह्यात्मकं ग्राहकात्मकं वा भवेदिति ॥ १२५ ॥

तत्र चान्यतरापाये द्वितीयापायतः पुनः ।
ज्ञानस्यांशद्वयासत्त्वान्नैःस्वभाव्यादभावता ॥ १२६ ॥
भिन्नाभ्यां वाप्यभिन्नत्वाद्भेदो ज्ञानात्मनो भवेत् ।
तत्स्वात्मनस्ततश्चैवं सिद्धं वस्तुद्वयं हि नः ॥ १२७ ॥
तयोश्च यदि संज्ञेयं ज्ञानमित्यस्त्वथापि वा ।
ज्ञानं ज्ञायत इत्यर्थो धीर्भावे करणेऽपि वा ॥ १२८ ॥
सर्वथा वस्तुभेदो नः सिद्धः शब्दो यथारुचि ।
प्रवर्ततां न नस्तत्र काचिद् विप्रतिपन्नता ॥ १२९ ॥

---

तत्र चैकात्मकत्व आपन्ने ग्राह्यग्राहकयोरन्यतरस्यापाये जाते परस्यापीतरविधुरस्यानुपपत्तेरंशद्वयासत्त्वमेव ज्ञानस्य भवेत् । एवं च निःस्वभावमभावात्मकं ज्ञानमापन्नमिति शून्यता प्रमाणार्थयोः स्यादित्याह — **तत्रेति** ॥ १२६ ॥

एवं तावदभिन्नात्मनो ज्ञानादभेदांशयोरभेद आपादितः । इदानीं भिन्नाभ्यां वांशाभ्यामभिन्नत्वात् ज्ञानात्मनो भेदमापादयति — **भिन्नाभ्यामिति**। एवं चात्यन्तभेदे ग्राह्यग्राहकयोः सिद्धं द्वैतमित्यभिप्रायेणाह— **ततश्चेति** ॥ १२७ ॥

एवं द्वैतसिद्धौ यदि ज्ञानमिति संज्ञामात्रमेव ग्राह्यग्राहकयोः कर्तुमभिमतं भवतां, तदभ्युपगच्छाम एवेति सोपहासमाह — **तयोरिति** । अथवा किं पारिभाषिकेण ज्ञानशब्देन, अस्माकमप्येक एवायं ज्ञानशब्दोऽक्षादिवत् साधारणतयार्थज्ञानयोर्व्युत्पत्तिभेदेन वर्तत इत्याह — **अथापि वेति** । यदि ज्ञायत इति ज्ञानं कर्मणि ल्युडन्तो ज्ञानशब्दोऽनुशिष्यते, ततोऽर्थो ज्ञानम् । अथ तु ज्ञप्तेर्ज्ञानं ज्ञायतेऽनेनेति वा भावकरणयोर्व्युत्पाद्यते, ततो धीरेव ज्ञानमित्युभयज्ञानतोपपत्तिरिति ॥ १२८ ॥

सर्वथापि हि ज्ञानशब्दव्युत्पत्तौ वस्तुभेदस्तावत् सिद्ध एव । शब्दस्तु यथारुचि ज्ञानार्थयोरन्यतरत्र प्रवर्तताम् । नात्र नो विप्रतिपत्तिरित्याह — **सर्वथेति** ॥ १२९ ॥

अथ सत्यपि भिन्नत्वे ग्राह्यं ज्ञानान्तरं भवेत् ।
ज्ञानत्वे तस्य का युक्तिः पूर्वोक्ता तस्य सेष्यते ॥
ज्ञानं ज्ञानमितीदं तु न द्वयोरनुवर्तते ।
व्यतिरिक्तं च सामान्यं त्वया नाभ्युपगम्यते ॥ १३१ ॥
व्यतिरेके तयोर्ज्ञानान्न ज्ञानात्मकृता भवेत् ।
तद्रूपरहितत्वे च ज्ञानाभावः प्रसज्यते ॥ १३२ ॥

अत्रापरे बौद्धा वदन्ति — सत्यमस्ति ग्राह्यग्राहकयोर्भेदः । नैवमपि बहिरर्थः सिध्यतीति, ज्ञानस्यैवातीतस्योत्तरज्ञानग्राह्यत्वात् । अत एवेदम्भावः, परगोचरत्वात् संविदः । कथमतीतं ग्राह्यमिति चेद्, न । हेतुत्वस्यैव ग्राह्यत्वात् । यदेतदुत्तरज्ञानजनने स्वाकारसमर्पणेन पूर्वस्य हेतुत्वं तदेव तस्य ग्राह्यत्वम् । यथाहुः —

"भिन्नकालं कथं ग्राह्यमिति चेद् ग्राह्यतां विदुः ।
हेतुत्वमेव युक्तिज्ञा ज्ञानाकारार्पणक्षमम् ॥"

इति । अयं च सौत्रान्तिकवैभाषिकयोः साधारणः श्लोकः । तदेतदुपन्यस्यति — अथेति । यद्यपि ग्राहकाद् भिन्नं ग्राह्यं, तथापि ज्ञानान्तरमेव तदतीतं न त्वर्थ इति । एतदपि दूषयति — ज्ञानत्व इति । तस्य ग्राह्यत्वाभिमतस्य ज्ञानस्य ज्ञानत्वे युक्तिर्न काचिदस्तीति भाव इति । यदि तु पूर्वोक्तया कर्मव्युत्पत्त्या ज्ञानं तदिष्यते तदर्थाभिरिष्यते इत्याह — पूर्वेति ॥ १३० ॥

ज्ञानं ज्ञानमित्यनुगतं तु रूपं न द्वयोर्ग्राह्यग्राहकयोरवगम्यत इत्याह— ज्ञानमिति । अक्षादिवत् साधारणशब्दतामभ्युपगच्छामः नत्वाकृतिशब्दतामिति । उपेत्यापि ब्रूमः । तत् खलु सामान्यं पूर्वोत्तरयोरनुयायि ताभ्यां भिन्नमभिन्नं वा । न तावद् भिन्नं तैरुपेयत इत्याह— व्यतिरिक्तमिति ॥ १३१ ॥

अयं चापरो व्यतिरेके दोष इत्याह— व्यतिरेक इति । तयोः पूर्वोत्तरयोर्ग्राह्यग्राहकयोः । ज्ञानसामान्याद् व्यतिरेके इष्टे, तस्मिंस्ताभ्यां भिन्न इति यावत् । तयोर्ज्ञानात्मकता न स्यात्, तेनैव रूपेण ज्ञानत्वाभ्युपगमा-

**ताभ्यां च तस्य सम्बन्धे प्रत्येकं व्यतिषज्य वा ।**
**भेदे सावयवत्वादिदोषो वैशेषिकादिवत् ॥ १३३ ॥**

**यथा हि तेषां जात्यादौ दोषा ह्युक्ताः परैरमी ।**
**तथैवैषां प्रसज्यन्ते भिन्नाभिन्नार्थसङ्गतौ ॥ १३४ ॥**

**ताभ्यामव्यतिरेके वा भेदः पूर्वोक्त एव ते ।**
**सादृश्यापोहसामान्यकल्पना वारयिष्यते ॥ १३५ ॥**

**वस्त्वन्तरस्य चाभावात् त्वदपोहोऽपि दुष्करः ।**
**नाज्ञानं नाम किञ्चित् स्यादपोह्यं ज्ञानवादिनः ॥**

दिति । किमतो यद्येवमत आह — तद्रूपेति । ज्ञानरूपरहितत्वे सत्यज्ञानात्मनो वस्तुनोऽभावात् पूर्वोत्तरयोर्ज्ञानयोरभाव एवापद्यत इति ॥ १३२ ॥

अपिच तत्सामान्यं ताभ्यां सम्बध्यमानं प्रत्येकं कार्त्स्न्येन सम्बध्यते भूतकर्मगुणवत्, व्यतिषज्य वा मालागुणवत् । पूर्वस्मिन् कल्पे भेदः । उत्तरस्मिन् सावयवत्वमिति वैशेषिकादिवद् दोषप्रसञ्जनं कर्तव्यमित्याह — **ताभ्यामिति** ॥ १३३ ॥

वैशेषिकादिवदित्येतद् विवृणोति — यथेति । यथैव वैशेषिकादीनां परैर्बौद्धैरेव जात्यादावेते दोषा उक्ताः, तथैवैषां बौद्धादीनामपि भिन्नयोः पूर्वोत्तरज्ञानयोरभिन्नस्य ज्ञानसामान्यस्य सङ्गतौ सम्बन्धे एते दोषा इति ॥ १३४ ॥

यदि तु ताभ्यामव्यतिरिक्तं सामान्यमिष्यते, ततो योऽसौ भिन्नाभ्यामभिन्नत्वात् प्राग् भेद आपादितः स एवापद्यत इत्याह — ताभ्यामिति । अपिच किमात्मकं तत् सामान्यमित्यपि चिन्तनीयमेव । तत्रास्मदभिमतसामान्याश्रयणे तावदुक्तः प्रसङ्गः । सादृश्यरूपमपोहरूपं च सामान्यं परस्तान्निराकरिष्यत इत्याह — सादृश्येति ॥ १३५ ॥

अपिचात्रापोहरूपसामान्याभ्युपगमेऽधिको दोष इत्याह — **वस्त्वन्तरस्येति** । एतदेव विवृणोति — नेति । अज्ञाननिवृत्त्या ज्ञानं प्रतीतव्यम् । नच ज्ञानमात्रवादिनोऽज्ञानं नाम किञ्चिदपोह्यमस्तीति ॥ १३६ ॥

**अपोहो नह्यभावस्य कथञ्चिदुपपद्यते ।**
**वस्त्वन्तरमभावः स्यादपोह्यत्वाच्च वस्तुता ॥ १३७ ॥**
**तेनाज्ञाननिवृत्तो हि ज्ञानेऽन्यार्थः प्रसज्यते ।**
**कल्पितं स्यादपोह्यं चेन्नात्यन्तासत्यकल्पना ॥ १३८ ॥**
**बुद्धिरज्ञाननिर्भासा तयाऽज्ञानं प्रकल्पितम् ।**
**ततश्च ज्ञानमेवैकमपोह्यत्वेन सम्मतम् ॥ १३९ ॥**
**नचात्मापोह एवास्ति क्वचित् सामान्यकल्पने ।**
**वृक्षस्य नह्यपोह्यत्वं वृक्षेणैव कदाचन ॥ १४० ॥**

---

नचात्यन्तासत एवापोहो घटते इत्याह — अपोह इति । अयमभिप्रायः — यदि ज्ञानाभावमात्रमज्ञानं तत्तर्ह्यवस्तुरूपं कथमपोहक्रियाकर्म भविष्यतीति । अपोह्यत्वाभ्युपगमे वा अभावस्यापि वस्त्वन्त(रा ? रता)पत्तिरित्याह — वस्त्वन्तरमिति । कारणमाह — अपोह्यत्वाच वस्तुतेति । चशब्दो हेताविति ॥ १३७ ॥

अतोऽवश्यं ज्ञानाभावस्यानपोह्यत्वादज्ञाननिवृत्तौ ज्ञाने इष्यमाणे ज्ञानादन्यदज्ञानमर्थ एव ते प्रसज्यत इत्याह — तेनेति । अत्र किञ्चिदाशङ्कते — कल्पितमिति । ज्ञेयादिशब्देषु हि बौद्धैरुक्तम् —

"अज्ञेयं कल्पितं कृत्वा ज्ञेयशब्दः प्रवर्तते ।"

इति । तदिहापि समानम् । अज्ञानकल्पनया तदपोहेन ज्ञानशब्दो वर्तिष्यते । तेन नापोह्याभावो नच वस्त्वन्तरतापत्तेरिति । एतदपि दूषयति — नेति । यदेव हि क्वचिद् दृष्टं तदेवान्यत्र कल्प्यते । अत्यन्तासतस्तु ज्ञानादन्यस्याबुद्धिविषयस्य कल्पना केति ॥ १३८ ॥

तदेवं कल्पनीयान्तराभावादज्ञानाकारा बुद्धिरेवाज्ञानतया कल्पनीयापन्नेत्याह — बुद्धिरिति । तत्र चायं दोष इत्याह— ततश्चेति ॥ १३९ ॥

किमतो यद्येवमत आह — नचेति । न ज्ञानान्तरापोहेन ज्ञानमेव ग्रहीतुं शक्यत इति । अत्रैव दृष्टान्तमाह — वृक्ष इति । नहि वृक्षार्थो वृक्षापोहेन प्रत्येतुं शक्यत इति ॥ १४० ॥

अपोह्ये चैव विज्ञाने ज्ञानत्वं न भवेत् तव ।
वृक्षत्वं नह्यपोह्येषु घटत्वादिषु युज्यते(?) ॥ १४१ ॥
ततश्चाज्ञानमेवार्थ इत्यभिन्नार्थता भवेत् ।
अज्ञानप्रत्ययश्चायं किमालम्बन इष्यते ॥ १४२ ॥
न तावज्ज्ञाननिर्मुक्तमज्ञानं ग्राह्यमस्ति ते ।
ननु वस्तु निषिद्धं तदभावः किं न गृह्यते ॥ १४३ ॥
भावो न गृह्यते येन तस्याभावेषु का कथा ।
स्वांशपर्यवसानं च तुल्यमत्रापि कारणम् ॥ १४४ ॥

---

अपिच यासावज्ञाननिर्भासा बुद्धिरज्ञानतया कल्पिता, तस्या ज्ञानत्वं न भवेत् । नहि यद्रूपं यदपोहेन प्रतीयते तत्रैव तद् भवति । वृक्षत्वस्यावृक्षेष्वपोह्येषु घटादिष्वभावादित्याह — अपोह्य इति ॥ १४१ ॥

एवञ्च तस्याज्ञानत्वाभिमतस्य ज्ञानत्वाभावादर्थत्वमेवापन्नम् । अतोऽज्ञानवाचोयुक्त्यार्थ एवाभिमत इत्यभिन्नार्थत्वमित्याह — ततश्चेति । किञ्चैवमपिचायमज्ञानापोहवादी वक्तव्यः किमालम्बनोऽयमज्ञानप्रत्यय इति । न तावद् बाह्यालम्बनं किञ्चिद् भवद्भिर्ज्ञानामिष्यते । नचास्य स्वांशालम्बनत्वं ज्ञानान्तरालम्बनत्वं वा सम्भवतीत्यनन्तरमेव वक्ष्यतीत्यभिप्रायेणाह —अज्ञानेति । तन्न तावद् ज्ञानमात्रवादिनामज्ञानं नाम किञ्चिदस्ति यदस्यालम्बनं स्यादित्याह — नेति । अत्र चोदयति — नन्विति । अस्यार्थः — वस्त्वात्मकं हि ज्ञानातिरिक्तमस्माभिर्निषिद्धम् । अभावात्मकं त्वज्ञानं किमज्ञानप्रत्ययेन नावलम्ब्यत इति ॥ १४३ ॥

परिहरति — भाव इति । अयमभिप्रायः — येन तावदाबालमास्थविरं च प्रसिद्धा महीमहीधरोदधिप्रभृतयो ग्राह्या अपलपिताः, तस्य किमिति सूक्ष्मन्यायवेदनीयो भावो ग्राह्यो भविष्यति तन्मते च सर्वोपाख्यानविरहलक्षण इति । अपिच यद् भावधियां स्वांशपर्यवसाने कारणमुक्तं, तदभावबुद्धेरप्यविशिष्टम् । अतः कथमसौ बाह्याभावालम्बनं स्यादित्याह — स्वांशेति ॥ १४४ ॥

तेन ज्ञानान्तरं वा स्यात् ग्राह्यमात्मांश एव वा ।
स्वरूपविपरीतं च कथं ग्राह्यं प्रतीयते ॥ १४५ ॥

यथोष्णेऽनुष्णधीर्नास्ति ज्ञानेऽप्यज्ञानधीस्तथा ।
तेन न ज्ञानमात्रत्वे स्यादपोह्यं कथञ्चन ॥ १४६ ॥

ग्राह्यग्राहकयोश्चातो न ज्ञानात्मसमानता ।
तस्मादन्यतरत्रेदं ज्ञानत्वं संप्रतीयते ॥ १४७ ॥

अत्राप्युभयसिद्धत्वाद् ग्राहकस्येति गम्यते ।
वस्तुभेदे प्रसिद्धे च व्यपदेशो यथारुचि ॥ १४८ ॥

ज्ञानमस्तूभयं वार्थो ग्राहको वार्थ उच्यताम् ।

तदवश्यं पारिशेष्यादज्ञानप्रत्ययस्यापि ज्ञानान्तरं वा स्वांशो वा ग्राह्योऽभ्युपगन्तव्य इत्याह — तेनेति । अस्तु तदेव ग्राह्यं, को दोषोऽत आह — स्वरूपेति । ज्ञानान्तरं स्वात्मा वा ज्ञानस्य ज्ञानस्वभावत्वान्नाज्ञानप्रत्ययेन विषयीकर्तुं शक्यते । स्वरूपविपरीतस्याग्राह्यत्वाद् यदाकारो हि प्रत्ययस्तदाकारमेव ग्राह्यमवस्थापयति । अज्ञानाकारश्च प्रत्ययः कथं ज्ञानमालम्बनीकर्तुं शक्नोति । स्वरूपविपरीतं न ग्राह्यमिति ॥ १४५ ॥

एतदेव दर्शयति — यथेति । अतः सिद्धं न ज्ञानमात्रत्वेऽपोह्यमस्तीत्याह — तेनेति । एवंचासत्यपोह्येऽपोहस्वरूपस्याप्यभावान्न तेनात्मनापि ग्राह्यग्राहकयोर्ज्ञानयोर्ज्ञानात्मना समानत्वमित्याह — ग्राह्यग्राहकयोरिति । एवञ्चोभयोः साधारणरूपाभावाद् ग्राह्यग्राहकयोरन्यतरत्र ग्राह्ये ग्राहके वा ज्ञानत्वमभ्युपगन्तुं युक्तमित्याह — तस्मादिति ॥ १४७ ॥

तथापि को निश्चयः ग्राहकं ज्ञानं नतु ग्राह्यमित्यत आह — अत्रेति । उभयसिद्धं हि ग्राहकस्य ज्ञानत्वं ग्राह्यस्य त्वस्माकमसिद्धमिति । एवं तावद् ज्ञानं ग्राहकमर्थो ग्राह्य इति साधितम् । अथवा किं नोऽनेन व्यसनेन । तत्त्वभेदो हि नो द्वैतानुगुणतया साध्यः । स तावत् सिद्धः । सिद्धे च तस्मिन् यथारुचि व्यपदेशोऽस्तु नामेत्याह — वस्त्विति ॥ १४८ ॥

यथारुचि व्यपदेशमेव दर्शयति — ज्ञानमिति । उभयं वा ज्ञानशब्दवाच्यमस्तु अर्थो ज्ञानं च । अर्थ एव वा ज्ञानशब्दवाच्यः न ज्ञान-

**बुद्ध्योरयुगपद्भावान्न द्वयोर्मेयमानता ॥ १४९ ॥**
**क्षणिका हीत्यनेनोक्तमर्थो ह्येकः प्रसज्यते ।**
**अन्योन्यनिरपेक्षत्वाद् युगपच्चापि जन्मनि ॥ १५० ॥**
**मानमेयत्वनास्तित्वं क्रियाकारकवर्जनात् ।**
**अर्थविज्ञानयोरत्र या मितिं प्रति सङ्गतिः ॥ १५१ ॥**

मित्यर्थः । ग्राहक एव वार्थशब्दवाच्योऽभिधीयताम् । नैवमपि काचित् पक्षक्षतिः । सिद्धत्वाद् द्वैतस्येत्यभिप्रायेणाह — ग्राहक इति । भाष्यकारेण त्वतीतबुद्धेर्ग्राह्यत्वनिराकरणार्थं क्षणिकत्वं कारणमुक्तं येनैवमाह — 'अर्थविषया हि प्रत्यक्षबुद्धिः, न बुद्धिविषया । क्षणिका हि सा, न बुद्ध्यन्तरकालमवस्थास्यते' इति । तदुपन्यस्यति — बुद्ध्योरिति । अतीता हि पूर्वा बुद्धिर्नासावुत्तरया ग्रहीतुं शक्यते । तत्कालेऽसत्या वर्तमानवद् ग्रहीतुमशक्यत्वाद् ग्राह्यस्य चेदं नीलमिति वर्तमानवद्भासादिति । अतः क्षणिकत्वात् कारणाद् बुद्धेः ग्रहीतुमशक्यत्वात् अस्मन्मताश्रयणेनार्थात्मकतैव बुद्धेरुपेयेत्याह — अर्थ इति । यदि तूच्यते मा भूदतीताया बुद्धेर्ग्राह्यत्वं, सहभाविनोस्तु ज्ञानयोर्ग्राह्यग्राहकत्वं न नोपपन्नमिति । तदयुक्तं सहभावानुपपत्तेः । कथं हि समनन्तरप्रत्ययाधीनात्मलाभमुत्तरं तेन सहोत्पद्यत इति सम्भावयामः । सहत्वेऽपेक्षानुपपत्तेः । अस्तु वा जन्मयौगपद्यं ज्ञानयोः । एवमपि न मानमेयता सम्भवति । हेतुत्वमेव हि ग्राह्यत्वमुक्तम् । नचासति पौर्वापर्ये तत् सम्भवति, सहजन्मनोरन्योन्यनिरपेक्षत्वात् । तदिदमाह — अन्योन्येति । कथं निरपेक्षमत आह — क्रियेति । यदि हि ज्ञानयोः कश्चित् क्रियाकारकसम्बन्धो भवेत्, एवमपेक्षा भवेत् । नचासौ सहोत्पत्तौ सम्भवति । स्वाकारार्पणेन हेतुत्वं निराकृतमेवेति । ननु तवाप्यर्थज्ञानयोः कार्यकारणभावे क्रियाकारकसम्बन्धः कः, अत आह — अर्थेति । येन व्यापारेण बुद्धेः प्रमाणत्वं सा मितिः कश्चासौ । यदेतद् बुद्धिजन्मेति प्रत्यक्ष उक्तम् । तदस्यां मितौ यार्थविज्ञानयोः सङ्गतिः । सानयोः कार्यकारणभावः । सा हि बुद्ध्यर्थाभ्यां सहिताभ्यां भाव्यते । यावद्धि नार्थो धीविषयः, तत्कर्म भवति । बुद्धिश्च जन्मनि कर्त्री । न तावन्निर्विषया अक

**कार्यकारणभावोऽयं नान्यत्रैवं च दृश्यते ।**
**नियमश्च न लभ्येत सव्यदक्षिणशृङ्गवत् ॥ १५२॥**
**इदं कार्यमयं हेतुर्द्वयं नान्योन्यसंश्रयात् ।**
**तद्भावभावितामात्रं हेतुः केनैव कल्प्यते ॥ १५३ ॥**
**पौर्वापर्यविनिर्मुक्तं कार्यकारणलक्षणम् ।**
**गवाश्वस्य यथा नास्ति पौर्वापर्येऽपि तत् तथा॥१५४॥**
**युगपज्जायमानेऽपि सन्तत्यन्तरजे क्षणे ।**

---

र्तृका चोत्पत्तिः सम्भवति । तदनेन क्रियाकारकसम्बन्धेनास्ति ज्ञानार्थयोः कार्यकारणभावः । तदेतदर्थस्य बुद्धेरुत्पत्तौ कर्मकारकत्वमेतदेवास्य ज्ञानकारणत्वम् । अत्रेति । मीमांसकसिद्धान्त इत्यर्थः । नचैष प्रकारो बौद्धमते सम्भवति, युगपज्जन्मनोर्ज्ञानयोर्जन्मन एवाभावाद् ज्ञानातिरिक्तस्य यौगपद्ये चान्यतरोक्तावन्यतरस्य कारणत्वासम्भवादित्यभिप्रायेणाह — नेति । अपिच, इदं कार्यमयं हेतुरित्यपि नियमो यौगपद्ये दुरधिगमः अनपेक्षत्वाविशेषात् । नखलु सव्येतरविषाणयोर्युगपज्जन्मनोः शक्यमवगन्तुमिदं कार्यमिदं कारणमित्यगृह्यमाणे विशेषे, तदेतदाह — नियम इति । नन्वगृह्यमाणे विशेषे उभयस्योभयं कारणं भविष्यतीत्यत आह — द्वयमिति । यदि पूर्वमुत्तराधीनात्मलाभम्, उत्तरं च पूर्वाधीनं, ततो दुरुत्तरमितरेतराश्रयमिति ॥ १५२$\frac{1}{2}$ ॥

नन्वत्रापि तद्भावभावितैव कार्यकारणभावे चिह्नम् । अस्ति च युगपज्जन्मनोरपि विज्ञानयोस्तद्भावभावः, पूर्वज्ञानसम्भवक्षण एवोत्तरस्य भावात् । अतः कुतो यौगपद्ये न हेतुहेतुमत्ता, अत आह — तद्भावेति । सत्यम् । तद्भावभाविता कार्यकारणत्वे लक्षणं न पुनः पौर्वापर्यराहिता । तन्नियमसहितमेव तु तद्भावभावहेतुकं कार्यकारणभावे लक्षणमाहुः । नच यौगपद्ये पौर्वापर्यं, नतरां नियम इत्यकार्यकारणतेति ॥ १५३$\frac{1}{2}$ ॥

परस्परसहितमुभयं कार्यकारणलक्षणं न त्वनपेक्षितमित्यत्रैव निदर्शनमुपन्यस्यति,— गवाश्वस्येति । नखलु कदाचिदश्वात् पूर्वं गवि जाते

रूपादिषु घटे यद्वत् तस्मात् पूर्वमवस्थिते ॥१५५॥
यो यस्माज्जायते पश्चात् स तत्कार्यमितीष्यते ।
हेतुहेतुमतां सिद्धं यौगपद्यनिदर्शनम् ॥ १५६ ॥

यत् प्रदीपप्रभाद्युक्तं सूक्ष्मः कालोऽस्ति तत्र नः ।
दुर्लक्षस्तु यथा वेधः पद्मपत्रशते तथा ॥ १५७ ॥

पश्चाज्जायमानोऽश्वः पौर्वापर्यात् तत्कारणको भवति । तथैकसन्तानक्षण-भाविनः सन्तत्यन्तरजस्य क्षणस्य न तद्भावमात्रात् तत्कार्यत्वमसति पौर्वा-पर्ये । एवं घटेन सहोत्पद्यमानेषु रूपादिषु नान्योन्यं कार्यकारणभाव इष्यते। नह्यवयविद्रव्यस्य रूपेऽवयवी कारणम्, अश्वादिरूपाणामेव प्राक् सतां क्रमेण तत्र कारणत्वात् । एतौ च स्वमतपरमतभेदेन व्याख्येयौ दृष्टान्तौ । आवयोरेव तद्भावभावितामात्रं न कार्यकारणत्वे लक्षणमित्युक्तं भवतीति । तस्माद् यो यस्मिन् नियमेन पूर्वमवस्थिते जायते, स तत्कारणको नान्य इत्याह — तस्मादिति ॥ १५५½ ॥

यत् पुनरत्र परैर्यौगपद्येऽपि कार्यकारणभावो दृश्यत इति प्रदीप-प्रभादिसिद्धवन्निदर्शनमुक्तं, तन्न । न सिद्धं, तत्रापि सूक्ष्मस्य कालभेदस्य विद्यमानत्वात् । प्रदीपकार्या हि प्रभा नासौ प्रदीपेन सहैव निष्पद्यते । एकदा प्रदीपे जातेऽनन्तरमेव निष्पद्यते प्रभा । तस्माद् न क्वचिदपि यौगपद्ये कार्यकारणभाव इत्याह — हेत्विति । यद्यस्ति कालभेदः कस्मान्न लक्ष्यते, अत आह — दुर्लक्ष इति । यथा निरन्तरमुपर्युपरिभावेन स्थिते पद्मपत्र-शते भिद्यमाने कालभेदो दुर्लक्षः, एवं प्रदीपप्रभयोरपि । यथाच तत्र ना-(न)न्तरिता सूची भिनत्तीति तत्र कालभेदे प्रमाणम्, एवं नानिष्पन्ने प्रदीपे तत्तेजो विसरतीति समानमुभयत्रापि प्रमाणं कालभेदे । तुलान्तनमनोन्नमन-योस्तु न परस्परं कार्यकारणभावो द्वयोरप्येकहेतुत्वात् । तोलयिता हि तत्र सहभुवोर्द्वयोरपि कारणम् । कक्ष्यासूत्रसन्निवेशविशेषो वा । सूत्रं हि तत्र मध्ये भवत् समं तौ धारयति । एकतरत्र भवद् विषमं प्रवर्तयति । नच पुनरुन्नामहेतुर्नामः नच नामहेतुरुन्नाम इति न क्वचित् सहजन्मनोः कार्य-कारणभाव इति ॥ १५७ ॥

**भागयोर्यौगपद्येन तथैव स्यान्निराक्रिया ।**
**नच शक्त्यर्पणद्वारं क्रमेणालम्बनं भवेत् ॥ १५८ ॥**
**ग्राह्यं तदा ह्यतीतं स्यात् ताद्रूप्यं चाप्रमाणकम् ।**
**अतीतत्वानुविद्धो हि स्मृत्या ग्राह्योऽनुभूयते॥१५९॥**

यथा च पूर्वोत्तरज्ञानयोर्यौगपद्येन कार्यकारणभावः एवं ज्ञानभागयोरपि ग्राह्यग्राहकात्मनोः कार्यकारणभावो निराकार्यः । नचाकारणभूतस्य ग्राह्यता सम्भवतीति यौगपद्ये प्रसङ्गेन भागावुपसङ्क्रम्य दर्शयति—**भागयो**रिति । मानमेयत्वनिराक्रियेत्यर्थः । यदि तूच्यते मा भूद् यौगपद्ये पूर्वमालम्बनमुत्तरस्य, क्रमेणैव तु भविष्यति ।कथमसतोऽतीतस्यालम्बनत्वमिति चेद्, न । शक्त्यर्पणद्वारेणोपपत्तेः । पूर्वं हि ज्ञानमुत्तरस्मिन् वासनापरनामानं शक्तिमर्पयति । ततस्तद्रूपं तज्जायमानं तदालम्बनमित्याख्यायते, अत आह—**नचे**ति ॥ १५८ ॥

किमिति न भ(वः ? वेत् ।) अत आह—**ग्राह्य**मिति । शक्त्यर्पणेन हि पूर्वस्य ग्राह्यत्वे ग्राह्यमतीतं भवेत् । अतीतमेव हि तद्वासनावशादुत्तरेणालम्ब्यते स्मृत्येव पूर्वज्ञानमिति । भवत्वतीतं ग्राह्यं को दोषः अत आह—ताद्रूप्यमिति । ताद्रूप्यमतीतरूपत्वं वर्तमानावभासिनो ग्राह्यस्य संविद्विरुद्धमप्रमाणकं भवेत् । कथं ह्यतीतमबाधितया बुद्ध्या वर्तमानतया गृह्येत । तथावागृह्यमाणमतीतं भवेदिति । कथं ताद्रूप्यमप्रमाणकमत आह—अतीतेति । अयमभिप्रायः—पूर्वज्ञानाहितवासनावशेन जायमानमुत्तरं स्मृतिरूपमेव भवेत् । स्मृत्या च स इत्यतीतत्वानुविद्ध एव स्वगोचरोऽनुभूयते । नचेह तथानुभूयते, प्रत्युत्पन्नवदिदमिति संवेदनात् । अतः कथमसंवेद्यमेव ताद्रूप्यं प्रमाणवद् भविष्यति । एतच्च ज्ञानातिरिक्तवासनाभ्युपगमेनोक्तम् । नतु ज्ञानमात्रवादिनां तदतिरिक्ता वासना च काचिदस्ति । नचोपपद्यते, अनाधारवा(सना)नुपपत्तेः । न चातीतमसद् वासनाधारः सम्भवति । न चोत्तरमनागतम्, असत्त्वादेव । नच परस्य जन्मकालं यावत् पूर्वमवतिष्ठते येन तस्मिन् वासनामाधाय नश्यतीति शक्यतेऽवगन्तुम् । क्षणिकत्वात् । नच सन्तानिभ्योऽतिरिक्तः सन्तानो नाम कश्चिदस्ति यो वासनाधारो भवेत् । नचानाधारैव शक्तिरात्मानं लभेत ।

तद्वदेव भवेत् तत्र स्वप्ने न स्याद् विपर्ययात् ।
तत्र ह्यवर्तमानोऽपि गृह्यते वर्तमानवत् ॥ १६० ॥
बाधज्ञानादिदं भ्रान्तं न त्वत्रैवं विपर्ययः ।
तस्मात् प्रत्यक्षबुद्धीनां नातीतो विषयो भवेत् ॥
अतीतत्वाद् यथैवासां वृत्तौ जन्मान्तरेषु यः ।
तद्रूपत्वेन वा ज्ञानं हेतुर्भाविवदुच्यते ॥ १६२ ॥

भणितश्चायं वासनाभङ्गो निरालम्बनानुमाननिराकरणावसर इत्यलमनेनेति । अत्र चोदयति – स्वप्ने न स्यादिति । यदुक्तं भवतातीतत्वानुविद्धस्मृत्यानुभूयत इति । तन्न । स्वप्ने प्रत्युत्पन्ननिर्भासात् । नच न स्मृतिः स्वप्न इति साम्प्रतं प्रत्युत्पन्नकारणान्तराग्रहणात् । नहि तत्रेन्द्रियलिङ्गादि ज्ञानकारणं किञ्चिदुपलभ्यते । नचाकारणिका ज्ञानोत्पत्तिः सम्भवति । अतोऽवश्यं स्मृतिरेव सेति वक्तव्यम् । स्मृतिरपिच वर्तमानवन्निर्भासत इति तद्वदिहापि भविष्यतीति । परिहरति — विपर्ययादिति । सत्यम् । अतीतत्वेन स्वप्ने बोधो न भवति । किन्तु विपर्ययादसौ तथावभासः । (विपर्ययज्ञानं हि?) तद्विपर्ययश्चान्याकारवस्तुगोचरोऽन्याकारो युक्त एवेति नानेन प्रमाणज्ञानानां तुल्यत्वमवगन्तुं शक्यत इति । कीदृशः पुनः स्वप्ने विपर्ययः । तद् दर्शयति — तत्रेति ॥ १६० ॥

कथं पुनरिदमवगम्यते विपर्ययोऽसाविति । अत आह—बाधेति । बाधकं हि तत्र ज्ञानमुत्पद्यते नैतदेवमिति । तज्जानीमोऽवर्तमानमेव तत्र वर्तमानतया भासत इति । एतावच्च विपर्ययस्य तत्त्वं यदन्यादृशस्यान्यथाप्रकाशनमिति सूक्तं विपर्ययादिति । नचायमेवम्प्रकारो विपर्ययो जाग्रज्ज्ञानेषु शक्यवचनः । 'सुपरिनिश्चिता हि तत्र जाग्रद्धियः' इत्युक्तमित्याभिप्रायेणाह — नेति । एवमुपपादितमतीतविषया न प्रत्यक्षबुद्धय इति । इदानीं प्रयोगेण दर्शयति — तस्मादिति । अतीतो न प्रत्यक्षविषयः, अतीतत्वात् । जन्मान्तरानुवृत्तवदिति । नच योगिप्रत्यक्षेणानैकान्तिकत्वं, तन्निराकरणादिति । तस्मिन्नेव साध्ये हेतुदृष्टान्तान्तरमाह — तद्रूपेति । अतीतोऽर्थो न प्रत्यक्षबुद्धिविषयः, तद्रूपत्वेनाज्ञानात् । यन्न स्वरूपेण संवेद्यते तन्न प्रत्यक्षधीविषयः यथा भाव्यर्थ इति ॥ १६२ ॥

अतीतत्वेऽपि नार्थोऽयं धीरेषेत्यत्र का प्रमा ।
अतीतं यच्च विज्ञानं ग्राह्यत्वेन प्रकल्पितम् ॥ १६३ ॥
तत् स्याद् ग्राहकरूपं वा ग्राह्यं वोभयथापि वा ।
ग्राह्याकारत्वमात्रे स्यादर्थः शब्दान्तरेण ते ॥ १६४ ॥
स्वकाले चाथ संवित्तेर्न स्याच्छक्त्यर्पणं ततः ।
यथैवानागताज्ज्ञानात् सन्तत्यन्तरजादपि ॥१६५ ॥
दृढत्वेनाप्यविज्ञातात् तथोत्पन्नाद् विनश्यतः ।
केवलग्राहकत्वे तु विषयत्वं न युज्यते ॥ १६६ ॥

अस्तु वातीतस्य ग्राह्यत्वं, तथापि सौत्रान्तिकान् पराजित्य तद् वक्तुं युक्तं यज्ज्ञानमेवातीतं ज्ञानेनालम्ब्यते नत्वर्थ इति । ते हि सदृशापरापरोत्पत्तिरूपेण सन्तन्यमानेषु भावेष्वतीतक्षणालम्बनमेव ज्ञानमास्थिताः । वरं तदेव युक्तमाश्रयितुम् । तथाहि — न तावदत्यन्तमलौकिकी ग्राह्यग्राहकसिद्धिरुक्ता भवतीत्यभिप्रायेणाह — अतीतेति । किञ्च, एतदप्यतीतगोचरत्वे ज्ञानस्य विकल्पनीयं यत्तच्छक्त्यर्पणद्वारेण ग्राह्यतया कल्पितमतीतं ज्ञानं, तत् किं ग्राह्यैकस्वभावमाहोस्विद् ग्राहकैकस्वभावमुभयस्वभावं वेति । सर्वथा नोपपद्यत इत्यभिप्रायेणाह — अतीतमिति । तत्र ग्राह्यैकस्वभावत्वे तावदर्थ एव शब्दान्तरेणाभ्युपगतो भवतीत्यभिप्रायेणाह— ग्राह्येति । ग्राह्यैकस्वभावं हि ज्ञानं जडात्मकमर्थ एव शब्दान्तरेणोपपादितो भवतीति ॥ १६४ ॥

अपिच शक्त्यर्पणे नोत्तरग्राह्यतेष्यते । नच ग्राह्यमात्रात्मनोऽसंचेतितस्य शक्त्यर्पणं सम्भवति । अननुभूयमानस्य स्मृतिबीजाधानानुपपत्तेरित्यभिप्रायेणाह — स्वेति । शक्त्यर्पणाभावमेव प्रयोगेण दर्शयति — यथेति । नोत्पद्यविनष्टाद् दृष्टासंविदिताच्छक्त्यर्पणं, दृढत्वेनाज्ञानादेव पटुतरमननुभवादिति यावत् । पठन्ति हि 'वस्तुधर्मो ह्येषः यदनुभवः पटीयान् स्मृतिबीजमाधत्ते' इति । यदनेवंविधं न तेन शक्त्यर्पणं, यथानागतादननुभूतपूर्वात् तथाविधादेव तु सन्तानान्तरजादिति । उक्तो ग्राह्यमात्रे प्रसङ्गः ।

**किमपेक्ष्य च तस्येदं ग्राहकत्वं प्रकल्प्यते ।**
**द्व्याकारता निरस्तैव संवेद्येत तदैव च॥ १६७॥**
**ततश्चोत्तरविज्ञानं न प्रतीक्षेत बोधकम् ।**
**द्व्याकारकल्पनायां च परस्यात्मांश एव ते॥ १६८॥**
**प्रमापर्यवसानेन नातीतो विषयो भवेत् ।**
**पूर्वग्राह्यसरूपत्वे ग्राहकत्वं प्रहीयते ॥ १६९ ॥**
**ग्राहकाकारमात्रे स्याद् विषयो नासरूपतः ।**
**नन्व शक्त्यर्पणस्यात्र व्यापार उपलभ्यते ॥ १७० ॥**

ग्राहकैकस्वभाव इदानीं दर्शयति — केवलेति । यत् खलु ग्राहकैकस्वभावं तत् खलु कथमुत्तरस्य ग्राह्यं भविष्यति । तथा सति स्वभावनाशादभावापत्तेरित्यभिप्रायः ॥ १६६ ॥

किञ्चेदं ग्राहकैकस्वभावत्वं दुरधिगममित्याह — किमिति । ग्राह्यापेक्षं हि ग्राहकत्वं तदेकस्वभावस्य ; न तावत् स्वात्मा ग्राह्यो न ज्ञानान्तरं, तस्याप्येवमेव ग्राहकैकस्वभावत्वादिति । उभयाकारतायां दूषणमाह — द्व्याकारता निरस्तैवेति । नैतदस्तीत्यादिना निषिद्ध इत्यर्थः । अपिच, द्व्याकारत्वे पूर्वज्ञानं तदैव स्वकाल एव संवेद्येत । तत्रास्य स्वसंवित्तये बोधकान्तरज्ञानापेक्षा न युक्तेत्याह — संवेद्येतेति ॥ १६७½ ॥

अपिच यदि पूर्वज्ञानं द्व्याकारम्, एवं सति परस्यापि तद्भुवस्तथात्वादात्मांश एव प्रमा पर्यवसितेति किमतीतविषयतयेत्याह — द्व्याकारेति । ग्राह्यैकस्वभावत्वे च पूर्वस्यायमपरो दोष इत्याह — पूर्वेति ।

'तदतद्रूपिणो भावास्तदतद्रूपहेतुजाः' ।

इति स्थितिः ॥ १६९ ॥

अथ कथं पूर्वस्य ग्राह्यमात्ररूपत्वे तज्जन्मनश्चोत्तरस्य ग्राहकत्वं भविष्यतीति । यदि तु पूर्वं ग्राहकाकारमात्रम् एवं सति नोत्तरस्य विषयो भवेत्, सारूप्यनिबन्धनत्वाद् विषयविषयिभावस्य । पूर्वोत्तरयोश्च पूर्वं ग्राहकाकारमात्रमुत्तरं तु द्व्याकारमिति वैरूप्यमिति न पूर्वविषयतोत्तरस्य(न ?)

**शक्त्यर्पणस्य चाभावो युष्मत्पक्षे प्रसाधितः ।**
**सन्तानान्तरवच्चैषां निषेध्या हेतुसाध्यता ॥ १७१ ॥**

**वास्यवासकभावश्च ज्ञानत्वादेकसन्ततौ ।**
**तस्माद् यद् ग्राहकं रूपं तद्ग्राह्यात् तस्य भिन्नता ॥**
**तत्संवित्तावसंवित्ते रसादिग्राहकं यथा ।**

---

सिध्येत् । तदेतदाह— ग्राह्यकेति । पूर्वं च केवलग्राहकत्वे ग्रहणकतया विषयभावो निराकृतः । इह तु वैरूप्यादिति विशेष इति । यच्छक्त्यर्पण-द्वारेण पूर्वस्यालम्बनत्वमुक्तं, तत्तावत् प्रत्युक्तमेव । तत्रैव स्मृत्वा पुनरपि किञ्चिद् वदति — नचेति । केनचिद् व्यापारेण कश्चित् कञ्चिदर्पयति । नच विज्ञानस्य शक्त्यर्पणं प्रति कश्चिद् व्यापारो दृश्यते । क्षणिकत्वाद् व्यापारकालं यावदनवस्थानाद्, व्यापारान्तरानभ्युपगमाच्चेति ॥ १७० ॥

किञ्चायं शक्त्यर्पणस्याभावो बौद्धपक्षे निरालम्बनवाद एव प्रपञ्चेन साधित इत्याह— शक्त्यर्पणस्येति । इदानीं यत्तत् पूर्वमुक्तं न पूर्वो-त्तरज्ञानयोर्हेतुसाध्यत्वमिति, यच्च वास्यवासकभावनिराकरणम्, उभयत्र प्रयोगमाह— सन्तानेति । क्वचिदेकस्यां सन्ततौ विमतिपदास्पदीभूतायां न ज्ञानयोर्हेतुहेतुमत्ता, ज्ञानत्वात्, सन्तानान्तरज्ञानवत् । सन्तानान्तर-ज्ञानानि न सन्तानान्तरहेतुभन्ति, तेषां तत्रानारम्भकत्वात् । एवमेव वास्य-वासकभावनिराकरणेऽपि प्रयोगो दर्शयितव्यः । इह च ज्ञानान्येव धर्मीणि समानायां सन्ततावहेतुभूतानीति साध्यो धर्मः । ज्ञानत्वादिति हेतुः । स-न्तानान्तरज्ञानवदिति दृष्टान्त इति ॥ १७१$\frac{1}{2}$ ॥

ग्राह्यग्राहकयोरुपपादितं भेदं प्रयोगेणेदानीं दर्शयति — **तस्मा-**दिति । यत एव न कथञ्चिद् ज्ञानस्य स्वगोचरत्वं, तस्मात् । यद् रूपस्य ग्राहकं तत् तु अतो ग्राह्याद् भिन्नं, तत्संवित्तावसंवित्तेः । यन्न तत्संवित्तौ संवेद्यते तत् ततो भिन्नं, रसादिग्राहकवत् । तत्संवित्तावसंवित्तिश्च प्रागेव साधितेति नासिद्धयाशङ्का । रसादिग्राहकं यथेति चास्य भिन्नमिति वक्ष्य-माणेन सम्बन्ध इति ॥ १७२$\frac{1}{2}$ ॥

**ग्राह्यं तद् ग्राहकाच्चैवं तत्परामृशता यतः ॥१७३॥**
**न परामृश्यतेऽवश्यं रसादिग्राहकं यथा ।**
**द्वयं परस्परेणैवं भिन्नं साध्यं रसादिवत् ॥ १७४॥**
**ऐकरूप्येण विज्ञानात् सन्तानान्तरबुद्धिवत् ।**
**ज्ञानं स्वांशं न गृह्णाति ज्ञानोत्पत्तेः स्वशक्तिवत् ॥**
**ग्राह्यत्वप्रतिषेधश्च द्वयहीना हि वासना ।**

---

एवमेव ग्राह्यं पक्षीकृत्य ग्राहकाद् भेदो दर्शयितव्य इत्याह — ग्राह्यमिति । अत्रापि रसादिग्राहकमेव दृष्टान्तः । यथा हि तद्रूपग्राहकानुभवेऽननुभूयमानं ततो भिद्यते, एवं तद्ग्राह्यमपि रूपं, तदपि स्वग्राहकपरामर्शे न परामृश्यत एव । तदपि 'न स्मरामी'त्यत्र दर्शितमिति । एवमेकैकश्येन ग्राह्यग्राहकयोर्भेदं प्रसाध्येदानीमुभयोरपि समाहृत्य दर्शयति — द्वयमिति । ग्राह्यग्राहकद्वयं परस्परभिन्नम् । इतरेतरपरामर्श इतरेतरापरामर्शाद् रसादिवत् । यथा रूपरसादयोऽन्योन्यपरामर्शेऽपरामृश्यमानाः परस्परेण भिद्यन्ते, एवमेतदपि द्वयमिति ॥ १७४ ॥

प्रकारान्तरेणेदानीं ग्राह्यग्राहकयोर्भेदं दर्शयति — ऐकेति । ग्राह्यं ग्राहकाद् भिन्नं तेन सहैकरूप्येणाज्ञानात् । यद् येन सहैकरूप्येण न ज्ञायते तत् ततो भिद्यते यथा सन्तानान्तरबुद्धिः । नचासिद्धो हेतुः, नीलादिरूपत्वाद् ग्राह्यस्यानाकारस्य च ग्राहकस्य संवेदनात् । एवमेव ग्राहकं पक्षीकृत्य हेतुर्दर्शयितव्य इति । प्रयोगान्तरमाह — ज्ञानमिति । ज्ञानं धर्मि, न स्वांशं गृह्णातीति साध्यं, ज्ञानोत्पत्तेरिति हेतुः । तद्धि समनन्तरप्रत्ययादुत्पद्यत इति बौद्धा मन्यन्ते । यद् ज्ञानादुत्पद्यते न तत् (पा? स्वां)शं गृह्णाति । यथा ज्ञानस्य स्वशक्तिः । स्वशक्तिरिति ज्ञानज(न्याद्? न्यां) वासनामपदिशतीति ॥ १७५ ॥

एवमेव ग्राह्यत्वप्रतिषेधप्रयोगो दर्शयितव्य इत्याह — ग्राह्येति । ज्ञानं स्वांशेन न गृह्यत इति दर्शयितव्यम् । तावेव हेतुदृष्टान्ताविति । नच साध्यविकलो दृष्टान्तः । द्वयहीनवासनाभ्युपगमात् । बौद्धानां हि स्वांशं न गृह्णाति । नच तेन गृह्यते । एतच्च चिरन्तनबौद्धाभिप्रायेण ज्ञानातिरिक्त-

**चैत्रज्ञानं तदुद्भूतज्ञानांशग्राह्यबोधकम् ॥ १७६ ॥**
**ज्ञानत्वान्न भवेद् यद्वत् तस्य देहान्तरोद्भवम् ।**
**एतयैव दिशा वाच्या शक्तिद्वयनिराक्रिया ॥ १७७ ॥**
**प्रमाणान्तरसिद्धत्वादन्यत्रानेकशक्तिता ।**
**नत्वत्र कारणं तादृक्छक्तिभेदकृदस्ति ते ॥ १७८ ॥**
**तस्मादुभयसिद्धत्वाल्लाघवाद्यपरिग्रहः ।**

वासनापक्षे स्थित्वोक्तमिति द्रष्टव्यम् । नतूपादानापरनाम्नो विशिष्टात् समनन्तरज्ञानादन्यां काञ्चिद् वासनामर्वाचीना मन्यन्ते । तन्निरासोऽपि चास्माभिरुक्त एवेति । अन्यथा ग्राह्यग्राहकयोर्भेदं दर्शयति — चैत्रेति । चैत्रज्ञानं धर्मि । तच्चैत्रोद्भूतो यो ज्ञानांशो ग्राह्यस्तस्य बोधकं न भवतीति साध्यम् । ज्ञानत्वात् । यद् यद् ज्ञानं न तत् तद्बोधनं यथा देहान्तरोद्भवमिति । ग्राह्यग्राहकशक्तिनिराकरणं चैतेनैव प्रकारेण दर्शयितव्यमित्याह — एतयैवेति । एषा चात्र दिक् । न ज्ञानं द्विशक्तिकं, ज्ञानोत्पत्तेः, स्वशक्तिवत् । तथा न ज्ञानं द्विशक्तिकं, ज्ञानत्वादन्यतरांशवत् । अन्यतरांशो हि ज्ञानमेव । नचासौ द्विशक्तिकः, द्वैविध्याभ्युपगमात् । इतरथा चातुर्विध्यप्रसङ्ग इति ॥ १७७ ॥

ननु शक्यमनेनैव प्रकारेण (ना ? आ)त्मनोऽपि वस्तुत्वाद् घटवद् द्विशक्तिकत्वं वारयितुमत आह— **प्रमाणेति** । दर्शितं ह्यस्मत्प्रयोगसाम्भिन्नबोधबोध्यत्वादात्मनो द्विरूपत्वम् । न तदनुमानेन वारयितुं शक्यते, प्रत्यक्षबाधकप्रसङ्गादिति भावः । ज्ञाने तु नात्मवद् द्विशक्तिकत्वं शक्यते कल्पयितुं, प्रमाणान्तराभावादिति । एतदप्युक्तमित्याह— नत्वत्रेति । यत एवमेकस्य द्विरूपत्वमनुपपन्नम्, अतोऽवश्यमेव ज्ञानाद् भिन्नं नीलादि ग्राह्यमेष्टव्यम्, एवञ्च प्रमाणबलादापद्यमानो वस्तुभेदो न कल्पनागौरवमापादयतीति ॥ १७८ ॥

यदुक्तमनेककल्पनाया एककल्पना ज्यायसीति, तत् परिहृतं, नखलु प्रत्यक्षसिद्धोऽर्थः कल्पनीयः । नच तद्बलभाविनी ज्ञानकल्पना शक्यते वारयितुम् । प्रमाणवन्ति सुबहून्यप्यदृष्टानि कल्पनीयान्येव । अत एवोभय

**उपायत्वाच्च यत् तस्य पूर्वग्रहणकल्पनम् ॥ १७९ ॥**
**चक्षुरादीन्द्रियैरत्र तदनैकान्तिकं भवेत् ।**
**यदप्यप्रतिबद्धत्वादुत्पत्तौ गृह्यतामिति ॥ १८० ॥**
**तत्रात्मना न शक्यं तन्नान्योत्पत्तिरस्तदस्ति वा ।**
**तेनैतत् कारणाभावात् तदानीं नानुभूयते ॥ १८१ ॥**

सिद्धत्वाद् ज्ञानस्याकारकल्पना न्याय्येति यदुक्तं तदपि प्रत्याख्यातम् । यदि हि वयमाकारं दृष्ट्वा कस्यायमिति तदाश्रयमन्विच्छेम तदोभयसिद्धत्वाद् ज्ञानाकारोऽयमित्युच्येतापि । प्रतिष्ठिताश्रयमेव तु प्रत्यक्षसामर्थ्यादाकारमवगच्छन्तो नास्याश्रयान्तरमीहामहे । नचैवास्माकमसिद्धेऽर्थाकारे ज्ञानमपि सिद्धं येनोभयसिद्धं भवेत् । नहि तन्निराकारमनुभूयते । प्रत्यक्षेणार्थ एव हि ज्ञातस्तस्य प्रमाणं भविष्यति । स चेदनिग्रो नास्य कल्पनायां प्रमाणमस्तीति कथमुभयसिद्धत्वं, तदेतदाह — **तस्मादिति** । आदिशब्देन शक्तिमात्रस्य भेद इति यदुक्तं तदुपादत्त इति । उक्तदोषपरिहारप्रपञ्चम् अतः परमारभमाणः यत्तावदुक्तमुपायत्वाद् ज्ञानमेव प्रथममवगन्तव्यमुपायाधीनसिद्धिरवादुपेयानाम्, नच तदाकारमन्तरेण प्रतीयत इति ज्ञानाकार एवायमिति, तत् तावत् परिहरति — उपायेति । सत्यम् अर्थसिद्धावुपायो ज्ञानं, न त्ववश्यमुपायग्रहणाधीनमुपेयावधारणम् । नहि चक्षू रूपपरिच्छेदोपाय इति ततः पूर्वमनुभूयते । यत्तूपायत्वात् प्रथममवगन्तव्यमिति, तत् तैरेव चक्षुरादिभिरनैकान्तिकमिति नोपायस्य सतो ज्ञानस्य पूर्वानुभवं साधयितुमलमिति ॥ १७९$\frac{1}{2}$ ॥

यत्पुनरुक्तम् — उत्पन्नस्य सतोऽप्रतिबद्धस्य ज्ञानस्य नाग्रहणकारणमस्ति अतो ग्रहीतव्यमिति, तदनुभाष्य परिहरति — यदपीति । अयमभिप्रायः — सत्यं ज्ञानमुत्पन्नमप्रतिबद्धं केनचित् । नत्वेतावतैव ग्रहीतव्यं भवति, ग्राहकाभावेनाग्रहणोपपत्तेः । न तावदिदमात्मनात्मानं ग्रहीतुं शक्यमित्युक्तम् । अन्यच्च, ज्ञानं तदा 'नोत्पन्नमेव अर्थापत्तिर्हि सा । सा च पश्चादेव भविष्यतीत्यतः सतोऽपि ज्ञानस्य ग्रहणकारणाभावादग्रहणं युक्तमेवेत्याह — तेनेति ॥ १८१ ॥

**नान्यथा ह्यर्थसद्भावो दृष्टः सन्नुपपद्यते ।**
**ज्ञानं चेन्नेत्यतः पश्चात् प्रमाणमुपजायते ॥ १८२ ॥**
**नचापि प्रतिबन्धेन केवलेनाग्रहो भवेत् ।**
**विशिष्टकारणाभावेऽप्यर्थो नैवानुभूयते ॥ १८३ ॥**
**व्यापृतं चार्थसंवित्तौ ज्ञानं नात्मानमृच्छति ।**
**तेन प्रकाशकत्वेऽपि बोधायान्यत् प्रतीयते ॥ १८४ ॥**
**ईदृशं वा प्रकाशत्वं तस्यार्थानुभवात्मकम् ।**

यदि स्वकाले नावगतं, कथं तर्हि पश्चादवगम्यते । अत आह— **नान्यथेति** । अस्ति हि खलु पश्चाद् ज्ञानावधारणे प्रमाणमर्थापत्तिः । ज्ञातार्थान्यथानुपपत्तिप्रभवा सा प्रागज्ञातेऽर्थे न जायते, पश्चादुपजायत इति युक्तमेव प्रमाणसद्भावादुत्तरकालमेव ग्रहणम् । परिचोदनापरिहारश्चोक्त एवेति नेह प्रतन्यत इति ॥ १८२ ॥

नन्वस्तु तावत् परस्तात् प्रमाणसद्भावः, पूर्वमपि त्वप्रतिबन्धस्य कस्मादग्रहणमत आह— **नचेति** । नह्यप्रतिबन्धमित्येव वस्तूपलभ्यते । अप्रतिबन्धस्याप्यनुपलम्भनात् । कारणसामग्रीविशेषसमवधानसम्पादितं हि भावानां ग्रहणम् । तदप्रतिबन्धानामपि तदभावे न भवति । किमनुपपन्नमिति ॥ १८३ ॥

का पुनर्ज्ञानग्रहणे सामग्री । यदि ज्ञानं, किम(न्य ? स्य)ज्ञानान्तरेण । नन्विदमेव स्वभावतो ज्ञानं प्रकाशात्मकम्, अप्रकाशात्मनां तु भावान्तराणामप्रतिबद्धानामप्यस्तु प्रकाशान्तरापेक्षा । अत एवोक्तं 'नचाप्रकाशरूपत्वम्' इति । अतो नोत्पन्नस्य ज्ञानस्याग्रहणे कारणमुपलभामहे — अत आह — **व्यापृतमिति** । सत्यम् प्रकाशकं ज्ञानं, तथापि नात्मानं प्रकाशयति अर्थसंवित्तौ व्यापृतत्वात् । नहि बहिर्विषयप्रकाशने व्यापृतः प्रदीपः आत्मानमपि प्रकाशयति । तत्प्रकाशने चक्षुषोऽपेक्षणात् । अतो युक्तमेव प्रकाशात्मनोऽपि स्वबोधायान्यापेक्षणमिति ॥ १८४ ॥

अथवा प्रकाशकं ज्ञानमित्येव कुतः, अर्थापरोक्षीभावो हि तस्य तथात्वे प्रमाणम् । ततश्चार्थानुभवस्वभावमेव तत् सिध्यतीति न स्वात्मानमपि प्रकाशयतीत्याह — **ईदृशमिति** । एवमपि स्वात्मानं प्रकाशयेद्

नचात्मानुभवोऽस्त्यस्येत्यात्मनो न प्रकाशकम् ॥
सति प्रकाशकत्वे च व्यवस्थां दृश्यते यथा ।
रूपादौ चक्षुरादीनां तथात्रापि भविष्यति ॥ १८६ ॥
प्रकाशकत्वं बाह्येऽर्थे शक्त्यभावात् तु नात्मनि ।
अन्येन वानुभावेऽसावनवस्था प्रसज्यते ॥ १८७ ॥
तत्र तत्र स्मृतिं दृष्ट्वा सर्वानुभवकल्पना ।
एकेन त्वनुभूतत्वे सर्वं तत्रैव सम्भवेत् ॥ १८८ ॥
तत्रापि स्मृतिरित्येतन्न लोकानुमतं वचः ।
नहि विज्ञानसन्तानं कश्चित् स्मरति लौकिकः ॥

---

यद्यर्थवद् ज्ञानात्मापि ज्ञानजन्मन्यनुभूयते, न त्वसावनुभूयते इत्युक्तमेवेत्यभिप्रायेणाह — नचेति । नच यदेकस्य प्रकाशकं तेन सर्वस्यैव प्रकाशकेन भवितव्यम् । नहि चक्षुरादीनीन्द्रियाणि प्रकाशकान्यपि विषयतः सङ्कीर्यन्ते, व्यवस्थाया उक्तत्वात् । एवमिहापि बाह्यस्य प्रकाशकं ज्ञानं; नात्मन इति न नोपपन्नमित्याह — सतीति सार्धेन । प्रकाशकपदोपचारस्तु कथञ्चित् प्रकाशे कर्तृभावमाश्रित्य वक्तव्यः । अन्यथा हि प्रकाशानन्त्यं भवेदित्युक्तमेवेति ॥ १८६½ ॥

यत्तूक्तं —

"तस्य तस्यापि चान्येन संवित्तावस्थितिर्भवेत् ।"

इति, तद् दूषयितुमनुभाषते—अन्येनेति सार्धेन । एवं हि परैरुक्तं—यदि किल ज्ञानान्तरेण ज्ञानं ज्ञायते, ततस्तस्य तस्य ज्ञानस्य स्मरणात् पूर्वानुभवकल्पनायामनवस्था भवेत् । एकेन तु ज्ञानेन विषयाकारे स्वाकारे च प्रवेदिते सर्वमेव ग्राह्यग्राहकाकारस्मरणं तत्रैव स्यात् । तथाचानवस्था परिहृता भवति । तस्मान्न ज्ञानान्तरेण वेद्यं ज्ञानमिति ॥ १८८ ॥

एवमनुभाषिते दूषणमाह — तत्रापीति । यदेतदुच्यते तत्र तत्र स्मरणदर्शनेन सर्वत्रानुभवकल्पनायामनवस्थेति, तदयुक्तम् । स्मृत्यसिद्धेः । गृहीतविषया हि स्मृतिर्भवतीति नागृहीतं ज्ञानं स्मर्तुं शक्यम् । गृहीतस्मरणे तु यावद्ग्रहणमेव स्मरणव्यवस्थानान्नानवस्थेति वक्ष्यते । भवति हि

**घटादावगृहीतेऽर्थे यदि तावदनन्तरम् ।**
**अर्थापत्त्यावबुध्यन्ते विज्ञानानि पुनः पुनः ॥ १९० ॥**
**यावच्छ्रमं ततः पश्चात् ताव(त्ये ? न्त्ये)त्र स्मरिष्यति ।**
**तदा त्वकल्पितेऽप्येवं स्मृतिर्वन्ध्यासुतादिवत् ॥**
**स्मृतिभ्रान्तिश्च याप्यत्र पश्चाज्ज्ञानेषु जायते ।**
**तदैवार्थस्मृतेरेषां तज्ज्ञानादिप्रमाणता ॥ १९२ ॥**
**यावच्छ्रमं च तद्बुद्धिस्तत्प्रबन्धे महत्यपि ।**
**श्रमाद् रुच्यान्यसम्पर्काद् विच्छेदो विषयेष्विव ॥**

कदाचिदेतद् द्वित्राणि ज्ञानान्यनुभूतपूर्वाणि स्मर्यन्त इति । विज्ञानसन्तान-स्मरणं त्वलौकिकमेवेति ॥ १८९ ॥

यदि त्वर्थज्ञाततान्यथानुपपत्त्या ज्ञानमवगम्य पुनस्तज्ज्ञातताावशेन तद्विषयं ज्ञानान्तरं कल्पयति, पुनश्चानेनैव क्रमेण यावच्छ्रमं ज्ञानानि ज्ञातानि । ततो यावज्ज्ञातस्मरणाद् नानवस्थेत्याह — घटादाविति सार्धेन । यत्तु प्रागनवगतानामेव ज्ञानानां स्मरणमुच्यते, तद् वन्ध्यासुतादिस्मरण-तुल्यमशक्यमेव वक्तुमित्याह — तदेति ॥ १९१ ॥

यत्तु भिक्षुणा सिद्धवत् तत्रापि स्मृतिरित्युक्तं, तद् भ्रान्तभाषितमेव । अस्ति च भ्रान्तौ निबन्धनम् । अर्थो हि तत्र स्मर्यते । तत्स्मरणान्यथानुपपत्त्या च तस्य प्राग् ज्ञातत्वमेव कल्प्यते । ततोऽपि प्राचीनज्ञानकल्पना । तदिह संसर्गमोहितधियां ज्ञानेऽपि स्मृतिविभ्रमः । न त्वाद्यज्ञानस्मरणम-प्याशङ्क्यम् । प्रागेव सन्तानस्मरण, तदेतदाह — **स्मृतिभ्रान्तिरिति**। अर्थस्मृतेः खल्वियं तज्ज्ञानादिप्रमाणता विलसति, यदेतज्ज्ञानेऽपि स्मृतिभ्रमो भवति । अर्थस्मृत्या हि ज्ञाने प्रमीयमाणे स्मृतिविषयार्थसन्निकर्षाद् ज्ञानेऽपि स्मरणमिति भ्राम्यति । आदिशब्देन चात्र ज्ञानज्ञानमुपादीयत इति ॥ १९२ ॥

स्मृत्यापि ज्ञानप्रमायां यावच्छ्रमं तद्ग्रहणाद् विषयान्तरसञ्चारोप-पत्तिरित्यभिप्रायेणाह — **यावदिति** । अयमभिप्रायः — न तावन्ति ज्ञानानि जायन्ते यदि तु ज्ञातुमिष्यन्ते यावच्छ्रमं तद्बुद्धिर्भविष्यति यावन्ति ज्ञानानि बुध्यमानो न श्राम्यति । स्मृत्यनुसारेणापि तावद् भोत्स्यते

**तत्रापि स्मृतिरित्येषा प्रथमे प्रत्यये यदि ।**
**तन्मात्रग्रहणादेवं नानवस्था प्रसज्यते ॥ १९४ ॥**
**स्मरणं त्वथ सर्वेषु तत्सिद्ध्यै ग्रहणं तथा ।**
**प्रमाणवत्त्वादायातः प्रवाहः केन वार्यते ॥ १९५ ॥**
**अथ तान्याद्यविज्ञानविषयाणीति कल्प्यते ।**

---

इत्यभिप्रायं विवृणोति — तत्प्रबन्ध इति । यावच्छ्रमं तावद् बुद्धयो ज्ञायन्ते, ततो महत्यपि बुद्धिप्रबन्धे ज्ञाते श्रमाद् वा विषयान्तराभिलाषेण वान्यसम्पर्काद् बुद्धिज्ञानाद् विच्छेदो भवति । यथा विषयेष्वेव रमणीयेषु गीतादिष्वनुभूयमानेषु विषयान्तराभिलाषात् पूर्वविषयविच्छेदो भवतीत्यनुपपन्नं विषयान्तरसञ्चारो न स्यादिति ॥ १९३ ॥

किञ्च यदेतदुक्तं तत्रापि च स्मृतिरिति, तत् किं प्रथमज्ञानाभिप्रायेण, उत तत्रतत्रेति वीप्सामभिप्रेत्य । पूर्वस्मिन् कल्पे नानवस्था । एको हि प्रथमः प्रत्ययः । अतः का तद्ग्रहणेऽनवस्था, तदेतदाह — तत्रेति ॥ १९४ ॥

यदि तु संवित्प्रवाहमेवाभिप्रेत्य तत्रापि स्मृतिरित्युच्यते, तन्न तावदस्तीत्युक्तम् । उपेत्यापि ब्रूमः । यदि बहून्येव परस्ताद् ज्ञानानि स्मर्यन्ते, ततो ग्रहणकारणत्वात् स्मृतेस्तत्सिद्धये ग्रहणान्यपि कल्पयिष्यामः । कथमपरथा गृहीतविषया स्मृतिर्भविष्यति । न त्वेवमपि ज्ञानान्तरनिरपेक्षमेव ज्ञानमवसीयत इति युक्ता कल्पना, स्वसंवित्तिप्रतिषेधात् । अतो वरं प्रमाणबलादायातः संवित्प्रवाहः, नपुनः स्वसंवित्तिकल्पनेत्यभिप्रायेणाह — स्मरणमिति । पूर्वं च घटादौ गृहीत इत्यत्र यद्येवं स्याद्, एवं सति तत्रापि स्मृतिरित्युपपद्येत । तथा नानवस्था, यावदवगतस्मरणात् । न त्वेतदस्त्यस्तीति तद् दर्शितम् । इदानीं तु यद्युत्तरोत्तरविषयाः स्मृतयो दृश्यन्ते ततस्तद्दर्शनाद् ग्रहणप्रवाहकल्पनैव प्रमाणवती, न स्वसंवित्तिकल्पनेति विवेक इति ॥ १९५ ॥

यदि तूच्यते, सत्यम् अस्त्ययं ग्रहणप्रवाहः । किन्त्वाद्यज्ञानगोचराण्येव तानि ग्रहणानि । ज्ञानमेव हि तत्राद्यं नार्थः । ज्ञानमेव विषयाकारेण

**नोत्तरोत्तरबुद्धीनां विशेष उपपद्यते ॥ १९६ ॥**

**विज्ञानविषयत्वं च यस्य सर्वासु बुद्धिषु ।**
**घटविज्ञानतज्ज्ञानविशेषस्तेन दुर्लभः ॥ १९७ ॥**

**स्मरन् यथैव विज्ञानं निराकारं स्मरत्ययम् ।**
**तथा स्मरन् गृहीतार्थं निराकारतया स्मरेत् ॥**

स्वाकारेण च निरूप्यते । तद्विषयं च तत्स्मरणमन्यत् । एवमेवापरमिति न किञ्चिदर्थविषयज्ञानमित्याशङ्कया सहाह — **अथेति** । अयमभिप्रायः — सारूप्येण हि विषयभावः । तद् यदाद्यविज्ञानविषयमेकम्, एवं सति तत्तावत् ततोऽविलक्षणं प्रथमवद् घट इत्येव भवेत् । एवं तृतीयाद्यपीति नोत्तरोत्तरबुद्धयो भिद्येरन् । अर्थवादिनस्तु प्रथममर्थविषयं घट इति ज्ञानं, द्वितीयं तु ज्ञानविषयं, तृतीयज्ञानं तु ज्ञानज्ञानविषयम् । अनाकारत्वेऽपि चाकारवतामिव स्वाभाविकः संविदां भेद इत्युक्तमेवेत्याकारप्रचयदर्शनमुपपद्यते ज्ञानेषु जिज्ञासितेषु, नतु बौद्धस्येति विपरीतप्रसङ्गोऽभिहितः । एतच्च प्रथमज्ञानस्य स्वसंवित्तिमभ्युपेत्योच्यते । प्राङ् निराकृतोऽप्ययं ज्ञानविषयत्वपक्ष इदानीं दूषणान्तराभिधित्सया पुनरुपाक्षिप्त इति ॥ १९६ ॥

अयं चापरो विज्ञायते न विषये बुद्धीनां दोष इत्याह — **विज्ञानेति** । अयमर्थः — यस्य सर्वा बुद्धयो विज्ञानविषयाः, तस्य घटज्ञानं घटज्ञानज्ञानं वा विज्ञानविषयत्वान्न भिद्यत इति ॥ १९७ ॥

अविशेषमेव दर्शयति — **स्मरन्निति** । एष हि ज्ञातपूर्वमर्थं कदाचित् प्रस्मृतवान् विज्ञानमनाकारं स्मरति अर्थं च सर्वदा साकारं घट इति, तन्नोपपद्यते । प्रस्मृतार्थविषयविज्ञानस्मरणं ह्यनाकारमेव दृष्टम् । एवं स घट इत्यपि स्मृतिविज्ञानं विज्ञानविषयमेवेति तदप्यनाकारमेव भवेत् । साकारत्वे वा प्रस्मृतार्थविज्ञानस्मृतेरपि साकारत्वप्रसङ्गोऽविशेषात् । अतो योऽयं घटविषयस्य स्मृतिविज्ञानस्य प्रस्मृतघटविज्ञानविषयस्य च स्मृतिविज्ञानस्य विशेषः, स विज्ञानविषयत्वे बुद्धीनां न भवेत् । अतः काचिद् विज्ञानविषया काचिदर्थविषयेति साकारानाकारभेदसिद्धिरिति ॥ १९८ ॥

**ज्ञानप्रष्ठेन योऽप्यूर्ध्वं परामर्शो भवत्यसौ ।**
**तस्यार्थेष्वभ्युपायत्वान्न तु ग्राह्यत्वकारितः ॥ १९९ ॥**

**प्रत्यासन्नत्वसम्बन्धौ ग्राह्यत्वासम्भवाच्च्युतौ ।**
**विषयत्वेन वाप्येतौ स्तः किं देशाविभागतः ॥ २०० ॥**

---

यदपि प्राग् ज्ञानस्य संवेदनमित्यत्र कारणमुक्तं ज्ञानप्रष्ठेनं परामर्शदर्शनं, तदपि न युक्तम् । न ह्ययं ज्ञानप्रष्ठेन परामर्शो ज्ञानस्य ग्राह्यताकृतः । किन्त्वर्थस्थितौ ज्ञानमभ्युपाय इति तदनुसार्यर्थकथनं ज्ञातोऽसावर्थो मयेति । तदिदानीमेव च स्मृतेस्तत्र ज्ञानानुमानम् । न तु प्रागेव ज्ञानपुरस्सरमसौ ज्ञातः । यदा तु कश्चित् तथाविधार्थसदसद्भावयोः पर्यनुयुङ्क्ते, तदा ज्ञानोपायत्वादर्थस्य ज्ञानपुरस्सरमर्थस्थापनं भवत्यासीदसावर्थः यस्मान्मया पूर्वमवगत इति । अतो नानेन ज्ञानस्य पूर्वोपलब्धिः शक्या कल्पयितुम् । तदेतदाह — **ज्ञानप्रष्ठेनेति** ॥ १९९ ॥

यत्तूक्तं ज्ञानाकारपक्षे प्रत्यासन्नं सम्बद्धं ग्राह्यं भवति, इतरथासम्बन्धमतिदूरवर्ति च ग्राह्यमभ्युपगतं भवतीति । तत् परिहरति — **प्रत्यासन्नेति** । अयमभिप्रायः — यथाकथञ्चिन्नैकात्म्ये ग्राह्यग्राहकभावः सम्भवतीत्युक्तम् । तदा किं कुर्मोऽसम्बन्धमसन्निहितं च ग्राह्यमनुजानीमो न खलु दूरदेशा(न्दी ? दि)वार्तीभ्यो हृदयमनुविपरिवर्तमाना भावा न गृह्यन्त इति शक्यते वक्तुं संविद्विरोधादिति । एवं तावदसम्भवादासत्तिसम्बन्धौ न स्यातामित्युक्तम् । न वा हीयेत । नहि देशाविभाग एव सर्वत्र सम्बन्धः । विषयविषयिभावोऽपि हि सम्बन्ध एव । अस्ति चासौ ज्ञानार्थयोः । ज्ञानोत्पत्तौ तदवाप्तेरिदमेव च तस्य सन्निधानमर्थेन यदुत्पन्ने तस्मिन्नर्थो भासत इत्यभिप्रायेणाह — विषयेति । किं पुनरिदमर्थो भासत इति । न ज्ञानादन्यदर्थस्य भासनम् । संवित्तौ वा कथं विषयाकारो भासते । एवंतर्हि नास्ति तदभावे चान्यानवभासनादभाववाद एव । तदवश्यास्थेयमिदं ज्ञानोत्पत्तावभूतपूर्वो भावानां कोऽपि भेदः सकलप्रमातृप्रत्यात्मवेदनीयः । ते तु भावा ज्ञानाकारा बहिर्वेत्यन्यदेतत् । येऽपि फलभूतामर्थसंविदं स्वप्रकाशामाहुः, तैरपि कोऽप्यनिर्वचनीयोऽर्थगतो विकारो दर्शयितव्य एव । कथ-

**अर्थाकारस्य योऽप्युक्तो मिथ्याज्ञानेष्वसम्भवः ।**
**देशकालान्यथामात्रसम्भवः केषुचित् कृतः ॥२०१॥**
**प्रत्यक्षादन्यविज्ञानमतीतानागतैरपि ।**

---

मन्यथा संवित्प्रकाशेऽर्थः सिध्येत् । न ह्यन्यप्रकाशेऽन्यत् सिध्येद्, अतिप्रसङ्गात् । अन्या च संविदान्तरा, अन्यो बहिरर्थः । सोऽपि भासत इति चेत्, तद्वदेव तर्हि सोऽपि स्वप्रकाश एव । संविदायत्तो न स्वप्रकाश इति चेद्, नन्विदमेवास्माभिर्जिज्ञास्यते किमस्य संविदायत्तत्वमिति । स्वरूपं तावत् स्वकारणसामग्र्यायत्तमेव । प्रकाशोऽपि तस्य संविदेव न तदायत्तः । तदवश्यमप्राप्तपूर्वस्य काचित् फलोत्पत्तावस्ति प्राप्तिरित्यास्थेयं यदायत्तोऽस्य संवेदनं नान्यस्येति विवेकः । सैव चास्माभिर्ज्ञाततादिपदै-रभिधीयते । अतः सिद्धं विषयत्वेनापि प्रत्यासत्तिसम्बन्धो स्त इति ॥ २०० ॥

योऽपि मिथ्याज्ञानेष्वर्थाकारसम्भव उक्तः, तमनुभाष्य परिहरति — अर्थेति । अयमर्थः — योऽयं द्विचन्द्रादिबोधेष्वर्थाकारासम्भव उक्तः, सोऽयुक्तः । तथाहि । सम्यग्ज्ञानेषु तावन्नार्थाकारासम्भवः । केषुचित्तु मिथ्याज्ञानेषु देशान्यथात्वमात्रेण कालान्यथात्वमात्रेण वार्थाकारसम्भवो-ऽस्माभिः कृतः निरालम्बनवादे वर्णित इति यावत् । अतो न क्वचिदर्था-कारासम्भवः तत् पुनरिदं प्रतिभासविपरीतमभिधीयते । देशान्तरादिस्थो-ऽर्थो भासते, अन्यत्र स्थितश्चार्थोऽन्यत्रालम्ब्यत इति संविदनुसारेण हि भवन्तो बहिरर्थमवस्थापयन्ति । सा च देशान्तरादिगोचरा कथमन्यत्रार्थमा-लम्बत इति शक्यते वक्तुम् । एवं हि स्वांशालम्बनत्वेन किमपराद्धं येन तन्निराक्रियते । मैवम् । उक्तमस्माभिर्निरालम्बनवाद एव बाधकानुसारिणी हि मिथ्यात्वकल्पना । बाधकं च देशादिसंसर्गमेव वारयति, नहि बहि-र्वस्तुसत्ताम् । तद्धि न द्वौ चन्द्राविति चन्द्रद्वित्वं निषेधति, न द्वित्वं चन्द्रं वेति कथं तौ बहिर्भासमानावपह्नास्यामः । अतो नेह संविद्विपरीतं किञ्चि-दिति ॥ २०१ ॥

स्यादेतत् । कथमतीता अर्था असन्तो ज्ञानावलम्बनमिति । उक्त-परिहारत्वात् । उक्तं हि प्रत्यक्षधर्मो वर्तमानसन्निहितविषयता ज्ञानान्तराणां

जन्यतेऽर्थे भवन्तीषु वासनास्वसतीषु वा ॥ २०२ ॥
यः पुनर्नानुभूतोऽर्थो न चाप्यनुभविष्यते।
वासनाभावतस्तत्र तवाप्यनुभवः कथम् ॥ २०३ ॥
विनापि वासनातश्चेद् बुद्धिरुत्पद्यते ततः।

---

नेति निरालम्बन एव, तदेतदाह — प्रत्यक्षादिति। यत्तावल्लैङ्गिकमतीता-दिगोचरं ज्ञानं तत् प्रत्युत्पन्नलिङ्गादिजनकमसतीष्वेव वासनासु भवति। यत्त्वन्यज्जाग्रत्स्मृति ज्ञानं स्वप्नज्ञानं वा, तद् भवन्तीषु वासनासु भवति प्रत्युत्पन्नकारणान्तराभावादिति ॥ २०२ ॥

ये ह्यत्यन्ताननुभूता अर्था अनुभूयन्ते, तत्र वासनादिकारणान्तरा-सम्भवान्नास्ति ज्ञानाकारत्वादन्या गतिरत आह — य इति। अयमभि-प्रायः — तवापि तथाविधानुभवे किं कारणं, बौद्धोऽपि वासनामेव ज्ञान-कारणं मन्यते। नचात्यन्ताननुभूतपूर्वेऽर्थे वासना सम्भवति, अर्थज्ञानाहि-तसंस्काराभिधानत्वाद् वासनाशब्दस्य। स्यादेतत्। न ज्ञानजन्मा संस्कारो वासना। किन्तु ज्ञानमेव किञ्चिदनवगतपूर्वार्थसंवेदनकार्योन्नेयशक्तिभेद-मिति। तन्न। लोके तथानवगमात्। ज्ञानयोनिरेव संस्कारो वासनेति लौकिका मन्यन्ते, न ज्ञानमेव। अपिच, समनन्तरज्ञानमतदाकारं, तत् कथं तदाकारां धियमुपजनयितुमलं

"तदतद्रूपिणो भावास्तदतद्रूपहेतुजाः।"

इति वः सिद्धान्तः। यदि त्वयमपि कार्यकारणभावो नेष्यते, अस्तु तर्हि कादाचित्कमप्यनपेक्षमेव ज्ञानम्। किं समनन्तरप्रत्ययाधीनव्यसनेन। अ-तोऽवश्याश्रयणीया काचिज्ज्ञानाद् भिन्ना वासना, योद्भूता सती विसदृश-सन्तानतिरोधानेन सदृशमेव ज्ञानमारभत इति भवद्भिरप्यास्थेयम्। नचा-त्यन्ताननुभूतेषु सा सम्भवतीति तुल्यत्वमावयोः। नचाप्यनुभविष्यत इत्या-त्यन्तिकवासनासम्भवप्रकटनार्थं, नतु भविष्यतोऽनुभवस्य कश्चिद् वासना-यामुपयोग इति ॥ २०३ ॥

यदि तु अनादृत्यैव वासनां ज्ञानोत्पत्तिराश्रीयते, एवन्तर्हि यच्चिरन्तनै-

**वासनायां निमित्तत्वमभ्युपेतं विरुध्यते ॥ २०४ ॥**
**वासना चेद् भवेत् तत्र सा च संवित्तिपूर्विका ।**
**तथा सति च पूर्वत्र गृहीतः क्वाप्यसौ ध्रुवम् ॥ २०५ ॥**
**एवं च नैव वस्तव्यमत्यन्ताभवनं क्वचित् ।**
**अन्यथानुपपत्त्या हि सिद्धा जन्मान्तरेऽस्तिता ॥२०६॥**
**दुष्टत्वेन च विज्ञानमन्यथापि व्यवस्थितम् ।**
**पृथिव्यादिषु गृह्णीयादाकारं तन्निबन्धनम् ॥ २०७॥**

---

बौद्धैर्वासनायां निमित्तत्वमाश्रितं तद् विरुध्यत इत्याह—**विनेति** ॥२०४॥

तत्रापि तु वासनाभ्युपगमे तस्याः संवित्कारणत्वादसावननुभूतोऽप्यर्थ इह जन्मनि क्वापि जन्मान्तरादावनुभूत इत्यभ्युपेय इत्याह—**वासनेति** ॥ २०५ ॥

किमतो यद्येवमत आह — **एवंचेति** । अभवनमभावः । दुःस्वप्नेऽनुभूयमानस्य संसर्गस्य न कस्यचिदत्यन्ताभाव इति । किं पुनस्तद्भावे प्रमाणमत आह — **अन्यथेति** । ज्ञानं हि कार्यं न तावदकारणकं निष्पद्यते । न ह्यस्य प्रत्युत्पन्नेन्द्रियादिकारणं किञ्चिदुपलभ्यते । स्वप्ने न चेद् वासनापि कारणं न स्यादेव । न चासौ पूर्वज्ञानमन्तरेण भवति । तद् यदि नेहासावर्थो ज्ञातः, नूनं जन्मान्तरेऽनुभूत इति ॥ २०६ ॥

ये तर्ह्यत्यन्तासम्भावनीयज्ञानार्थाः स्वशिरश्छेदादयः, तेऽसम्भवद्वासनाः कथमवसीयन्ते । अतस्तत्र ज्ञाना(कार)कल्पनैव साधीयसी नार्थाकारकल्पना, अत आह — **दुष्टत्वेनेति** । अयमभिप्रायः — यदा न कथञ्चित् स्वसंवेदनं ज्ञानमित्युक्तं तदा य एवैते पृथिव्यादयोऽर्था बहिरवस्थिता गृह्यन्ते, तेष्वेव कुतश्चित् कारणदोषाद् दुष्टं विज्ञानमन्यथास्थितमाकारं गृह्णाति । अदुष्टं तु यथावस्थितम् । न क्वचिदपि ज्ञानाकारानुभवः । तन्निबन्धनमिति । पृथिव्यादिनिबन्धनमित्यर्थः । पृथिव्यादिसूक्ष्माण्येव हि स्थूलारम्भे कारणम् । एतेन कल्पनानिबन्धनत्वं प्रधाननिबन्धनत्वं च निराकरोति । न तावत् कल्पनानिबन्धनत्वमबाधितत्वात् । न प्रधाननिबन्धनत्वमप्रमाणकत्वात् । दृश्यते तु सूक्ष्मतरादिक्रमेण पृथिव्यादीनामेव कार्यद्रव्येष्वारम्भ-

**तानपास्य तु नैवार्थे क्वचिदाकारकल्पना ।**
**न ज्ञानं ह्यनवष्टम्भमात्मानं लब्धुमर्हति ॥ २०८ ॥**
**विज्ञानस्यैव वाकारो यद्येषोऽन्ये च कल्पिताः ।**
**विशेषः कोऽत्र येनायमत्यन्तासन्निर्तीष्यते ॥ २०९ ॥**
**तस्माद् भ्रान्तिरपि त्वेषां कल्पयन्त्यर्थमेव नः ।**
**कल्पयत्यन्यथा सन्तं न त्वात्मानं व्यवस्यति ॥२१०॥**
**ततश्च बाधकज्ञानाद् वाचोयुक्तिरियं भवेत् ।**
**अर्थेऽन्यथापि सत्येव धियाकारः प्रतीयते ॥ २११ ॥**

---

कत्वमिति तदेव द्व्यणुकादिक्रमेणाश्रीयते । शिरश्छेदश्चान्यगोचरोऽवगतः स्वसम्बन्धितयावगम्यत इत्यन्यथा व्यवस्थानमिति ॥ २०७ ॥

तांस्तु पृथिव्याद्यर्थानपास्य न क्वचिदर्थान्तरे शब्दात्मके ज्ञानात्मके वाकारकल्पना युक्तेत्याह — तानिति । कारणमाह — नेति । पृथिव्याद्युपष्टम्भशून्यं न किञ्चिज्ज्ञानमात्मानं लभते । किञ्चिद्धि पृथिव्यादिद्रव्यगोचरं, किञ्चिद्धि रूपादिगुणविषयं, किञ्चिद् गवादिसामान्यगोचरम्, अन्यच्चोत्क्षेपणादिकर्मगोचरमवगतमिति ॥ २०८ ॥

अपिच यदि सर्वोऽयं ज्ञानमनुभासमान आकारो ज्ञानस्यैवान्ये च पृथिव्यादयो भावाः कल्पिताः, एवन्तर्हि सर्वसंविदामेवात्यन्तासन्नर्थ इति केन विशेषेणायं स्वप्नादिप्रमाणामत्यन्तासन्नर्थ इष्यते येनैवमुपालभ्येमहि कथमत्यन्तासन्नर्थः स्वप्नादिविज्ञानेऽवसीयते इति तदेतदाह — **विज्ञानस्येति** । अत्र स्वप्नादिज्ञान इत्यर्थः ॥ २०९ ॥

अतः सिद्धं भ्रान्तिज्ञानान्यप्यर्थमेवान्यथा स्थितमन्यथा कल्पयन्ति, न पुनरात्मानमवस्यन्तीत्याह — **तस्मादिति** ॥ २१० ॥

यदितर्हि सर्वसंविदामेव बाह्यालम्बनत्वं, किं तर्हि बाधकेन बाध्यते अत आह — **ततश्चेति** । बाधकेन न बाह्यं प्रतिक्षिप्यते, किन्तु बाधके सतीयं वाचोयुक्तिर्भवति यदन्यथा सत्यप्यर्थेऽयमाकारो दुष्टकारणजनितया धिया प्रतीयते न त्वनर्थिकेयं धीरिति ॥ २११ ॥

द्विचन्द्रादावपि त्वेवं तारकादिमतौ तथा ।
स्त्रीत्वाद्यन्यत्र दृष्टं स्यात् कथञ्चिद् वेह सम्भवेत् ॥
शब्दमात्रप्रतीत्या वा दृष्टैर्वा कैश्चिदिङ्गनात् ।
संस्त्यानप्रसवस्थानैर्यथा पातञ्जले मते ॥ २१३ ॥

---

एवं तावद् वासनानिबन्धनेषु स्वप्नादिविभ्रमेषु अर्थाकारो दर्शितः । बाधकप्रत्ययार्थश्च व्याख्यातः । एतदेवेन्द्रियविभ्रमेषु द्विचन्द्रादिविषयेष्वतिदिशति — द्विचन्द्रादावपित्वेवमिति । यत्तूक्तं नैकत्रार्थे लिङ्गानेकत्वं सम्भवतीति । तत्र परिहारमाह — तारकादीति स्यादन्तेन । अयमभिप्रायः — तारकादिमतावपि स्त्रीत्वादिप्रत्ययो भ्रान्तिरेव । प्राणिधर्मत्वाल्लिङ्गभेदानामप्राणिष्वसम्भवाद् भ्रान्त्यैवान्यत्र दृष्टमन्यत्रारोप्यते । अतोऽन्यत्र दृष्टमेव स्त्रीत्वादि तारकादिमतावालम्बनमिति । कथं पुनस्तारकादिषु स्त्रीत्वादिप्रत्ययो भ्रान्तिरित्युच्यते । न ह्यत्र द्विचन्द्रादिबोधेष्विव बाधको दृश्यते । तमन्तरेण तु भ्रान्तिवादिनामेव भ्रान्तिरापद्येत, अत आह— कथमिति । अयमभिप्रायः — सत्यम् । न भ्रमस्तारकादिषु, वास्तवानामेव स्त्रीत्वादीनां सम्भवात् । ते हि स्त्रीपुन्नपुंसकलिङ्गेभ्यस्तारका तिष्यो नक्षत्रमिति शब्देभ्यः प्रतीयन्ते । नच प्रतीयमाना न सन्तीति युक्तं वक्तुम् । यत्तु प्रमाणान्तरान्नावगम्यते, नायं दोषः । शब्दैकप्रमाणकत्वात् । नचैकप्रमाणावगतोऽर्थः प्रमाणान्तरेणानवसीयमानोऽसन् भवति । अतो येयं शब्दमात्रादुपजाता प्रतीतिस्तयैव स्त्रीत्वादयः संविदिता इति पारमार्थिका एवेति । अयमपि तु शब्दैकप्रमाणकत्वपक्षोऽतितुच्छ एव । न खलु पदतद्भागानाम गृहीतसम्बन्धानां प्रतिपादकत्वमस्ति । नच प्रमाणान्तरावेद्येन वस्तुना सम्बन्धो ग्रहीतुं शक्यः । अतो मन्द एवायमपि पक्ष इत्यपरितुष्यन् परिहारान्तरमाह— दृष्टैरिति । न तारकादावदृष्टपूर्वं लिङ्गं, दृष्टैरेव कैश्चिद्रूपैरिङ्गनात् । वक्ष्यमाणान्येव दृष्टानि रूपाणि लिङ्गमिति यावदिति । किं पुनर्दृष्टं रूपं येनात्मना स्त्रीत्वादीनीष्यन्ते अत आह— संस्त्यानप्रसवस्थानै(रिति ।) सत्त्वरजस्तमसां गुणानां यथोत्तरमुपचयः संस्त्यानप्रसवस्थानानि । ते च गुणाः प्राण्यप्राणिसद्भावसाधारणा एव सर्वेषु तद्रूपप्रत्यभिज्ञानात् । सुख-

तेन लिङ्गत्रयस्यात्र सद्भावः स्यात् प्रमाणवत् ।
अपेक्षाभेदतश्चात्र विरोधोऽपि न विद्यते ॥ २१४ ॥

---

दुःखमोहादिभेदवन्तो हि सर्वे भावाः आश्रयतया जनकत्वेन च प्राणिनः आश्रयतयाप्राणिनः जनकतया रमणीयादिभावव्यवस्थिता हि विषया अप्रार्थिनोऽपि सुखयन्ति दुःखयन्ति मोहयन्ति च । सुखादयश्च सत्त्वादि-धर्माः, तद्दर्शनात् त्रैगुण्यं सर्वभावानामवसीयते । तद् यदा सत्त्वोपचयः संस्त्यानाभिधानोऽवगम्यते तदा पुंस्त्वं प्रतीयते । रजसस्तूपचये प्रसवे गम्यमाने स्त्रीत्वं, तमस उपचये स्थाने नपुंसकत्वम् । सा; चोदासीनावस्था भावानां न कस्यचित् कार्यस्य सवित्री स्वरूपावस्थानमात्रं, तच्चैतद्रूपं दृष्टमेव सर्वभावेषु । प्राणिनो हि पुमांसः सत्त्वोत्कटा दृश्यन्ते । रजोमय्यो नार्यः । तमोमयाः षण्डाः संमुग्धनिरुद्धाखिलचेष्टाः । एवं तिष्यादीनाम-प्यापेक्षिकः सत्त्वादीनामुपचयो दर्शयितव्यः । अल्पप्रकाशनक्षत्रान्तरापेक्षया हि पटुप्रकाशः पुमानिति तिष्यो लक्ष्यते । यदा तु तस्यैव रजस उद्भवो लक्ष्यते तदा स्त्रीत्वेन तारकेति । तमसस्तूपचये नक्षत्रमिति नपुंसकत्वेन । एवमेव तटस्तटी तटमित्यादिष्वपि गुणोपचयापचयात्मा लिङ्गभेदोऽनुस-न्धातव्यः । एवञ्च सर्वत्रैव पारमार्थिकं लिङ्गत्रयमुपपन्नं भवति । बाध-विरहोऽप्यत एवेति सिद्धं नानर्थकास्तारकादिषु लिङ्गप्रत्यया इति । अत्रैव वृद्धानुमतिं दर्शयति— यथेति । पतञ्जलिना हि किं पुनरिदं लिङ्गमिति पृष्ट्वा बहुधा विकल्प्य प्राण्यप्राणिषु दर्शनादविपर्यया(चो? च्चो)भयत्र यथोक्तमेव-लिङ्गमुपवर्णितमिति ॥ २१३ ॥

एवञ्चोपपन्नं लिङ्गत्रयमपीत्याह — तेनेति । नन्वस्त्वेवमात्मको भिन्नाधिकरणो लिङ्गभेदः, एकाधिकरणं तु लिङ्गभेदं न मृष्यामहे यस्य हि यत् स्वरूपमुचितं तेनैव तन्नित्यं व्यपदिश्येत । अत आह — अपेक्षेति । तत्तद्भावभेदापेक्षया हि तस्य तस्य गुणस्योपचये लक्ष्यमाणे नैकत्रापि लिङ्गभेदावसायोऽनुपपन्नः पुत्रादिभाव इवैकस्य पुंस इति ।

तत् पुनरिदमुक्तप्रकारं लिङ्गस्वरूपं नानुमन्यामहे पारमार्थिकमप्रा-णिषु लिङ्गमनुपलभमानाः । प्राण्यवान्तरजातिमेव तु लिङ्गं सङ्गिरामहे । पश्यामो हि वयं नराश्वमहिषगोवराहादिभेदभिन्नानेकप्राणिगणसाधारणं

स्त्रीत्वादिभेदभिन्नं विविधमवान्तराकारमप्राणिभ्यो व्यावृत्तं यमानन्दसाध- (ना ? न)स्तनवदनादिसन्निवेशविशेषा दर्शयन्ति । नच ते अप्राणिष्विति न लिङ्गभेदं प्रतिपद्यामहे । किमिदानीमप्राणिषु लिङ्गावगमो भ्रान्तिरेव । ननु साप्यसति बाधकोदये दुर्भणैव । सत्यम् । गौणस्त्वप्राणिषु लिङ्गवादः प्रस्तरै- ककपालयोरिव यजमानवादो माणवक इव ज्वलनवादः । नह्यसौ भ्रान्तिः, अभ्राम्यतामेव तथावभासात् । कः पुनर्गुणः यतोऽप्राणिषु गौणो लिङ्ग- वादः । पिङ्गल्यादयो ह्यग्निगुणा माणवके वर्तमाना गुणवादहेतवः । नत्विह तथा प्राणिगुणाः केचिदप्राणिषु दृश्यन्ते यद्वशेन गुणवादः समाश्रीयते । मैवम् । इहापि गुणावगतेः । उपचयापचयधर्माणौ हि स्त्रीपुमांसौ, अतस्त- द्धर्मविवक्षया स्त्रीलिङ्गादिशब्दप्रयोगोऽप्राणिष्वपि यथैव प्रकृते वर्णितम् । अपेक्षाभेदतोऽप्यविरोधः समान एव । अत्यन्तापचयविवक्षया च नपुंसक- लिङ्गशब्दप्रयोगः, तद्रूपत्वात् तज्जातेः । स्यादेतत् — नाप्राणिषु गौणाव- गतिरतः कथं गौणत्वमिति । अस्ति वा प्राण्यप्राणिनोः समानाकारा बुद्धिरायु- ष्मताम् । शब्दसल्लापमात्रादेव हि नो वाक्स्रुगादिषु स्त्रीत्वादिमतिराविः- रस्ति । ननु नारीष्विव तेष्वप्यनुस्यूत आकारो दृश्यते । अतः शब्द- संव्यवहारमात्रसिद्ध्यर्थमप्राणिषु लिङ्गानुशासनम् । किं पुनर्लिङ्गानां वाच- कम् । न तावदेतदत्रोपयुज्यते, तत्सद्भावमात्रस्य प्रकृतोपयोगिकत्वात् । यदि तु प्रयोजनमभिधीयते श्रूयताम् । ये तावदप्राणिवाचिनः स्त्रीलिङ्ग- तया स्मर्यन्ते, तेष्वनुशासनकारैरेवेयं स्त्री अयं पुमानिदं नपुंसकमिति गुण- वादेनैव खट्वादिशब्दाः प्रयुक्तास्तद्वचनपदान्तरसमभिव्याहारसिद्ध्यर्थम् । ते तु स्वभावतः स्वार्थमात्रमभिदधति । गुणवाद एव स्मर्तॄणामत्यन्तं निरू- ढतया लिङ्गेऽपि वाचकभ्रान्तिमेव जनयति । एषा च निर्भागपदेषु स्थितिः वाक्स्रुवादिषु । सभागेषु तु तारकादिशब्देषु प्रत्ययभागः स्त्रीत्वमभिधाय प्रकृत्यर्थे तदसम्भवाद् गौण्या वृत्त्या तत्समभिव्याहारं लभते । गुणवाद- समाधानं चोक्तमेव । येऽपि नक्षत्रमित्यादिषु प्रत्ययविकारविशेषास्तेष्व- पीयमेव स्थितिः । विकाराणां नपुंसकलिङ्गेऽनुशासनादमभावादीनाम्, 'अतोऽम्' (७. १. २४) इति यथा । ये प्राणिवाचिनोऽश्वोऽश्वेत्येवमा- दयः, तेषां स्त्रीप्रत्ययान्तेषु तावत् स एव प्रत्ययः स्त्रीत्वमभिदधाति । स च

**कुणपादिमतौ चैवं सार्वरूप्ये व्यवस्थिते ।**
**वासनाः सहकारिण्यो व्यवस्थाकारदर्शने ॥ २१५ ॥**
**स्वप्रत्ययानुकारो हि बह्वाकारेषु वस्तुषु ।**

---

सम्भवत्स्वार्थो मुख्ययैव वृत्त्या प्रकृत्या समभिव्याह्रियते। अश्व इत्यादावपि प्रत्ययविकारादेव लिङ्गविशेषावगतिः । प्रातिपदिकवाच्या एव स्त्रीत्वादयः प्रत्ययेन द्योत्यन्ते इति नानुज्ञायते । प्रत्ययोपजनापाययोरेव लिङ्गावगतेः सदसद्भावदर्शनात् । प्रकृतेश्चान्वयव्यतिरेकनिर्धारितस्वार्थमात्रवचनत्वात् । अतः स्त्रियामभिधेयायां (धात्वा ? टावा)दयः इत्येतदेव साम्प्रतम् । वार्त्तिककारेण च 'स्त्रीत्वादन्यत्र दृष्टं स्यादि'ति वदता प्राणिषु दृष्टं लिङ्गमभिदधतां शब्दानां गौण्यैव वृत्त्याप्राणिवाचिप्रकृतिसमभिव्याहारोऽभिहित इति वेदितव्यम् । न पुनरन्यत्र दृष्टारोपेण भ्रान्तिरुक्ता । अतो बाधकाभावोऽपि न परिचोदनीयः । गौणे तद्दर्शनात् । अतस्तारकादिमतौ तथा 'स्त्रीत्वादन्यत्र दृष्टं स्यादि'त्ययमेव परिहारः साधीयान् । परयोस्तु कथञ्चिच्छब्दपरमतत्वोपन्यासाभ्यामेवासाधुता प्रकटितेत्यवधातव्यमिति ॥ २१४ ॥

यत् पुनरुक्तम्—एकस्यामेव प्रमदातनौ कथं परिव्राजकादीनां कुणपादिप्रत्ययाः सदर्थां भविष्यन्तीति । तत् परिहरति—कुणपादीति । अस्यार्थः—नानाकारं वस्तु नानाकारमेवानुभूयत इति नानुपपन्नम् । यस्तु कश्चिदेव व्यवस्थया कञ्चिदाकारं प्रतिपद्यते न सर्वं सर्वः, तत्र सहकारिवासनासदसद्भावो निबन्धनम् । परिव्राजकादीनां हि कस्यचिदेव काचिद् वासना कुतश्चिदभ्यासाद् हृदयमनुविष्टोद्भूता सती कञ्चिदेवाकारमेकस्यामेव प्रमदातनौ दर्शयति। परिव्राजको हि देहाद् विविक्तमात्मानमभ्यस्यंस्तद्वासनावासितान्तःकरणो मृतशरीरवत् कुणप इत्येवं कामिनीं चिन्तयति । कामुकस्तु कामाभ्यासाहितवासनासहायो देहात्मनोर्विवेकमपश्यन् देह एवाहङ्कृतः कामिनीति । श्वानस्तु जात्यनुबन्धिपिशिताशनाभ्यासातिशयाहितवासनासनाथाः पृथुलनितम्बोरुस्थलप्रस्तनशालिनीं कवलयितुमभिलषन्ति कामिनीमिति वासनाव्यवस्थानुसारिणी संविद्व्यवस्थैकविषया परिव्राजकादीनामिति.॥ २१५ ॥

आह—किमपराद्धमस्माभिर्वासनानिबन्धनं नीलाद्याकारोपप्लवं विज्ञाने वदद्भिः। भवद्भिरपि वासनैवाकारदर्शनहेतुतया वर्णिता। अत आह—

निर्धारणे भवेद्धेतुर्नापूर्वाकारकल्पने ॥ २१६ ॥
तथा दीर्घघटत्वादौ भिन्नापेक्षानिबन्धना ।
आकारभेदसंवित्तिरविरुद्धा भविष्यति ॥ २१७ ॥
नानेकाकारसंवित्तेर्निराकारत्वकल्पना ।
युक्ता प्रतीतिभेदात् तु बह्वाकारत्वसम्भवः ॥ २१८ ॥
संवित्तेश्चाविरुद्धानामेकस्मिन्नप्यसम्भवः ।
एकाकारं भवेदेकमिति नेश्वरभाषितम् ॥ २१९ ॥

---

स्वेति । अयमभिप्रायः — न वासना (ना)मान्या काचित् समनन्तर-प्रत्ययरूपेति भणितमसकृत्, यस्यैव च प्राचीनप्रत्ययजनितस्य संस्कारस्य तेनैव प्रत्ययेनानुकारः सादृश्यं स एव वासनेति चौरिका मन्यन्ते, स च संस्कारो बह्वाकारे वस्तुन्येकस्याकारस्याभ्यस्तपूर्वस्य निर्धारणे कारणं भवति इति युक्तम् । न त्वननुभूतमेवाकारमसन्तं वासना दर्शयतीति साम्प्रतम् । यथा भवन्तो मन्यन्त इत्यस्ति महानावयोर्विशेष इति ॥ २१६ ॥

दीर्घादिप्रत्ययोऽप्येकगोचरोऽपेक्षाभेदादेव परिहर्तव्य इत्याह — तथेति । दीर्घह्रस्वबोधे भिन्नोपाध्यपेक्षा । घटपार्थिवादिभेदे तु कालाद्यपेक्षा-एकोऽपि हि कदाचिद् घट इति तमर्थं बुद्ध्यते कदाचित् पार्थिवोऽय-मिति । भिन्नकालाद्यपेक्षया बोधवैचित्र्योपपत्तिरिति ॥ २१७ ॥

अपिच, इयमपूर्वा युक्तिः यत् किलानेकाकारात्मकं भासते, तस्मा-दनाकारमेव वस्तु ज्ञानाकार एवायमिति । एवं हि प्रतीतिभेददर्शनादनेका-कारकल्पनैवाश्रयितुमुचिता । न त्वनाकारकल्पनेत्याह—नेति ॥ २१८ ॥

स्यादेतत् । सन्त्वेकस्मिन्नप्यविरुद्धानेकाकाराः, कथं तु विरुद्धा-नामनेकेषां सम्भवोऽत आह — संवित्तेरिति । इदमनेन विरुध्यत इति संवित्साक्षिकं तद् यत्रैव भवतो विरुद्धाभिमानः तत्र संविद्बलादविरोधमेव वक्ष्याम इत्यभिप्रायः । एतच्चान्वारुह्यवचनमपेक्ष्य, भेदात् त्वविरोधो दर्शित एवेति । भवेदप्यनेकाकारदर्शनादेकस्यानाकारकल्पना यद्येकमेकाकारमित्यत्र

**तथाहि तदुपेतव्यं यद् यथैवोपलभ्यते ।**
**न चाप्यैकान्तिकं तस्य स्यादेकत्वं च वस्तुनः ॥**
**तस्माद् देशादिसद्भावनिमित्तैः प्रत्ययैः पृथक् ।**
**वस्त्वाकाराः प्रतीयेरन्नुद्भवाभिभवात्मकाः ॥ २२१ ॥**
**युगपद् ग्राहकाणां च यो यदाकारवाचिनम् ।**
**शब्दं स्मरति तेनासावाकारः सम्प्रतीयते ॥ २२२ ॥**
**नित्यं सत्सु तथा लोके रूपादिषु घटे पृथक् ।**
**चक्षुराद्यनुरोधेन संवित्तिर्व्यवतिष्ठते ॥ २२३ ॥**

---

युक्तिर्भवेत् । तामन्तरेण त्विदमीश्वराज्ञातुल्यमेव भाषितं भवेत् । तच्चायुक्त-मित्यभिप्रायेणाह— एकाकारमिति ॥ २१९ ॥

संविदेकाधीनता हि वस्तूनां व्यवस्थितिः । अतो यदेव येनात्मना संविदा व्यवस्थाप्यते तत् तेनैव रूपेणाभ्युपेतव्यमित्याह — **तथाहीति** । किञ्चैकत्वेऽपि वस्तुनो नास्माकमेकान्तवादः येनैवमुपालभ्येमहि कथमेक-मनेकाकारमिति । तदपि ह्येकानेकात्मकमेवानेकान्तवादिनामस्माकमित्या-ह — न चेति ॥ २२० ॥

अतः सिद्धं देशकालावस्थोपाधिसद्भावनिमित्तैः प्रत्ययैर्विद्यमाना एव वस्त्वाकारा उद्भवाभिभवात्मकाः पृथग् भेदेन गृह्यन्त इत्युपसंहरति — **तस्मादिति** । देशादयश्चाकारोद्भवाभिभवद्वारेण प्रत्ययानां निमित्तमिति ॥ २२१ ॥

ये तर्हि युगपदेव ग्रहीतॄणां घटत्वाद्याकारा निर्भासन्ते तत्र कथम् । न हि त आपेक्षिकाः, स्वाभाविकत्वाभ्युपगमात् । उक्तं च 'घटत्वपार्थिव-द्रव्ये'ति । तत्र कः परिहारः अत आह — **युगपदिति** । यद्यप्यत्र नौ-पाधिकत्वान्न चोद्भवाभिभवौ, तथापि नानाकारे वस्तुनि यो यस्य वस्तु-(नि ? नः) (यो ? ) यस्य वस्तुभागस्य शब्दं स्मरति, स तं विकल्प्यामुको-ऽयमिति जानाति नेतर इति व्यवस्थासिद्धिरिति ॥ २२२ ॥

अत्रैव दृष्टान्तमाह — **नित्यमिति** । रूपादयो हि घटे नित्यं सन्त

एवमेव घटत्वादौ सर्वान् प्रति भवत्यपि ।
वाचकस्मृतिभेदेन संवित्तिर्व्यवतिष्ठते ॥ २२४ ॥
तस्माद् बहिः स्थितोऽप्यात्मा नराणां चक्षुरादिभिः ।
प्राप्य वाप्राप्य वा बुद्धेर्विषयत्वेन कल्प्यते ॥ २२५ ॥
वदन्ति लौकिका यच्च यादृग् ज्ञानं तथा बहिः ।
तेऽपि न ज्ञानसंवित्त्या तथार्थं प्रतिजानते ॥ २२६ ॥
ग्राहकत्वेन विज्ञानं यथार्थं नः समर्पयेत् ।
तादृगर्थः स इत्येव तेषां वा तदुपायतः ॥ २२७ ॥

---

एव, तथापि न सर्वे सर्वैरनुभूयन्ते ग्राहकाणां चक्षुरादीनां विषयव्यवस्थानादिति ॥ २२३ ॥

एवं दृष्टान्ते दर्शयित्वा दार्ष्टान्तिके योजयति — एवमिति ॥ २२४ ॥

ननु बहिर्देशमर्थं तावदिन्द्रियाणि न प्राप्नुवन्ति अप्राप्यप्रकाशे नैवानवस्था । अतो न बहिस्सतोऽर्थस्य कथञ्चिदवगतिरुपपद्यते, अत आह— तस्मादिति । अयमभिप्रायः — सिद्धं तावत् प्रतीतिबलाद् बाह्यालम्बनं ज्ञानमिति, स बाह्योऽर्थात्मा प्राप्यैवेन्द्रियैः प्रकाश्यत इत्युक्तम् । प्राप्यकारिता चोपपादिता यदि कृतं न निर्वहति कामं, तथापि नानालम्बनं ज्ञानं, संविद्विरोधात् । अप्राप्यकारिणामेवेन्द्रियाणां काश्चित् कार्यवशोन्नीयमानमतिशयं वक्ष्यामः, यद्बलेनाप्राप्तमपि बाह्यमर्थं प्रकाशयन्ति, न पुनः स्वांशालम्बनं ज्ञानमिति कल्पना प्रमाणवतीति ॥ २२५ ॥

यदप्युक्तं 'वक्तारश्चापि दृश्यन्ते' इति, तत् परिहरति — वदन्तीति । यदेतल्लौकिका वदन्ति नीलोऽयमर्थो यतस्तद्रूपा मतिरुत्पद्यते इति, तेऽपि न ज्ञानाकारपरिचयपुरस्सरोऽर्थसम्बोध इति तथा वदन्तीति ॥ २२६ ॥

कथंनाम वदन्ति अत आह -- ग्राहकत्वेनेति । विदिते खलु नीलेऽन्येनोत्थापिताशङ्कः स्वयं वा जातविचिकित्सः प्रमाणतथात्वनिश्चयपुरस्सरमर्थतथात्वं निश्चिनोति, नेदमन्यादृशं हि ज्ञानं नोऽर्थानां ग्राहकं तद् यथार्थं समर्पयति तथासौ तदुपायिकत्वात् तस्य । इह च प्रथमं ताव-

लैङ्गिकासत्त्वमप्राप्तैरेतैर्बाह्यार्थवादिभिः ।
ज्ञानानुभवमुत्क्रम्य बाह्य एव प्रयत्यते ॥ २२८ ॥

यथा लोके च तद्बुद्धिर्वाच्यमेवं परीक्षकैः ।
न यादृगन्तराकारस्तादृग् बाह्योऽवकल्पते ॥ २२९ ॥

उत्पद्यमाना गृह्येत धीरर्थग्रहणे यदि ।
पूर्वपक्षस्य किं सिद्धं कथं चार्थान्तरं वदेत् ॥ २३० ॥

---

ज्ज्ञानेन नीलं समर्पितम् । तथैव चाद्ययावदनुवर्तमानं ज्ञानमस्ति यन्नीलमेव प्रकाशते । तस्मान्नीलमवेदमित्युपायतया परत्वादपि ज्ञातं ज्ञानं पुरस्सरीकरोतीति नानेन ज्ञानस्य पूर्वग्रहणमापादयितुं शक्यत इति ॥ २२७ ॥

एवं तावत् परीक्षिता प्रत्यक्षशक्तिः । निर्णीतं च यथा बाह्य एव प्रवर्तितुं शक्तमिति । एवं चानुमानस्य प्रत्यक्षबाधे सिद्धे लैङ्गिकं तावद् बाह्यासत्त्वमप्राप्तं बाह्यार्थवादिभिः । अतश्च तदभावद्वारिकां ज्ञानानुभवकल्पनामतिक्रम्य तैर्बाह्य एव यत् प्रयत्यते तद् युक्तमित्याह — लैङ्गिकेति ॥ २२८ ॥

स्यादेतत् — बहिस्सन्तमेवार्थं लौकिका बुध्यन्ते, परीक्षकास्तु युक्तितोऽवस्थापयितुमशक्नुवन्तः स्वांशालम्बनत्वं संविदां प्रतिपद्यन्ते अत आह — यथेति । अयमर्थः — यथा तस्यार्थस्य लोके बुद्धिरुत्पद्यते, परीक्षकैरपि तथैव वाच्यम् । अयथार्थं ज्ञानं हि वदन्तो न परीक्षका एव भवेयुः । इदं तु परीक्षकाणां तत्त्वं यत् प्रमाणशरणत्वम्, असति तस्मिंस्तत्त्वहानिरेव तेषामिति । लौकिकाश्च नान्तराकारवद् बाह्यं वस्तु बुध्यन्त इति । प्रतीतिमेवानु(सा ? स्मा)रयति — न यादृगिति । अन्तराकारो यादृगवगम्यते न तादृशो बाह्यार्थः स ह्ययमिदमिति पररूपेण निरूप्यत इत्युक्तम् । अन्तराकारस्य त्वहमिति निरूपणं भवेदस्माकमिवात्मन इति ॥ २२९ ॥

अत्र भाष्यं 'ननूत्पद्यमानैवासौ ज्ञायते ज्ञापयति चार्थान्तरं प्रदीपवदिति यद्युच्येते'त्येवमादि, तदाक्षिपति — उत्पद्येति । अयमभिप्रायः —

**बाह्यार्थवादिनं ब्रूते भवान् किं नैवमिच्छति ।**
**प्रतिबन्धो न तस्यास्ति गृह्णात्यर्थान्तरं यदा ॥ २३१ ॥**
**उत्तरं ग्राहकाभावाल्लिङ्गाभावाच्च नास्ति नः ।**
**तदा ग्रहणमित्येतदन्यतर्केषु चोच्यते ॥ २३२ ॥**
**तेषु तर्केषु विज्ञानमर्थकालेऽवगम्यते ।**

---

तद् बाह्यापलापवादिना वक्तव्यं यत् तदभावानुगुणम्, इह चोत्पद्यमानाया बुद्धेरर्थस्य च ग्रहणमाचक्षाणो नार्थाभावं दर्शयतीति नेदं पूर्वपक्षवादिनो वक्तुमुचितमिति । स्यादेतत् । नेदं पूर्वपक्षानुगुणतयोच्यते, किन्त्विदमर्थान्तरभूतमपरमेव बुद्धावागतं सिद्धान्तिनोऽसम्मतमित्येतावतैवोच्यते सिद्धान्तान्तरमस्य दूषयितुमत आह — कथमिति । पूर्वपक्षानौपयिकमर्थान्तरं ब्रुवाणस्य सिद्धान्तान्तरदूषणं निग्रहस्थानमिति भावः ॥ २३० ॥

एवमाक्षिप्य समादधाति — बाह्येति । इदमनेन ग्रन्थेन बाह्यार्थवादिनं पूर्वपक्षवादी मीमांसकं ब्रूते — किं भवान् बाह्यार्थग्रहणसमये ज्ञानस्य प्रतिबन्धाभावं नेच्छति येनार्थाकारोऽयमिति ब्रवीति । कथं ह्यप्रतिबन्धस्याग्रहणं भविष्यति । कथंचानाकारस्य ग्रहणम् । अतो ज्ञानाकारकल्पनैव सार्धीयसीत्यभिप्रायः ॥ २३१ ॥

अत्रोत्तरं भाष्यं 'तन्न । न ह्यज्ञातेऽर्थे कश्चिद् बुद्धिमुपलभते । ज्ञाते त्वनुमानादवगच्छती'त्यादि । तस्यामभिप्रायमाह — उत्तरमिति । अस्यार्थः — विदितपूर्वपक्षवाद्यभिप्रायः सिद्धान्तवादी वदति । सत्यमुत्पत्तौ बुद्धेरप्रतिबन्धः, ग्राहकाभावात् तु तदानीमग्रहणं, तदभावश्च तत्कारणस्य लिङ्गस्य ज्ञाततादिपदास्पदस्याभावादिति । अन्यथोत्पद्यमानैवेत्यादिभाष्याभिप्रायमाह — अन्येति । अन्यतर्केषु स्थितमिदं भाष्यकारेणोच्यते उत्पद्यमानैवेत्यादि । एतदुक्तं भवति — बाह्यार्थवाद्येकदेशिमतोपन्यासोऽयं भाष्यकारेण कृतस्तन्निराकरणार्थमिति ॥ २३२ ॥

एकदेशिमतमेवोपन्यस्यति — ते(ष्विति ।) तर्कान्तरेष्वर्थज्ञानकाल एव ज्ञानमवगम्यत इतीष्यते । एवं हि मन्यन्ते स्वप्रकाशमेव विज्ञान-

तथा सत्यर्थनाशः स्यादित्येतदुपदिश्यते ॥ २३३ ॥

नन्वित्येतदसम्बद्धं परेष्टस्यैव चोदनात् ।
पौर्वापर्यविभागोऽपि प्रागुक्तेन विरुध्यते ॥ २३४ ॥

क्षणिकत्वेन युक्तं स्याज्ज्ञातत्वमथ चेत् तदा ।
भूतकालाश्रयाद् ब्रूयाद् वृथोक्तस्य पुनर्वचः ॥ २३५ ॥

---

मात्मानं विषयं च व्यवस्थापयतीति । एतच्चास्माभिः प्रागेव प्रपञ्चितमिति । यद्येवं किमस्य निराकरणे प्रयोजनम् । एवमपि द्वैतं सिध्यत्येवात आह — तथेति । यदि हि समसमयमुभयमुपलभ्यत इत्याश्रीयते, ततो बुद्धेरनाकाराया बोद्धुमशक्यत्वादेकाकारोपलम्भाच्च एकमेव साकारं भवेत् सहोपलम्भनियमाच्चाभेदः परोक्तो नापाकर्तुं शक्यते । तत्रार्थनाश एवापद्येत । नह्यभ्युपगममात्रेणार्थः सिध्यतीत्येतन्मतनिराकरणं भाष्यकारेणोपदिश्यत इति ॥ २३३ ॥

अपरमपि — 'ननूत्पन्नायामेव बुद्धावर्थो ज्ञात इत्युच्यते नानुत्पन्नायाम् । अतः पूर्वं बुद्धिरुत्पद्यते पश्चाद् ज्ञातोऽर्थ' इति भाष्यं, तदाक्षिपति — नन्वितीति । परिचोदना हि नामानिष्टापादनेन भवति । न चेदमनिष्टं मीमांसकस्य यदुत्पन्नायां बुद्धावर्थो ज्ञात इति । तस्मादनुपपन्ना परिचोदनेति । पूर्वं बुद्धिर्भवति पश्चाद् ज्ञातोऽर्थ इति च पौर्वापर्याभिधानं पूर्वोक्तेन युगपदुपलम्भेन विरुध्यते इत्याह — पौर्वापर्येति । 'उत्पद्यमानैवासावि'त्यादिना भाष्येण युगपद् ज्ञानार्थयोरुपलम्भोऽभिहितः । तत् कथमिदानीं पौर्वापर्यमभिधीयते इति ॥ २३४ ॥

यदि तूच्यते — पूर्वमुत्पद्यमानैव बुद्धिर्ज्ञायते ज्ञापयति चार्थमित्युक्तम्, इह च बुद्ध्युत्पत्तिसमयेऽर्थो ज्ञायते इत्युच्यते । उत्पन्नायां त्वसौ ज्ञातः सहैव ज्ञानेनातिक्रान्त इति यावत् । क्षणिकत्वेन हि धर्मेणासौ युक्तः कथमद्य यावदवस्था(प्य ? स्य)ते । अयं चार्थो ज्ञात इति निष्ठार्थभूतकालाश्रयणेन भाष्यकारेणोक्तः । अतो न कश्चित् पूर्वापरविरोध इति, तथाप्युक्तस्यार्थस्य पुनर्वचनमनर्थकं भवेत् । एवमपि प्रकारान्तरेण स एवार्थज्ञा-

**अत्रापि न स्वसिद्धान्तमूचे वाक्यात् परस्य तु ।**
**भ्रान्तत्वादन्यथा पक्षं गृहीत्वेति स्म पृच्छति ॥२३६॥**
**सहोत्पत्त्युपलब्धा हि ज्ञानस्यैकान्ततः स्थितिः ।**
**प्रागूर्ध्वं वार्थसंवित्तेर्युगपद्द् वेति चिन्त्यते ॥ २३७ ॥**
**एष चार्थस्य संवित्तेः पश्चाद्द् ज्ञानावबोधनम् ।**
**ब्रवीति नूनमेतस्य पश्चादुत्पद्यतेऽपि तत् ॥ २३८ ॥**
**नचैतच्छक्यते तस्मादुत्पत्तेरपकर्षणम् ।**

---

नयोर्युगपदुपलम्भोऽभिधीयते । स चोक्त एव । न चास्य प्रकारान्तरवचनस्य स्वरूपेण कश्चिदुपयोगः तदेतदाह — क्षणिकत्वेनेति ॥ २३५ ॥

एवमाक्षिप्य समादधाति — **अत्रापीति** । अयमर्थः — यथोत्पद्यमानैवासावित्यत्र न पूर्वपक्षिणा स्वसिद्धान्तस्थित्या पूर्वपक्षितम्, एवमिहापि न बौद्धः स्वसिद्धान्तमुक्तवान् यदुत्पन्नायां बुद्धावर्थस्य ज्ञाततामाह । एवं हि परमतमेवाभ्युपगतं भवेदिति । केनाभिप्रायेण तर्हीदमुक्तमत आह— वाक्यादिति । अयमर्थः — यदा परेण सिद्धान्तिना इदमुक्तं न पूर्वं बुद्धिर्ज्ञायत इति, तदास्य तद्वाक्यश्राविणो भ्रान्तिर्जाता यदयं सिद्धान्ती बुद्धेः पूर्वं ज्ञानं प्रतिषेधति, तदस्य मन्ये बुद्ध्युत्पत्तिरपि न प्रागनुमता । नहि भवति स्वप्रकाशं सूत्पन्नमपि न गृह्यते । तदेवं परस्य सिद्धान्तिनो वाक्याज्जातविभ्रमः सिद्धान्तिमतमेवान्यथा बुद्ध्वा ननूत्पन्नायां बुद्धावितीदृशं पृच्छति स्म । श्रुतं मया प्राग् वो मीमांसकानां बुद्ध्युत्पत्तिः सम्मता । तत् किमित्येवं यन्न प्राग् बुद्धमिति ॥ २३६ ॥

पूर्वपक्षवाद्यभिप्रायमेव विवृणोति — **सहेत्यदर्शनमन्तेन** । इयं किलास्य बौद्धस्य मृष्टाशा सहैव ज्ञानस्योत्पत्त्युपलम्भौ, उत्पन्नानुपलब्धस्यासम्भावनीयत्वात् । तदिहैतावदेव विमतिपदं किं नो बुद्धेरुत्पत्त्युपलम्भावर्थवित्तेः प्रागूर्ध्वं वा आहोस्वित् सहैवार्थवित्त्येति । एष च मीमांसकः पश्चादर्थवित्तेर्ज्ञानस्यावबोधमाह । तन्नूनमेतस्य ज्ञानं पश्चादेवोत्पद्यते । कथमपरथा प्रकाशस्वभावस्याग्रहणम् । तदेनमितः पक्षाभासाद् व्यावर्तयामीति प्राक् तावदुत्पत्तेरपकर्षणं करोति । नहीदं शक्यते वक्तुं

**करोमि तावत् तत्काला संवित्तिरपि सेत्स्यति॥२३९॥**
**प्राक् च तद्ग्रहणे सिद्धे बाह्याभ्यन्तरयोर्ध्रुवम् ।**
**विवेकादर्शनं तस्मादिदं पूर्वं च चोदितम्॥ २४० ॥**
**युगपद् गृह्यमाणेऽपि नाकारोऽर्थस्य लक्ष्यते ।**
**तस्मादर्थस्य संवित्तिः पूर्वं यत्नेन साध्यते ॥ २४१ ॥**
**यस्त्वेतस्योत्तरो ग्रन्थः प्रागेवासौ निरूपितः ।**

---

यदनुत्पन्नायामेव बुद्धावर्थो ज्ञातो भवतीति, अतिप्रसङ्गात् । एवं च प्रागुत्पन्नस्य तदैव संवित्तिरिति सुसाधमेव । प्राक् च तत्संवित्तौ सिद्धायां ध्रुवमापन्नं बाह्याभ्यन्तराभिमतयोस्तत्त्वयोर्विवेकादर्शनम् । अर्थ एव हि प्राग् बुद्धेः साकारे तत्सामर्थ्यादनाकारा संवित्तिः । अतो विविक्ताकारता सिध्यति । इतरथा त्वाकारविवेकस्यानुपलब्धत्वादद्वैतं सिद्धमेवेति । युगपद्ग्रहणपरिचोदनाप्येवमभिप्राया शक्या वर्णयितुमित्याह — तस्मादिति ॥ २४० ॥

एतदेव विवृणोति — युगपदिति । ज्ञानेन सह युगपद् गृह्यमाणेऽप्यर्थे नार्थस्याकारो लक्ष्यते । उक्तं हि 'नाकारविवेको लक्ष्यते' इति । अपिचैवं सहोपलम्भनियमो बौद्धस्यानिवारितप्रसरो ज्ञानाद् भिन्नं साकारमर्थं निराकरोतीत्युक्तमेवेति । यत एव प्राक् समकालं वा ज्ञानानुभवेऽर्थनाशो भवति, तस्मादर्थसंविद एव प्राग्भाविता भाष्यकारेण सिद्धान्तावसरे यत्नेन साध्यत इत्याह — तस्मादिति ॥ २४१ ॥

एवं तावद् 'ननूत्पन्नायामि'त्यादिभाष्याक्षेपपरिहारौ वर्णितौ । अयमपरोऽस्योत्तरग्रन्थः — 'सत्यम् । पूर्वं बुद्धिरुत्पद्यते न पूर्वं ज्ञायते । भवति हि कदाचिदेतद् यज्ज्ञातोऽर्थः सन्नज्ञात इत्युच्यते' इति । तस्य यथाश्रुतगृहीतस्य तावदर्थमाह — यस्त्विति । योऽस्याः परिचोदनायाः सिद्धान्तग्रन्थः स प्रागेव निरूपितः केवलग्राहकग्रहणप्रतिपादनावसरे । एवं हि तत्रोक्तं—

"न पूर्वं ज्ञायते बुद्धिरित्यत्रैतद् वदिष्यते ।
ग्राहकस्यैव संवित्तिर्लक्ष्यते ग्रहणे क्वचित् ॥"

**न त्वेतत् साधनं साक्षात् पूर्वं बुद्धेरबोधने॥ २४२॥**
**न परामृश्यतेऽर्थात्मा ज्ञातोऽप्यज्ञातवद् यतः।**
**तस्मान्न ग्रहणं पूर्वं बुद्धेः किं केन सङ्गतम्॥ २४३॥**
**अतः पूर्वोपलब्ध्या यो बुद्ध्याकारोऽत्र वाञ्छितः।**
**तन्निराकरणेनैव फलत्वाद् ग्रन्थवर्णना॥ २४४॥**
**कामं बुद्धेरिति त्वेतदर्थाधीनत्वमुच्यते।**

---

इति। तदिदमुक्तं 'भवति हि कदाचिदेतद् यद् ज्ञातोऽर्थः सन्नज्ञात इत्युच्यत' इति। अर्थाकारविविक्तं ज्ञानमात्रमेव स्मर्यत इति यावत्। उक्तं च 'न स्मरामी'ति। एवमुक्तार्थं भाष्यमाक्षिपति— न त्वेतदितिसार्धेन। 'सत्यम्। पूर्वं बुद्धिरुत्पद्यते नतु पूर्वं ज्ञायते' इति प्रतिज्ञायामयं हेतुरुक्तः 'यत् किल ज्ञातोऽप्यर्थः कदाचिदज्ञातवन्न स्मर्यते, तस्मान्न पूर्वं बुद्धिर्ज्ञायते' इति। इदं च बालप्रलपितप्रायम्। किं खल्वत्र केन सम्बध्यते यज्ज्ञातो न स्मर्यते तत्र पूर्वं बुद्धिर्न ज्ञायत इति, तस्मान्न तावदेतस्यां प्रतिज्ञायां साक्षात् साधनमिति॥ २४३॥

तत् किं हेयमेवेदं भाष्यं, नेत्याह—अत इति। सत्यम्। नेदमस्यां प्रतिज्ञायां साक्षात् साधनं, किन्त्वनेन ग्रन्थेन फलद्वारेण प्रतिज्ञानिराकरणमुक्तम्। पूर्वपक्षवादिनाप्यत्र ज्ञानस्य पूर्वोपलब्ध्या बुद्ध्याकारो वाञ्छितः। तदनेन निराक्रियते। यदि बुद्धिः साकारा भवेत् सा तर्हि तथैव स्मर्येत। नचैवं केषुचिदवसरेषु, केवलग्राहकस्मरणात्। अतः किं मुधा मुग्धैः प्रागुपलब्धौ प्रयस्यते। एवमपि हि धीरनाकारैव यदसावाकारवियुक्ता स्मर्यते न पूर्वं ज्ञायत इति। किमुक्तं भवति। नानेन प्रकारेण सिसाधयिषितं बुद्धेः साकारत्वं सिध्यति, अनाकारस्मरणात् कदाचिदिति॥ २४४॥

अत्रापरं भाष्यम् 'अपिच काममेक(रूप)त्वे बुद्धेरेवाभावो न त्वर्थस्य प्रत्यक्षस्ये'ति। तदयुक्तम्। कथं हि द्वैतासिद्धान्ती ज्ञानापलापमाह। एवमपि हि न तस्य पक्षः सिध्यति। न चासति ज्ञाने निष्प्रमाणिका अर्थसिद्धिरवसातुं शक्यते। अतो व्याख्येयमेतदत आह— काममिति। नात्र

न चार्थरूपाद् भेदेन धियामस्ति निरूपणम् ॥२४५॥
पररूपनिरूप्यं च न मेयं मृगतोयवत् ।
असद्ग्राह्यानुसारेण ज्ञानसंवेद्यता तव ॥ २४६ ॥
स्वच्छत्वात् तु स्वरूपस्य कल्पिता ग्राह्यता धियाम् ।
वासनोपप्लवात् तेन न मेयं पारमार्थिकम् ॥ २४७॥
निमित्तनियतत्वं तु समानमुभयोरपि ।

---

बुद्ध्यभावे तात्पर्यं, किन्तु नासत्यर्थे बुद्धिः सिध्यतीत्येवंपरमिदम् । वर-मेकरूपत्वे बुद्धिरपह्नुता यदसौ प्रत्यक्षार्थसामर्थ्यसमधिगम्या । यदधीना बुद्धिर्न तस्यैव प्रत्यक्षसिद्धस्यार्थस्य तामादायाभाववर्णनमित । अपरमपि 'न चार्थव्यपदेशमन्तरेण बुद्धेः रूपोपलम्भनम् । तस्मान्नाव्यपदेश्या बुद्धिः । अव्यपदेश्यं च नः प्रत्यक्षं तस्मादप्रत्यक्षा बुद्धिरि'ति भाष्यम् । तद् व्या-चष्टे—नचेति । बुद्धयो हि नार्थरूपाद् विना निरूप्यन्ते । नहि जातु नीलरूपादियं नामेति विविच्य बुद्धिरुपलभ्यते । अर्थाकारेणैव तु नीलादिना व्यपदिश्यते नीलज्ञानं पीतज्ञानमिति । एवञ्च नित्यपररूपनिरूप्या बुद्धिः कथं प्रत्यक्षप्रमेयं भविष्यतीति । नहि मृगजलज्ञाने ऊषरं जलत्वेन ज्ञायमानं प्रत्यक्षप्रमेयमिष्यते, भ्रान्तिविषयत्वात् । तस्याश्चाप्रत्यक्षत्वात् । अर्थस्तु नित्यं स्वरूपेण संवेद्यमानः प्रत्यक्ष इति युक्तमव्यपदेश्यं च नः प्रत्यक्ष-मिति पररूपाव्यपदेश्यमिति भाष्यार्थ इति ॥ २४५½ ॥

एवं तावत् सतापि पररूपेण निरूप्यमाणं न प्रत्यक्षमित्युक्तम् । त्व-न्मते चायमपरो दोषः, यदसद्ग्राह्यानुसारेणैव तद् ज्ञानं संवेद्यते, स्वभाव-स्वच्छत्वात् ज्ञानस्य, नीलाद्याकारेण ग्राह्यता वासनोपप्लवात् कल्पितैव यत-स्तदेतदाह —**असदित्युपप्लवादन्तेन** । अतो न कथञ्चिज्ज्ञानमेव प्रत्यक्षप्रमेयं पारमार्थिकं वक्तुं शक्यत इत्याह—तेनेति ॥ २४७ ॥

अत्रापरम् 'अपि च, नियतनिमित्तस्तन्तुष्वेवोपादीयमानेषु पटप्रत्ययः इतरथा तन्तूपादानेऽपि कदाचिद् घटबुद्धिरविकलेन्द्रियस्य स्यादि'ति भाष्यं, तदाक्षिपति—**निमित्तेति** । यदेतन्निमित्तानां तन्त्वादीनां नियतत्वं कार्येषु

निजशक्त्यनुसारित्वं ज्ञानबाह्यार्थवादिनोः ॥ २४८ ॥

तन्त्वर्थैरपि कस्माद् वः क्रियते केवलः पटः ।
नारभ्येत घटः किं तैर्मृत्पिण्डार्थेन वा पटः ॥ २४९ ॥

तन्तुमृत्पिण्डविज्ञाने ह्यनुयोज्ये मते यदि ।
अर्थपर्यनुयोगोऽपि तद्वदेव प्रसज्यते ॥ २५० ॥

अर्थारम्भव्यवस्था चेत् सामर्थ्यनियमाश्रया ।
ज्ञानारम्भव्यवस्थायां सामर्थ्यं केन वार्यते ॥ २५१ ॥

तस्माद् यत्रोभयोर्दोषः परिहारोऽपि वा समः ।
नैकः पर्यनुयोक्तव्यस्तादृगर्थविचारणे ॥ २५२ ॥

देशकालनिमित्तानि व्यञ्जकान्यर्थवादिनः ।

---

किञ्चिदेव निमित्तं किञ्चिदेव कार्यमुपजनयति नापरमिति, तदुभयोरपि ज्ञान-बाह्यार्थवादिनोः समानम्, उभयोरपि निजशक्त्यनुसारित्वात् कार्यसिद्धेः । निजयैव हि शक्त्या किञ्चिद् विज्ञानं तन्त्वाद्याकारं किञ्चिदेव तु पटाद्याकारं ज्ञानं जनयति तन्तव इव पटम् । नचात्रान्यतरः शक्योऽनुयोक्तुमिति भावः ॥ २४८ ॥

तुल्यतामेवानुयोगस्य विवृणोति — तन्त्वर्थैरितिद्वयेन । निगद-व्याख्यातौ ग्रन्थाविति ॥ २५० ॥

यदि तु सामर्थ्यनियममाश्रित्यार्थानां तन्त्वादीनां कार्यव्यवस्थोच्यत इति, तज्ज्ञानानामपि ज्ञानान्तरारम्भे न दण्डवारितमित्याह — अर्थेति ॥ २५१ ॥

अतो दोषपरिहारसाम्ये नान्यतरः शक्योऽनुयोक्तुमित्याह — त-स्मादिति ॥ २५२ ॥

अत्र परिहारमाह — देशेति । अयमभिप्रायः—यदपि यस्य कारणं तदपि कदाचिदेव कार्यमारभमाणं दृष्टं न सर्वदा बीजमिवाङ्कुरम् । नहि तत् कुसूलाधिकरणमङ्कुरमारभते, किन्तु देशविशेषं क्षेत्रादिं कालविशेषं च ग्रीष्मादिं निमित्तविशेषमुदकादिमासाद्य कदाचिदेव देशादिव्यङ्ग्यत्वात्

शक्तीनां कारणस्थानां स्वकार्यनियमं प्रति ॥ २५३ ॥
शक्तयोऽपि च भावानां कार्यार्थापत्तिकल्पिताः ।
प्रसिद्धाः पारमार्थिक्यः प्रतिकार्यं व्यवस्थिताः ॥
भवतस्तु न विज्ञानाद् भिन्नाभिन्ना निरूप्यते ।
शक्तिः संवृतिसद्भावमुत्सृज्य परमार्थतः ॥ २५५ ॥
वासनैव च युष्माभिः शक्तिशब्देन गीयते ।
निमित्तनियतत्वं च वासनाया यदुच्यते ॥ २५६ ॥

---

कारणशक्तीनाम् । नैतद् ज्ञानवादिनां सम्भवतीति वक्ष्यते । अतः कस्य- हेतोरुत्पन्नमृत्पिण्डविज्ञानस्यापि कदाचिदेव घटप्रत्ययो न सर्वदा । कस्मा- च्चोत्पन्नव्रीहिबीजपरिचयस्यापि ज्ञातुर्भाव्यङ्कुराकारपरिचयः । नहि तत्र दण्डोदकादि किञ्चिदस्ति कारणशक्तीनां व्यञ्जकं, यदपेक्षया कारणानि वि- लम्बन्ते । स्यान्मतं — मा भूवन् बाह्या देशादयः । तज्ज्ञानान्येव च कारणानामनुग्राहकाणि भविष्यन्तीति । तन्न, क्षणिकत्वेनानुग्राह्यानुग्राहकयोः साहित्यासम्भवादिति ॥ २५३ ॥

न केवलं कारणशक्तीनां व्यञ्जकान्यर्थवादिनां सन्ति, शक्तयोऽपि कार्यार्थापत्तिप्रमाणिकाः प्रतिपटादिकार्यं तन्त्वादीनां व्यवस्थिताः प्रसिद्धा इत्याह — शक्तयोऽपीति ॥ २५४ ॥

भवतस्तु बौद्धस्य (ना ? न वि)ज्ञानाद् भिन्ना अभिन्ना वा पारमार्थिकी शक्तिर्निरूप्यते येन कार्यारम्भव्यवस्था घटत इत्याह — भवत इति । संवृतिसद्भावमुत्सृज्येति । संवृत्या यः सद्भावस्तमुत्सृज्य न पारमार्थिकी शक्तिरस्ति । नच संवृतिसत्तया व्यवस्थायाः सिद्धिरित्युक्तं निरालम्बन- वाद इति ॥ २५५ ॥

अपिच शक्तिरिति वासनामेव भवन्तो गायन्ति । सा च पूर्वानु- भवयोनिर्न तत्सदृशज्ञानान्तरोपजननादन्यत्र समर्थेत्यभिप्रायेणाह — वास- नेति । ननु वासनानुसारेणैव निमित्तानां तन्त्वादीनां कार्यविशेषनियतत्वं भविष्यति शब्दवासनानामिवार्थबुद्धौ भवन्मते, अत आह — निमित्तेत्ये- तदन्तेन । वासनाया इति हेतौ पञ्चमी । यदेतद् वासनाहेतुकं निमित्तनिय-

**तस्याश्चासम्भवेनैतदपारार्थ्याच्च दुर्लभम् ।**
**देशकालनिमित्तादि नच तेऽस्ति नियामकम् ॥**
**मत्वैतदपिचेत्याह भाष्यकारः परं प्रति ।**
**तस्मादपरिहारोऽयं तन्तुभ्यस्ते यथा पटः ॥ २५८ ॥**
**तथा मे तन्तुबुद्धिभ्यः पटबुद्धिरितीदृशः ।**
**एवमाद्यप्रमाणाभ्यां न तावद् बाह्यशून्यता ॥ २५९ ॥**
**आगमस्य तु नैवेह व्यापारोऽतोऽन्यथापि वा ।**
**नोपमा सदृशाभावान्नार्थापत्तिर्विपर्ययात् ॥ २६० ॥**

---

तत्वं तद् वासनाया एवाभावादयुक्तम् । तदभावश्च क्षणिकत्वेनासाहित्याद् वास्यवासकयोरनाश्रित(त्वा ? वा)सनाभावा(दा)श्रयानुपपत्तिश्चोक्ता । दुर्लभमिति वक्ष्यमाणेन सम्बन्ध इति । अपिचेयं वासना न परस्य कस्यचिदनुग्रहे वर्तते । अस्थिरानुग्राह्यानुग्राहकत्वानुपपत्तेः । अतः स्वतन्त्रैव कार्यमारभमाणा सर्वान् प्रत्यारभेताविशेषादित्यभिप्रायेणाह — अपारार्थ्यादिति । एवं तावत् शक्त्यभावादेव न तत्कृता कार्यव्यवस्थेत्युक्तं, येऽपि चास्माकं देशकालादयः कारणशक्तीनां व्यञ्जकत्वेनाभिमताः, तेऽपि तन्नियामका न सन्तीत्याह — देशेति ॥ २५७ ॥

सर्वं चेदमभिप्रेत्यापिचेत्यादि भाष्यकारेणाभिहितमित्याह —**मत्वैतदिति** । एवं चेत् परिहृतं पर्यनुयोगतुल्यत्वमित्युपसंहरति — तस्मादिति । एवं चानुमानदूषणात् प्रत्यक्षस्य च स्वस्मिन् वर्तितुमशक्तेर्न तावद् भवदभिमताभ्यामाद्याभ्यां प्रमाणाभ्यां बाह्यशून्यता सिध्यतीत्याह — एवमिति ॥ २५९ ॥

आगमस्त्वनुष्ठाननिष्ठो नैवञ्जातीयके प्रमाणमित्याह — **आगमस्येति** । न बाह्यसद्भावे अभावे चेत्यर्थः । उपमानं तु सिद्धवस्तुनः सादृश्यविषयं न वस्तुसदसद्भावयोर्व्याप्रियते, नच किञ्चिच्छून्यं नाम ज्ञानातिरेकि सिद्धं यच्छून्यतया ज्ञानमुपमीयते गृहेणेव प्रोषितचैत्रेण शून्यं मन्दि-

तस्मादभावगम्यत्वं शून्यतायाः स्थितं हि नः।
एवं प्रमाणतोऽसिद्धा यैः प्रमेयाश्रयोच्यते ॥ २६१ ॥

बाह्यस्याणुसमूहादेर्ग्राह्यस्यासम्भवेक्षणात्।
तैरान्तरासम्भवतो यथोक्ताज्
ज्ञेयं स्वमन्यस्य बलादुपेयम्।
ग्राह्या नचेष्टाः परमाणवोऽतः
सत्यः समूहः प्रतिपादनीयः ॥ २६२ ॥

---

रान्तरमित्यभिप्रायेणाह — नोपमेति। अर्थापत्त्या तु तत्तद्भावभेददर्शनानुपपत्तिप्रभवया पृथिव्यादयो भावा व्यवस्थाप्यन्त एवेति सा परिपन्थिन्येव शून्यतायामित्याह — अर्थापत्तिरिति ॥ २६० ॥

एवं चापन्नं षष्ठप्रमाणगोचरत्वं शून्यताया इत्याह—तस्मादिति। एवं तावन्न प्रमाणानुसारेण शून्यता सिध्यतीत्युक्तम्। इदानीं यत्तदुक्तं 'तत्रास्तां यः प्रमेयतः' इति, तदुपन्यस्य दूषयति — एवमित्युपेयमन्तेन। अयमर्थः — न तावज्ज्ञानालम्बनाः परमाणवः अतीन्द्रियत्वात्। तत्सद्भावे प्रमाणाभावाच्च। न तत्समूहः, तदतिरिक्तस्यानिरूपणात्। अवयविनश्च वृत्तिविकल्पातिरिक्तादिपरिचोदनादूरीकृतनिरूपणत्वात्। अतो बाह्यस्याण्वादेः ग्राह्यस्यासम्भवादेव पारिशेष्यसिद्धमात्मालम्बनत्वं सर्वसंविदामिति प्रमेयाश्रया च शून्यता यैरुच्यते, तैरपि वादिभिर्यथोक्तादान्तरस्य ग्राह्यस्यासम्भवात् स्वात्मनि वृत्तिविरोधादिदमिति च पररूपनिरूपणादवश्यमेवान्यस्य ज्ञानाद् ग्राह्यत्वं बलादुपेयमनालम्बनज्ञानासम्भवादिति। (द्वयोरपि समानो निराकरणमार्ग इत्याह ?) स्वांशवदण्वादयोऽपि ग्राह्या न सम्भवन्तीत्युक्तमत आह — ग्राह्या इति। अयमभिप्रायः — यत्तावदणूनामग्राह्यत्वं तदस्माकमपि सिद्धमेवेति किं तन्निराकरणेन। समूहोऽपि वनादितुल्योऽनभ्युपगमानिराकृत एवेति। यस्तु समूहापरनामावयवी स यथा सत्यः, तथा वनोपन्यासावसरे प्रतिपादयिष्याम इत्याह — सत्य इति ॥ २६२ १/२ ॥

इति बहिर्विषयप्रतिपादना-
न्न तदभावकृता मतिसंवृतिः ।
उभयतत्त्वविदां परमार्थतः
क्षममिदं धुरि धर्मविचारणे ॥ २६३½ ॥

---

एवं तावद् बाह्यसिद्धिरुक्ता । इदानीं यत्तन्माध्यमिकमते बाह्य-ज्ञेयाभावाद् ज्ञे(या ? यज्ञा)नाभावोऽपीत्युक्तं, तच्च बाह्यसिद्धिप्रतिपादनेन परिहृतमित्याह — इतीति । बाह्याभावकृता मतौ संवृतिकल्पना नास्ती-त्यर्थः । य एव तु ज्ञानज्ञेयात्मकस्योभयस्य तत्त्वं परमार्थतो जानन्ति मीमां-सकाः, तेषामेव चेदं धर्मविचारणे धुरि समर्थमित्याह — उभयेति । अय-मभिप्रायः— धर्मो रथोऽस्यावयवो युगापरपर्यायो धूर्विचारः । तेन हि धर्म-रथो घटितः, तद्वहनाय चेदं ज्ञानज्ञेयात्मकमुभयं तत्त्वतो ज्ञातं क्षमं भवति । संवृतिकल्पितं तु न धुरं वोढुं क्षममिति धर्मरथोऽवसीदेत् । नह्यसमर्थाभ्यां धुर्याभ्यां धूरुह्यते । नहि परमार्थतोऽसतोः संवित्संवेद्ययोः सामर्थ्यमस्ति । अतो यदुक्तं 'यदा संवृतिसत्येने'ति, दूषितं च 'संवृतेर्न तु सत्यत्वमि'ति तदेवात्रोपसंहृतमित्यनुसन्धातव्यमिति ॥ २६३½ ॥

इत्युपाध्यायसुचरितमिश्रकृतौ काशिकाटीकायां
शून्यवादः समाप्तः ॥

शुभं भूयात् ।

# स्मृतग्रन्थाद्यनुक्रमणी ।

| पृष्ठम् | वाक्यानि | ग्रन्थनाम | कर्तृनाम |
|---|---|---|---|
| १०१ | 'नान्योऽनुभाव्यो बुद्ध्यास्ति' | ... | ... |
| १०३ | 'विषयान्तरसञ्चारः' | ... | ... |
| १०७ | 'पूर्वं सङ्गृह्यते पश्चात्' | ... | ... |
| १०८ | 'अप्रत्यक्षोपलम्भस्य' | ... | ... |
| १०९ | 'भिन्नकालं कथं ग्राह्यं' | ... | ... |
| ११७ | 'अन्यथैकस्य भावस्य' | ... | ... |
| १२७ | ... | ... | कुमारस्वामी |
| १२८ | 'बुद्धीन्द्रियशरीरेभ्यः' | ... | ... |
| ,, | 'न त्वेवमात्मैवात्मानम्' | ... | ... |
| १२९ | 'एकमद्वितीयम्' | श्रुतिः | ... |
| ,, | 'जानात्येवायं पुरुषः' | ,, | ... |
| ,, | 'नहि तदा ज्ञातुर्ज्ञप्तेः' | ,, | ... |
| १३० | 'प्रत्याहारादिकं योगम्—' | ... | ... |
| ,, | 'निजं यत्त्वात्मचैतन्यम्' | .. | ... |
| १५२ | 'अज्ञेयं कल्पितं कृत्वा' | ... | बौद्धाः |
| १६१ | 'तदतद्रूपिणोभावाः' | ... | ... |
| १६८ | .... | ... | भिक्षुः |
| १७७ | ... | ... | पतञ्जलिः |

## स्मृतग्रन्थाद्यनुक्रमणी ।

| पृष्ठम्. | वाक्यानि. | ग्रन्थनाम. | कर्तृनाम. |
|---|---|---|---|
| १ | 'फलवत्सन्निधावफलम्—' | ... | ... |
| ,, | 'अपेक्षितविधेः—' | ... | ... |
| ६ | 'तस्माद् ब्राह्मणेन न म्ले—' | श्रुतिः | ... |
| ७ | .... | अर्थमाला | ... |
| ,, | ... | ... | कणभुक् |
| ८ | ... | काणादतन्त्रम् | ... |
| ९ | 'अथातो धर्म—' | ... | ... |
| ,, | 'ब्रह्मा महेश्वरो वा—' | ... | ... |
| १३ | ... | ... | भवदासादयः |
| १४ | 'अथात इत्ययं शब्दः—' | ... | भवदासः |
| १६ | ... | भवदासतन्त्रम् | ... |
| ३१ | ... | ... | भवदासः |
| ३२ | 'अथ शब्दानुशासनम्—' | महाभाष्यम् | ... |
| ४० | 'उपनीय तु यः शिष्यम्—' | स्मृतिः | ... |
| ,, | 'उपनीय ददद् वेदम्—' | ,, | ... |
| ४९ | ... | ... | टीकाकारः |
| ५५ | 'प्रकृतिविकृतिग्रहणं—' | ... | वार्त्तिककारः |
| ५९ | 'यतोऽभ्युदयनिश्श्रेयस—' | ... | नृगुणवादिनः |
| ,, | 'शुभा चित्तवासना—' | ... | सौगताः |
| ,, | 'पुण्याः पुद्गलाः—' | ... | आर्हताः |
| ६६ | 'अनागमश्च सोऽभ्यासः—' | ... | ... |
| ७० | 'वैदिको व्यवहारश्च—' | ... | ... |
| ७२ | 'न प्रसिद्धकारणत्वात्—' | ... | ... |
| ७७ | 'तद्वचनादाम्नायस्य—' | ... | ... |
| ७९ | 'सामान्यानुगता—' | ... | ... |
| ८७ | 'निश्चयात्मकप्रामाण्य—' | ... | ... |
| ९४ | 'सर्वस्यैव हि कार्यार्थः—' | ... | ... |
| ९५ | 'नायं लोकोऽस्ति—' | भगवद्गीता | ... |
| ०० | 'अष्टवर्षं ब्राह्मणम्—' | ... | ... |
| ,, | 'गर्भाष्टमेऽब्दे—' | ... | ... |

इति बहिर्विषयप्रतिपादना-
न्न तदभावकृता मतिसंवृतिः ।
उभयतत्त्वविदां परमार्थतः
क्षममिदं धुरि धर्मविचारणे ॥ २६३$\frac{1}{2}$ ॥

---

एवं तावद् बाह्यसिद्धिरुक्ता । इदानीं यत्तन्माध्यमिकमते बाह्य-ज्ञेयाभावाद् ज्ञे(या ? यज्ञा)नाभावोऽपीत्युक्तं, तच्च बाह्यसिद्धिप्रतिपादनेन परिहृतमित्याह — इतीति । बाह्याभावकृता मतौ संवृतिकल्पना नास्ती-त्यर्थः । य एव तु ज्ञानज्ञेयात्मकस्योभयस्य तत्त्वं परमार्थतो जानन्ति मीमां-सकाः, तेषामेव चेदं धर्मविचारणे धुरि समर्थमित्याह — उभयेति । अय-मभिप्रायः— धर्मो रथोऽस्यावयवो युगापरपर्यायो धूर्विचारः । तेन हि धर्म-रथो घटितः, तद्वहनाय चेदं ज्ञानज्ञेयात्मकमुभयं तत्त्वतो ज्ञातं क्षमं भवति । संवृतिकल्पितं तु न धुरं वोढुं क्षममिति धर्मरथोऽवसीदेत् । नह्यसमर्थाभ्यां धुर्याभ्यां धूरुह्यते । नहि परमार्थतोऽसतोः संवित्संवेद्ययोः सामर्थ्यमस्ति । अतो यदुक्तं 'यदा संवृतिसत्येने'ति, दूषितं च 'संवृतेर्न तु सत्यत्वमि'ति तदेवात्रोपसंहृतमित्यनुसन्धातव्यमिति ॥ २६३$\frac{1}{2}$ ॥

इत्युपाध्यायसुचरितमिश्रकृतौ काशिकाटीकायां
शून्यवादः समाप्तः ॥

शुभं भूयात् ।

# स्मृतग्रन्थाद्यनुक्रमणी ।

| पृष्ठम् | वाक्यानि | ग्रन्थनाम | कर्तृनाम |
|---|---|---|---|
| ३ | 'आचारश्चैव साधूनाम्' | स्मृतिः | ... |
| ६ | 'स्वर्गकामो यजेत' | श्रुतिः | ... |
| ११ | 'न निरालम्बनं ज्ञानं' | ... | ... |
| ,, | 'नियोगसिद्धौ सर्वं तदनुगुणम्' | ... | ... |
| २२ | 'न प्रत्यक्षविरुद्धकारणविषयमनुमानम्' | ... | ... |
| २५ | 'औदुम्बरो यूपो भवति' | श्रुतिः | ... |
| ,, | 'सोऽरोदीद् यदरोदीत्' | ,, | ... |
| ,, | 'बर्हिर्देवसदनं दामि' | ,, | ... |
| २६ | 'अनुष्ठाने पदार्थानां' | .. | ... |
| २८ | 'हिरण्यमात्रेयाय ददाति' | श्रुतिः | ... |
| ,, | 'अरुणया क्रीणाति' | ,, | ... |
| २९ | 'अध्वर्युर्गृहपतिं दीक्षयित्वा' | ,, | ... |
| ,, | 'अग्निहोत्रं जुहोति यवागूं पचति' | ,, | ... |
| ,, | 'समिधो यजति' | ,, | ... |
| ३१ | 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' | ,, | ... |
| ,, | 'मासमग्निहोत्रं जुहोति' | ,, | ... |
| ३३ | 'द्वे सत्ये समुपाश्रित्य' | ... | ... |
| ,, | ... | ... | अक्षपादः |
| ७७ | 'नायं हेतुर्वैधर्म्यवचनत्वात्' | ... | भिक्षुः |
| ८१ | 'भेदप्रपञ्चविलयद्वारेण' | ... | ... |
| ,, | 'विद्यां चाविद्यां च' | श्रुतिः | ... |
| ,, | 'स एष नेति नेति' | ,, | ... |
| ,, | 'अपशवोऽन्ये गोऽश्वेभ्यः' | ,, | ... |
| ९६ | 'स किं वा बुद्धिजन्मापि' | ... | ... |
| ,, | 'अर्थात्मनश्च साधारणत्वात्' | ... | ... |
| ,, | 'तद् द्विविधं सम्यग्ज्ञानं' | ... | ... |
| ९८ | अविभक्तो हि बुद्ध्यात्मा' | ... | ... |
| १०१ | 'एकदेशेन सारूप्ये' | ... | ... |

| पृष्ठम् | वाक्यानि | ग्रन्थनाम | कर्तृनाम |
|---|---|---|---|
| १०१ | 'नान्योऽनुभाव्यो बुद्ध्यास्ति' | ... | ... |
| १०३ | 'विषयान्तरसञ्चारः' | ... | ... |
| १०७ | 'पूर्वं सङ्गृह्यते पश्चात्' | ... | ... |
| १०८ | 'अप्रत्यक्षोपलम्भस्य' | ... | ... |
| १०९ | 'भिन्नकालं कथं ग्राह्यं' | ... | ... |
| ११७ | 'अन्यथैकस्य भावस्य' | ... | ... |
| १२७ | ... | ... | कुमारस्वामी |
| १२८ | 'बुद्धीन्द्रियशरीरेभ्यः' | ... | ... |
| ,, | 'न त्वेवमात्मैवात्मानम्' | ... | ... |
| १२९ | 'एकमद्वितीयम्' | श्रुतिः | ... |
| ,, | 'जानात्येवायं पुरुषः' | ,, | ... |
| ,, | 'नहि तदा ज्ञातुर्ज्ञप्तेः' | ,, | ... |
| १३० | 'प्रत्याहारादिकं योगम्—' | ... | ... |
| ,, | 'निजं यत्त्वात्मचैतन्यम्' | .. | ... |
| १५२ | 'अज्ञेयं कल्पितं कृत्वा' | ... | बौद्धाः |
| १६१ | 'तदतद्रूपिणोभावाः' | ... | ... |
| १६८ | .... | ... | भिक्षुः |
| १७७ | ... | ... | पतञ्जलिः |

# स्मृतग्रन्थाद्यनुक्रमणी ।

| पृष्ठम्. | वाक्यानि. | ग्रन्थनाम. | कर्तृनाम. |
|---|---|---|---|
| १ | 'फलवत्सन्निधावफलम्—' | ... | ... |
| ,, | 'अपेक्षितविधेः—' | ... | ... |
| ६ | 'तस्माद् ब्राह्मणेन न म्ले—' | श्रुतिः | ... |
| ७ | .... | अर्थमाला | ... |
| ,, | ... | ... | कणभुक् |
| ८ | ... | काणादतन्त्रम् | ... |
| ९ | 'अथातो धर्म—' | ... | ... |
| ,, | 'ब्रह्मा महेश्वरो वा—' | ... | ... |
| १३ | ... | ... | भवदासादयः |
| १४ | 'अथात इत्ययं शब्दः—' | ... | भवदासः |
| १६ | ... | भवदासतन्त्रम् | ... |
| ३१ | ... | ... | भवदासः |
| ३२ | 'अथ शब्दानुशासनम्—' | महाभाष्यम् | ... |
| ४० | 'उपनीय तु यः शिष्यम्—' | स्मृतिः | ... |
| ,, | 'उपनीय ददद् वेदम्—' | ,, | ... |
| ४९ | ... | ... | टीकाकारः |
| ५५ | 'प्रकृतिविकृतिग्रहणं—' | ... | वार्तिककारः |
| ५९ | 'यतोऽभ्युदयनिश्श्रेयस—' | ... | नृगुणवादिनः |
| ,, | 'शुभा चित्तवासना—' | ... | सौगताः |
| ,, | 'पुण्याः पुद्गलाः—' | ... | आर्हताः |
| ६६ | 'अनागमश्च सोऽभ्यासः—' | ... | ... |
| ७० | 'वैदिको व्यवहारश्च—' | ... | ... |
| ७२ | 'न प्रसिद्धकारणत्वात्—' | ... | ... |
| ७७ | 'तद्वचनादाम्नायस्य—' | ... | ... |
| ७९ | 'सामान्यानुगता—' | ... | ... |
| ८७ | 'निश्चयात्मकप्रामाण्य—' | ... | ... |
| ९४ | 'सर्वस्यैव हि कार्यार्थः—' | ... | ... |
| ९५ | 'नायं लोकोऽस्ति—' | भगवद्गीता | ... |
| ०० | 'अष्टवर्षं ब्राह्मणम्—' | ... | ... |
| ,, | 'गर्भाष्टमेऽब्दे—' | .. | ... |

| पृष्ठम्. | वाक्यानि. | ग्रन्थनाम. | कर्तृनाम. |
|---|---|---|---|
| १०८ | नानृतं वदेत्—' | श्रुतिः | ... |
| ११० | 'ज्ञानमप्रतिघं यस्य—' | ... | ... |
| ११५ | 'सत्यं साक्ष्ये ब्रुवन्—' | ... | मानवाः |
| ,, | 'साक्षी दृष्टश्रुतादन्यत्—' | ... | ... |
| १२३ | 'नैनमियमभिलापेन—' | ... | ... |
| १३५ | 'अनृतवादिनी वाक्—' | श्रुतिः | ... |
| १३७ | 'बहूनि मे व्यतीतानि—' | भगवद्गीता | ... |
| ,, | 'प्रथमं सर्वशास्त्राणां—' | पुराणम् | पौराणिकाः |
| ,, | 'वेदाभ्यासेन सततं—' | स्मृतिः | ... |
| १६० | यज्ञेन यज्ञमयजन्त— | श्रुतिः | ... |
| १६१ | 'य आत्मा अपहतपाप्मा—' | ... | ... |
| १६२ | 'आरम्भात् स्वर्गः—' | ... | ... |
| १८१ | 'नाततायिवधे दोषः—' | ... | बौधायनाः |
| १९४ | 'विधियज्ञाज्जपयज्ञः—' | ... | ... |
| १९५ | 'यज्ञार्थं पशवः सृष्टाः—' | ... | ... |
| २०८ | 'सम्भवव्यभिचारौ हि—' | ... | ... |
| २११ | ... | ...... | भवदासः |
| २१७ | 'ध्येय आत्मा प्रभुर्योऽसौ—' | योगशास्त्रम् | ... |
| २१९ | 'आर्षं सिद्धदर्शनम्—' | ... | ... |
| २२१ | 'सदित्यसद्व्युदासाय—' | ... | भिक्षुः |
| २२२ | 'सान्तरग्रहणं न स्यात्—' | ... | ... |
| २२६ | 'सात्त्विक एकादशकः—' | ... | कापिलाः |
| २२८ | 'बुद्धिजन्मनि पुंसश्च—' | ... | ... |
| २३७ | 'विषयाकार एवास्य— | ... | सौत्रान्तिकः |
| २३८ | 'यदाभासं प्रमेयं—' | ... | ... |
| २३९ | 'तदतद्रूपिणो भावाः—' | ... | ... |
| ,, | 'सर्वचित्तचैत्तानां—' | ... | ... |
| २४८ | 'शब्दब्रह्मैव तेषां हि—' | ... | ... |
| २५१ | 'सदेव सोम्येदमग्रे—' | श्रुतिः | ... |
| २५७ | 'कल्पनापोढमभ्रान्तं—' | ... | ... |
| २५८ | 'कल्पनापि स्वसंवित्तौ—' | ... | ... |
| ,, | 'तेषामतः स्वसंवित्तिः—' | ... | ... |

| पृष्ठम्. | वाक्यानि. | ग्रन्थनाम. | कर्तृनाम. |
|---|---|---|---|
| २६४ | 'क्षीणानि चक्षुरादीनि—' | ... | ... |
| २६६ | 'नैकं रूपाद्यभेदो वा—' | ... | ... |
| २८० | 'वागेव विश्वा भुवनानि—' | श्रुतिः | ... |
| २८६ | 'नात्र शब्दाकारं वस्तु—' | ... | ... |
| २८९ | 'कल्पनापि स्वसंवित्तौ—' | ... | बौद्धाः |

# शुद्धिपत्रम् ।

| अशुद्धम्. | शुद्धम्. | पृष्ठम्. | पङ्क्तिः. |
|---|---|---|---|
| श्रद्ध | श्रद्द | ३ | ७ |
| दीना | दीनां | ११ | १९ |
| स्युत | प्रत्युत | १३ | २२ |
| नोततमि | नोक्तमि | १५ | २५ |
| न्यत्रं | न्यत्र | २० | २० |
| पूर्वैरु | पूर्वैर्गुरु | २६ | २७ |
| त्वन | त्वेन | २७ | १९ |
| कृत्या | कृत्वो | ,, | २८ |
| न्दाना | न्दानां | ६८ | २७ |
| न मः | न ब्रूमः | ७२ | १४ |
| दवे | देव | ७५ | १४ |
| नापि | नात्रि | १०३ | ६ |
| न्भिनां: | भिक्षा: | २७५ | ८ |